संवादिनीः सदृशीः । तदुक्तं मातङ्गेन—'षड्जं मयूरो वदति' इति । **मनोभिरामा** मनसः प्रियाः । के मूर्ध्नि कायन्ति ध्वनन्तीति **केका** मयूरवाण्यः । 'केका वाणी मयूरस्य' इत्यमरः । ताः केकाः **शृण्वन्तौ** । इति श्लोकार्थः ॥ ३९ ॥

**परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु ।**
**मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥ ४० ॥**

**परस्परेति** ॥ विश्रम्भाददूरं समीपं यथा भवति तथो**ज्झितं वर्त्म** यैस्तेषु । **स्यन्दनाबद्धदृष्टिषु** स्यन्दने रथ आबद्धाऽऽसजिता दृष्टिर्नेत्रं यैस्तेषु । 'दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि' इति हलायुधः । कौतुकवशाद्रथासक्तदृष्टिष्वित्यर्थः । मृगयश्च मृगाश्च **मृगाः** । 'पुमान्स्त्रिया' (पा. १।२।६७) इत्येकशेषः । तेषां **द्वन्द्वेषु** मिथुनेषु । 'स्त्रीपुंसौ मिथुनं द्वन्द्वम्' इत्यमरः । **परस्पराक्ष्णां सादृश्यं पश्यन्तौ** । 'द्वन्द्व'शब्दसामर्थ्यान्मृगीषु सुदक्षिणाक्षिसादृश्यं दिलीपो दिलीपाक्षिसादृश्यं च मृगेषु सुदक्षिणेत्येवं विवेक्तव्यम् ॥ ४० ॥

**श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजम् ।**
**सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥ ४१ ॥**

**श्रेणीति** ॥ **श्रेणीबन्धात्** पङ्क्तिबन्धनाद्धेतोः **अस्तम्भा**माधारस्तम्भरहिताम् । तोरणं बहिर्द्वारम् । 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः । तत्र या स्रग्विरच्यते तां **तोरणस्रजं वितन्वद्भिः** । कुर्वद्भिरिवेत्यर्थः । उत्प्रेक्षाव्यञ्जकेवशब्दप्रयोगाभावेऽपि गम्योत्प्रेक्षेयम् । **कलनिर्ह्रादै**रव्यक्तमधुरध्वनिभिः **सारसैः** पक्षिविशेषैः करणैः **क्वचिदुन्नमिताननौ** । 'सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः' इति यादवः ॥ ४१ ॥

**पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः ।**
**रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥ ४२ ॥**

**पवनस्येति** ॥ **प्रार्थनासिद्धिशंसिनो**ऽनुकूलत्वादेव मनोरथसिद्धिसूचकस्य **पवनस्यानुकूलत्वा**द्गन्तव्यदिगभिमुखत्वात् । **तुरगोत्कीर्णै रजोभिरस्पृष्टा** अलका देव्या वेष्टनमुष्णीषं च राज्ञो ययोस्तौ तथोक्तौ । 'शिरसा वेष्टनशोभिना सुतः' (८।१२) इति वक्ष्यति ॥ ४२ ॥

**सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् ।**
**आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥ ४३ ॥**

---

पाठा०—१ 'निह्रादैः'. २ 'शासिनः'.

सरसीष्विति ॥ सरसीषु वीचिविक्षोभशीतलमूर्मिसंघटनेन शीतलं स्वनिःश्वासमनुकर्तुं शीलमस्येति स्वनिःश्वासानुकारिणम् । एतेन तयोरुत्कृष्टस्त्रीपुंसजातीयत्वमुक्तम् । अरविन्दानामामोदमुपजिघ्रन्तौ घ्राणेन गृह्णन्तौ ॥ ४३ ॥

ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम् ।
अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥ ४४ ॥

ग्रामेष्विति ॥ आत्मविसृष्टेषु स्वदत्तेषु । यूपो नाम संस्कृतः पशुबन्धाय दारुविशेषः । यूपा एव चिह्नानि येषां तेषु ग्रामेष्वमोघाः सफला यज्वनां विधिनेष्टवताम् । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । 'सुयजोर्ङ्वनिप्' (पा. ३।२।१०३) इति ङ्वनिप्प्रत्ययः । आशिष आशीर्वादान् । अर्घः पूजाविधिः, तदर्थं द्रव्यमर्घ्यम् । 'पादार्घाभ्यां च' (पा. ५।४।२५) इति यत्प्रत्ययः । 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' इत्यमरः । अर्घ्यस्यानुपदन्वक् । अर्घ्यस्वीकारानन्तरमित्यर्थः । प्रतिगृह्णन्तौ स्वीकुर्वन्तौ पदस्य पश्चादनुपदम् । पश्चादर्थेऽव्ययीभावः । 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः ॥ ४४ ॥

हैयंगवीनमादाय घोषवृद्धानुपस्थितान्[1] ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥ ४५ ॥

हैयंगवीनमिति ॥ ह्यस्तनगोदोहोद्भवं घृतं हैयंगवीनम् । ह्यः पूर्वेद्युर्भवम् । 'तत्तु हैयंगवीनं यद्ध्योगोदोहोद्भवं घृतम्' इत्यमरः । 'हैयंगवीनं संज्ञायाम्' (पा. २।२।२३) इति निपातः । तत्सद्योघृतम् । आदायोपस्थितान्घोषवृद्धान् । 'घोष आभीरपल्ली स्यात्' इत्यमरः । वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ । 'दुह्याच्–' (वा. १०५०, ११००) इत्यादिना पृच्छतेर्द्विकर्मकत्वम् । उक्तम् ॥ ४५ ॥

काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेषयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ ४६ ॥

कापीति । व्रजतोर्गच्छतोः शुद्धवेषयोरुज्ज्वलनेपथ्ययोः तयोः सुदक्षिणादिलीपयोः । हिमनिर्मुक्तयोश्चित्राचन्द्रमसोरिव । योगे सति काप्यनिर्वाच्याऽभिख्या शोभाऽऽसीत् । 'अभिख्या नामशोभयोः' इत्यमरः । 'आतश्चोपसर्गे' (पा. ३।३।१०६) इत्यङ्प्रत्ययः । चित्रा नक्षत्रविशेषः । शिशिरापगमे चैत्र्यां चित्रापूर्णचन्द्रमसोरिवेत्यर्थः ॥ ४६ ॥

---

पाठा०-१ 'नुपागतान्'.

तत्तद्भूमिपतिः पत्न्यै दर्शयन्प्रियदर्शनः ।
अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ॥ ४७ ॥

**तत्तदिति** ॥ प्रियं दर्शनं स्वरूपं यस्यासौ **प्रियदर्शनः** । दर्शनीय इत्यर्थः । **भूमिपतिः पत्न्यै तत्तदद्भुतं वस्तु दर्शयन्, लङ्घितमतिवाहितमप्यध्वानं न बुबुधे** न ज्ञातवान् । **बुधः** सौम्य उपमोपमानं यस्येति विग्रहः । इदं विशेषणं तत्तद्दर्शयन्नित्युपयोगितयैतस्य ज्ञातृत्वसूचनार्थम् ॥ ४७ ॥

स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥ ४८ ॥

**स इति** ॥ **दुष्प्रापयशा** दुष्प्रापमन्यदुर्लभं यशो यस्य स तथोक्तः । **श्रान्तवाहनो** दूरोपगमनादाक्रान्तयुग्यः । महिष्याः सखा **महिषीसखः** । 'राजाहःसखिभ्यष्टच्' (पा. ५।४।९१) इति टच्प्रत्ययः । सहायान्तरनिरपेक्ष इति भावः । **स राजा सायं** सायंकाले **संयमिनो** नियमवतस्तस्य **महर्षेर्वसिष्ठस्याश्रमं प्रापत्** प्राप । पुषादित्वादङ् ॥ ४८ ॥

तमाश्रमं विशिनष्टि—

वनान्तरादुपावृत्तैः समित्कुशफलाहरैः ।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥ ४९ ॥

**वनान्तरादिति** ॥ **वनान्तरा**दन्यस्मादरण्यात् **उपावृत्तैः** प्रत्यागतैः । **समिधश्च कुशाश्च फलानि** चाहर्तुं शीलं येषामिति समित्कुशफलाहराः, तैः । 'आङि ताच्छील्ये' (पा. ३।२।११) इति हरतेराङ्पूर्वादच्प्रत्ययः । **अदृश्यै**र्दर्शनायोग्यैर**ग्निभि**र्वैतानिकैः **प्रत्युद्याताः** प्रत्युद्गताः । तैस्त**पस्विभिः पूर्यमाणम्** । 'प्रोष्यागच्छतामाहिताग्नीनामग्नयः प्रत्युद्यान्ति' इति श्रुतेः । यथाह—'कामं पितरं प्रोषितवन्तं पुत्राः प्रत्याधावन्ति, एवं ह वा एवमेतमग्नयः प्रत्याधावन्ति सशकलान्दारूनिवाहरन्' इति ॥ ४९ ॥

आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः ।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः ॥ ५० ॥

पाठा०—१ 'स्कन्धासक्तसमित्कुशैः'. २ 'अग्निप्रत्युद्गमारब्धैः पूर्यमाणम्'.

1 अत्र 'प्रियदर्शनोऽपूर्वस्तु दृष्टा बुधश्चन्द्रपुत्रो महत्त्वेन तुल्योऽपि न बुबुधे इति विरोधाभासोऽलंकारः'–इति शिशुहितैषिणी० ।

यथाऽग्रे 'रात्रान्ते सचिवसखः' (४।८७) 'अप्यासु प्रयन्गोप्ता गृहिणीसहायः' (२।२४) इत्यादौ ।

...उर्फ–इति शिशु० ।

आकीर्णमिति ॥ नीवाराणां भाग एव भागधेयोंऽशः । 'रूपनामभागेभ्यो धेयप्रत्ययो वक्तव्यः' (वा. ३३३०) इति वक्तव्यसूत्रात्स्वाभिधेये धेयप्रत्ययः, तस्योचितैः । अत एव, उटजानां पर्णशालानां द्वाररोधिभिर्द्वाररोधकैर्मृगैः । ऋषिपत्नीनामपत्यैरिव आकीर्णं व्याप्तम् ॥ ५० ॥

सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहंगानामालवालाम्बुपायिनाम् ॥ ५१ ॥

सेकान्त इति ॥ सेकान्ते वृक्षमूलसेचनावसाने मुनिकन्याभिः सेक्त्रीभिः । आलवालेषु जलावापप्रदेशेषु यदम्बु तत्पायिनाम् । 'स्यादालवालमावालमावापः' इत्यमरः । विहंगानां पक्षिणां विश्वासाय विश्रम्भाय । 'समौ विश्रम्भविश्वासौ' इत्यमरः । तत्क्षणे सेकक्षण उज्झिता वृक्षका ह्रस्ववृक्षा यस्मिंस्तम् । ह्रस्वार्थे कप्रत्ययः ॥ ५१ ॥

आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।
मृगैर्वर्तितरोमन्थमुटजाङ्गनभूमिषु ॥ ५२ ॥

आतपात्ययेति ॥ आतपस्यात्ययेऽपगमे सति संक्षिप्ता राशीकृता नीवारास्तृणधान्यानि यासु तासु । 'नीवारास्तृणधान्यानि' इत्यमरः । उटजानां पर्णशालानामङ्गनभूमिषु चत्वरस्थानेषु । 'पर्णशालोटजोऽस्त्रियाम्' इति । 'अङ्गनं चत्वराजिरे' इति चामरः । निषादिभिरुपविष्टैर्मृगैर्वर्तितो निष्पादितो रोमन्थश्चर्वितचर्वणं यस्मिंस्तमाश्रमे तम् ॥ ५२ ॥

अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।
पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥ ५३ ॥

अभ्युत्थितेति ॥ अभ्युत्थिताः प्रज्वलिताः । होमयोग्या इत्यर्थः । 'समिद्धेऽग्नावाहुतीर्जुहोति' इति वचनात् । तेषामग्नीनां पिशुनैः सूचकैः पवनोद्धूतैः । आहुतिगन्धो येषामस्तीत्याहुतिगन्धिनः । तैर्धूमैराश्रमोन्मुखानतिथीन् पुनानं पवित्रीकुर्वाणम् । कुलकम् ॥ ५३ ॥

अथ यन्तारमादिश्य धुर्यान्विश्रामयेति सः ।
तामवारोहयत्पत्नीं रथादवततार च ॥ ५४ ॥

अथेति ॥ अथाश्रमप्राप्त्यनन्तरं स राजा यन्तारं सारथिम् । धुरं वहन्तीति धुर्या धुर्याः । 'धुरो यड्ढकौ' (पा. ४।४।७७) इति यत्प्रत्ययः । 'धूर्वहे धुर्यधौरेयधु-

पाठा०—१ 'विविक्तीकृत'. २ 'आतपापाय'. ३ 'अवारोपयद्'. ४ 'अवध्नोद्'.

रीणाः सधुरंधराः' इत्यमरः। **धुर्यान्** रथाश्वान् **विश्रामय** विनीतश्रमान्कुर्वित्या**दिश्याज्ञाप्य तां पत्नीं रथादवारोहयदवतारितवान्स्वयं चावततार।** '**विश्रमय**' इति ह्रस्वपाठे 'जनीजॄष्-', इति मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वः। दीर्घपाठे 'मितां ह्रस्वः' (पा. ६।४।९२) इति सूत्रे वा 'चित्तविरागे' इत्यतो 'वा' इत्यनुवर्त्य व्यवस्थितविभाषाश्रयणत्वाद्ध्रस्वाभाव इति वृत्तिकारः॥ ५४॥

**तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः।**
**अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे॥ ५५॥**

**तस्मा इति**॥ सभायां साधवः **सभ्याः**। 'सभाया यः' (पा. ४।४।१०५) इति यप्रत्ययः। **गुप्ततमेन्द्रियाः** अत्यन्तनियमितेन्द्रियाः। **मुनयः सभार्याय गोप्त्रे** रक्षकाय। नयः शास्त्रमेव चक्षुस्तत्त्वावेदकं प्रमाणं यस्य तस्मै **नयचक्षुषे**। अत एवा**र्हते** प्रशस्ताय। पूज्यायेत्यर्थः। 'अर्हः प्रशंसायाम्' (पा. ३।२।१३३) इति शतृप्रत्ययः। **तस्मै** राज्ञे**ऽर्हणां** पूजां **चक्रुः**। 'पूजा नमस्याऽपचितिः सपर्यार्चार्हणाः समाः' इत्यमरः॥ ५५॥

**विधेः सायंतनस्यान्ते स ददर्श तपोनिधिम्।**
**अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम्॥ ५६॥**

**विधेरिति**॥ **स** राजा **सायंतनस्य** सायंभवस्य। 'सायंचिरम्-' (पा. ४।३।२३) इत्यादिना ट्युल्प्रत्ययः। **विधे**र्जपहोमाद्यनुष्ठानस्य। **अन्ते**ऽवसाने**ऽरुन्धत्यान्वासितं** पश्चादुपवेशनेनोपसेवितम्। कर्मणि क्तः। उपसर्गवशात्सकर्मकत्वम्। 'अन्वास्यैनाम्' इत्यादिवदुपपद्यते। **तपोनिधिं** वसिष्ठम्। **स्वाहया** स्वाहादेव्या। 'अथाग्नायी स्वाहा च हुतभुक्प्रिया' इत्यमरः। **अन्वासितं हविर्भुजमिव। ददर्श।** 'समित्पुष्पकुशाग्न्यम्बुमृदन्नाक्षतपाणिकः। जपं होमं च कुर्वाणो नाभिवाद्यो द्विजो भवेत्॥' इत्यनुष्ठानस्य मध्येऽभिवादननिषेधाद्विधेरन्ते ददर्शेत्युक्तम्। अन्वासितं चात्र पतिव्रताधर्म... न तु धर्माङ्गत्वेन। 'विधेरन्ते' इति कर्मणः समाप्त्यभिधानात्॥ ५६॥

**तयोर्जगृहतुः पादान्राजा राज्ञी च मागधी।**
**तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः॥ ५७॥**

**तयोरिति**॥ **मागधी** मगधराजपुत्री **राज्ञी** सुदक्षिणा **राजा च तयो**रुन्धतीवसिष्ठयोः **पादाञ्जगृहतुः**। 'पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः। पाद-

पाठा०—१ 'अन्वासितम्'. २ 'पादौ'.

टिप्प०—1 'अत्राधेरौपम्येन वसिष्ठस्य तेजस्वित्वं पावनत्वं चोक्तम्' इति शिशु०।

ग्रहणमभिवादनम् । **गुरुपत्नी गुरुश्च** कर्तारौ सा च स च **तौ** सुदक्षिणादिलीपौ कर्मभूतौ **प्रीत्या** हर्षेण **प्रतिननन्दतुः** । आशीर्वादादिभिः संभावयांचक्रतुरित्यर्थः ॥ ५७ ॥

**तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।**
**पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥ ५८ ॥**

**तमिति** ॥ **मुनिः** । अतिथ्यर्थमातिथ्यम् । 'अतिथेर्ञ्यः' (पा. ५।४।२६) इति ञ्यप्रत्ययः । **आतिथ्यस्य क्रिया** तया **शान्तो रथक्षोभेण** यः **परिश्रमः** स यस्य स तं तथोक्तम् । **राज्यमेवाश्रमस्तत्र मुनिम्** । मुनितुल्यमित्यर्थः । **तं** दिलीपं **राज्ये कुशलं पप्रच्छ** । पृच्छतेस्तु द्विकर्मकत्वमित्युक्तम् । यद्यपि 'राज्य'शब्दः पुरोहितादिष्वन्तर्गतत्वाद्राजकर्मवचनः, तथाप्यत्र सप्ताङ्गवचनः, 'उपपन्नं ननु शिवं सप्तस्वङ्गेषु' (१।६०) इत्युत्तरविरोधात् । तथाह मनुः (९।२९४)—'स्वाम्यमात्यपुरं राष्ट्रं कोशदण्डौ तथा सुहृत् । सप्तैतानि समस्तानि लोकेऽस्मिन्राज्यमुच्यते ॥' इति । तत्र 'ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥' (२।१२७) इति मनुवचने सत्यपि तस्य राज्ञो महानुभावत्वाद्ब्राह्मणोचितः कुशलप्रश्न एव कृत इत्यनुसंधेयम् । अत एवोक्तम्—'राज्याश्रममुनिम्' इति ॥ ५८ ॥

**अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः ।**
**अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥ ५९ ॥**

**अथेति** ॥ **अथ** प्रश्नानन्तरं **विजितारिपुरो** विजितशत्रुनगरो **वदतां** वक्तॄणां **वरः** श्रेष्ठः । 'यतश्च निर्धारणम्' (पा. २।३।४१) इति षष्ठी । **अर्थपती** राजा॰ **अथर्वणो**ऽथर्ववेदस्य **निधेस्तस्य** मुनेः **पुरोऽग्रेऽर्थ्याम**र्थादनपेताम् । 'धर्मपथ्यर्थन्यायादनपेते' (पा. ४।४।९२) इति यप्रत्ययः । **वाचमाददे** वक्तुमुपक्रान्तवानित्यर्थः । 'अथर्वनिधेः' इत्यनेन पुरोहितकृत्याभिज्ञत्वात्तत्कर्मनिर्वाहकत्वं मुनेरस्तीति सूच्यते । यथाह कामन्दकः—'त्रय्यां च दण्डनीत्यां च कुशलः स्यात्पुरोहितः । अथर्वविहितं कुर्यान्नित्यं शान्तिकपौष्टिकम् ॥' इति ॥ ५९ ॥

---

पाठा०–१ 'आतिथेयस्तमातिथ्यं विनीताध्व°'; 'आतिथेयस्तमातिथ्यविनीताङ्ग.' २ 'अदः'. ३ 'पुरःसरः'.

---

[1] राजर्षित्वं हि सान्वर्थतया कालिदासेनोपवर्णितं शाकुन्तले (२।१४)—'अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये रक्षायोगादयमपि तपः प्रत्यहं संचिनोति । अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः' इति ।

**उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे।**
**दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम्॥ ६०॥**

**उपपन्नमिति**॥ हे गुरो! **सप्तस्वङ्गेषु** स्वाम्यमात्यादिषु। 'स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च। सप्ताङ्गानि' इत्यमरः। **शिवं** कुशलम् **उपपन्नं ननु** युक्तमेव। नन्ववधारणे। 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः। कथमित्यत्राह—**यस्य मे दैवीनां** देवेभ्य आगतानां दुर्भिक्षादीनाम्, **मानुषीणां** मनुष्येभ्य आगतानां चौरभयादीनाम्। उभयत्रापि 'तत आगतः' (पा. ४।३।७४) इत्यण्। 'टिड्ढाणञ्–' (पा. ४।१।१५) इत्यादिना ङीप्। **आपदां** व्यसनानां **त्वं प्रतिहर्ता** वारयिताऽसि। अत्राह कामन्दकः—'हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा। इति पञ्चविधं दैवं मानुषं व्यसनं ततः॥ आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात्। पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम्॥' इति॥ ६०॥

तत्र मानुषापत्प्रतीकारमाह—

**तव मन्त्रकृतो मन्त्रैर्दूरात्प्रशमितारिभिः।**
**प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः॥ ६१॥**

**तवेति**॥ **दूरात्** परोक्ष एव **प्रशमितारिभिः**। मन्त्रान्कृतवान् मन्त्रकृत्। 'सुकर्मपापमन्त्रपुण्येषु कृञः' (पा. ३।२।८९) इति क्विप्। तस्य **मन्त्रकृतो** मन्त्राणां स्रष्टुः प्रयोक्तुर्वा **तव मन्त्रैः** कर्तृभिः दृष्टं प्रत्यक्षं यल्लक्ष्यं तन्मात्रं भिन्दन्तीति **दृष्टलक्ष्यभिदो मे शराः प्रत्यादिश्यन्त इव**। वयमेव समर्थाः किमेभिः पिष्टपेषकैरिति निराक्रियन्त इव इत्युत्प्रेक्षा। 'प्रत्यादेशो निराकृतिः' इत्यमरः। त्वन्मन्त्रसामर्थ्यादेव नः पौरुषं फलतीति भावः॥ ६१॥

संप्रति दैविकापत्प्रतीकारमाह—

**हविरावर्जितं होतस्त्वया विधिवदग्निषु।**
**वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम्॥ ६२॥**

**हविरिति**॥ हे **होतः**! **त्वया विधिवदग्निष्वावर्जितं** प्रक्षिप्तं **हविः** आज्यादिकं कर्तृ **अवग्रहो** वर्षप्रतिबन्धः। 'अवे ग्रहो वर्षप्रतिबन्धे' (पा. ३।३।५१) इत्यप्प्रत्ययः। 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' इत्यमरः। तेन **विशोषिणां** विशुष्यतां **सस्यानां वृष्टिर्भवति**। वृष्टिरूपेण सस्यान्युपजीवयतीति भावः। अत्र

पाठा०—१ 'प्रतिहन्ता'. २ 'संदामितारिभिः'; 'संयमितारिभिः'. ३ 'वृष्ट्यै'.

मनुः ( ३।७६)—'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' इति ॥ ६२ ॥

**पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।**
**यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ ६३ ॥**

**पुरुषेति** ॥ आयुर्जीवितकालः । पुरुषस्यायुः पुरुषायुषम् । वर्षशतमित्यर्थः । 'शतायुर्वै पुरुषः' इति श्रुतेः । 'अचतुर–' ( पा. ५।४।७७ ) आदिसूत्रेणाच्प्रत्ययान्तो निपातः । **मदीयाः प्रजाः** । पुरुषायुषं जीवन्तीति **पुरुषायुषजीविन्यः** । **निरातङ्का** निर्भयाः, 'आतङ्को भयमाशङ्का' इति हलायुधः । **निरीतयो**ऽतिवृष्ट्यादिरहिता इति **यत्तस्य** सर्वस्य **त्वद्ब्रह्मवर्चसं** तव व्रताध्ययनसंपत्तिरेव **हेतुः** । 'व्रताध्ययनसंपत्तिरित्येतद्ब्रह्मवर्चसम्' इति हलायुधः । ब्रह्मणो वर्चो ब्रह्मवर्चसम् । 'ब्रह्महस्तिभ्यां वर्चसः' (पा. ५।४।७८) इत्यच्प्रत्ययः । 'अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥' इति कामन्दकः ॥ ६३ ॥

**त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।**
**सानुबन्धाः कथं न स्युः संपदो मे निरापदः ॥ ६४ ॥**

**त्वयेति** ॥ **ब्रह्म योनिः** कारणं यस्य तेन ब्रह्मपुत्रेण **गुरुणा त्वया** । **एवम्**उक्तप्रकारेण **चिन्त्यमानस्या**नुध्यायमानस्य । अत एव **निरापदो** व्यसनहीनस्य **मे संपदः सानुबन्धाः** सानुस्यूतयः । अविच्छिन्ना इति यावत् । **कथं न स्युः?** स्युरेवेत्यर्थः ॥ ६४ ॥

संप्रत्यागमनप्रयोजनमाह—

**किंतु वध्वां तवैतस्यामदृष्टसदृशप्रजम् ।**
**न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ६५ ॥**

**किंत्विति** ॥ **किंतु तवैतस्यां वध्वां** स्नुषायाम् । 'वधूर्जाया स्नुषा चैव' इत्यमरः । **अदृष्टा सदृश्यनुरूपा प्रजा** येन तं **मां सद्वीपा**पि । रत्नानि सूयत इति

---

पाठा०–१ 'तव'.

---

टिप्प०—1 'कृते लक्षं सहस्राणां त्रेतायामयुतं तथा । द्वापरे तु सहस्रैकं कलौ वर्षशतं मतम् ॥' इति सुबोधिकायां युगक्रमेण प्रोक्ता पुरुषायुर्मर्यादा ।

2 द्वीपास्त्वष्टादश; यथोक्तं विष्णुपुराणे—'जम्बुप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो द्विज । कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः ॥ एते द्वीपाः समुद्रैस्तु सप्तसप्तभिरावृताः' इत्युपक्रम्य, 'इत्यमष्टादश द्वीपाः समाख्याता महर्षिभिः' इत्यन्तेन ।

रत्नसूरपि। 'सत्सूद्विष–' (पा. ३।२।६१) इत्यादिना क्विप्। **मेदिनी नावति** न प्रीणाति। 'अव'धातू रक्षणगतिप्रीत्याद्यर्थेषूपदेशादत्र प्रीणने। 'रत्नसूरपि' इत्यनेन सर्वरत्नेभ्यः पुत्ररत्नमेव श्लाघ्यमिति सूचितम् ॥ ६५ ॥

तदेव प्रतिपादयति—

**नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः।**
**न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥ ६६ ॥**

**नूनमिति** ॥ **मत्तः परं** मदनन्तरम्। 'पञ्चम्यास्तसिल्' (पा. ५।३।७)। **पिण्डविच्छेददर्शिनः** पिण्डदानविच्छेदमुत्प्रेक्षमाणाः। वंशे भवा **वंश्याः** पितरः। स्वधेत्यव्ययं पितृभोज्ये वर्तते। तस्याः **संग्रहे तत्पराः** आसक्ताः सन्तः **श्राद्धे** पितृकर्मणि। 'पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः' इत्यमरः। **प्रकामभुजः** पर्याप्तभोजिनो **न** भवन्ति **नूनं** सत्यम्। 'कामं प्रकामं पर्याप्तम्' इत्यमरः। निर्धना ह्यापद्धनं कियदपि संगृह्णन्तीति भावः ॥ ६६ ॥

**मत्परं दुर्लभं मत्वा नूनमावर्जितं मया।**
**पयः पूर्वैः स्वनिःश्वासैः कवोष्णमुपभुज्यते ॥ ६७ ॥**

**मत्परमिति** ॥ **मत्परं** मदनंन्तरम्। 'अन्याराद्–' (पा. २।३।२९) इत्यादिना पञ्चमी। **दुर्लभं** दुर्लभ्यं **मत्वा** मयावर्जितं दत्तं **पयः पूर्वैः** पितृभिः **स्वनिःश्वासैः** दुःखजैः **कवोष्णमी**षदुष्णं यथा तथो**पभुज्यते**। **नूनमि**ति वितर्के। कवोष्णमिति कुशब्दस्य कवादेशः, 'कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति' इत्यमरः ॥ ६७ ॥

**सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः।**
**प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः ॥ ६८ ॥**

**सोऽहमिति** ॥ **इज्या** यागः। 'व्रजयजोर्भावे क्यप्' (पा. ३।३।९८) इति क्यप्प्रत्ययः। तया **विशुद्धात्मा** विशुद्धचेतनः **प्रजालोपे**न संतत्यभावेन **निमीलितः** कृतनिमीलनः **सोऽहम्**। लोक्यत इति लोकः। न लोक्यत इत्यलोकः। लोकश्चालोकश्चात्र स्त इति लोकश्चासावलोकश्चेति वा **लोकालोकश्चक्रवालोऽचल**

पाठा०–१ 'पयः पूर्वैः सनिःश्वासकवोष्णमुपभुज्यते;' 'पयः पूर्वैः सनिःश्वासं कवोष्णमुपभुञ्जते;' 'पयः पूर्वे स्वनिश्वासैः कवोष्णमुपभुञ्जते'. २ 'अन्धकारः'.

1 एतदेव प्रतिपादितं शाकुन्तले (६।२५) 'अहो, दुष्यन्तस्य संशयमारूढाः पिण्डभाजः,' इत्युपक्रम्य 'नूनं प्रसूतिविकलेन मया प्रसिक्तं धौताश्रुशेषमुदकं पितरः पिबन्ति' इत्यादिश्लोकेन।

2 लोकालोकपर्वतः पाद्मे प्रोक्तः—'स्वादूदकस्य परतो लोकालोकाचलो महान्। लोकस्य चाप्यलोकस्य मध्ये गिरिरिव स्थितः ॥ प्राकार इव संवेष्ट्य लोकान्सर्वान्महामते। लोका- ... नाम तेनासौ परिकीर्तितः' इति।

इव । 'लोकालोकश्चक्रवालः' इत्यमरः । प्रकाशत इति प्रकाशश्च देवर्णविमोचनात् । न प्रकाशत इत्यप्रकाशश्च पितृणाविमोचनात् । पचाद्यच् । अस्मीति शेषः । लोकालोकोऽप्यन्तः सूर्यसंपर्काद्बहिस्तमोव्याप्त्या च प्रकाशश्चाप्रकाशश्चेति मन्तव्यम् ॥

ननु तपोदानादिसंपन्नस्य किमपत्यैरित्यत्राह—

**लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।**
**संततिः शुद्धवंश्या हि[1] परत्रेह च शर्मणे ॥ ६९ ॥**

**लोकान्तरेति** ॥ समुद्भवत्यस्मादिति समुद्भवः कारणम् । तपोदाने समुद्भवो यस्य तत् **तपोदानसमुद्भवं** यत्पुण्यं तल्लोकान्तरे परलोके सुखं **सुखकरम्** । शुद्धवंशे भवा **शुद्धवंश्या संततिर्हि परत्र** परलोके इह च लोके **शर्मणे** सुखाय । 'शर्मशातसुखानि च' इत्यमरः । भवतीति शेषः ॥ ६९ ॥

**तया हीनं विधातर्मां कथं पश्यन्न दूयसे? ।**
**सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम् ॥ ७० ॥**

**तयेति** ॥ हे **विधातः** स्रष्टः ! **तया** संतत्या **हीनम**नपत्यं **माम्** । **स्नेहात्** प्रेम्णा **स्वयमेव सिक्तं** जलसेकेन वर्धितं **वन्ध्य**मफलम् । 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः । **आश्रमस्य वृक्षकं** वृक्षपोतमिव । **पश्यन् कथं न दूयसे** न परितप्यसे ? 'विधातः' इत्यनेन समर्थोऽप्युपेक्षस इति गम्यते ॥ ७० ॥

**असह्यपीडं भगवन्नृणमन्त्यमवेहि मे ।**
**अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः ॥ ७१ ॥**

**असह्येति** ॥ हे **भगवन् ! मे** ममान्त्यमृणं पैतृकमृणम् । **अनिर्वाणस्य** मज्जनरहितस्य । 'निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने' इति यादवः । **दन्तिनो** गजस्य । अरुर्मर्म तुदतीत्य**रुंतुदं** मर्मस्पृक् । 'व्रणोऽस्त्रियामीर्ममरुः' इति । 'अरुंतुदं तु मर्मस्पृक्' इति चामरः । 'विध्वरुषोस्तुदः' (पा. ३।२।३५) इति खश्प्रत्ययः । 'अरुर्द्विषत्–' (पा. ६।३।६७) इत्यादिना मुमागमः । **आलानं** गजबन्धनस्तम्भ**मिव** । 'आलानं बन्धनस्तम्भे' इत्यमरः । **असह्या** सोढुमशक्या **पीडा** दुःखं यस्मिंस्त**दवेहि** । दुःसहदुःखजनकं विद्धीत्यर्थः । 'निर्वाणोत्थानशयनानि त्रीणि गजकर्माणि'

पाठा०–१ 'शुद्धवंशा'. २ 'तु'. ३ 'विनेतः'; 'वितानम्'. ४ 'पादद्म्'. ५ 'ऋणबन्धम्'. ६ 'नवबद्धस्य'.

[1] आलानशब्दोऽत्र बन्धनवाचकः शस्तः; तस्यैवारुन्तुदत्वं च युक्तम्, न तु स्तंभस्य । यथाऽपि दृश्यते–'गजालानपरिक्लिष्टैः' (४।६९) 'आलानिकं स्थाणुमिव द्विपेन्द्रः' (१४।३८) इत्यादौ ।

इति पालकाप्ये । 'ऋणं देवस्य यागेन ऋषीणां दानकर्मणा । संतत्या पितृलोकानां शोधयित्वा परिव्रजेत्' ॥ ७१ ॥

तस्मान्मुच्ये यथा तात ! संविधातुं तथार्हसि ।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥ ७२ ॥

क्तो भवामि । कर्मणि
लट्
क्ष्वाकूणामिक्ष्वाकु
वंश्यानाम् । तद्राजत्वाद्बहुष्वणो लुक् । दुराप दुष्प्राप्येऽर्थे । सिद्धयस्त्वदधीना स्त्वदायत्ताः । इक्ष्वाकूणामिति शेषे षष्ठी । 'न लोक–' (पा. २।३।६९) इत्यादिन कृद्योगे षष्ठीनिषेधात् ॥ ७२ ॥

इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥ ७३ ॥

इतीति ॥ इति राज्ञा विज्ञापित ऋषिर्ध्यानेन स्तिमिते लोचने यस्य ध्यानस्तिमितलोचनो निश्चलाक्षः सन् क्षणमात्रम् । सुप्तमीनो ह्रद इव । तस्थौ ॥

सोऽपश्यत्प्रणिधानेन संततेः स्तम्भकारणम् ।
भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥ ७४ ॥

स इति ॥ स मुनिः प्रणिधानेन चित्तैकाग्र्येण भावितात्मा शुद्धान्तःकरणो भुवो भर्तुर्नृपस्य संततेः स्तम्भकारणं संतानप्रतिबन्धकारणमपश्यत् । अथानन्तरमेनं नृपं प्रत्यबोधयत् । स्वदृष्टं ज्ञापितवानित्यर्थः । एनमिति 'गतिबुद्धि–' (पा. १।४।५२) इत्यादिनाणि कर्तुः कर्मत्वम् ॥ ७४ ॥

पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।
आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥ ७५ ॥

पुरेति ॥ पुरा पूर्वं शक्रमिन्द्रमुपस्थाय संसेव्य, उर्वीं प्रति भुवमुद्दिश्य यास्यतो गमिष्यतस्तव पथि कल्पतरुच्छायामाश्रिता सुरभिः कामधेनुरासीत् । तत्र स्थितेत्यर्थः ॥ ७५ ॥

पाठा०–१ 'यथा विमुच्येऽहम्'. २ 'यथा'. ३ 'मीनो यथा'.

1 शक्रलोकगमनविषये—'सर्ववंश्याः सर्वेऽपि शक्रस्याराधनार्थं दिवि गच्छन्तो भुवनत्रयेऽस्खलितगतय आसन्'–इति सुगमान्वयवृत्ताद् ।

ततः किमित्यत्राह—

**धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।**
**प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥ ७६ ॥**

**धर्मलोपेति** ॥ ऋतुः पुष्पम् । रज इति यावत् । 'ऋतुः स्त्रीकुसुमेऽपि च' इत्यमरः । ऋतुना निमित्तेन **स्नातामिमां राज्ञीं** सुदक्षिणां **धर्मस्य** र्त्वभिगमनलक्षणस्य **लोपाद्भ्रंशाद्भयं** तस्मात् **स्मरन्ध्यायन्**। 'गृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत विज्ञातांश्च वनस्पतीन् ॥' इति शास्त्रात् **प्रदक्षिणक्रियार्हायां** प्रदक्षिणकरणयोग्यायां **तस्यां** धेन्वां **त्वं साधु** प्रदक्षिणादिसत्कारं **नाचरो** नाचरितवानसि । व्यासक्ता हि विस्मरन्तीति भावः । ऋतुकालाभिगमने मनुः (३।४५)—'ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा' इति । अकरणे दोषमाह पराशरः—(४।१५) 'ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपगच्छति। बालगोघ्नापराधेन विध्यते नात्र संशयः ॥' इति ॥ ७६ ॥

**अवजानासि मां यस्माद्तस्ते न भविष्यति ।**
**मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥ ७७ ॥**

**अवजानासीति** ॥ यस्मात्कारणान्मामवजानासि तिरस्करोषि । अतः कारणान्मत्प्रसूतिं मम संततिम**नाराध्या**सेवयित्वा **ते** तव **प्रजा न भविष्यतीति सा** सुरभिस्त्वां **शशाप** । 'शप आक्रोशे' ॥७७॥

कथं तदस्माभिर्न श्रुतमित्यत्राह—

**स शापो न त्वया राजन्न च सारथिना श्रुतः ।**
**नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥ ७८ ॥**

**स इति** ॥ **हे राजन् ! स शापस्त्वया न श्रुतः** । **सारथिना च न श्रुतः** । अश्रवणे हेतुमाह—क्रीडार्थमागता उद्दामानो दाम्न उद्गता **दिग्गजा** यस्मिंस्तस्मिन्न **आकाशगङ्गाया** मन्दाकिन्याः **स्रोतसि** प्रवाहे **नदति** सति ॥७८॥

अस्तु; प्रस्तुते किमायातमित्यत्राह—

**ईप्सितं तदवज्ञानाद्विद्धि सार्गलमात्मनः ।**
**प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ ७९ ॥**

**ईप्सितमिति** ॥ तदवज्ञानात्तस्या धेनोरवज्ञानादपमानादात्मनः स्वस्यानु-

पाठा०—१ 'मवेहि तदवज्ञानात्तसापेक्षं मनोरथम्'; 'मवेहि तदवज्ञानादनपेक्षं मनोरथम्'.

इति पालकाप्ये। 'ऋणं देवस्य यागेन ऋषीणां दानकर्मणा। संतत्या पितृलोकानां शोधयित्वा परिव्रजेत्' ॥ ७१ ॥

**तस्मान्मुच्ये यथा तात! संविधातुं तथार्हसि।**
**इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥ ७२ ॥**

**तस्मादिति** ॥ हे **तात! तस्मा**त्पैतृकादृणा**द्यथा मुच्ये** मुक्तो भवामि। कर्मणि लट्। **तथा संविधातुं** कर्तुम**र्हसि। हि** यस्मात्कारणात्, **इक्ष्वाकूणा**मिक्ष्वाकुवंश्यानाम्। तद्राजत्वाद्बहुष्वणो लुक्। **दुरापे** दुष्प्राप्ये**ऽर्थे। सिद्धयस्त्वदधीना**स्त्वदायत्ताः। इक्ष्वाकूणामिति शेषे षष्ठी। 'न लोक–' (पा. २।३।६९) इत्यादिना कृद्योगे षष्ठीनिषेधात् ॥ ७२ ॥

**इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः।**
**क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥ ७३ ॥**

**इतीति** ॥ **इति राज्ञा विज्ञापित ऋषि**र्ध्यानेन स्तिमिते लोचने यस्य **ध्यानस्तिमितलोचनो** निश्चलाक्षः सन् **क्षणमात्रम्। सुप्तमीनो ह्रद इव। तस्थौ।**

**सोऽपश्यत्प्रणिधानेन संततेः स्तम्भकारणम्।**
**भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥ ७४ ॥**

**स इति** ॥ **स** मुनिः **प्रणिधानेन** चित्तैकाग्र्येण **भावितात्मा** शुद्धान्तःकरणो **भुवो भर्तु**र्नृपस्य **संततेः स्तम्भकारणं** संतानप्रतिबन्धकारण**मपश्यत्। अथा**नन्तर**मेनं** नृपं **प्रत्यबोधयत्।** स्वदृष्टं ज्ञापितवानित्यर्थः। एनमिति 'गतिबुद्धि–' (पा. १।४।५२) इत्यादिनाणि कर्तुः कर्मत्वम् ॥ ७४ ॥

**पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः।**
**आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥ ७५ ॥**

**पुरेति** ॥ **पुरा** पूर्वं **शक्र**मिन्द्र**मुपस्थाय** संसेव्य, **उर्वीं प्रति** भुवमुद्दिश्य **यास्यतो** गमिष्यत**स्तव पथि कल्पतरुच्छायामाश्रिता सुरभिः** कामधेनु**रासीत्।** तत्र स्थितेत्यर्थः ॥ ७५ ॥

पाठा०–१ 'यथा विमुच्येऽहम्'. २ 'यथा'. ३ 'मीनो यथा'.

1 शक्रलोकगमनविषये—'सूर्यवंश्याः सर्वेऽपि शक्रस्याराधनार्थे दिवि गच्छन्तो भुवनत्रयेऽस्खलितगतय आसन्'–इति सुगमान्वयकृदाह।

तत किमित्यत्राह—

**धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।**
**प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥ ७६ ॥**

**धर्मलोपेति** ॥ ऋतुः पुष्पम् । रज इति यावत् । 'ऋतु-स्त्रीकुसुमेऽपि च' इत्य-मरः । ऋतुना निमित्तेन **स्नातामिमां राज्ञीं** सुदक्षिणा **धर्मस्य** भिगमनलक्षणस्य **लोपाद्भ्रंशाद्भयं** तस्मात् **स्मरन्** ध्यायन् । 'मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत विज्ञाताश्च वनस्पतीन् ॥' इति शास्त्रात् **प्रदक्षिणक्रिया-र्हायां** प्रदक्षिणकरणयोग्यायां **तस्यां** धेन्वां **त्वं साधु** प्रदक्षिणादिसत्कारं **नाचरो** नाचरितवानसि । व्यासक्ता हि विस्मरन्तीति भावः । ऋतुकालाभिगमने मनुः (३।४५)—'ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा' इति । अकरणे दोषमाह पराशरः—(४।१५) 'ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपगच्छति । बालगोघ्ना-पराधेन विध्यते नात्र संशयः ॥' इति ॥ ७६ ॥

**अवजानासि मां यस्मादतस्ते न भविष्यति ।**
**मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥ ७७ ॥**

**अवजानासीति** ॥ **यस्मात्**कारणान्**मामवजानासि** तिरस्करोषि । **अतः** कारणा**न्मत्प्रसूतिं** मम संततिम**नाराध्या**सेवयित्वा **ते** तव **प्रजा न भविष्य-तीति सा** सुरभि**स्त्वां शशाप** । 'शप आक्रोशे' ॥ ७७ ॥

कथं तदस्माभिर्न श्रुतमित्य ह—

**स शापो न त्वया राजन्न च सारथिना श्रुतः ।**
**नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥ ७८ ॥**

**स इति** ॥ **हे राजन् ! स शाप**स्त्वया **न श्रुतः** । **सारथिना च न श्रुतः** । अश्रवणे हेतुमाह—क्रीडार्थमागता **उद्दामा**नो दाम्न उद्गता **दिग्गजा** यस्मिंस्तथोक्त **आकाशगङ्गाया** मन्दाकिन्याः **स्रोतसि** प्रवाहे **नदति** सति ॥ ७८ ॥

अस्तु; प्रस्तुते किमायातमित्यत्राह—

**ईप्सितं तदवज्ञानाद्विद्धि सार्गलमात्मनः ।**
**प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ ७९ ॥**

**ईप्सितमिति** ॥ **तदवज्ञानात्त**स्या धेनोरवज्ञानादपमानाद**त्मनः** स्वस्यानु-

---

पाठा०—१ 'अवेहि तदवज्ञानादवज्ञापेक्षं मनोरथम्'; 'अवेहि तदवज्ञानादनपेक्षं मनोरथम्'.

सिद्धमीप्सितं मनोरथम्। आप्नोतेः सन्नन्तात् कः, ईकारश्च। सार्गलं सप्रतिबन्धं विद्धि जानीहि। तथा हि—पूज्यपूजाया व्यतिक्रमोऽतिक्रमणं श्रेयः प्रतिबध्नाति ॥ ७९ ॥

तर्हि गत्वा तामाराधयामि; सा वा कथंचिदागमिष्यतीत्याशा न कर्तव्येत्याह—

हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः।
भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥ ८० ॥

हविष इति ॥ सा च सुरभिरिदानीं दीर्घं सत्रं चिरकालसाध्यो यागविशेषो यस्य तस्य प्रचेतसो हविषे दध्याज्यादिहविरर्थं भुजङ्गपिहितद्वारं भुजंगावरुद्धद्वारं ततो दुष्प्रवेशं पातालमधितिष्ठति। पाताले तिष्ठतीत्यर्थः। 'अधिशीङ्स्थासां कर्म' (पा. १।४।४६) इति कर्मत्वम् ॥ ८० ॥

तर्हि का गतिरित्यत आह—

सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः।
आराधय सपत्नीकः [२]प्रीता कामदुघा हि सा ॥ ८१ ॥

सुतामिति ॥ तस्याः सुरभेरियं तदीया। तां सुतां सुरभेः प्रतिनिधिं कृत्वा शुचिः शुद्धः। सह पत्न्या वर्तत इति सपत्नीकः सन्। 'नद्यृतश्च' (पा. ५।४।१५३) इति कप्प्रत्ययः। आराधय। हि यस्मात्कारणात्, सा प्रीता तुष्टा सती। कामान् दोग्धीति कामदुघा भवति। 'दुहः कप्घश्च' (पा. ३।२।७०) इति कप्प्रत्ययः। घादेशश्च ॥ ८१ ॥

इति वादिन एवास्य होतुराहुतिसाधनम्।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥ ८२ ॥

इतीति ॥ इति वादिनो वदत एव होतुर्हवनशीलस्य। 'तृन्' (पा. ३।३।१३५) इति तृन्प्रत्ययः। अस्य मुनेराहुतीनां साधनं कारणम्। नन्दयतीति व्युत्पत्त्या नन्दिनी नामानिन्द्यागर्ह्या प्रशस्ता धेनुर्वनादाववृते प्रत्यागता। 'अभ्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्' इति भावः ॥ ८२ ॥

संप्रति धेनुं विशिनष्टि—

ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला।
बिभ्रती श्वेतरोमाङ्कं संध्येव शशिनं नवम् ॥ ८३ ॥

---

पाठा०—१ 'स गां मदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः'; 'स त्वमेकान्तरां त्तस्यां मदीयां वत्समातरम्'. २ 'सा वां कामं विधास्यति'. ३ 'ताम्रां ललाटजां रेखां बिभ्रतीः सासितेतराम्। संध्या प्रातिपदेनेव प्र(घ्र)तिभिन्ना हिमांशुना'.

**ललाटेति** ॥ पल्लववत् स्निग्धा चासौ **पाटला** च । संध्यायामप्येतद्विशेषणं योज्यम् । ललाट उदयो यस्य स **ललाटोदयः**, तम् । **आभुग्नमी**षद्वक्रम् । 'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमरः । 'ओदितश्च' (पा. ८।२।४५) इति निष्ठातस्य नत्वम् । **श्वेतरोमाण्येवाङ्क**स्तं बिभ्रती । **नवं शशिनं बिभ्रती संध्येव** । स्थिता ॥ ८३ ॥

**भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।**
**प्रस्रवेणाभिवर्षन्ती वत्सालोकप्रवर्तिना ॥ ८४ ॥**

**भुवमिति** ॥ **कोष्णेन** किंचिदुष्णेन । 'कवं चोष्णे' (पा. ६।३।१०७) इति चकारात्कादेशः । **अवभृथादप्य**वभृथस्नानादपि **मेध्येन** पवित्रेण 'पूतं पवित्रं मेध्यं च' इत्यमरः । **वत्सस्यालोके**न प्रदर्शनेन **प्रवर्तिना** प्रवहता **प्रस्रवेन** क्षीराभिस्यन्देन **भुवमभिवर्षन्ती** सिञ्चन्ती । कुण्डमिवोध आपीनं यस्याः सा **कुण्डोध्नी** । 'ऊधस्तु क्लीबमापीनम्' इत्यमरः । 'ऊधसोऽनङ्' (पा. ५।४।१३१) इत्यनङादेशः । 'बहुव्रीहेरूधसो ङीष्' (पा. ४।१।२५) इति ङीष् ॥ ८४ ॥

**रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।**
**तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ॥ ८५ ॥**

**रज इति** ॥ **खुरोद्धूतैरन्तिकात्**समीपे **गात्रं स्पृशद्भिः** । 'दूरान्तिकार्थेभ्यो द्वितीया च' (पा. २।३।३५) इति चकारात्पञ्चमी । **रजसां कणैः** । महीं क्षियत ईष्ट इति **महीक्षित्** । तस्य । तीर्थाभिषेकेण जातां **तीर्थाभिषेकजाम्** । **शुद्धिमादधाना** कुर्वाणा । एतेन वायव्यं स्नानमुक्तम् । उक्तं च मनुना 'आग्नेयं भस्मना स्नानमवगाह्यं तु वारुणम् । आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् ॥' इति ॥८५॥

**तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः ।**
**याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥ ८६ ॥**

**तामिति** ॥ **निमित्तज्ञः** शकुनज्ञस्**तपोनिधि**र्वसिष्ठः । **पुण्यं दर्शनं** यस्यास्तां **तां** धेनुं **दृष्ट्वा आशंसितं** मनोरथः । नपुंसके भावे क्तः । तत्रावन्ध्यं सफलं **प्रार्थनं** यस्य स तमाशंसितावन्ध्यप्रार्थनम् । अवन्ध्यमनोरथमित्यर्थः । याजयितुं योग्यं **याज्यं** पार्थिवं **पुनरब्रवीत्** ॥ ८६ ॥

पाठा०–१ 'प्रस्रवेण'. २ 'तीर्थाभिषेकसंशुद्धिम्'. ३ 'महीभृतः'; 'महीपतेः'. ४ 'तपोधनः'. ५ 'अवन्ध्यम्'.

अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः ।
उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥ ८७ ॥

अदूरेति ॥ हे राजन् ! आत्मनः कार्यस्य सिद्धिमदूरवर्तिनीं शीघ्रभाविनीं विगणय विद्धि । यद्यस्मात्कारणात् कल्याणी मङ्गलमूर्तिः । 'बह्वादिभ्यः' ( पा. ४।१।४५) इति ङीप् । इयं धेनुर्नाम्नि कीर्तिते कथिते सत्येवोपस्थिता ॥ ८७॥

वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥ ८८ ॥

वन्येति ॥ वने भवं वन्यं कन्दमूलादिकं वृत्तिराहारो यस्य तथाभूतः सन् । इमां गां शश्वत् सदा । आ प्रसादादविच्छेदेनेत्यर्थः । आत्मनस्तव कर्तुः अनुगमनेनानुसरणेन । अभ्यसनेनानुष्ठातुरभ्यासेन विद्यामिव । प्रसादयितुं प्रसन्नां कर्तुमर्हसि ॥ ८८ ॥

गवानुसरणप्रकारमाह—

प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः ।
निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ॥ ८९ ॥

प्रस्थितेति ॥ अस्यां नन्दिन्यां प्रस्थितायां प्रतिष्ठेथाः प्रयाहि । 'समवप्रविभ्यः स्थः' ( पा. १।३।२२ ) इत्यात्मनेपदम् । स्थितायां निवृत्तगतिकायां स्थितिमाचरेः स्थितिं कुरु । तिष्ठेत्यर्थः । निषण्णायामुपविष्टायां निषीदोपविश । विध्यर्थे लोट् । पीतमम्भो यया तस्यां पीताम्भसि सत्यामपः पिबेः पिब ॥ ८९ ॥

वधूर्भक्तिमती चैनामर्चितामा तपोवनात् ।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥ ९० ॥

वधूरिति ॥ वधूर्जाया च भक्तिमती प्रयता सती गन्धादिभिरर्चितामेनां गां प्रातरा तपोवनात् । आङ् मर्यादायाम् । पदद्वयं चैतत् । अन्वेत्वनुगच्छतु । सायमपि प्रत्युद्व्रजेत् प्रत्युद्गच्छेत् । विध्यर्थे लिङ् ॥ ९० ॥

इत्या प्रसादादस्यास्त्वं परिचर्यापरो भव ।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥ ९१ ॥

इतीति ॥ इत्यनेन प्रकारेण त्वमा प्रसादात् प्रसादपर्यन्तम् । 'आङ् मर्यादाभिविध्योः' ( पा. २।१।१३ ) इत्यस्य वैभाषिकत्वादसमासत्वम् । अस्या धेनोः

पाठा०—१ 'वृत्तिम्'. २ 'सम्यगाराधनेन'. ३ 'स्थानम्'. ४ 'प्रयाताम्'. ५ 'भूयाः'.

**परिचर्यापरः** शुश्रूषापरो **भव; ते** तवा**विघ्नं** विघ्नस्याभावोऽ**स्तु**। 'अव्ययं विभक्ति-' (पा. २।१।६) इत्यादिनार्थाभावेऽव्ययीभावः। **पितेव पुत्रिणां** सत्पुत्रवताम्। प्रशंसायामिनिप्रत्ययः। **धुर्यग्रे स्थेयास्तिष्ठेः**। आशीरर्थे लिङ्। 'एर्लिङि' (पा. ६।४।६७) इत्याकारस्यैकारादेशः। त्वत्सदृशो भवत्पुत्रोऽस्त्विति भावः॥ ९१॥

**तथेति प्रतिजग्राह प्रीतिमान्सपरिग्रहः।**
**आदेशं देशकालज्ञः शिष्यः शासितुरानतः॥ ९२॥**

**तथेति**॥ **देशकालज्ञः** देशोऽग्निसंनिधिः। कालोऽग्निहोत्रावसानसमयः, विशिष्टदेशकालोत्पन्नमार्षं ज्ञानमव्याहतमिति जानन्। अत एव **प्रीतिमान् शिष्यो**ऽन्तेवासी राजा **सपरिग्रहः** सपत्नीकः। 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः। **आनतो** विनयनम्रः सन्। **शासितुर्गुरोरादेशमाज्ञां तथेति प्रतिजग्राह** स्वीचकार॥ ९२॥

**अथ प्रदोषे दोषज्ञः संवेशाय विशांपतिम्।**
**सूनुः सूनृतवाक्स्रष्टुर्विससर्जोदितश्रियम्॥ ९३॥**

**अथेति**॥ **अथ प्रदोषे** रात्रौ **दोषज्ञो** विद्वान्। 'विद्वान्विपश्चिद्दोषज्ञः' इत्यमरः। **सूनृतवाक्** सत्यप्रियवाक्। 'प्रियं सत्यं च सूनृतम्' इति हलायुधः। **स्रष्टुः सूनुर्**ब्रह्मपुत्रो मुनिः। अनेन प्रकृतकार्यनिर्वाहकत्वं सूचयति। **उदितश्रियं विशांपतिं** मनुजेश्वरम्। 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः। **संवेशाय** निद्रायै। 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः। **विससर्जा**ज्ञापयामास॥ ९३॥

**सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः।**
**कल्पवित्कल्पयामास वन्यामेवास्य संविधाम्॥ ९४॥**

**सत्यामिति**॥ **कल्पवि**त्प्रयोगाभिज्ञो **मुनिः तपःसिद्धौ सत्यामपि**। तपसैव राजयोग्याहारसंपादनसामर्थ्ये सत्यपीत्यर्थः। **नियमापेक्षया** तदाप्रभृत्येव व्रतचर्यापेक्षया। **अस्य** राज्ञो **वन्यामेव**। संविधीयतेऽनयेति **संविधाम्**। कुशादिशयनसामग्रीम्। 'आतश्चोपसर्गे' (पा. ३।१।१३६) इति कप्रत्ययः, 'अकर्तरि च कारके संज्ञायाम्' (पा. ३।३।१९) इति कर्माद्यर्थत्वम्। **कल्पयामास** संपादयामास॥ ९४॥

---

पाठा०—१ 'विससर्जोर्जितश्रियम्'.

व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः ।
न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥ ४ ॥

**व्रतायेति** ॥ **व्रताय धेनोरनुचरेण** । न तु जीवनायेति भावः । **तेन** दिलीपेन **शेषोऽ**वशिष्टो**ऽप्यनुयायिवर्गो**ऽनुचरवर्गो **न्यषेधि** निवर्तितः । शेषत्वं सुदक्षिणापेक्षया । कथं तर्ह्यात्मरक्षणमत आह—**न चेति** । **तस्य** दिलीपस्य **शरीररक्षा चान्यतः** पुरुषान्तरान्न । कुतः ? **हि** यस्मात्कारणान्**मनोः** । प्रसूयत इति **प्रसूतिः** संततिः **स्ववीर्यगुप्ता** स्ववीर्येणैव रक्षिता । न हि स्वनिर्वाहकस्य परापेक्षेति भावः ॥ ४ ॥

आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥ ५ ॥

**आस्वादवद्भिरिति** ॥ **सम्राट्** मण्डलेश्वरः । 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः । **स** राजा । **आस्वादवद्भी** रसवद्भिः । स्वादुयुक्तैरित्यर्थः । **तृणानां कवलै**र्ग्रासैः । 'ग्रासस्तु कवलार्थकः' इत्यमरः । **कण्डूयनैः** खर्जनैः । **दंशानां** वनमक्षिकाणां **निवारणैः** । 'दंशस्तु वनमक्षिका' इत्यमरः । **अव्याहतै**रप्रतिहतैः **स्वैरगतैः** स्वच्छन्दगमनैश्च **तस्या** धेन्वाः **समाराधनतत्परः** शुश्रूषासक्तो**ऽभूत्** । तदेव परं प्रधानं यस्येति तत्परः । 'तत्परे प्रसितासक्तौ' इत्यमरः ॥ ५ ॥

स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥ ६ ॥

**स्थित इति** ॥ **भूपतिस्तां** गां **स्थितां** सतीं **स्थितः** सन् । स्थितिरूर्ध्वावस्थानम् । **प्रयातां** प्रस्थिता**मुच्चलितः** प्रस्थितः । **निषेदुषीं** निषण्णाम् । उपविष्टामित्यर्थः । 'भाषायां सदवसश्रुवः' (पा. ३।२।१०८) इति क्वसुप्रत्ययः । 'उगितश्च' (पा. ४।१।६) इति ङीप् । **आसनबन्ध** उपवेशने **धीरः** स्थितः । उपविष्टः सन्नित्यर्थः । **जलमाददानां** पिबन्तीं **जलाभिलाषी** । पिबन्नित्यर्थः । इत्थं **छायेवान्वगच्छद**नुसृतवान् ॥ ६ ॥

स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः ।
आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः ॥ ७ ॥

पाठा०—१ 'अव्याहतस्वैरगतैः'; 'अव्याहतस्वैरगतेः'. २ 'संन्यस्त'. ३ 'राज्यलक्ष्मीम्'.

स इति ॥ न्यस्तानि परिहृतानि चिह्नानि छत्रचामरादीनि यस्यास्तां तथाभूतामपि तेजोविशेषेण प्रभावातिशयेन । अनुमितां सर्वथा राजैवायं भवेदित्यूहितां राजलक्ष्मीं दधानः स राजा । अनाविष्कृतदानराजिर्बहिरप्रकटितमदरेखः । अन्तर्गता मदावस्था यस्य सोऽन्तर्मदावस्थः । तथाभूतो द्विपेन्द्र इव । आसीत् ॥ ७ ॥

लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम् ।
रक्षापदेशान्मुनिहोमधेनोर्वन्यान्विनेष्यन्निव दुष्टसत्त्वान् ॥ ८ ॥

लतेति ॥ लतानां वल्लीनां प्रतानैः कुटिलतन्तुभिरुद्ग्रथिता उन्नमय्य ग्रथिता ये केशास्तैरुपलक्षितः । 'इत्थंभूतलक्षणे' (पा. २।३।२१) इति तृतीया । स राजा । अधिज्यमारोपितमौर्वीकं धनुर्यस्य सोऽधिज्यधन्वा सन् । 'धनुषश्च' (पा. ५।४।१३२) इत्यनङादेशः । मुनिहोमधेनो रक्षापदेशाद्रक्षणव्याजात् । वन्यान् वने भवान् दुष्टसत्त्वान् दुष्टजन्तून् । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । विनेष्यञ्छिक्षयिष्यन्निव । दावं वनम् । 'वने च वनवह्नौ च दवो दाव इहेष्यते' इति यादवः । विचचार । वने चचारेत्यर्थः । 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति दावस्य कर्मत्वम् ॥ ८ ॥

'विसृष्ट–' इत्यादिभिः षड्भिः श्लोकैस्तस्य महामहिमतया द्रुमादयोऽपि राजोपचारं चक्रुरित्याह—

विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य ।
उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥ ९ ॥

विसृष्टेति ॥ विसृष्टाः पार्श्वानुचराः पार्श्ववर्तिनो जना येन तस्य । पाशभृता वरुणेन समस्य तुल्यस्य । 'प्रचेता वरुणः पाशी' इत्यमरः । अनुभावोऽनेन सूचितः । तस्य राज्ञः पार्श्वयोर्द्रुमाः । उन्मदानामुत्कटमदानां वयसां खगानाम् । 'खगबाल्यादिनोर्वयः' इत्यमरः । विरावैः शब्दैः । आलोकस्य शब्दं वाचकमालोकयेति शब्दम् । जयशब्दमित्यर्थः । 'आलोको जयशब्दः स्यात्' इति विश्वः । उदीरयामासुरिवावदन्निव । इत्युत्प्रेक्षा ॥ ९ ॥

पाठा०–१ 'उपदेशात्'. २ 'गुरु'.

1 'भद्रो मन्द्रो मृगश्चेति संकीर्णश्चेति जातयः । वनज- करिणां तासां मदोऽन्तर्मद एव च' —इति वल्लभः ।

2 आलोकस्य दर्शनस्य शब्दः आलोकशब्दः तं 'जय जीव' इत्यालोकशब्दम्, 'जय जय महाराज प्रभो स्वामिन् ! पादमवधारयताम्, इत्यालोकशब्द—इति वल्लभः ।

मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम् ।
अवाकिरन्बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥ १० ॥

**मरुदिति** ॥ **मरुत्प्रयुक्ता** वायुना प्रेरिता **बाललता आरात्** समीपेऽभि**वर्तमानम्** । 'आराद्दूरसमीपयोः' इत्यमरः । मरुतो वायोः सखा मरुत्सखोऽग्निः । स इवाभातीति **मरुत्सखाभः** । 'आतश्चोपसर्गे' (पा. ३।१।१३६) इति कप्रत्ययः । **तम्**, **अर्च्यं** पूज्यं तं दिलीपं **प्रसूनैः** पुष्पैः । **पौरकन्याः** पौराश्च ताः कन्या **आचारार्थैर्लाजैराचारलाजैरिव** । **अवाकिरन्** । तस्योपरि निक्षिप्तवत्य इत्यर्थः । सखा हि सखायमागतमुपचरतीति भावः ॥ १० ॥

धनुर्भृतोऽप्यस्य दयार्द्रभावमाख्यातमन्तःकरणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः ॥ ११ ॥

**धनुर्भृत इति** ॥ **धनुर्भृतोऽप्यस्य** राज्ञः । एतेन भयसंभावना दर्शिता । तथापि **विशङ्कैर्निर्भीकैरन्तःकरणैः** कर्तृभिः । दयया कृपारसेनार्द्रो भावोऽभिप्रायो यस्य **तद्दयार्द्रभावं** तदा**ख्यातम्** । दयार्द्रभावमेतदित्याख्यातमित्यर्थः । 'भावः सत्त्वस्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः । तथाविधं **वपुर्विलोकयन्त्यो हरिण्योऽक्ष्णां प्रकामविस्तारस्या**त्यन्तविशालतायाः **फलमापुः** । 'विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं च' इति न्यायेन स्वान्तःकरणवृत्तिप्रामाण्यादेव विश्रब्धं ददृशुरित्यर्थः ॥ ११ ॥

स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः ॥ १२ ॥

**स इति** ॥ **स** दिलीपो **मारुतपूर्णरन्ध्रैः** । अत एव **कूजद्भिः** स्वनद्भिः **कीचकै**र्वेणुविशेषैः । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः । वंशः सुषिरवाद्यविशेषः । 'वंशादिकं तु सुषिरम्' इत्यमरः । **आपादितं** संपादितं **वंशस्य कृत्यं** कार्यं यस्मिन्कर्मणि तत्तथा । **कुञ्जेषु** लतागृहेषु । 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः । **वनदेवताभिरुद्गीयमानमुच्चै**र्गीयमानं **स्वं यशः शुश्राव** श्रुतवान् ॥ १२ ॥

पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धी ।
तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ॥ १३ ॥

पाठा०—१ 'आकम्पितपुष्पगन्धिः'; 'आकम्पनपुष्पगन्धी'.

1 पुरप्रवेशे हि राजा कुमारीभिः (लाजैः) अवकीर्येत इत्याचारः—इति सुबो० ।

पृक्त इति ॥ गिरिषु निर्झराणां वारिप्रवाहाणाम् । 'वारिप्रवाहो निर्झरो झरः' इत्यमरः । तुषारैः सीकरैः । 'तुषारौ हिमसीकरौ' इति शाश्वतः । पृक्तः संपृक्तोऽनोकहानां वृक्षाणामाकम्पितानीषत्कम्पितानि पुष्पाणि तेषां यो गन्धः सोऽस्यास्तीत्याकम्पितपुष्पगन्धी ईषत्कम्पितपुष्पगन्धवान् । एवं शीतो मन्दः सुरभिः पवनो वायुरनातपत्रं व्रतार्थं परिहृतच्छत्रम् । अत एव, आतपक्लान्तमाचारेण पूतं शुद्धं तं नृपं सिषेवे । आचारपूतत्वात्स राजा जगत्पावनस्यापि सेव्य आसीदिति भावः ॥ १३ ॥

शशाम वृष्ट्यापि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः ।
ऊनं न सत्त्वेष्वधिको बबाधे तस्मिन्वनं गोप्तरि गाहमाने ॥ १४ ॥

शशामेति ॥ गोप्तरि तस्मिन् राज्ञि वनं गाहमाने प्रविशति सति वृष्ट्या विनापि । दवाग्निर्वनाग्निः । 'दवदावौ वनानले' इति हैमः । शशाम । फलानां पुष्पाणां च वृद्धिः । विशेष्यत इति विशेषा । अतिशयिताऽऽसीत् । कर्मार्थे घञ्प्रत्ययः । सत्त्वेषु जन्तुषु मध्ये । 'यतश्च निर्धारणम्' (पा. २।३।४१) इति सप्तमी । अधिकः प्रबलो व्याघ्रादिरूनं दुर्बलं हरिणादिकं न बबाधे ॥ १४ ॥

संचारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ १५ ॥

संचारपूतानीति ॥ पल्लवस्य रागो वर्णः पल्लवरागः । 'रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु' इति शाश्वतः । स इव ताम्रा पल्लवरागताम्रा पतङ्गस्य सूर्यस्य प्रभा कान्तिः । 'पतङ्गः पक्षिसूर्ययोः' इति शाश्वतः । मुनेर्धेनुश्च । दिगन्तराणि दिशामवकाशान् । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः । संचारेण पूतानि शुद्धानि कृत्वा दिनान्ते सायंकाले निलयायास्तमयाय; धेनुपक्षे,—आलयाय च । गन्तुं प्रचक्रमे ॥ १५ ॥

तां देवतापित्रतिथिक्रियार्थामन्वग्ययौ मध्यमलोकपालः ।
बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद्विधिनोपपन्ना ॥ १६ ॥

तामिति ॥ मध्यमलोकपालो भूपालः । देवतापित्रतिथीनां क्रिया यागश्राद्धदानानि ता एवार्थः प्रयोजनं यस्यास्तां तां धेनुमन्वगनुपदं ययौ । 'अन्व-

पाठा०—१ 'विशेषात्'. २ 'वने'.

1 भुवो मध्यमत्वं तु स्वर्गपातालापेक्षया, तथा चोक्तं वासवदत्तायां—'अवजगार मध्यमलोकमंशुमाली'—इति शिशु०।

गन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः। **सतां मतेन** सद्भिर्मान्येन। 'गतिबुद्धि-' (पा. १।४।५२) इत्यादिना वर्तमाने क्तः। 'क्तस्य च वर्तमाने' (पा. २।३।६७) इति षष्ठी। तेन शास्त्रोपपन्ना युक्ता सा धेनुः। **सतां मतेन विधिना**ऽनुष्ठानेनो- पपन्ना युक्ता साक्षात् प्रत्यक्षा श्रद्धाऽऽस्तिक्यबुद्धिरिव। **धर्मो च** ॥ १६ ॥

**स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि ।**
**ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् ॥ १७॥**

**स इति** ॥ **स** राजा । पल्वलेभ्योऽल्पजलाशयेभ्य **उत्तीर्णा**नि निर्गतानि **वराहाणां यूथानि** कुलानि येषु तानि। बर्हाण्येषां सन्तीति बर्हिणा मयूराः। 'मयूरो बर्हिणो बर्ही' इत्यमरः। फलबर्हाभ्यामिनच्प्रत्ययो वक्तव्यः। **आवासवृक्षा णामुन्मुखा बर्हिणा** येषु तानि **श्यामायमानानि** वराहबर्हिणादिमलिनिम्ना श्यामानि । श्यामानि भवन्तीति श्यामायमानानि । 'लोहितादिडाज्भ्यः क्यष्' (पा. ३।१।१३) इति क्यष्प्रत्ययः। 'वा क्यषः' (पा. १।३।९०) इत्यात्मनेपदे शानच्। **मृगैरध्यासिता** अधिष्ठिताः **शाद्वला** येषु तानि। शादाः शष्पाण्येषु देशेषु सन्तीति शाद्वलाः शष्पश्यामदेशाः। 'शाद्वलः शादहरिते' इत्यमरः। 'शादः कर्दम- शष्पयोः' इति विश्वः। 'नडशादाड्ड्वलच्' (पा. ४।२।८८) इति ड्वलच्प्रत्ययः। **वनानि पश्यन्ययौ** ॥ १७ ॥

**आपीनभारोद्वहनप्रयत्नाद्गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः ।**
**उभावलंचक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम् ॥ १८ ॥**

**आपीनेति** ॥ **गृष्टिः** सकृत्प्रसूता गौः। 'गृष्टिः सकृत्प्रसूता गौः' इति हला- युधः। **नरेन्द्रश्च**। **उभौ** यथाक्रमम्। **आपीनम्**ऊधः। 'ऊधस्तु क्लीबमापीनम्' इत्यमरः। आपीनस्य **भारोद्वहने प्रयत्नात्** प्रयासात् **वपुषो गुरुत्वा**दाधि- क्याच्च। **अञ्चिताभ्यां** चारुभ्यां गताभ्यां गमनाभ्यां तपोवनादावृत्तेः पन्थास्तं **तपोवनावृत्तिपथम्**। 'ऋक्पूः-' (पा. ५।४।७४) इत्यादिना समासान्तोऽप्रत्ययः। **अलंचक्रतु**र्भूषितवन्तौ ॥ १८ ॥

**वसिष्ठधेनोरनुयायिनं तमावर्तमानं वनिता वनान्तात् ।**
**पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥ १९ ॥**

**वसिष्ठेति** ॥ **वसिष्ठधेनुयायिन**मनुचरं **वनान्तादावर्तमानं** प्रत्यागतं **तं** दिलीपं **वनिता** सुदक्षिणा [1]**निमेषेष्वलसा** मन्दा **पक्ष्मणां पङ्क्ति**र्यस्याः सा।

---

1 निमेषेषु अलसा मन्थरा पक्ष्मपंक्तिः अक्षिलोमाली यस्याः सा—इति वल्लभः।

अनिमेषा सतीत्यर्थः, **लोचनाभ्यां** करणाभ्याम् । **उपोषिताभ्यामिव** । उपवासो भोजननिवृत्तिः । तद्वद्भ्यामिव । वसतेः कर्तरि क्तः । **पपौ** । यथोपोषितोऽतितृष्णया जलमधिकं पिबति तद्वदतितृष्णयाधिकं व्यलोकयदित्यर्थः ॥ १९ ॥

**पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या ।**
**तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव संध्या ॥ २० ॥**

**पुरस्कृतेति** ॥ **वर्त्मनि पार्थिवेन** पृथिव्या ईश्वरेण । 'तस्येश्वरः' (पा. ५।१।४२) इत्यञ्प्रत्ययः । **पुरस्कृता**ऽग्रतः कृता । धर्मस्य पत्नी धर्मपत्नी । धर्मार्थपत्नीत्यर्थः । अश्वघासादिवत्तादर्थ्ये षष्ठीसमासः । **पार्थिवस्य धर्मपत्न्या सा धेनुस्तदन्तरे** तयोर्दंपत्योर्मध्ये । **दिन**[2]**क्षपयो**र्दिनरात्र्योर्**मध्यगता** [3]**संध्येव** । **रराज** ॥ २० ॥

**प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साक्षतपात्रहस्ता ।**
**प्रणम्य चानर्च विशालमस्याः शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥ २१ ॥**

**प्रदक्षिणीकृत्येति** ॥ अक्षतानां पात्रेण सह वर्तेते इति **साक्षतपात्रौ हस्तौ** यस्याः सा **सुदक्षिणा पयस्विनीं** प्रशस्तक्षीरां **तां** धेनुं **प्रदक्षिणीकृत्य प्रणम्य च** । **अस्याः** धेन्वा **विशालं शृङ्ग**मध्यम् । **अर्थसिद्धेः** कार्यसिद्धे**र्द्वारं** प्रवेशमार्ग**मिव** । **आनर्च**ार्चयामास, अर्चतेर्भौवादिकाल्लिट् ॥ २१ ॥

**वत्सोत्सुकापि स्तिमिता सपर्यां प्रत्यग्रहीत्सेति ननन्दतुस्तौ ।**
**भक्त्योपपन्नेषु हि तद्विधानां प्रसादचिह्नानि पुरःफलानि ॥ २२ ॥**

**वत्सोत्सुकेति** ॥ **सा** धेनु**र्वत्सोत्सुकापि** वत्स उत्कण्ठितापि **स्तिमिता** निश्चला सती **सपर्यां** पूजां **प्रत्यग्रहीदिति** हेतोः, **तौ** दंपती **ननन्दतुः** । पूजास्वीकारस्यानन्दहेतुत्वमाह—**भक्त्येति** । पूज्येष्वनुरागो भक्तिः । तयो**पपन्नेषु** युक्तेषु विषये **तद्विधानाम्** । तस्या धेन्वा विधेव विधा प्रकारो येषां तेषाम् । महतामित्यर्थः । **प्रसादस्य चिह्नानि** लिङ्गानि पूजास्वीकारादीनि **पुरःफलानि** । पुरोगतानि प्रत्यासन्नानि फलानि येषां तानि हि । अविलम्बितफलसूचकलिङ्गदर्शनादानन्दो युज्यत इत्यर्थः ॥ २२ ॥

---

**पाठा०**—१ 'आत्मसिद्धेः'.

---

[1] सादरमालोकन पानमित्युच्यते—इति शिशु० ।

[2] धेनोरपि लोहितत्वात् । समासे लिङ्गभेदात्प्रतीतेर्दिनशब्दस्य नोपमादोषः; यदाह—'इष्टः पुनपुंसकयो प्रायेण' (का. सू. २।१२)—इति शिशु० ।

[3] सन्ध्यालक्षणमन्यत्रोक्तम्—'अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः । सा च सन्ध्या समाख्याता'—इति ।

गुरोः सदारस्य निपीड्य पादौ समाप्य सांध्यं च विधिं दिलीपः।
दोहावसाने पुनरेव दोग्ध्रीं भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥ २३ ॥

गुरोरिति ॥ भुजोच्छिन्नरिपुर्दिलीपः सदारस्य दारैरुन्धत्या सह वर्तमानस्य गुरोः, उभयोरपीत्यर्थः । 'भार्या जायाथ पुं भूम्नि दाराः' इत्यमरः । पादौ निपीड्याभिवन्द्य । सांध्यं संध्यायां विहितं विधिमनुष्ठानं च समाप्य । दोहावसाने निषण्णामासीनां दोग्ध्रीं दोहनशीलाम् । 'तृन्' (पा. ३।२।१३५) इति तृन्प्रत्ययः । धेनुमेव पुनर्भेजे सेवितवान् । 'दोग्ध्रीम्' इति निरुपपदप्रयोगात्कामधेनुत्वं गम्यते ॥ २३ ॥

तामन्तिकन्यस्तबलिप्रदीपामन्वास्य गोप्ता गृहिणीसहायः।
क्रमेण सुप्तामनु संविवेश सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥ २४ ॥

तामिति ॥ गोप्ता रक्षकः गृहिणीसहायः पत्नीद्वितीयः सन्, उभावपीत्यर्थः । अन्तिके न्यस्ता बलयः प्रदीपाश्च यस्यास्तां तथोक्तां तां पूर्वोक्तां निषण्णां धेनुमन्वास्यानूपविश्य क्रमेण सुप्तामन्वनन्तरं संविवेश सुष्वाप प्रातः सुप्तोत्थितामनूदतिष्ठदुत्थितवान् । अत्र 'अनु'शब्देन धेनुराजव्यापारयोः पौर्वापर्यमुच्यते । 'क्रम'शब्देन धेनुव्यापाराणामेवेत्यपौनरुक्त्यम् । 'कर्मप्रवचनीययुक्ते—' (पा. २।३।८) इति द्वितीया ॥ २४ ॥

इत्थं व्रतं धारयतः प्रजार्थं समं महिष्या महनीयकीर्तेः।
सप्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य ॥ २५ ॥

इत्थमिति ॥ इत्थमनेन प्रकारेण प्रजार्थं संतानाय महिष्या समम् अभिषिक्तपत्न्या सह । 'कृताभिषेका महिषी' इत्यमरः । व्रतं धारयतः । महनीया पूज्या कीर्तिर्यस्य तस्य दीनानामुद्धरणं दैन्यविमोचनम् । तत्रोचितस्य परिचितस्य तस्य नृपस्य । त्रयो गुणा आवृत्तयो येषां तानि त्रिगुणानि त्रिरावृत्तानि सप्त [illegible] ॥ २५ ॥

[illegible] ।
[illegible] ॥

अन्येद्युरिति ॥ अन्येद्युरन्यस्मिन्दिने द्वाविंशे दिने । 'सद्यःपरुत्परारि—' (पा. ५।३।२२) इत्यादिना निपातनादव्ययम् । 'अथात्राह्नाय पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् । तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयः ॥' इत्यमरः । मुनिहोमधेनुः आत्मा-

पाठा०—१ 'निरूढ'.

नुचरस्य **भावम**भिप्रायं दृढभक्तित्वम्। 'भावोऽभिप्राय आशयः' इति यादवः। **जिज्ञासमाना** ज्ञातुमिच्छन्ती। 'ज्ञाश्रुस्मृदृशां सनः' (पा. १।३।५७) इत्यात्मनेपदे शानच्। प्रपतत्यस्मिन्निति प्रपातः पतनप्रदेशः **गङ्गायाः प्रपात**स्तस्यान्ते समीपे **विरूढानि** जातानि **शष्पाणि** बालतृणानि यस्मिंस्तत्। 'शष्पं बालतृणं घासः' इत्यमरः। **गौरीगुरोः** पार्वतीपितुर्**गह्वरं** गुहामा**विवेश** ॥ २६ ॥

सा[1] दुष्प्रधर्षा मनसापि हिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन।
अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः[1] किल तां चकर्ष ॥ २७ ॥

सेति ॥ **सा** धेनुर्**हिंस्रै**र्व्याघ्रादिभि**र्मनसाऽपि दुष्प्रधर्षा** दुर्धर्षेति **इति** हेतोः, **अद्रिशोभायां प्रहितेक्षणेन** दत्तदृष्टिना **नृपेणालक्षितमभ्युत्पतनम**भिमुख्येनोत्पतनं यस्य स **सिंहस्तां** धेनुं **प्रसह्य** हठात्। 'प्रसह्य तु हठार्थकम्' इत्यमरः। **चकर्ष**। 'किल' इत्यलीके ॥ २७ ॥

तदीयमाक्रन्दितमार्तसाधोर्गुहानिबद्धप्रतिशब्ददीर्घम्।
रश्मिष्विवादाय नगेन्द्रसक्तां[1] निवर्तयामास नृपस्य दृष्टिम् ॥ २८ ॥

तदीयमिति ॥ **गुहानिबद्धेन प्रतिशब्देन** प्रतिध्वनिना **दीर्घम्**। तस्या इदं **तदीयम्**। **आक्रन्दितमार्त**घोषणम्। आर्तेष्वापन्नेषु **साधो**र्हितकारिणो **नृपस्य नगेन्द्रसक्तां दृष्टिम्**। **रश्मिषु** प्रग्रहेषु। 'किरणप्रग्रहौ रश्मी' इत्यमरः। **आदायेव** गृहीत्वेव। **निवर्तयामास** ॥ २८ ॥

स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श।
अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः[2] प्रफुल्लम् ॥ २९ ॥

स इति ॥ **धनुर्धरः स** नृपः **पाटलायां** रक्तवर्णायां **गवि तस्थिवांसं** स्थितम्। 'क्वसुश्च' (पा. ३।२।१०२) इति क्वसुप्रत्ययः। **केसरिणं** सिंहम्। **सानुमतो**ऽद्रेः। धातोर्गैरिकस्य विकारो **धातुमयी**। तस्यामधित्यकायामूर्ध्वभूमौ। 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः। 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' (पा. ५।२।३४) इति त्यकन्प्रत्ययः। **प्रफुल्लो** विकसितस्तम्। 'फुल्ल विकसने' इति धातोः पचाद्यच्। '**प्रफुल्तम्**' इति तकारपाठे 'ञिफला विशरणे' इति धातोः कर्तरि क्तः। 'उत्परस्यातः' (पा. ७।४।८८) इत्युकारादेश.। **लोध्रा**ख्यं **द्रुममिव ददर्श** ॥२९॥

पाठा०—१ 'नगेन्द्रदत्तां'.

1 हिनस्ति मारयतीति सिंहः; हिंसेर्वर्णविपर्ययः; तथा चोक्तं—'भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात्। गूढोत्मा वर्णविकृतेर्वर्णलोपात्पृषोदरम्' इति।

2 अत्र 'सानुमतः' इति ग्रहणेन पौनरुक्त्यम्, 'पर्वताधित्यका पुरी' इति वचनात्।

ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः ।
जाताभिषङ्गो नृपतिर्निषङ्गादुद्धर्तुमैच्छत्प्रसभोद्धृतारिः ॥ ३० ॥

तत इति ॥ ततः सिंहदर्शनानन्तरं मृगेन्द्रगामी सिंहगामी । शरणं रक्षणम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । 'शरणं रक्षणे गृहे' इति यादवः । शरणे साधुः शरण्यः, 'तत्र साधुः' (पा. ४।४।९८) इति यत्प्रत्ययः । प्रसभेन बलात्कारेणोद्धृता अरयो येन स नृपती राजा जाताभिषङ्गो जातपराभवः सन् । 'अभिषङ्गः पराभवे' इत्यमरः । वध्यस्य वधार्हस्य । 'दण्डादिभ्यो यत्' (पा. ५।१।६६) इति यत्प्रत्ययः । मृगेन्द्रस्य वधाय निषङ्गात्तूणीरात् 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः । शरमुद्धर्तुमैच्छत् ॥ ३० ॥

वामेतरस्तस्य करः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे ॥ ३१ ॥

वामेति ॥ प्रहर्तुस्तस्य वामेतरो दक्षिणः करः । नखप्रभाभिर्भूषितानि विच्छुरितानि कङ्कस्य पक्षिविशेषस्य पत्राणि यस्य तस्मिन् । 'कङ्कः पक्षिविशेषे स्याद्गुप्ताकारे युधिष्ठिरे' इति विश्वः । 'कङ्कस्तु कर्कटः' इति यादवः । सायकस्य पुङ्ख एव कर्तर्याख्ये मूलप्रदेशे । 'कर्तरी पुङ्खे' इति यादवः । सक्ताङ्गुलिः सन् । चित्रार्पितारम्भश्चित्रलिखितशरोद्धरणोद्योग इव । अवतस्थे ॥ ३१ ॥

बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्यः ॥ ३२ ॥

बाह्विति ॥ बाह्वोः प्रतिष्टम्भेन प्रतिबन्धेन । 'प्रतिबन्धः प्रतिष्टम्भः' इत्यमरः । विवृद्धमन्युः प्रवृद्धरोषो राजा । मन्त्रौषधिभ्यां रुद्धवीर्यः प्रतिबद्धशक्तिर्भोगी सर्प इव । 'भोगी राजभुजंगयोः' इति शाश्वतः । अभ्यर्णमन्तिकम् । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः । आगस्कृतमपराधकारिणम्, अस्पृशद्भिः स्वतेजोभिरन्तरदह्यत । 'अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि' इति यादवः ॥ ३२ ॥

तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन्विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥ ३३ ॥

तमिति ॥ निगृहीता पीडिता धेनुर्येन स सिंहः । आर्याणां सतां गृह्यं पक्ष्यम् । 'पदास्वैरिबाह्यापक्ष्येषु च' (पा. ३।१।११९) इति क्यप् । मनुवंशस्य केतुं

पाठा०—१ 'सक्ताङ्गुलिः'. २ 'विस्मापयन्'. ३ 'भूपालसिंहम्'.

चिह्नं केतुवद्व्यावर्तकम् । सिंह इवोरुसत्त्वो महाबलस्तम् । आत्मनो वृत्तौ बाहुस्तम्भरूपे व्यापारेऽभूतपूर्वत्वाद्विस्मितम् । कर्तरि क्तः । तं दिलीपं मनुष्यवाचा करणेन । पुनर्विस्माययन् स्वयमाश्चर्यं प्रापयन्निजगाद । 'स्मिङ् ईषद्धसने' इति धातोर्णिचि वृद्धावायादेशे शतृप्रत्यये च सति विस्माययन्निति रूपं सिद्धम् । 'विस्मापयन्' इति पाठे पुगागममात्रं वक्तव्यम् । तच्च 'नित्यं स्मयतेः' (पा. ६।१।५७) इति हेतुभयविवक्षायामेवेति 'भीस्म्योर्हेतुभये' (पा. १।३।६८) इत्यात्मनेपदे विस्मापयमान इति स्यात् । तस्मान्मनुष्यवाचा विस्माययन्निति रूपं सिद्धम् । करणविवक्षायां न कश्चिद्दोषः ॥ ३३ ॥

**अलं महीपाल ! तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।**
**न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥ ३४ ॥**

**अलमिति ॥ हे महीपाल ! तव श्रमेणालम्**, साध्याभावाच्छ्रमो न कर्तव्य इत्यर्थः । अत्र गम्यमानसाधनक्रियापेक्षया श्रमस्य करणत्वात्तृतीया । उक्तं च न्यासोद्योते—'न केवलं श्रूयमाणैव क्रिया निमित्तं करणभावस्य । अपि तर्हि गम्यमानापि' इति । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । इतोऽस्मिन्मयि । सार्वविभक्तिकस्तसिः । **प्रयुक्तमप्यस्त्रं वृथा स्यात्** । तथा हि-**पादपोन्मूलने शक्ति**र्यस्य तत्तथोक्तं **मारुतस्य रंहो** वेगः **शिलोच्चये** पर्वते **न मूर्च्छति** न प्रसरति ॥३४॥

**कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।**
**अवेहि मां किंकरमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥ ३५ ॥**

**कैलासेति ॥ कैलास** इव **गौरः** शुभ्रस्तम् । 'चामीकरं च शुभ्रं च गौरमाहुर्मनीषिणः' इति शाश्वतः । **वृषं** वृषभम्, **आरुरुक्षोः**आरोढुमिच्छोः । स्वस्योपरि पदं निक्षिप्य वृषमारोहतीत्यर्थः । अष्टौ मूर्तयो यस्य स तस्याष्टमूर्तेः शिवस्य **पादार्पणं** पादन्यासस्तदेवानुग्रहः प्रसादस्तेन **पूतं पृष्ठं** यस्य तं तथोक्तं **निकुम्भमित्रं कुम्भोदरं नाम किंकरं मामवेहि** विद्धि । 'पृथिवी सलिलं तेजो वायुराकाशमेव च । सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्तयः ॥' इति यादवः ॥ ३५ ॥

**अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।**
**यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥३६॥**

पाठा०–१ 'अवेहि'. २ 'निकुम्भतुल्यम्'. ३ 'अयम्'. ४ 'रघु'.

टिप्प०–1 वल्लभस्तु-'कुम्भतुल्य' इति पाठमादृत्य, निकुम्भेनस्पार्वतीवाहनेन सिंहेन तुल्यः-इति व्याचष्टे ।

'अमुमिति' ॥ पुरोऽग्रतोऽमुं देवदारुं पश्यसि । इति काकुः । असौ देवदारुः । वृषभो ध्वजे यस्य स तेन शिवेन पुत्रीकृतः पुत्रत्वेन स्वीकृतः । अभूततद्भावे च्विः । यो देवदारुः स्कन्दस्य मातुर्गौर्या हेम्नः कुम्भ एव स्तनः तस्मान्निःसृतानां पयसामम्बूनां रसज्ञः स्वादज्ञः । स्कन्दपक्षे,–हेमकुम्भ इव स्तन इति विग्रहः । पयसां क्षीराणाम् । 'पयः क्षीरं पयोऽम्बु च' इत्यमरः । स्कन्दसमानप्रेमास्पदमिति भावः ॥ ३६ ॥

कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ॥ ३७ ॥

कण्डूयमानेनेति ॥ कदाचित् कटं कपोलं कण्डूयमानेन कषता । 'कण्ड्वादिभ्यो यक्' (पा. ३।१।२७) इति यक् । ततः शानच् । वन्यद्विपेनास्य देवदारोस्त्वगुन्मथिता अथाद्रेस्तनया गौरी । असुरास्त्रैरालीढं क्षतम् । सेनां नयतीति सेनानीः स्कन्दः । 'पार्वतीनन्दनः स्कन्दः सेनानीः' इत्यमरः । 'सत्सूद्विष–' (पा. ३।२।६१) इत्यादिना क्विप् । तमिव । एनं देवदारुं शुशोच ॥ ३७ ॥

तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति ॥ ३८ ॥

तदेति ॥ तदा तत्कालः प्रभृतिरादिर्यस्मिन्कर्मणि तत्तथा तदाप्रभृत्येव वनद्विपानां त्रासार्थं भयार्थं शूलभृता शिवेन । अङ्कं समीपमागताः प्राप्ताः सत्त्वाः प्राणिनो वृत्तिर्यस्मिंस्तत् । 'अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयोः' इति केशवः । सिंहत्वं विधाय । अस्मिन्नद्रिकुक्षौ गुहायामहं व्यापारितो नियुक्तः ॥ ३८ ॥

तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥ ३९ ॥

तस्येति ॥ परमेश्वरेण प्रदिष्टो निर्दिष्टः कालो भोजनवेला यस्याः सोपस्थिता प्राप्ता एषा गोरूपा शोणितपारणा रुधिरस्य व्रतान्तभोजनम् । सुरद्विषो

पाठा०–१ 'मत्तगजानाम्'. २ 'कलेव'.

1 स्कन्दनात् गंगायां पतनात् स्कन्द इति तस्य नाम, यथोक्तम्—'स्कन्नत्वात्स्कन्दतां प्राप्तो गुहावासाद्गुहोऽभवत्' इति ।

2 हे राजन् ! तस्य मे मम, एषा गौः शोणितपारणोपस्थिता शोणितशरीररुधिरः प्राप्ता; रुधिरदेहयात्रापरत्व । किमर्थं ! तृप्त्यै तृप्तिहेतवे, किंभूतस्य मे ! अत्यन्तम् क्षुधितस्य । किंभूता गौः ! परमेश्वरेण संदिष्टकाला विधिनोपदिष्टभरणवेला–इति तात्पर्यम् ।

राहोः चन्द्रमस इयं चान्द्रमसी सुधेव क्षुधितस्य तस्याद्यागतसत्त्ववृत्तेर्मे मम सिंहस्य तृप्त्या अलं पर्याप्ता। 'नमःस्वस्ति-' (पा. २।३।१६) इत्यादिना चतुर्थी ॥३९॥

**स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः।**
**शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ॥ ४० ॥**

**स** इति ॥ स एवमुपायशून्यस्त्वं **लज्जां विहाय निवर्तस्व**। भवांस्त्वं **गुरोर्दर्शिता** प्रकाशिता **शिष्य**स्य कर्तव्या **भक्ति**र्येन स तथोक्तोऽस्ति। ननु गुरुधनं विनाश्य कथं तत्समीपं गच्छेयमत आह—**शस्त्रेणे**ति। **यद्रक्ष्यं** धनं **शस्त्रेणा**युधेन। 'शस्त्रमायुधलोहयोः' इत्यमरः। अशक्या रक्षा यस्य **तदशक्यरक्षम्**; रक्षितुमशक्यमित्यर्थः। तद्रक्ष्यं नष्टमपि **शस्त्रभृतां यशो न क्षिणोति** न हिनस्ति। अशक्यार्थेष्वप्रतिविधानं न दोषायेति भावः ॥ ४० ॥

**इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य।**
**प्रत्याहतास्त्रो[1] गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥ ४१ ॥**

**इती**ति ॥ **पुरुषाणामधिराजो** नृप **इति प्रगल्भं मृगाधिराजस्य वचो निशम्य** श्रुत्वा **गिरिश**स्येश्वरस्य **प्रभावात्प्रत्याहतास्त्रः** कुण्ठितास्त्रः सन् **आत्मनि** विषयेऽवज्ञामपमानं **शिथिलीचकार**। तत्याजेत्यर्थः। अवज्ञातोऽहमिति निर्वेदं न प्रापेत्यर्थः। समानेषु हि क्षत्रियाणामभिमानः न सर्वेश्वरं प्रतीति भावः ॥ ४१ ॥

**प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभङ्गे वितथप्रयत्नः।**
**जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः ॥ ४२ ॥**

**प्रती**ति ॥ स एव पूर्वः प्रथमो भङ्गः प्रतिबन्धो यस्य तस्मिंस्तत्**पूर्वभङ्गे इषुप्रयोगे वितथप्रयत्नो** विफलप्रयासः। अत एव **वज्रं** कुलिशं **मुमुक्षन्** मोक्तुमिच्छन्। अम्बकं लोचनम्। 'दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षाणि' इति हलायुधः। त्रीण्यम्बकानि यस्य स **त्र्यम्बको** हरः। तस्य **वीक्षणेन जडीकृतो** निष्पन्दीकृतः। वज्रं पाणौ यस्य स **वज्रपाणि**रिन्द्रः। 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्' (वा. १४१५) इति पाणेः सप्तम्यन्तस्योत्तरनिपातः। स **इव** स्थितो नृप **एनं** सिंहं **प्रत्यब्रवीच्च**। 'बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत्प्रभुः' इति महाभारते ॥ ४२ ॥

पाठा०—१ 'गुरो'. २ 'क्षणोति'. ३ 'सङ्गे'. ४ 'वीक्षितेन'.

संरुद्धचेष्टस्य मृगेन्द्र ! कामं हास्यं वचस्तद्यदहं विवक्षुः ।
अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोऽभिधास्ये ॥ ४३ ॥

संरुद्धेति ॥ हे मृगेन्द्र ! संरुद्धचेष्टस्य प्रतिबद्धव्यापारस्य मम तद्वचो वाक्यं कामं हास्यं परिहसनीयम् । यद्वचः 'स त्वं मदीयेन' (२।४५) इत्यादिकमहं विवक्षुर्वक्तुमिच्छुरस्मि । तर्हि तूष्णीं स्थीयतामित्याशङ्क्येश्वरकिंकरत्वात्सर्वज्ञं त्वां प्रति न हास्यमित्याह—अन्तरिति । हि यतो भवान् प्राणभृतामन्तर्गतं हृद्गतं वाग्वृत्त्या बहिरप्रकाशितमेव सर्वं भावं वेद वेत्ति । 'विदो लटो वा' (पा. ३।४।८३) इति णलादेशः । अतोऽभिधास्ये वक्ष्यामि । वच इति प्रकृतं कर्म संबध्यते । अन्ये त्वीदृग्वचनमाकर्ण्यासंभावितार्थमेतदित्युपहसन्ति । अतस्तु मौनमेव भूषणम् । त्वं तु वाङ्मनसयोरेकविध एवायमिति जानासि । अतोऽभिधास्ये यद्वचोऽहं विवक्षुरित्यर्थः ॥ ४३ ॥

मान्यः स मे स्थावरजंगमानां सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम् ॥ ४४ ॥

मान्य इति ॥ प्रत्यवहारः प्रलयः । स्थावराणां तरुशैलादीनां जंगमानां मनुष्यादीनां सर्गस्थितिप्रत्यवहारेषु हेतुः स ईश्वरो मे मम मान्यः पूज्यः । अलङ्घ्यशासन इत्यर्थः । शासनं च 'सिंहत्वमङ्कागतसत्त्ववृत्ति' (२।३८) इत्युक्तरूपम् । तर्हि विसृज्य गम्यताम्; नेत्याह—गुरोरपीति । पुरस्तादग्रे नश्यदिदमाहिताग्नेर्गुरोर्धनमपि गोरूपमनुपेक्षणीयम् । 'आहिताग्नेः' इति विशेषणेनानुपेक्षाकारणं हविःसाधनत्वं सूचयति ॥ ४४ ॥

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥ ४५ ॥

स इति ॥ सोऽङ्कागतसत्त्ववृत्तिस्त्वं मदीयेन देहेन शरीरस्य वृत्तिं जीवनं निर्वर्तयितुं संपादयितुं प्रसीद । दिनावसान उत्सुको 'माता मामागमिष्यति' इत्युत्कण्ठितो बालवत्सो यस्याः सा महर्षेरियं धेनुर्विसृज्यताम् ॥ ४५ ॥

अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्ती किंचिद्विहस्यार्थपतिं बभाषे ॥ ४६ ॥

---

पाठा०—१ 'चेष्टस्तु'. २ 'तु'. ३ 'विमुच्यताम्'. ४ 'कन्दराणाम्'. ५ 'शकलं प्रकुर्वन्'.

**अथेति** ॥ अथ **भूतेश्वरस्य पार्श्ववर्ती** अनुचरः **स** सिंहो **गिरेर्गह्वराणां** गुहानाम् । 'देवखातबिले गुहा । गह्वरम्' इत्यमरः । **अन्धकारं** ध्वान्तं **दंष्ट्रामयूखैः शकलानि** खण्डानि **कुर्वन्**, निरस्यन्नित्यर्थः । **किंचिद्विहस्य** । **अर्थपतिं** नृपं **भूयो बभाषे** । हासकारणम् 'अल्पस्य हेतोर्बहु हातुमिच्छन्' ( २।४७ ) इति वक्ष्यमाणं द्रष्टव्यम् ॥ ४६ ॥

**एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।**
**अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥४७॥**

**एकेति** ॥ एकातपत्रमेकच्छत्रं । **जगतः प्रभुत्वं** स्वामित्वम् । **नवं वयो** यौवनम् । **इदं कान्तं** रम्यं **वपुश्च** । इत्येवं **बहु अल्पस्य हेतोः** अल्पेन कारणेन अल्पफलायेत्यर्थः । 'षष्ठी हेतुप्रयोगे' (पा. २।३।२६) इति षष्ठी । **हातुं** त्यक्तुमिच्छंस्त्वं **विचारे** कार्याकार्यविमर्शे **मूढो** मूर्खो **मे** मम **प्रतिभासि** ॥ ४७ ॥

**भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते ।**
**जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ ! पितेव पासि ॥ ४८ ॥**

**भूतेति** ॥ **तव भूतेष्वनुकम्पा** कृपा **चेत्** । 'कृपा दयानुकम्पा स्यात्' इत्यमरः । कृपैव वर्तते चेदित्यर्थः । तर्हि **त्वदन्ते** तव नाशे सति, **इयमेका गौः** । स्वस्ति क्षेममस्या अस्तीति **स्वस्तिमती** । **भवेत्**, जीवेदित्यर्थः । 'स्वस्त्याशीःक्षेमपुण्यादौ' इत्यमरः । **हे प्रजानाथ ! जीवन् पुनः पितेव प्रजा उपप्लवेभ्यो** विपद्भ्य **शश्वत्** सदा । 'पुनःसदार्थयोः शश्वत्' इत्यमरः । **पासि** रक्षसि । स्वप्राणव्ययेनैकधेनुरक्षणादरं जीवितेनैव शश्वदखिलजगत्त्राणमित्यर्थः ॥ ४८ ॥

न धर्मलोपादियं प्रवृत्तिः किंतु गुरुभयादित्यत आह—

**अथैकधेनोरपराधचण्डाद्गुरोः कृशानुप्रतिमाद्बिभेषि ।**
**शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ॥ ४९ ॥**

**अथेति** ॥ अथेति पक्षान्तरे, अथवा । **एकैव धेनुर्यस्य** तस्मात् । अयं कोपकारणोपन्यास इति ज्ञेयम् । अत एवापराधे गवोपेक्षालक्षणे सति **चण्डाद**तिकोपनात् । 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः । अत एव **कृशानुः** प्रतिमोपमा यस्य तस्मादग्निकल्पाद्**गुरोर्बिभेषि** इति काकुः । 'भीत्रार्थानां भयहेतुः' (पा. १।४।२५) इत्यपादानात्पञ्चमी । अल्पवित्तस्य धनहानिरतिदुःसहेति भावः । **अस्य गुरोर्मन्युः**

पाठा०— १ 'हातुम्'. २ 'द्रुग्धात्'.

संरुद्धचेष्टस्य मृगेन्द्र ! कामं हास्यं वचस्तद्यदहं विवक्षुः ।
अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोऽभिधास्ये ॥ ४३ ॥

संरुद्धेति ॥ हे मृगेन्द्र ! संरुद्धचेष्टस्य प्रतिबद्धव्यापारस्य मम तद्वचो वाक्यं कामं हास्यं परिहसनीयम् । यद्वचः 'स त्वं मदीयेन' (२।४५) इत्यादिकमहं विवक्षुर्वक्तुमिच्छुरस्मि । तर्हि तूष्णीं स्थीयतामित्याशङ्क्येश्वरकिंकरत्वात्सर्वज्ञं त्वां प्रति न हास्यमित्याह–अन्तरिति । हि यतो भवान् प्राणभृतामन्तर्गतं हृद्गतं वाग्वृत्त्या बहिरप्रकाशितमेव सर्वं भावं वेद वेत्ति । 'विदो लटो वा' (पा. ३।४।८३) इति णलादेशः । अतोऽभिधास्ये वक्ष्यामि । वच इति प्रकृतं कर्म संबध्यते । अन्ये त्वीदृग्वचनमाकर्ण्यासंभावितार्थमेतदित्युपहसन्ति । अतस्तु मौनमेव भूषणम् । त्वं तु वाङ्मानसयोरेकविध एवायमिति जानासि । अतोऽभिधास्ये यद्वचोऽहं विवक्षुरित्यर्थः ॥ ४३ ॥

मान्यः स मे स्थावरजंगमानां सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम् ॥ ४४ ॥

मान्य इति ॥ प्रत्यवहारः प्रलयः । स्थावराणां तरुशैलादीनां जंगमानां मनुष्यादीनां सर्गस्थितिप्रत्यवहारेषु हेतुः स ईश्वरो मे मम मान्यः पूज्यः । अलङ्घ्यशासन इत्यर्थः । शासनं च 'सिंहत्वमङ्कागतसत्त्ववृत्ति' (२।३८) इत्युक्तरूपम् । तर्हि विसृज्य गम्यताम्; नेत्याह—गुरोरपीति । पुरस्तादग्रे नश्यदिदमाहिताग्नेर्गुरोर्धनमपि गोरूपमनुपेक्षणीयम् । 'आहिताग्नेः' इति विशेषणेनानुपेक्षाकारणं हविःसाधनत्वं सूचयति ॥ ४४ ॥

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥ ४५ ॥

स इति ॥ सोऽङ्कागतसत्त्ववृत्तिस्त्वं मदीयेन देहेन शरीरस्य वृत्तिं जीवनं निर्वर्तयितुं संपादयितुं प्रसीद । दिनावसान उत्सुको 'माता ममागमिष्यति' इत्युत्कण्ठितो बालवत्सो यस्याः सा महर्षेरियं धेनुर्विसृज्यताम् ॥ ४५ ॥

अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्ती किंचिद्विहस्यार्थपतिं बभाषे ॥ ४६ ॥

---

पाठा०–१ 'चेष्टस्तु'. २ 'तु'. ३ 'विमुच्यताम्'. ४ 'कन्दराणाम्'. ५ 'शकलं प्रकुर्वन्'.

**अथेति** ॥ अथ **भूतेश्वरस्य पार्श्ववर्त्यनुचरः स सिंहो गिरेर्गह्वराणां** गुहानाम् । 'देवखातबिले गुहा । गह्वरम्' इत्यमरः । **अन्धकारं** ध्वान्तं **दंष्ट्रामयूखैः शकलानि** खण्डानि **कुर्वन्**, निरस्यन्नित्यर्थः । **किंचिद्विहस्य । अर्थपतिं नृपं भूयो बभाषे** । हासकारणम् 'अल्पस्य हेतोर्बहु हातुमिच्छन्' (२।४७) इति वक्ष्यमाणं द्रष्टव्यम् ॥ ४६ ॥

एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥४७॥

**एकेति** ॥ **एकातपत्रमे**कच्छत्रं । **जगतः प्रभुत्वं** स्वामित्वम् । **नवं वयो** यौवनम् । **इदं कान्तं** रम्यं **वपुश्च** । इत्येवं **बहु अल्पस्य हेतोः** अल्पेन कारणेन अल्पफलायेत्यर्थः । 'षष्ठी हेतुप्रयोगे' (पा. २।३।२६) इति षष्ठी । **हातुं** त्यक्तुमि**च्छंस्त्वं विचारे** कार्याकार्यविमर्शे **मूढो** मूर्खो **मे** मम **प्रतिभासि** ॥ ४७ ॥

भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते ।
जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ! पितेव पासि ॥ ४८ ॥

**भूतेति** ॥ तव **भूतेष्वनुकम्पा** कृपा **चेत्** । 'कृपा दयानुकम्पा स्यात्' इत्यमरः । कृपैव वर्तते चेदित्यर्थः । तर्हि **त्वदन्ते** तव नाशे सति, **इयमेका गौः** । स्वस्ति क्षेममस्या अस्तीति **स्वस्तिमती । भवेत्**, जीवेदित्यर्थः । 'स्वस्त्याशीःक्षेमपुण्यादौ' इत्यमरः । **हे प्रजानाथ! जीवन् पुनः पितेव प्रजा उपप्लवेभ्यो** विपद्भ्यः **शश्वत्** सदा । 'पुनःसदार्थयोः शश्वत्' इत्यमरः । **पासि** रक्षसि । स्वप्राणव्ययेनैकधेनुरक्षणाद्वरं जीवितेनैव शश्वदखिलजगत्त्राणमित्यर्थः ॥ ४८ ॥

न धर्मलोपादियं प्रवृत्तिः किंतु गुरुभयादित्यत आह—

अथैकधेनोरपराधचण्डाद्गुरोः कृशानुप्रतिमाद्बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ॥ ४९ ॥

**अथेति** ॥ अथेति पक्षान्तरे, अथवा । **एकैव धेनुर्यस्य** तस्मात् । अयं कोपकारणोपन्यास इति ज्ञेयम् । अत एवा**पराधे** गवोपेक्षालक्षणे सति **चण्डा**दतिकोपनात् । 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः । अत एव **कृशानुः प्रतिमो**पमा यस्य तस्मादग्निकल्पा**द्गुरोर्बिभेषि** इति काकुः । 'भीत्रार्थानां भयहेतुः' (पा. १।४।२५) इत्यपादानात्पञ्चमी । अल्पवित्तस्य धनहानिरतिदुःसहेति भावः । **अस्य गुरोर्मन्युः**

पाठा०— १ 'दातुम्'. २ 'द्गुण्डात्'.

परिभवोऽभूदित्याह—रुद्रौजसेति । अस्यां गवि त्वया कर्त्रा प्रहृतं तु प्रहारस्तु । नपुंसके भावे क्तः । रुद्रौजसेश्वरसामर्थ्येन । न तु त्वयेत्यर्थः । 'सप्तम्यधिकरणे च' (पा. २।३।३६) इति सप्तमी ॥ ५४ ॥

तर्हि किं चिकीर्षितमित्यत्राह—

**सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः ।**
**न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः ॥ ५५ ॥**

**सेयमिति** ॥ **सेयं** गौर्मया । निष्क्रीयते प्रत्याह्रियतेऽनेन परगृहीतमिति निष्क्रयः प्रतिशीर्षकम् । 'एरच्' (पा. ३।३।५६) इत्यच्प्रत्ययः । **स्वदेहार्पणमेव निष्क्रय**स्तेन **भवत्त**स्त्वत्तः । पञ्चम्यास्तसिल् । **मोचयितुं न्याय्या** न्यायादनपेता । युक्तेत्यर्थः । 'धर्मपथ्यर्थ–' (पा. ४।४।९२) इत्यादिना यत्प्रत्ययः । **एवं** सति **तव पारणा** भोजनं **विहता न स्यात्** । **मुनेः क्रिया** होमादिः स एव**अर्थः** प्रयोजनम् । **स चालुप्तो भवेत्** । स्वप्राणव्ययेनापि स्वामिगुरुधनं संरक्ष्यमिति भावः ॥ ५५ ॥

अत्र भवानेव प्रमाणमित्याह—

**भवानपीदं परवानवैति महान्हि यत्नस्तव देवदारौ ।**
**स्थातुं नियोक्तुर्न हि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ॥ ५६ ॥**

**भवानिति** ॥ **परवान्** स्वामिपरतन्त्रो **भवानपि** । 'परतन्त्रः पराधीनः परवान्नाथवानपि' इत्यमरः । **इदं** वक्ष्यमाण**मवैति** । भवतानुभूयत एवेत्यर्थः । 'शेषे प्रथमः' (पा. १।४।१०८) इति प्रथमपुरुषः । किमित्यत आह—**हि** यस्माद्धेतोः, 'हि हेताववधारणे' इत्यमरः । **तव देवदारौ** विषये **महान् यत्नः** । महता यत्नेन रक्ष्यत इत्यर्थः । इदंशब्दोक्तमर्थं दर्शयति—**स्थातु**मिति ॥ **रक्ष्यं** वस्तु **विनाश्य** विनाशं गमयित्वा **स्वयमक्षतेना**व्रणेन । नियुक्तेनेति शेषः । **नियोक्तुः** स्वामिनोऽग्रे **स्थातुं शक्यं न हि** ॥ ५६ ॥

सर्वथा चैतदप्रतिहार्यमित्याह—

**किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः ।**
**एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥५७॥**

**किमिति** ॥ **किमपि** किं वाऽहं **तवाहिंस्यो**ऽवध्यो **मत**श्चेत्तर्हि **मे यश** एव

---

पाठा०—१ "र्थदशक्यम्'.

---

टिप्प०—1 'पारणं पावनं पुंसां सर्वपापप्रणाशनम् । उपवासाङ्गभूतं च फलदं शुद्धिकारणम्' इति ब्रह्मवैवर्तपुराणे ।

**शरीरं** तस्मिन् **दयालुः** कारुणिको **भव** । 'स्याद्दयालुः कारुणिकः' इत्यमरः । ननु मुख्यमुपेक्ष्यामुख्यशरीरे कोऽभिनिवेशः ? अत आह—**एकान्तेति** ॥ **मद्विधानां** मादृशाना विवेकिनामेकान्तविध्वंसिष्ववश्यविनाशिषु **भौतिकेषु** पृथिव्यादिभूतविकारेषु **पिण्डेषु** शरीरेष्वनास्था **खल्वनपेक्षैव** । 'आस्था त्वालम्बनास्थानयत्नापेक्षासु कथ्यते' इति विश्वः ॥ ५७ ॥

सौहार्ददहमनुसरणीयोऽस्मीत्याह—

**संबन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ संगतयोर्वनान्ते ।**
**तद्भूतनाथानुग ! नार्हसि त्वं संबन्धिनो मे प्रणयं विहन्तुम् ॥ ५८ ॥**

**संबन्धमिति** ॥ **संबन्धं** सख्यम् । आभाषणमालापः **पूर्वं** कारणं यस्य तमाहुः । 'स्यादाभाषणमालापः' इत्यमरः । **स** तादृक्संबन्धो **वनान्ते संगतयोर्नौ**वावयोर्**वृत्तो** जातः । तत्ततो हेतोर्**हे भूतनाथानुग** शिवानुचर ! । एतेन तस्य महत्त्वं सूचयति । अत एव **संबन्धिनो** मित्रस्य **मे प्रणयं** याञ्चाम् । 'प्रणयास्त्वमी । विश्रम्भयाञ्चाप्रेमाणः' इत्यमरः । **विहन्तुं नार्हसि** ॥ ५८ ॥

**तथेति गामुक्तवते दिलीपः सद्यःप्रतिष्टम्भविमुक्तबाहुः ।**
**संन्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥ ५९ ॥**

**तथेति** ॥ **तथेति गामुक्तवते हरये** सिंहाय । 'कपौ सिंहे सुवर्णे च वर्णे विष्णौ हरिं विदुः' इति शाश्वतः । **सद्यः**तत्क्षणे **प्रतिष्टम्भा**त्प्रतिबन्धाद्**विमुक्तो बाहुर्**यस्य सः । **दिलीपः** । **न्यस्तशस्त्र**स्त्यक्तायुधः **सन्** । **स्वदेहं, आमिषस्य** मांसस्य, 'पललं क्रव्यमामिषम्' इत्यमरः । **पिण्डं** कवल**मिव** । **उपानयत्** समर्पितवान् । एतेन निर्ममत्वमुक्तम् ॥ ५९ ॥

**तस्मिन्क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।**
**अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥ ६० ॥**

**तस्मिन्निति** ॥ **तस्मिन्क्षणे उग्रं सिंहनिपातमुत्पश्यत** उत्प्रेक्षमाणस्य तर्कयतोऽ**वाङ्मुखस्या**धोमुखस्य । 'स्यादवाङप्यधोमुखः' इत्यमरः । **प्रजानां पालयितू** राज्ञ **उपरि** उपरिष्टात् । 'उपर्युपरिष्टात्' ( पा. ५।३।३१ ) इति निपातः । **विद्याधराणां** देवयोनिविशेषाणां **हस्तमुक्ता पुष्पवृष्टिः पपात** ॥ ६० ॥

पाठा०—१ '०जातः'. २ 'सन्'. ३ 'अधोमुखस्य'.

टिप्प०—1 धीरस्तु भौतिकपिण्डेष्वनास्थो भवतीति भगवताप्युक्तं गीतायाम् (२।१३)—'देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा । तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥' इति ।
2 अतो देहमङ्गेन यशो रक्षणीयं ममेति तात्पर्यम्-इति सुमति० ।
3 उग्रे सिंहनिपाते शंकिते कोमला पुष्पवृष्टिः पपातेति वैचित्र्यम्-इति शिशु० ।

उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन् ।
ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहम् ॥ ६१ ॥

उत्तिष्ठेति ॥ राजा । अमृतमिवाचरतीत्यमृतायमानम् । 'उपमानादाचारे' (पा. ३।१।१०) इति क्यच् । ततः शानच् । उत्थितमुत्पन्नम्, 'हे वत्स ! उत्तिष्ठ' इति वचो निशम्य श्रुत्वा । उत्थितः सन् । अस्तेः शतृप्रत्ययः । अग्रतोऽग्रे प्रस्रवः क्षीरस्रावोऽस्ति यस्याः सा तां प्रस्रविणीं गां स्वां जननीमिव ददर्श । सिंहं न ददर्श ॥ ६१ ॥

तं विस्मितं धेनुरुवाच साधो ! मायां मयोद्भाव्य परीक्षितोऽसि ।
ऋषिप्रभावान्मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥ ६२ ॥

तमिति ॥ विस्मितमाश्चर्यं गतम् । कर्तरि क्तः । तं दिलीपं धेनुरुवाच । किमित्यत्राह—हे साधो ! मया मायामुद्भाव्य कल्पयित्वा परीक्षितोऽसि । ऋषिप्रभावान्मय्यन्तको यमोऽपि प्रहर्तुं न प्रभुर्न समर्थः । अन्ये हिंस्रा घातुकाः । 'शरारुर्घातुको हिंस्रः' इत्यमरः । 'नमिकम्पि-' (पा. ३।२।१६७) इत्यादिना रप्रत्ययः । किमुत सुष्ठु, न प्रभव इति योज्यम् । 'बलवत्सुष्ठु किमुत स्वस्त्यतीव च निर्भरे' इत्यमरः ॥ ६२ ॥

भक्त्या गुरौ मय्यनुकम्पया च प्रीतास्मि ते पुत्र ! वरं वृणीष्व ।
न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ॥ ६३ ॥

भक्त्येति ॥ हे पुत्र ! गुरौ । भक्त्या । मय्यनुकम्पया च । ते तुभ्यं प्रीताऽस्मि । 'क्रियाग्रहणमपि कर्तव्यम्' इति चतुर्थी । वरं देवेभ्यो वरणीयमर्थम् । 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये' इत्यमरः । वृणीष्व स्वीकुरु । तथा

---

पाठा०-१ 'वत्स'. २ 'न केवलं मां पयसां प्रसूति°'.

---

टिप्प०—1 अस्यान्वर्थत्वमुक्तं विष्णुपुराणे-'पृथुं वैणं प्रजा दृष्ट्वा रक्ताः स्मेति तमब्रुवन् । ततो राजेति नामास्यानुरागादजायत ॥' इति ।

2 अमृतायमानममृतोपममिति विधिव्यापारवैचित्र्यम्; यो मरणमाशङ्कते स वधमभ्युदयमाप्नोति दैवानुकूलतया इत्यमृतमयम्-इति वल्लभः ।

3 प्रस्रवः क्षीरक्षरणं विद्यते यस्याः सा; प्रस्रवस्तु स्नेहवशाज्जनन्या अपि स्यादिति गवां च जातिः-इति शिशु० ।

4 विस्मयस्तु केसरिणोऽदर्शनात्-इति शिशु० ।

5 'सिंहादयः' इति वल्लभादिटीकाकृदादृतः पाठः । सन्मुखं विलोकयितुमपि न समर्थाः, किमुत प्रहर्तुं पुर आगताः'-इति सुमति० ।

6 'धनं पुत्ररूपं वरं वा; गोः पयोदाने सामर्थ्यं, नतु वरदाने इत्याह'-इति शिशु० ।

हि—मां केवलानां पयसां प्रसूतिं कारणं नावेहि न विद्धि । किंतु प्रसन्नां माम् । कामान्दोग्धीति कामदुघा । तामवेहि । 'दुहः कब्घश्च' (पा. ३।२।७०) इति कप्प्रत्ययः ॥ ६३ ॥

ततः समानीय स मानितार्थी हस्तौ स्वहस्तार्जितवीरशब्दः ।
वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे ॥ ६४ ॥

तत इति ॥ ततो मानितार्थी । स्वहस्तार्जितो वीर इति शब्दो येन सः । एतेनास्य दातृत्वं दैन्यराहित्यं चोक्तम् । स राजा हस्तौ समानीय संधाय । अञ्जलिं बद्ध्वेत्यर्थः । वंशस्य कर्तारं प्रवर्तयितारम् । अत एव रघुकुलमिति प्रसिद्धिः । अनन्तकीर्तिं स्थिरयशसं तनयं सुदक्षिणायां ययाचे ॥ ६४ ॥

संतानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा ।
दुग्ध्वा पयः पत्रपुटे मदीयं पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥ ६५ ॥

संतानेति ॥ सा पयस्विनी गौः । संतानं कामयत इति संतानकामः । 'कर्मण्यण्' (पा. ३।२।१) तस्मै राज्ञे तथेति । काम्यत इति कामो वरः । कर्मार्थे घञ्प्रत्ययः । तं प्रतिश्रुत्य प्रतिज्ञाय, 'हे पुत्र ! मदीयं पयः पत्रपुटे पत्रनिर्मिते पात्रे दुग्ध्वोपभुङ्क्ष्व पिब' इति तमादिदेशाज्ञापितवती । 'उपयुङ्क्ष्व' इति वा पाठः ॥ ६५ ॥

वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः ।
ऊधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः ॥ ६६ ॥

वत्सस्येति ॥ हे मातः ! वत्सस्य वत्सपीतस्य शेषम् । वत्सपीतावशिष्टमित्यर्थः । होम एवार्थः । तस्य विधिरनुष्ठानम् । तस्य च शेषम् । होमावशिष्टमित्यर्थः । तव । ऊधसि भवमूधस्यं क्षीरम् । 'शरीरावयवाच्च' (पा. ४।३।५५) इति यत्प्रत्ययः । रक्षिताया उर्व्याः षष्ठांशं षष्ठभागमिव । ऋषेरनुज्ञामधिगम्य उपभोक्तुमिच्छामि ॥ ६६ ॥

इत्थं क्षितीशेन वसिष्ठधेनुर्विज्ञापिता प्रीततरा बभूव ।
तदन्विता हैमवताच्च कुक्षेः प्रत्याययावाश्रममश्रमेण ॥ ६७ ॥

---

पाठा०—१ 'गुरोः'. २ 'औधस्यम्'.

---

टिप्प०—1 'वत्सादिवार्थेभ्यऋतिरिक्तमन्यदृषेरनुज्ञामधिगम्य मातः । ऊधस्यं रसं वदिम तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः' इति पाठमादृत्य रसस्य नपुंसकत्वामावात्म-रवर्गीयकारकत्वं वा, ममद्युपभोक्तुमिच्छामि, न तु भवदुक्तं पत्रपुटस्थमिति वाक्यभेदो वा- हरि शिशु० ।

इत्थमिति ॥ इत्थं क्षितीशेन विज्ञापिता वासिष्ठस्य धेनुः प्रीततरा पूर्वं शुश्रूषया प्रीता। संप्रत्यनया विज्ञापनया प्रीततराऽतिसंतुष्टा बभूव। तदन्विता तेन दिलीपेनान्विता हैमवताद्धिमवत्संबन्धिनः कुक्षेर्गुहायाः सकाशादश्रमेणानायासेनाश्रमं प्रत्यायया चागता च ॥ ६७ ॥

तस्याः प्रसन्नेन्दुमुखः प्रसादं गुरुर्नृपाणां गुरवे निवेद्य।
प्रहर्षचिह्नानुमितं प्रियायै शशंस वाचा पुनरुक्तयेव ॥ ६८ ॥

तस्या इति ॥ प्रसन्नेन्दुरिव मुखं यस्य स नृपाणां गुरुर्दिलीपः प्रहर्षचिह्नैर्मुखरागादिभिरनुमितमभ्यूहितं तस्या धेनोः प्रसादमनुग्रहं प्रहर्षचिह्नैरेव ज्ञातत्वात्पुनरुक्तयेव वाचा गुरवे निवेद्य विज्ञाप्य पश्चात्प्रियायै शशंस। कथितस्यैव कथनं पुनरुक्तिः, न चेह तदस्ति। किंतु चिह्नैः कथितप्रायत्वात्पुनरुक्तयेव स्थितयेत्युत्प्रेक्षा ॥ ६८ ॥

स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम्।
पपौ वसिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्तमिवातितृष्णः ॥ ६९ ॥

स इति ॥ अनिन्दितात्माऽगर्हितस्वभावः। सत्सु वत्सलः प्रेमवान् सद्वत्सलः। 'वत्सांसाभ्यां कामबले' (पा. ५।२।९८) इति लच्प्रत्ययः। वसिष्ठेन कृताभ्यनुज्ञः कृतानुमतिः स राजा वत्सस्य हुतस्य चावशेषं पीतहुतावशिष्टं नन्दिन्याः स्तन्यं क्षीरम्। शुभ्रं मूर्तं परिच्छिन्नं यश इव। अतितृष्णः सन्पपौ ॥ ६९ ॥

प्रातर्यथोक्तव्रतपारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य।
तौ दंपती स्वां प्रति राजधानीं प्रस्थापयामास वशी वसिष्ठः ॥७०॥

प्रातरिति ॥ वशी वसिष्ठः प्रातः। यथोक्तस्य पूर्वोक्तस्य व्रतस्य गोसेवारूपस्याङ्गभूता या पारणा तस्या अन्ते प्रास्थानिकं प्रस्थानकाले भवम्। तत्कालोचितमित्यर्थः। 'कालाट्ठञ्' (पा. ४।३।११) इति ठञ्प्रत्ययः। 'यथाकथंचिद्गुणवृत्त्यापि काले वर्तमानत्वात्प्रत्यय इष्यते' इति वृत्तिकारः। ईयते प्राप्यतेऽनेनेत्ययनं स्वस्त्ययनं शुभावहमाशीर्वादं प्रयुज्य। तौ दंपती स्वां राजधानीं पुरीं प्रति प्रस्थापयामास ॥ ७० ॥

प्रदक्षिणीकृत्य हुतं हुताशमनन्तरं भर्तुररुन्धतीं च।
धेनुं सवत्सां च नृपः प्रतस्थे सन्मङ्गलोदग्रतरप्रभावः ॥ ७१ ॥

---

पाठा०—१ 'निपीतशेषम्'. २ 'शुद्धम्'. ३ 'भूपः'. ४ 'संप्रेषयामास'. ५ 'ततश्च होतारम°'; 'ततस्तु होतारम°'. ६ 'सन्मङ्गलोदग्रतरानुभावः'.

प्रदक्षिणीकृत्येति ॥ **नृपो हुतं** तर्पितम् । हुतमश्नातीति **हुताशोऽ**ग्निः । 'कर्मण्यण्' (पा. ३।२।१)। **तं भर्तुर्मुनेरनन्तरम्** । प्रदक्षिणानन्तरमित्यर्थः । **अरुन्धतीं च सवत्सां धेनुं च प्रदक्षिणीकृत्य** । प्रगतो दक्षिणं प्रदक्षिणम् । 'तिष्ठद्गुप्रभृतीनि च' (पा. २।१।१७) इत्यव्ययीभावः । ततश्च्विः । अप्रदक्षिणं प्रदक्षिणं संपद्यमानं कृत्वा प्रदक्षिणीकृत्य । **सद्भिर्मङ्गलैः**[1] प्रदक्षिणादिभिर्मङ्गलाचारैरुदग्रतरप्रभावः सन् । **प्रतस्थे** ॥ ७१ ॥

**श्रोत्राभिराममध्वनिना रथेन स धर्मपत्नीसहितः सहिष्णुः ।**
**ययावनुद्धातसुखेन मार्गं स्वेनेव पूर्णेन मनोरथेन ॥ ७२ ॥**

**श्रोत्रेति** ॥ **धर्मपत्नीसहितः सहिष्णुर्**[2]व्रतादिदुःखसहनशीलः **स** नृपः **श्रोत्राभिराममध्वनिना** कर्णाह्लादकरस्वनेनानुद्धातः पाषाणादिप्रतिघातरहितः । अत एव सुखयतीति सुखः, तेन रथेन । **स्वेन पूर्णेन** सफलेन **मनोरथेनेव** । **मार्गम**ध्वानं **ययौ** । मनोरथपक्षे,–ध्वनिः श्रुतिः । अनुद्धातः प्रतिबन्धनिवृत्तिः ॥७२॥

**तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्रतकर्शिताङ्गम् ।**
**नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम्**[3] **॥ ७३ ॥**

**तमिति** ॥ **अदर्शनेन** प्रवासनिमित्तेन**ाहितौत्सुक्यं** जनितदर्शनोत्कण्ठम् । **प्रजार्थेन** संतानार्थेन **व्रतेन** नियमेन **कर्शितं** कृशीकृतमङ्गं यस्य तम् । **नवोदयं** नवाभ्युदयं **प्रजास्तृप्तिमनाप्नुवद्भि**रतिगृध्नुभि**र्नेत्रैः** । **ओषधीनां नाथं** सोममिव । **तं** राजानं **पपुः**[4] । अत्यास्थया ददृशुरित्यर्थः । चन्द्रपक्षे,–अदर्शनं कलाक्षयनिमित्तम् । प्रजार्थे लोकहितार्थम् । व्रतं देवताभ्यः कलादाननियमः–'तं च सोमं पपुर्देवाः पर्यायेणानुपूर्वशः' इति व्यास. । उदय आविर्भावः । अन्यत्समानम् ॥७३॥

पाठा०–१ 'प्रजार्थम्.'

टिप्प०—1 सतां मङ्गलेन प्रणीताग्निप्रदक्षिणादिना मङ्गल्द्रव्येण वा उदग्रतरोऽधिकः प्रभावो यस्य स तथा–इति शिशु० । सतां मङ्गलेन प्रीतवह्निगोब्राह्मणप्रदक्षिणीकरणेन उदग्रतरो महीयान् प्रभावो यस्य–इति दिनकर० । वल्लभस्तु–सन्मङ्गलेनोदग्रतरप्रभावः–इत्याह ।

2 'सहिष्णुः' इति पदेन तादृशस्यैव कार्यसिद्धिर्युक्तेति ध्वनिः । यदि वा,–दूरागमनेऽपि खेदराहित्यमित्यन्यः–इति शिशु० ।

3 तथा चोक्तं विष्णुपुराणे–'नक्षत्रग्रहविप्राणां वीरुधां चाप्यशेषतः । सोमं राज्ये ददौ ब्रह्मा यज्ञानां तपसामपि' इति; एवमेव वेदेऽप्युपवर्णितम्–'सोमेनादित्या बलिनः सोमेन पृथिवी मही । अथो नक्षत्राणामेषामुपस्थे सोम आहितः' (ऋ.१०।८५।२) सायणाचार्यैश्चापि–अमृतसेकेनोषधाभिवृद्ध्या पृथिव्या बलवत्त्वम्–इत्युक्तं तद्भाष्ये ।

4 'सादरमवलोकनं पानमुच्यते'–इति शिशु० ।

**पुरंदरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः।**
**भुजे भुजंगेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥ ७४ ॥**

**पुरंदरेति** ॥ पुरः पुरीरसुराणां दारयतीति **पुरंदरः** शक्रः। 'पूःसर्वयोर्दारिसहोः' (पा. ३।२।४१) इति खच्प्रत्ययः। 'वाचंयमपुरंदरौ च' (पा. ६।३।६९) इति मुमागमो निपातितः। तस्य श्रीरिव **श्रीर्यस्य** सः। **स** नृपः **पौरैरभिनन्द्यमानः**। **उत्पताकम्** उच्छ्रितध्वजम्। 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्' इत्यमरः। **पुरं प्रविश्य भुजंगेन्द्रेण समानसारे** तुल्यबले। 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः। **भुजे भूयो भूमेर्धुरमाससञ्ज** अर्पितवान् ॥ ७४ ॥

**अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः**
**सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम्।**
**नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी**
**गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥ ७५ ॥**

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृतौ नन्दिनीवरप्रदानो नाम द्वितीयः सर्गः।

---

**अथेति** ॥ अथ द्यौः सुरवर्त्म। 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः। **अत्रेर्महर्षेर्नयनयोः** समुत्थमुत्पन्नं **नयनसमुत्थम्**। 'आतश्चोपसर्गे' (पा. ३।१।१३६) इति कप्रत्ययः। **ज्योतिरिव**। चन्द्रमिवेत्यर्थः। 'ऋक्षेशः स्यादत्रिनेत्रप्रसूतः' इति हलायुधः। चन्द्रस्यात्रिनेत्रोद्भूतत्वमुक्तं हरिवंशे—'नेत्राभ्यां वारि सुस्राव दशधा द्योतयद्दिशः। तद्गर्भविधिना हृष्टा दिशो देव्यो दधुस्तदा। समेत्य धारयामासुर्न चैताः समशक्नुवन्। स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः। पपात भासयँल्लोकाञ्छीतांशुः सुरभावनः ॥' इति। **सुरसरिद्गङ्गा वह्निना निष्ठ्यूतं** विक्षिप्तम्। 'च्छ्वोः शूडनुनासिके च' (पा. ६।४।१९) इत्यनेन णिपूर्वात्ष्ठीवतेर्वकारस्य ऊठ्। 'सुप्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः' इत्यमरः। **ऐशं तेजः** स्कन्दमिव। अत्र रामायणम् (बाल. ३७।१०)—'ते गत्वा पर्वतं राम! कैलासं धातुमण्डितम्। अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः। देवकार्यमिदं देव समाधत्स्व हुताशन!। शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज। देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः। गर्भं धारय वै देवि! देवतानामिदं प्रियम्। इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत्। स तस्या महिमां दृष्ट्वा समन्तादवकीर्यत। समन्ततस्तु तां देवीमभ्यषिञ्चत पावकः। सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन! ॥' इति। **राज्ञी** सुदक्षिणा **नरपतेर्दिलीपस्य कुल-**

**भूत्यै** संततिलक्षणायै **गुरुभिर्महद्भिर्लोकपालानामनुभावैस्तेजोभिरभिनिविष्ट**मनुप्रविष्टं **गर्भमाधत्त** । दधावित्यर्थः । अत्र मनुः (५।९६)—'अष्टानां लोकपालानां वपुर्धारयते नृपः' इति । अत्र 'आधत्त' इत्यनेन स्त्रीकर्तृकधारणमात्रमुच्यते । तथा मन्त्रे च दृश्यते—'यथेयं पृथिवी मह्युत्ताना गर्भमादधे । एवं त्वं गर्भमाधेहि दशमे मासि सूतवे ।' इत्याश्वलायनानां सीमन्तमन्त्रे स्त्रीव्यापारधारण आधानशब्दप्रयोगदर्शनादिति । मालिनीवृत्तमेतत् । तदुक्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ ७५ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
संजीविनीसमाख्यायां द्वितीयः सर्गः ।

---

## तृतीयः सर्गः

उपाधिगम्योऽप्यनुपाधिगम्यः समावलोक्योऽप्यसमावलोक्यः ।
भवोऽपि योऽभूदभवः शिवोऽयं जगत्यपायादपि नः स पायात् ॥

'राज्ञी गर्भमाधत्त' (२।७५) इत्युक्तम्, संप्रति गर्भलक्षणानि वर्णयितुं प्रस्तौति—

**अथेप्सितं भर्तुरुपस्थितोदयं सखीजनोद्वीक्षणकौमुदीमुखम् ।**
**निदानमिक्ष्वाकुकुलस्य संततेः सुदक्षिणा दौर्हृदलक्षणं दधौ ॥ १ ॥**

**अथेति** ॥ अथ गर्भधारणानन्तरम् । **सुदक्षिणा** । **उपस्थितोदयं** प्राप्तकालं **भर्तु**र्दिलीपस्ये**प्सितं** मनोरथम् । भावे क्तः । पुनः **सखीजनस्योद्वीक्षणानां** दृष्टीनां **कौमुदीमुखं** चन्द्रिकाप्रादुर्भावम् । यद्वा,—कौमुदी नाम दीपोत्सवतिथिः । तदुक्तं भविष्योत्तरे—'कौ मोदन्ते जना यस्यां तेनासौ कौमुदी मता' इति । तस्या **मुखं** प्रारम्भम् । अत एव केचित्—'**सखीजनोद्वीक्षणकौमुदीमहम्**' इति पाठं पठन्ति । **इक्ष्वाकुकुलस्य संततेर**विच्छेदस्य **निदानं** मूलकारणम् । 'निदानं त्वादिकारणम्' इत्यमरः ।

पाठा०—१ 'ततो विशांपत्युरनन्वसंततेर्मनोरथं किंचिदिवोदयोन्मुखम् । अनन्यसौहार्दरसस्य दोहदं प्रिया प्रपेदे प्रकृतिप्रियंवदा'. २ 'मुखम्'. ३ 'दोहदलक्षणम्'.

---

टिप्प०—1 कौमुदीमहमिति पाठे-कुशब्देन मही ज्ञेया मुद हर्षे च पठ्यते । कौ मोदन्ते नरा यस्मात्तेन सा कौमुदी स्मृता । कौमुदीति-दीपोत्सवा पौर्णमासी, तत्र महः-उत्सवः, दीपावल्युत्सवतुल्यमिति कश्चित् । कौमुदीति-सुदक्षिणा विशेष्याद्दोहदलक्षणा इत्यन्यः ।
2 'सुखम्' इति पाठे-सुखयतीति सुखम्, पचाद्यच् ।

एवंविधं दौर्हृदलक्षणं गर्भचिह्नं वक्ष्यमाणं दधौ। सहृदयेन गर्भहृदयेन च द्विहृदया गर्भिणी। यथाह वाग्भटः (अ. हृ. शा. १।५२)—'मातृजं ह्यस्य हृदयं मातुश्च हृदयं तु तत्। संबद्धं तेन गर्भिण्याः श्रेष्ठं श्रद्धाभिमाननम्॥' इति। तत्संबन्धित्वाद्गर्भो दौर्हृदमित्युच्यते। सा च तद्योगाद्दौर्हृदिनीति। तदुक्तं संग्रहे (अ०२)—'द्विहृदयां नारीं दौर्हृदिनीमाचक्षते' इति। अत्र दौर्हृदलक्षणस्येप्सितत्वेन कौमुदीमुखत्वेन च निरूपणाद्रूपकालंकारः। अस्मिन्सर्गे वंशस्थं वृत्तम्—'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्॥ १॥

संप्रति क्षामताख्यं गर्भलक्षणं वर्णयति—

**शरीरसादादसमग्रभूषणा मुखेन सालक्ष्यत लोध्रपाण्डुना।**
**तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी॥ २॥**

**शरीरेति॥ शरीरस्य सादात्** कार्श्याद्**समग्रभूषणा** परिमिताभरणा **लोध्र**पुष्पवत् **पाण्डुना मुखेनो**पलक्षिता **सा** सुदक्षिणा। **विचेया** मृग्यास्तारका यस्यां सा तथोक्ता। विरलनक्षत्रेत्यर्थः। **तनुप्रकाशेना**ल्पकान्तिना **शशिनो**पलक्षितेपदसमासप्रभाता **प्रभातकल्पा**। प्रभातादीषदूनेत्यर्थः। 'तसिलादिष्वा कृत्वसुचः' (पा. ६।३।३५) इति 'प्रभात'शब्दस्य पुंवद्भावः। **शर्वरी** रात्रिरिव। **अलक्ष्यत**। शरीरसादादिगर्भलक्षणमाह वाग्भटः (अ. हृ. शा. १।५०)—'क्षामता गरिमा कुक्षेर्मूर्च्छा छर्दिररोचकम्। जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम्॥' इति॥२॥

दौहृदलक्षणे मृद्भक्षणे हेत्वन्तरमुत्प्रेक्षते—

**तदाननं मृत्सुरभि क्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ।**
**करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम्॥ ३॥**

**तदिति॥ क्षितीश्वरो रहसि मृत्सुरभि** मृदा सुगन्धि **तस्या आननं**

---

पाठा०—१ 'मुखेन सा केतकपत्रपाण्डुना कृशाङ्गयष्टिः परिमेयभूषणा। स्थिताल्पताराकरुणेन्दुमण्डला विभातकल्पां रजनीं व्यडम्बयत्'. २ 'रहः समाघ्राय'.

---

टिप्प०—1 'दौहृदलक्षणं' इति पाठमादृत्य दोहदस्य गर्भस्य लक्षणं चिह्नं मुखपाण्डुरादि, अथवा दोहदस्य लक्षणं चिह्नं यस्मिन्निति वैयधिकरण्यबहुव्रीहिमाश्रित्य तादृशं मुखं दधौ-इति कथनं; तन्न सुन्दरम्, 'मुखेन सालक्ष्यत लोध्रपाण्डुना' (३।२) इति वक्ष्यमाणत्वात्। गर्भस्य कुलहेतुत्वात्तच्चिह्नेऽप्युपचारः। दुर्हृदो भावः मानितातिथित्वेन स्वहस्तार्जितवीरशब्देन चेतनानपेक्षया याच्ञानिरोधध्वनिः सूच्यते।

२ [illegible] अल्पानि भूषणानि अलंकारा यस्याः सा, सा सुद-

मिन्दुमण्डलं यस्यां सा

शिशु०।

तदाननं सुदक्षिणामुखमुपाघ्राय तृप्तिं नाययौ । कः कमिव? शुचिव्यपाये ग्रीष्मावसाने । 'शुचि शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते । ग्रीष्मे हुतवहेऽपि स्यादुपधाशुद्धमन्त्रिणि ॥' इति विश्वः । पयोमुचां मेघानां पृषतैर्बिन्दुभिः । 'पृषन्ति बिन्दुपृषताः' इत्यमरः । सिक्तमुक्षितं वनराज्याः पल्वलमुपाघ्राय करी गज इव । अत्र करिवनराजिपल्वलानां कान्तकामिनीवदनसमाधिरनुसंधेयः । गर्भिणीनां मृद्भक्षणं लोकप्रसिद्धमेव । एतेन दोहदाख्यं गर्भलक्षणमुच्यते ॥ ३ ॥

दिवं मरुत्वानिव भोक्ष्यते भुवं दिगन्तविश्रान्तरथो हि तत्सुतः ।
अतोऽभिलाषे प्रथमं तथाविधे मनो बबन्धान्यरसान्विलङ्घ्य सा ॥ ४ ॥

दिवमिति ॥ हि यस्माद्दिगन्तविश्रान्तरथश्चक्रवर्ती तस्याः सुतस्तत्सुतः । मरुत्वानिन्द्रः । 'इन्द्रो मरुत्वान्मघवा' इत्यमरः । दिवं स्वर्गमिव । भुवं भोक्ष्यते । 'भुजोऽनवने' (पा. १।३।६६) इत्यात्मनेपदम् । अतः प्रथमं सा सुदक्षिणा तथाविधे मृद्रूपे । अभिलष्यत इत्यभिलाषो भोग्यवस्तु । कर्मणि घञ्प्रत्ययः । रस्यन्ते स्वाद्यन्त इति रसा भोग्यार्थाः । अन्ये च ते रसाश्च तान्विलङ्घ्य विहाय मनो बबन्ध । विदधावित्यर्थः । दोहदहेतुकस्य मृद्भक्षणस्य पुनर्भूभोगसूचनार्थत्वमुत्प्रेक्षते ॥ ४ ॥

न मे ह्रिया शंसति किंचिदीप्सितं स्पृहावती वस्तुषु केषु मागधी ।
इति स्म पृच्छत्यनुवेलमादृतः प्रियासखीरुत्तरकोसलेश्वरः ॥ ५ ॥

नेति ॥ मगधस्य राज्ञोऽपत्यं स्त्री मागधी सुदक्षिणा । 'द्व्यञ्मगधकलिङ्गसूरमसादण्' (पा. ४।१।१७०) इत्यण्प्रत्ययः । ह्रिया किंचित्किमपीप्सितमिष्टं मे मह्यं न शंसति नाचष्टे । केषु वस्तुषु स्पृहावतीत्यनुवेलमनुक्षणमादृत आदरवान् । कर्तरि क्तः । 'आदृतौ सादरार्चितौ' इत्यमरः । प्रियायाः सखीः सहचरीरुत्तरकोसलेश्वरो दिलीपः पृच्छति स्म पप्रच्छ । 'लट् स्मे' (पा. ३।२।११८) इत्यनेन भूतार्थे लट् । सखीनां विश्रम्भभूमित्वादिति भावः ॥ ५ ॥

उपेत्य सा दोहददुःखशीलतां यदेव वव्रे तदपश्यदाहृतम् ।
न हीष्टमस्य त्रिदिवेऽपि भूपतेरभूदनासाद्यमधिज्यधन्वनः ॥ ६ ॥

उपत्येति ॥ दोहदं गर्भिणीमनोरथः । 'दोहदं दौर्हृदं श्रद्धा लालसं च समं स्मृतम्' इति हलायुधः । सा सुदक्षिणा दोहदेन गर्भिणीमनोरथेन दुःखशीलतां

पाठा०—१ 'महीम्'. २ 'मत्सुतः'. ३ 'मस्याः'. ४ 'र्येभूव दुष्प्रापम्'.

टिप्प०—1 शुच्येः सरसि जलपाते सौरभ्यमिति पल्लवोऽपि—शिशु० ।
2 दोहदेन गर्भेण तज्जनितेच्छया वा दुःखं तदनुभूतिशीलत्वमुपेत्य—इति शिशु० ।

कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्मणि ।
पतिः प्रतीतः प्रसवोन्मुखीं प्रियां ददर्श काले दिवमभ्रितामिव १२॥

कुमारेति ॥ अथ । **कुमारभृत्या** बालचिकित्सा । 'संज्ञायां समजनिषद-' (पा. ३।३।९९) इत्यादिना क्यप् । तस्यां **कुशलैः** कृतिभिः । 'कृती कुशलः' इत्यमरः । **आप्तैर्हितैर्भिषग्भिर्वैद्यैः** । 'भिषग्वैद्यौ चिकित्सकौ' इत्यमरः । **गर्भस्य भर्मणि** भरणे । 'भरणे पोषणे भर्म' इति हैमः । 'भृतिर्भर्म' इति शाश्वतः । भृञो मनिच्प्रत्ययः । **'गर्भकर्मणि'** इति पाठे गर्भाधानप्रतीतावौचित्यभङ्गः । **अनुष्ठिते** कृते सति । **काले** दशमे मासि । अन्यत्र,-ग्रीष्मावसाने । **प्रसवस्य** गर्भमोचनस्योन्मुखीम् । आसन्नप्रसवामित्यर्थः । 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने' इत्यमरः । **प्रियां** भार्याम् । अभ्राण्यस्याः संजातान्य**भ्रिता** ताम् । 'तदस्य संजातं तारकादिभ्य इतच्' (पा. ५।२।३६) इतीतच्प्रत्ययः । **दिवमिव** । पतिर्भर्ता **प्रतीतो** हृष्टः सन् । 'दिवः ख्याते हृष्टे प्रतीतः' इत्यमरः । **ददर्श** दृष्टवान् ॥ १२ ॥

सा सुदक्षिणा **समये** प्रसूतिकाले सति । दशमे मासीत्यर्थः । 'दशमे मासि जायते' इति श्रुतिः । **उच्चसंश्रयै**रुच्चसंस्थैस्तुङ्गस्थानगै**रसूर्यगै**रनस्तमितैः कैश्चिद्यथासंभवं पञ्चभिर्ग्रहैः **सूचिता भाग्यसंपद्**यस्य तं पुत्रम् । त्रीणि प्रभावमन्त्रोत्साहात्मकानि साधनान्युत्पादकानि यस्याः सा **त्रिसाधना शक्तिः** । 'शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' इत्यमरः । **अक्षयमर्थमिव** । **असूत** । 'षूङ् प्राणिगर्भविमोचने' इत्या-

पाठा०—१ 'अधिष्ठिते'. २ 'गर्भवेश्मनि'. ३ 'उच्चसंस्थितैर'. ४ 'सूनुम्'. ५ 'अक्षतम्'.

टिप्प०—1 कुमारभृत्या बालचिकित्सा, तत्संबन्धि कौमारभृत्यं आयुर्वेदाङ्गमुच्यते । शल्यं, शालाक्यं, कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, अगदतन्त्रं, रसायनतन्त्रम्, वाजीकरणतन्त्रमित्यष्टाङ्गानि' इति सुश्रुते । अजातेऽपि कुमारे कुमारभृत्याप्रयोगो न दोषाय, कुमारभृत्या गर्भकर्मणि प्रजने च क्रियते-इति कौटिल्येनोक्तत्वात्—इति शिशु० ।

2 ग्रहाणां द्विविधमुच्चत्वं—राशिकृतं भागकृतं च; तत्र प्रथमराशौ सूर्यस्योच्चता दश-

त्मनेपदिषु पठ्यते । तस्माद्धातोः कर्तरि लङ् । अत्रेदमनुसंधेयम्—'अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः । दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ॥' (वृ. जा.) इति । सूर्यादीनां सप्तानां ग्रहाणां मेषवृषभादयो राशयः श्लोकोक्तक्रमविशिष्टा उच्चस्थानानि । स्वस्वतुङ्गापेक्षया सप्तमस्थस्थानानि च नीचानि । तत्रोच्चेष्वपि दशमादयो राशित्रिंशांशा यथाक्रममुच्चेषु परमोच्चा नीचेषु परमनीचा इति जातकश्लोकार्थः । अत्रांशस्त्रिंशो भागः । यथाह नारदः—'त्रिंशद्भागात्मकं लग्नम्' इति । सूर्यप्रत्यासत्तिर्ग्रहाणामस्तमयो नाम । तदुक्तं लघुजातके—'रविणास्तमयो योगो वियोगस्तूदयो भवेत्' इति । ते च स्वोच्चस्थाः फलन्ति नास्तगा नापि नीचगाः । तदुक्तं राजमृगाङ्के—'स्वोच्चे पूर्णं स्वर्क्षकेऽर्धं सुहृद्भे पादं द्विड्भेऽल्पं शुभं खेचरेन्द्रः । नीचस्थायी नास्तगो वा न किंचित्पादं नूनं स्वत्रिकोणे ददाति ॥' इति । तदिदमाह कविः—'उच्चसंश्रयैरसूर्यगैः' इति च । एवं सति यस्य जन्मकाले पञ्चप्रभृतयो ग्रहाः स्वोच्चस्थाः स एव तुङ्गो भवति । तदुक्तं कूटस्थीये—'सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः । एकद्वित्रिचतुर्भिर्जायन्तेऽतः परं दिव्याः ॥' इति । तदिदमाह—पञ्चभिरिति ॥ १३ ॥

**दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे ।**
**बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम् ॥ १४ ॥**

दिश इति ॥ तत्क्षणं तस्मिन्क्षणे । 'कालाध्वनोरत्यन्तसंयोगे द्वितीया' (पा. २।३।५) । दिशः प्रसेदुः प्रसन्ना बभूवुः । मरुतो वाताः सुखा मनोहरा ववुः । अग्निः प्रदक्षिणार्चिः सन् हविराददे स्वीचकार । इत्थं सर्वं शुभशंसि शुभसूचकं बभूव । तथा हि—तादृशां रघुप्रकाराणां भवो जन्म लोकाभ्युदयाय । भवतीति शेषः । ततो देवा अपि संतुष्टा इत्यर्थः ॥ १४ ॥

**अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा ।**
**निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव ॥ १५ ॥**

अरिष्टेति ॥ 'अरिष्टं सूतिकागृहम्' इत्यमरः । अरिष्टे सूतिकागृहे शय्यां तल्पं परितः सर्वतः । 'अभितःपरितःसमयानिकषाप्रतियोगेऽपि' (वा. १४२२) इति द्वितीया । विसारिणा । सुजन्मनः शोभनोत्पत्तेः । 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः' इत्यमरः । तस्य शिशोर्निजेन नैसर्गिकेण तेजसा सहसा हतत्विषः क्षीणकान्तयो निशीथदीपा अर्धरात्रप्रदीपाः 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः । आलेख्ये चित्रे समर्पिता इव बभूवुः । 'निशीथ'शब्दो दीपानां प्रभाधिक्यसंभावनार्थः ॥ १५ ॥

---

पाठा०—१ 'हुतमग्नि°'. २ 'तत्क्षणे'.

जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम् ।
अदेयमासीत्त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे ॥ १६ ॥[1]

जनायेति ॥ भूपतेर्दिलीपस्यामृतसंमिताक्षरममृतसमानाक्षरम् । 'सरूपसमसंमिताः' इत्याह दण्डी । कुमारजन्म पुत्रोत्पत्तिं शंसते कथयते शुद्धान्तचरायान्तःपुरचारिणे जनाय त्रयमेवादेयमासीत् । किं तत् ? शशिप्रभमुज्ज्वलं छत्रम् । उभे चामरे च, छत्रादीनां राज्ञः प्रधानाङ्गत्वादिति भावः ॥ १६ ॥

निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम् ।
महोदधेः पूर इवेन्दुदर्शनाद्गुरुः प्रहर्षः प्रबभूव नात्मनि ॥ १७ ॥

निवातेति ॥ निवातो निर्वातप्रदेशः । 'निवातावाश्रयावातौ' इत्यमरः । तत्र यत्पद्मं तद्वत्स्तिमितेन निष्पन्देन चक्षुषा नेत्रेण कान्तं सुन्दरं सुताननं पुत्रमुखं पिबतस्तृष्णया पश्यतो नृपस्य गुरुरुत्कटः प्रहर्षः कर्ता इन्दुदर्शनाद्धेतोर्महोदधेः पूरो जलौघ इव आत्मनि शरीरे न प्रबभूव स्थातुं न शशाक । अन्तर्न माति स्मेति यावत् । न ह्यल्पाधारेऽधिकं मीयत इति भावः । यद्वा,–हर्ष आत्मनि स्वस्मिन्विषये न प्रबभूव । आत्मानं नियन्तुं न शशाक । किंतु बहिर्निर्जगामेत्यर्थः ॥ १७ ॥

स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते ।
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ ॥ १८ ॥

स इति ॥ स दिलीपसूनुः । तपस्विना पुरोधसा पुरोहितेन । 'पुरोधास्तु पुरोहितः' इत्यमरः । वसिष्ठेन । तपस्वित्वात्तदनुष्ठितं कर्म सवीर्यं स्यादिति भावः । तपोवनादेत्यागत्य । अखिले समग्रे जातकर्मणि जातस्य कर्तव्यसंस्कारविशेषे कृते सति । प्रयुक्तः संस्कारः शाणोल्लेखनादिर्यस्य स तथोक्तः । आकरोद्भवः खनिप्रभवः । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । मणिरिव । अधिकं बभौ । वसिष्ठमन्त्रप्रभावात्तेजिष्ठोऽभूदित्यर्थः । अत्र मनुः (२।२९)—'प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते' इति ॥ १८ ॥

सुखश्रवा मङ्गलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम् ।
न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि ॥ १९ ॥

---

पाठा०–१ 'स वीक्ष्य पुत्रस्य चिरात्पिता मुखं निधानकुम्भस्य युवेव दुर्गतः । मुदः शरीरे प्रबभूव नात्मनः पयोधिरिन्दूदयमूर्च्छितो यथा ॥'. २ 'निर्वात०'. ३ 'चात्मनि'. ४ '०नृत्तैः'.

सुखश्रवा इति ॥ सुखः सुखकरः श्रवः श्रवणं येषां ते सुखश्रवाः । श्रुतिसुखा इत्यर्थः । मङ्गलतूर्यनिस्वना मङ्गलवाद्यध्वनयो वारयोषितां वेश्यानाम् । 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्यमरः । प्रमोदनृत्यैर्हर्षनर्तनैः सह मागधीपतेर्दिलीपस्य सद्मनि केवलं गृह एव न व्यजृम्भन्त, किंतु द्यौरोको येषां ते दिवौकसो देवाः । पृषोदरादित्वात्साधुः, तेषां पथ्याऽऽकाशेऽपि व्यजृम्भन्त । तस्य देवांशत्वाद्देवोपकारित्वाच्च देवदुन्दुभयोऽपि नेदुरिति भावः ॥ १९ ॥

**न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः ।**
**ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥ २० ॥**

नेति ॥ रक्षितुः सम्यक्पालनशीलस्य तस्य दिलीपस्य । अत एव चौराद्यभावात् । संयतो बद्धो न बभूव नास्ति स्म । किं तेनात आह—विसर्जयेदिति ॥ सुतजन्म हर्षितस्तोषितः सन् । यं बद्धं विसर्जयेद्विमोचयेत् । किंतु स राजा तदा पितॄणामृणाभिधानाद्बन्धनात् केवलमेकं यथा तथा । स्वयमेव । एक एवेत्यर्थः । 'केवलः कृत्स्न एकश्च केवलश्चावधीरितः' इति शाश्वतः । मुमुचे । कर्मकर्तरि लिट् । स्वयमेव मुक्त इत्यर्थः । अस्मिन्नर्थे—'एष वा अनृणो यः पुत्री' इति श्रुतिः प्रमाणम् ॥ २० ॥

**श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः ।**
**अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् ॥ २१ ॥**

श्रुतस्येति ॥ अर्थविच्छब्दार्थज्ञः पार्थिवः पृथिवीश्वरो दिलीपः । अयमर्भको बालकः श्रुतस्य शास्त्रस्यान्तं पारं यायात् । तथा युधि परेषां शत्रूणामन्तं पारं च यायात् । यातुं शक्नुयादित्यर्थः । 'शकि लिङ् च' (पा. ३।३।१७२) इति शक्यार्थे लिङ् । इति हेतोर्धातोः 'लघिवघिलघि गत्यर्थाः' इति लघिधातोर्गमनारूपमर्थमर्थवित्त्वादवेक्ष्यालोच्य । आत्मसंभवं पुत्रं नाम्ना रघुं चकार । 'लङ्घिवंह्योर्नलोपश्च' (वा.४७९८) इत्यप्रत्यये 'बलमूलकलव्यलमङ्गुलीनां वा लो रत्वमापद्यते' (उ.सू. २९) इति वैकल्पिके रेफादेशे रघुरिति रूपं सिद्धम् । अत्र शङ्खः—'आशौचे तु व्यतिक्रान्ते नामकर्म विधीयते' इति ॥ २१ ॥

पाठा०-१ 'विमोचयेद्यं'.

टिप्प०—1 पुत्रजन्मादौ चौरादिबद्धानां मुक्तिः प्रसिद्धा; 'युवराजाभिषेके च परचक्रावमर्दने । पुत्रजन्मनि वा मोक्षो बद्धस्य हि विधीयते ॥'—इति वल्लभः ।
2 यथा सुते जाते जनकः पितॄणामृणान्मुच्यते इत्यागमाः—इति सुमति० ।

पितुः प्रयत्नात्स समग्रसंपदः शुभैः शरीरावयवैर्दिने दिने ।
पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥ २२ ॥

पितुरिति ॥ स रघुः समग्रसंपदः पूर्णलक्ष्मीकस्य पितुर्दिलीपस्य प्रयत्नाच्छुभैर्मनोहरैः शरीरावयवैः । हरिदश्वदीधितेः सूर्यस्य रश्मेः । 'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः । अनुप्रवेशाद्बालचन्द्रमा इव । दिने दिने प्रतिदिनम् । 'नित्यवीप्सयोः' (पा. ८।१।४) इति द्विर्वचनम् । वृद्धिं पुपोष । अत्र वराहसंहितावचनम्—'सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् । क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः ॥' इति ॥ २२ ॥

उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरंदरौ ।
तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥२३॥

उमेति ॥ उमावृषाङ्कौ पार्वती-वृषभध्वजौ शरजन्मना कार्तिकेयेन । 'कार्तिकेयो महासेनः शरजन्मा षडाननः' इत्यमरः । यथा ननन्दतुः । शचीपुरंदरौ जयन्तेन जयन्ताख्येन सुतेन । 'जयन्तः पाकशासनिः' इत्यमरः । यथा ननन्दतुः । तथा तत्समौ ताभ्यामुमा-वृषाङ्काभ्यां शची-पुरंदराभ्यां च समौ समानौ सा मागधी नृपश्च तत्सदृशेन ताभ्यां कुमार-जयन्ताभ्यां सदृशेन सुतेन ननन्दतुः । मागधी प्राग्व्याख्याता ॥ २३ ॥

रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत्प्रेम परस्पराश्रयम् ।
विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि पर्यचीयत ॥ २४ ॥

रथाङ्गेति ॥ रथाङ्गनाम्नी च रथाङ्गनामा च रथाङ्गनामानौ चक्रवाकौ । 'पुमान्स्त्रिया' (पा. १।२।६७) इत्येकशेषः । तयोरिव तयोर्दंपत्योर्भावबन्धनं हृदया-

पाठा०—१ '०मप्येकसुते न'. २ 'पर्यहीयत'; 'न व्यहीयत'.

टिप्प०—1 श्रीसूर्यस्य अमा (सुपुम्ना?) नाम कला, तस्याः प्रवेशाद्वृद्धिं पुष्णाति,—चन्द्रमाः किल सूर्यस्य सुपुम्ना नाम नाडिकामनुप्रविश्य वर्धते—इति वल्लभः । अमावास्यायां चन्द्रो रवौ गच्छति, प्रतिपदि निःसरति, तत उदयं प्राप्य यथा दिने दिने वर्धते, तथाऽयमपि ववृधे इत्यर्थः—इति शिशु० ।

2 [illegible]प्रभावादेव भवानीशचीशरेन्द्रसादृश्ये लब्धे । तत्समाविति व्यर्थमिति, व्यक्ति-[illegible] अतो

3 तथा चोक्तमुत्तररामचरिते–'आनन्दग्रन्थिरेकोऽयमपत्यमिति कथ्यते ।' इति, वल्लभस्तु–[illegible] नयोः. कयोरिव ? रथांगनाम्नोरिव, यथा रथांगनाम्नोः कोकमिथुनयोः न पर्यहीयत न न्यूनीबभूव–इत्याह॥

कर्तृकं **परस्पराश्रयमन्योन्यविषयं यत्प्रेम बभूव तदेकेन** केवलेन ताभ्यामन्येन च । 'एके मुख्यान्यकेवलाः' इत्यमरः । **सुतेन विभक्तमपि** कृतविभागमपि **परस्परस्योपरि पर्यचीयत** ववृधे । कर्मकर्तरि लिट् । अकृत्रिमत्वात्स्वयमेवोपचितमित्यर्थः । यदेकाधारं वस्तु तदाधारद्वये विभज्यमानं हीयते । अत्र तु तयोः प्रागेकैककर्तृकमेकैकविषयं प्रेम संप्रति द्वितीयविषयलाभेऽपि नाहीयत, प्रत्युतोपचितमेवाभूदिति भावः ॥ २४ ॥

**उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।**
**अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥२५॥**

**उवाचेति ॥ सोऽर्भकः** शिशुः । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । **धात्र्योपमात्रा** । 'धात्रीजनन्यामलकीवसुमत्युपमातृषु' इति विश्वः । **प्रथममुदितमुपदिष्टं वच उवाच । तदीयामङ्गुलिमवलम्ब्य ययौ च । प्रणिपातस्य शिक्षयोपदेशेन नम्रोऽभूच्च** । इति यत्तेन **पितुर्मुदं ततान** ॥ २५ ॥

**तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवामृतं त्वचि ।**
**उपान्तसंमीलितलोचनो नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ ॥ २६ ॥**

**तमिति ॥ शरीरयोगजैः सुखैस्त्वचि** त्वगिन्द्रियेऽ**मृतं निषिञ्चन्तं** वर्षन्तमिव **तं** पुत्रम**ङ्कमारोप्य** मुदाविर्भावादुपान्तयोः प्रान्तयोः **संमीलितलोचनः** सन् । **नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ** । रसः स्वादः ॥ २६ ॥

**अमंस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम् ।**
**स्वमूर्तिभेदेन गुणाग्र्यवर्तिना पतिः प्रजानामिव सर्गमात्मनः ॥२७॥**

**अमंस्तेति ॥ स्थितेरभेत्ता** मर्यादापालकः स नृपः **परार्ध्यजन्मनो**त्कृष्टजन्मनाऽ**नेन** रघुणाऽ**न्वयं** वंशम् । **प्रजानां पतिर्**ब्रह्मा । गुणाः सत्त्वादयः । तेष्वग्र्येण मुख्येन सत्त्वेन वर्तते व्याप्रियत इति **गुणाग्र्यवर्ती** । तेन **स्वस्य मूर्तिभेदेना**वतारविशेषेण विष्णुनाऽऽ**त्मनः सर्गं** सृष्टिम**िव** । **स्थितिमन्तं** प्रतिष्ठावन्तममंस्त

पाठा०-१ 'शिशुस्ततान सः'.

टिप्प०—१ एतेन स्वाचारनिष्ठत्वोक्तिः—इति शिशु० । यथा सत्त्वं प्रधानं दाक्षिण्यादि दृष्ट्वा सर्गं स्थितिमन्तं ब्रह्मा मेने, तद्वत् सृष्ट्युपनयान्वयसानन्त्यमुक्तम्—इति शिशु० । दिनकरमिश्रास्तु—'ब्रह्मत्वे सृजते लोकान्विष्णुत्वे पालयत्यपि । रुद्रत्वे संहरत्येव तिस्रोऽवस्थाः स्वयम्भुवः' इत्युक्तत्वान्मूर्तिभेदत्वम्—इत्याहुः ।

मन्वते स । मन्यतेरनुदात्तत्वादिट्प्रतिषेधः । अत्रोपमानोपमेययोरितरेतरविशेषणानीतरेतरत्र योज्यानि । तत्र रघुपक्षे,–गुणा विद्याविनयादयः। 'गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे । स्तम्भे सत्त्वादिसंध्यादिविद्यादिहरितादिषु ॥' इति विश्वः । शेषं सुगमम् ॥ २७ ॥

**स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः ।**
**लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥ २८ ॥**

**स इति** ॥ 'चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः । प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ॥' (२।३५) इति मनुस्मरणात्तृतीये वर्षे **वृत्तचूलो** निष्पन्नचूडाकर्मा सन् । डलयोरभेदः । **स** रघुः । 'प्राप्ते तु पञ्चमे वर्षे विद्यारम्भं च कारयेत्' इति वचनात्पञ्चमे वर्षे **चलकाकपक्षकै**श्चलशिखण्डकैः । 'बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः' इति हलायुधः । **सवयोभिः** स्निग्धैः । 'वयसः स्निग्धः सवयाः' इत्यमरः । **अमात्यपुत्रैरन्वितः** सन् । **लिपेः** पञ्चाशद्वर्णात्मिकाया मातृकाया **यथावद्ग्रहणेन** सम्यग्बोधेनोपायभूतेन **वाङ्मयं** शब्दजातम् । **नद्या मुखं** द्वारम् । 'मुखं तु वदने मुख्यारम्भे द्वाराभ्युपाययोः' इति यादवः । तेन कश्चिन्मकरादिः **समुद्रमिव** । **आविशत्** प्रविष्टः । ज्ञातवानित्यर्थः ॥ २८ ॥

**अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।**
**अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥२९॥**

**अथेति** ॥ 'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भाच्च द्वादशे विशः ॥' (२।३६) इति मनुस्मरणात् । **अथ** गर्भैकादशेऽब्दे विधिवदुपनीतं **गुरुप्रियमेनं** रघुं **विपश्चितो** विद्वांसो **गुरवो विनिन्युः** शिक्षितवन्तः । ते गुरवोऽत्रास्मिन्रघौ **अवन्ध्ययत्नाश्च बभूवुः** । तथा हि–**क्रिया** शिक्षा । 'क्रिया तु निष्कृतौ शिक्षाचिकित्सोपायकर्मसु' इति यादवः । वस्तुनि पात्रभूत उपहिता प्रयुक्ता **प्रसीदति** फलति । 'क्रिया हि द्रव्यं विनयति नाद्रव्यम्' इति कौटिल्यः ॥ २९ ॥

---

पाठा०–१ 'वृत्तचौलः'; 'वृत्तमुण्डः'. २ 'अर्भके'.

---

टिप्प०—1 समानवयस्कचलकाकपक्षकैः–इत्याह शिशु० ।

2 समुद्रस्य दृष्टान्तेन 'वाङ्मयस्यापारत्वमुक्तम्'–इति व्याख्याय, वृत्तचूडाकर्मा लिपिसंख्यानां चाथ युञ्जीत इति चाणक्यः–इति शिशु० ।

धियः समग्रैः स गुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः ।
ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः ॥३०॥

धिय इति ॥ अत्र कामन्दकः—'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥' इति । 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । एता विद्याश्चतस्रस्तु लोकसंस्थितिहेतवः ॥' इति च । उदारधीरुत्कृष्टबुद्धिः स रघुः समग्रैर्धियो गुणैः । चत्वारोऽर्णवा उपमा यासां ताश्चतुरर्णवोपमाः । 'तद्धितार्थोत्तरपदसमाहारे च' ( पा.२।१।५१) इत्युत्तरपदसमासः । चतस्रो विद्याः । हरितां दिशामीश्वरः सूर्यः पवनातिपातिभिर्हरिद्भिर्निजाश्वैः । 'हरिन्ककुभि वर्णे च तृणवाजिविशेषयोः' इति विश्वः । चतस्रो दिश इव । क्रमात्ततार । चतुरर्णवोपमत्वं दिशामपि द्रष्टव्यम् ॥ ३० ॥

त्वचं स मेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मन्त्रवत् ।
न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः ॥ ३१ ॥

त्वचमिति ॥ स रघु । 'कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिण । वसीरन्नानुपूर्व्येण शाणक्षौमादिकानि च ॥' ( २।४१ ) इति मनुस्मरणान्मेध्यां शुद्धां रौरवीं रुरुसंबन्धिनीम् । 'रुरुर्महाकृष्णसार.' इति यादवः । त्वचं चर्म परिधाय वसित्वा मन्त्रवत् समन्त्रकमस्त्रमाग्नेयादिकं पितुरेवोपाध्यायादशिक्षताभ्यस्तवान् । 'आख्यातोपयोगे' ( पा. १४२९ ) इत्यपादानसंज्ञा । पितुरेवेत्यवधारणमुपपादयति—नेति ॥ तद्गुरुरेकोऽद्वितीयः पार्थिवः केवलं पृथिवीश्वर एव नाभूत्, किंतु क्षितौ स दिलीप एको धनुर्धरोऽप्यभूत् ॥ ३१ ॥

महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभावं कलभः श्रयन्निव ।
रघुः क्रमाद्यौवनभिन्नशैशवः पुपोष गाम्भीर्यमनोहरं वपुः ॥ ३२ ॥

महोक्षतामिति ॥ रघुः क्रमाद्यौवनेन भिन्नशैशवो निरस्तशिशुभावः सन् । महानुक्षा महोक्षो महर्षभः । 'अचतुर—' ( पा.५।४।७७ ) आदिसूत्रेण

पाठा०—१ ''मानिवर्तिभिः'. २ 'मन्त्रवित्'. ३ 'गम्भीर°'.

टिप्प०—1 कामन्दकमते—'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ।' श्रोतुमिच्छा शुश्रूषा, श्रवणमाकर्णनम्, ग्रहणं शास्त्रार्थोपादानम्, धारणं अधीतस्याविस्मरणम्, ऊहः पूर्वपक्षः, अपोहः समाहितस्योपरि ध्यानम्, तत्त्वज्ञानं परमार्थस्वरूपम् । इति धीगुणाः । 'आन्वीक्षिक्यां तर्को विज्ञानं धर्माधर्मौ त्रयी स्मृतौ । पाशुपाल्यं वणिज्या च कृषिर्वार्तासमाश्रयम् । दण्डनीतिस्तु राज्यस्य व्यवस्था हि निरूप्यते ॥'—इति च ।

2 आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चतस्रो राजविद्या—इत्याह वल्लभः ।

विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।
बभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ॥ ३७ ॥

**विभावसुरिति** ॥ **सारथिना** सहायभूतेन । एतद्विशेषणमुत्तरवाक्येष्वप्युपनेयम् । **वायुना विभावसुर्वह्निरिव** । 'सूर्यवह्नी विभावसू' इत्यमरः । **घनव्यपायेन** शरत्समयेन **सारथिना गभस्तिमान्** सूर्य **इव** । **कटो** गण्डः । 'गण्डः कटो मदो दानम्' इत्यमरः । **तस्य प्रभेदः** स्फुटनम् । मदोदय इत्यर्थः । **तेन करीव** । **पार्थिवो** दिलीपः । **तेन** रघुणाऽतितरामत्यन्तं **सुदुःसहः** सुष्ठुसह्यो **बभूव** ॥३७॥

नियुज्य तं होमतुरंगरक्षणे धनुर्धरं राजसुतैरनुद्रुतम् ।
अपूर्णमेकेन शतक्रतूपमः शतं क्रतूनामपविघ्नमाप सः ॥ ३८ ॥

**नियुज्येति** ॥ शतक्रतुरिन्द्र उपमा यस्य स **शतक्रतूपमः स** दिलीपः । 'शतं वै तुल्या राजपुत्रा देवा आशापालाः' इत्यादिश्रुत्या । **राजसुतैरनुद्रुत**मनुगतं **धनुर्धरं तं** रघुं **होमतुरंगाणां रक्षणे नियुज्य** । **एकेन** क्रतुनाऽपूर्णमेकोनं **क्रतूना**मश्वमेधानां **शतमपविघ्नम**पगतविघ्नं यथा तथाऽऽप ॥ ३८ ॥

ततः परं तेन मखाय यज्वना तुरंगमुत्सृष्टमनर्गलं पुनः ।
धनुर्भृतामग्रत एव रक्षिणां जहार शक्रः किल गूढविग्रहः ॥ ३९ ॥

**तत इति** ॥ **ततः परमे**कोनशतक्रतुप्राप्त्यनन्तरं **यज्वना** विधिनेष्टवता **तेन** दिलीपेन **पुनः** पुनरपि **मखाय** मखं कर्तुम् । 'क्रियार्थोपपदस्य—' ( पा. २।३।१४ ) इत्यादिना चतुर्थी । **उत्सृष्टं** मुक्तमनर्गलमप्रतिबन्धम् । अव्याहतस्वैरगतिमित्यर्थः । 'अपर्यावर्तयन्तोऽश्वमनुचरन्ति' इत्यापस्तम्बस्मरणात् । **तुरंगं धनुर्भृतां रक्षिणां** रक्षकाणामग्रत **एव शक्रो गूढविग्रहः** सन् । **जहार किल** । 'किल' इत्यैतिह्ये ॥ ३९ ॥

विषादलुप्तप्रतिपत्ति विस्मितं कुमारसैन्यं सपदि स्थितं च तत् ।
वसिष्ठधेनुश्च यदृच्छयागता श्रुतप्रभावा ददृशेऽथ नन्दिनी ॥ ४० ॥

**विषादेति** ॥ **तत् कुमारस्य सैन्यं** सेना **सपदि** । **विषाद** इष्टनाशकृतो मनोभङ्गः । तदुक्तम्-'विषादश्चेतसो भङ्ग उपायाभावनाशयोः' इति । तेन **लुप्ता प्रतिपत्तिः** कर्तव्यज्ञानं यस्य तत्तथोक्तम् । **विस्मित**मश्वनाशस्याकस्मिकत्वादाश्चर्या-

पाठा०-१ 'दुरासदः'. २ 'मखः'. ३ 'रक्षताम्'.

विष्टं सत्। स्थितं तस्थौ। अथ श्रुतप्रभावा यदृच्छया स्वेच्छयागता। रघोः स्वप्रसादलब्धत्वादनुजिघृक्षयेति भावः। नन्दिनी नाम वसिष्ठधेनुश्च ददृशे। द्वौ चकारावविलम्बसूचकौ ॥ ४० ॥

तदङ्गनिस्यन्दजलेन लोचने प्रमृज्य पुण्येन पुरस्कृतः सताम्।
अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः ॥ ४१ ॥

तदिति ॥ सतां पुरस्कृतः पूजितो दिलीपनन्दनो रघुः पुण्येन तस्या नन्दिन्या यदङ्गं तस्य निस्यन्दो द्रवः स एव जलम्। मूत्रमित्यर्थः। तेन लोचने प्रमृज्य शोधयित्वा। अतीन्द्रियेष्विन्द्रियाण्यतिक्रान्तेषु। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' (वा. १३३६) इति समासः। द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गताप्रतिषेधाद्विशेष्यनिघ्नत्वम्। भावेष्वपि वस्तुषूपपन्नदर्शनः संपन्नसाक्षात्कारशक्तिर्बभूव ॥ ४१ ॥

स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसंभवः।
पुनः पुनः सूतनिषिद्धचापलं हरन्तमश्वं रथरश्मिसंयतम् ॥ ४२ ॥

स इति ॥ नरदेवसंभवः स रघुः पुनः पुनः सूतेन निषिद्धचापलं निवारितौद्धत्यं रथस्य रश्मिभिः प्रग्रहैः। 'किरणप्रग्रहौ रश्मी' इत्यमरः। संयतं बद्धमश्वं हरन्तं पर्वतपक्षाणां शातनं छेदकं देवमिन्द्रं पूर्वतः पूर्वस्यां दिशि ददर्श ॥ ४२ ॥

शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिं विदित्वा हरिभिश्च वाजिभिः।
अवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्तयन्निव ॥ ४३ ॥

शतैरिति ॥ रघुस्तमश्वहर्तारमनिमेषवृत्तिभिर्निमेषव्यापारशून्यैरक्ष्णां शतैर्हरिभिर्हरिद्वर्णैः। 'हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः' इति विश्वः। वाजिभिरश्वैश्च हरिमिन्द्रं विदित्वा। 'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु' इति विश्वः। एनमिन्द्रं गगनस्पृशा व्योमव्यापिना धीरेण गम्भीरेण स्वरेण ध्वनिनैव निवर्तयन्निव। अवोचत् ॥ ४३ ॥

---

टिप्प०—1 श्रुतः प्रभावो रघूत्पत्तिवरप्रदानलक्षणो यस्याः सा—इति दिनकरमिश्राः ॥ अवगतमाहात्म्या—इत्याह शिशु० ।

2 पक्षभङ्ग—द्वौ चकारौ तुल्यकालापेक्षौ गमयेते—इत्याह ॥ चकारौ तुल्यकालत्वविधायकौ—इति तु शिशु० ।

3 गगनस्पृशेति धीरत्वेन नीलभावोक्तिः—इति शिशु० ।

मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र ! सदा निगद्यसे ।
अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्तसे ? ॥४४॥

मखेति ॥ हे देवेन्द्र ! मनीषिभिस्त्वमेव मखांशभाजां यज्ञभागभुजां प्रथमः सदा निगद्यसे कथ्यसे । तथाप्यजस्रदीक्षायां नित्यदीक्षायां प्रयतस्य मद्गुरोः क्रियाविघाताय क्रतुविघाताय, क्रियां विहन्तुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' (पा.२।३।१५) इति चतुर्थी । कथं प्रवर्तसे ? ॥ ४४ ॥

त्रिलोकनाथेन सदा मखद्विषस्त्वया नियम्या ननु दिव्यचक्षुषा ।
स चेत्स्वयं कर्मसु धर्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः ४५

त्रिलोकेति ॥ त्रयाणां लोकानां नाथस्त्रिलोकनाथः । 'तद्धितार्थ–' (पा. २।१।५१) इत्यादिनोत्तरपदसमासः । तेन त्रैलोक्यनियामकेन दिव्यचक्षुषाऽतीन्द्रियार्थदर्शिना त्वया मखद्विषः क्रतुविघातकाः सदा नियम्या ननु निग्राह्याः खलु । स त्वं धर्मचारिणां कर्मसु क्रतुषु स्वयमन्तरायो विघ्नो भवसि चेत् । विधिरनुष्ठानं च्युतः क्षतः । लोके सत्कर्मकथैवास्तमियादित्यर्थः ॥ ४५ ॥

तदङ्गमग्र्यं मघवन्महाक्रतोरमुं तुरंगं प्रतिमोक्तुमर्हसि ।
पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ॥४६॥

तदिति ॥ हे मघवन् ! तत्तस्मात्कारणात् । महाक्रतोरश्वमेधस्याग्र्यं श्रेष्ठमङ्गं साधनममुं तुरंगं प्रतिमोक्तुं प्रतिदातुमर्हसि । तथा हि—श्रुतेः पथो दर्शयितारः सन्मार्गप्रदर्शका ईश्वरा महान्तो मलीमसां मलिनां पद्धतिं मार्गं नाददते न स्वीकुर्वते, असन्मार्गं नावलम्बन्त इत्यर्थः । 'मलीमसं तु मलिनं कच्चरं मलदूषितम्' इत्यमरः ॥ ४६ ॥

इति प्रगल्भं रघुणा समीरितं वचो निशम्याधिपतिर्दिवौकसाम् ।
निवर्तयामास रथं सविस्मयः प्रचक्रमे च प्रतिवक्तुमुत्तरम् ॥ ४७ ॥

पाठा०–१ 'यतः'. २ 'सता'; 'सताम्'. ३ 'स्वमन्तरायी'. ४ 'शुचेः'.

टिप्प०—1 ननु 'नियम्याः' इत्यत्र 'गदमदचरयमश्चानुपसर्गे' (पा० ३।१।१००) इत्यादिनोपसर्गाभावे निहितत्वात्कथं यत्प्रत्ययः ? उच्यते–पदसंस्कारपक्षे केवलाद्यमे यत्प्रत्ययः, पश्चान्निशब्देन समासः । यद्वा,–'तत्र न भवेद्विनियम्यम्' इति कात्यायनप्रयोगज्ञापकात् साधुः । यद्वा,–उपसर्गप्रतिरूपको निशब्दो निपातः । यद्वा,–नियमे साधवो नियम्याः, 'तत्र साधुः' (पा. ४।४।९८) इति यत्प्रत्ययः । यद्वा,–नियममर्हतीति यत्–इति शिशु० ।

2 'शुचेः पथः' इति पाठमाहत्य, शुचेः शुद्धस्य पथ आचारस्य दर्शयितारः प्रवर्तकाः ईश्वराः प्रभावो मलीमसां कलुषां पद्धतिमाचारं नाददते–इति शिशु० ।

इतीति ॥ इति रघुणा समीरितं प्रगल्भं वचो निशम्याऽऽकर्ण्य। दिवौकसः स्वर्गौकसः। 'दिवं स्वर्गेऽन्तरिक्षे च' इति विश्वः। तेषामधिपतिर्देवेन्द्रो रघुप्रभावात् सविस्मयः सन्। रथं निवर्तयामास। उत्तरं प्रतिवक्तुं प्रचक्रमे च ॥ ४७ ॥

यदात्थ राजन्यकुमार! तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः।
जगत्प्रकाशं तदशेषमिज्यया भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥ ४८ ॥

यदिति ॥ हे राजन्यकुमार क्षत्रियकुमार! 'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्' इत्यमरः। यद्वाक्यमात्थ ब्रवीषि। 'ब्रुवः पञ्चानाम्–' (पा. ३।४।८४) इत्यादिनाहादेशः। तत्तथा सत्यम्; किंतु यशोधनैरस्मादृशैः परतः शत्रुतो यशो रक्ष्यम्। ततः किमत आह—भवद्गुरुस्त्वत्पिता जगत्प्रकाशं लोकप्रसिद्धमशेषं सर्वं मम तद्यश इज्यया यागेन लङ्घयितुं तिरस्कर्तुमुद्यत उद्युक्तः ॥ ४८ ॥

किं तद्यश इत्याह—

हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः।
तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी न हि शब्द एष नः ॥ ४९ ॥

हरिरिति ॥ पुरुषेषूत्तम इति सप्तमीसमासः। 'न निर्धारणे' (पा. २।२।५०) इति षष्ठीसमासनिषेधात्। कर्मधारये तु 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इत्युत्तमपुरुष इति स्यात्। यथा हरिर्विष्णुरेक एव पुरुषोत्तमः स्मृतः। यथा च त्र्यम्बकः शिव एव महेश्वरः स्मृतः। नापरोऽपरः पुमान्। तथा मां मुनयः शतक्रतुं विदुर्विदन्ति। 'विदो लटो वा' (पा. ३।४।८३) इति झेर्जुसादेशः। नोऽस्माकम्। हरिहरयोर्मम चेत्यर्थः। एष त्रितयोऽपि शब्दो द्वितीयगामी न हि। द्वितीयाप्रकरणे गम्यादीनामुपसंख्यानात्समासः ॥ ४९ ॥

अतोऽयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयापहारितः।
अलं प्रयत्नेन तवात्र मा निधाः पदं पदव्यां सगरस्य संततेः ॥ ५० ॥

अत इति ॥ अतोऽहमेव शतक्रतुरतस्त्वदीयस्य पितुरयं शततमोऽश्वः कपिलानुकारिणा कपिलमुनितुल्येन मयाऽपहारितोऽपहृतः। अपहारित इति

पाठा०—१ 'यथा'. २ 'अनुसारिणा'. ३ 'मानुगाः'. ४ 'पदव्याः'.

टिप्प०—1 प्रगल्भमिति निसदहेतु–इति शिशु०।
2 पुरा यज्ञाश्वमन्वेषयमाणास्तुरगापहार्यमिति वदन्तः सगरात्मजाः कपिलमुनिना भस्मीकृताः तथा भवानपि स्वं नाशय इति कपिलानुकृत्या सूचयति–इति शिशु०।

स्वार्थे णिच्। **तवात्राधे प्रयत्नेनालम्**; प्रयत्नो माकारीत्यर्थः। निषेध्यस्य निषेधं प्रति करणत्वात्तृतीया। **सगरस्य** राज्ञः **संततेः** संतानस्य पदव्यां **पदं मा निधा** न निधेहि। निपूर्वाद्धाधातोर्लुङ्। 'न माङ्योगे' (पा. ६।४।७४) इत्यडागमप्रतिषेधः। महदाक्रन्दनं ते विनाशमूलं भवेदिति भावः॥ ५०॥

**ततः प्रहस्यापभयः पुरंदरं पुनर्बभाषे तुरगस्य रक्षिता।**
**गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं कृती भवान्॥५१॥**

**तत इति**॥ ततस्तुरगस्य **रक्षिता** रघुः **प्रहस्य** प्रहासं कृत्वा। **अपभयो** निर्भीकः सन्। **पुनः पुरंदरं बभाषे**। किमिति? हे देवेन्द्र! **यद्येषो**ऽश्वामोचनरूपस्ते तव **सर्गो** निश्चयः। 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इत्यमरः। तर्हि **शस्त्रं गृहाण**। **भवान् रघुं** मामनिर्जित्य। कृतमनेनेति **कृती**। कृतकृत्यो **न खलु**। 'इष्टादिभ्यश्च' (पा. ५।२।८८) इतीनिप्रत्ययः। रघुमित्यनेनात्मनो दुर्जयत्वं सूचितम्॥ ५१॥

**स एवमुक्त्वा मघवन्तमुन्मुखः करिष्यमाणः सशरं शरासनम्।**
**अतिष्ठदालीढविशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरः॥ ५२॥**

**स इति**॥ **स** रघुरु**न्मुखः** सन् **मघवन्त**मिन्द्र**मेवमुक्त्वा शरासनं** चापं **सशरं करिष्यमाणः**। **आलीढे**नालीढाख्येन स्थानभेदेन **विशेषशोभिना**ऽतिशयशोभिना **वपुःप्रकर्षेण** देहौन्नत्येन **विडम्बितेश्वरो**ऽनुसृतपिनाकी सन्। **अतिष्ठत्**। आलीढलक्षणमाह यादवः—'स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति॥ अन्वर्थं स्यात्समपदमाली[illegible]॥

[illegible] ॥५३॥

**रघोरिति**॥ **रघोरवष्टम्भमयेन** स्तम्भरूपेण। 'अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि' इति विश्वः। **पत्रिणा** बाणेन **हृदि** हृदये **क्षतो** विद्धः। अत एव**अमर्षणो**ऽसहनः। क्रुद्ध इत्यर्थः। **गोत्रभिदिन्द्रो**ऽपि। 'संभावनीये चौरेऽपि गोत्रः क्षोणीधरे मतः' इति विश्वः। **नवाम्बुदानामनीकस्य** वृन्दस्य **मुहूर्तं** क्षणमात्रं **लाञ्छने** चिह्नभूते **धनुषि**। दिव्ये धनुषीत्यर्थः। **अमोघम**वन्ध्यं **सायकं** बाणं **समधत्त** संहितवान्॥ ५३॥

पाठा०—१ 'आह पुनः'. २ 'व्यपेतभीर्भूमिपुरंदरात्मजः'. ३ 'गर्वः'. ४ 'मार्गणम्'.

दिलीपसूनोः स बृहद्भुजान्तरं प्रविश्य भीमासुरशोणितोचितः ।
पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितम् ॥ ५४ ॥

दिलीपेति ॥ भीमानां भयंकराणामसुराणां शोणिते रुधिरे उचितः परिचितः स इन्द्रमुक्त आशुगः सायको दिलीपसूनो रघोर्बृहद्विशालं भुजान्तरं वक्षः प्रविश्य अनास्वादितपूर्वं पूर्वमनास्वादितम् । सुप्सुपेति समासः । मनुष्यशोणितं कुतूहलेनेव पपौ ॥ ५४ ॥

हरेः कुमारोऽपि कुमारविक्रमः सुरद्विपास्फालनकर्कशाङ्गुलौ ।
भुजे शचीपत्रविशेषकाङ्किते स्वनामचिह्नं निचखान सायकम् ॥५५॥

हरेरिति ॥ कुमारस्य स्कन्दस्य विक्रम इव विक्रमो यस्य स तथोक्तः । 'सप्तम्युपमान-' इत्यादिना समासः । कुमारोऽपि रघुरपि सुरद्विपस्यैरावतस्यास्फालनेन कर्कशा अङ्गुलयो यस्य सः । तस्मिन् । शच्याः पत्रविशेषकै रचिते शचीपत्रविशेषकाङ्किते हरेरिन्द्रस्य भुजे स्वनामचिह्नं स्वनामाङ्कितं सायकं निचखान निखातवान् । निष्कण्टकराज्यसुखास्वादं महानसिमव इति भावः ॥ ५५ ॥

जहार चान्येन मयूरपत्रिणा शरेण शक्रस्य महाशनिध्वजम् ।
चुकोप तस्मै स भृशं सुरश्रियः प्रसह्य केशव्यपरोपणादिव ॥५६॥

जहारेति ॥ अन्येन मयूरपत्रिणा मयूरपत्रवता शरेण शक्रस्येन्द्रस्य महाशनिध्वजं महान्तमशनिरूपं ध्वजं जहार चिच्छेद च । स शक्रः । सुरश्रियः प्रसह्य बलात्कृत्य केशानां व्यपरोपणादवतारणाच्छेदनादिव । तस्मै रघवे भृशमत्यर्थं चुकोप । तं हन्तुमियेषेत्यर्थः । 'क्रुधद्रुह-' (पा. १।४।३७) इत्यादिना संप्रदानाच्चतुर्थी ॥ ५६ ॥

तयोरुपान्तस्थितसिद्धसैनिकं गरुत्मदाशीविषभीमदर्शनैः ।
बभूव युद्धं तुमुलं जयैषिणोरधोमुखैरूर्ध्वमुखैश्च पत्रिभिः ॥ ५७ ॥

तयोरिति ॥ जयैषिणोरन्योन्यजयाकाङ्क्षिणोस्तयोरिन्द्ररघ्वोः । गरुत्मन्तः पक्षवन्तः । 'गरुत्पक्षच्छदाः पत्रम्' इत्यमरः । आशीविषाः । आशिषि दंष्ट्रायां विषं येषां त आशीविषाः सर्पाः । पृषोदरादित्वात्साधुः । 'आशीः स्यादाशीर्हिताशंसाहिदंष्ट्रयोः' इत्यमरः । त इव भीमदर्शनाः सपक्षाः सर्पा इव । दर्शनं भयावहम् इत्यर्थः । तैरधोमुखैरूर्ध्वमुखैश्च । पत्रिणोरपर्यायोद्वेगावस्थितत्वादिति भावः ।

पाठा०—१ 'नरेन्द्रसूनोः'. २ 'शचीपत्रलताक्रियोचिते'. ३ 'मयूरपदमङ्का'.

स्वार्थे णिच् । तवात्राधे प्रयत्नेनालम् ; प्रयत्नो माकारीत्यर्थः । निषेध्यस्य निषेधं प्रति करणत्वात्तृतीया । सगरस्य राज्ञः संततेः संतानस्य पदव्यां पदं मा निधा न निधेहि । निपूर्वाद्धाधातोर्लुङ् । 'न माङ्योगे' (पा. ६।४।७४) इत्यडागमप्रतिषेधः । महदास्कन्दनं ते विनाशमूलं भवेदिति भावः ॥ ५० ॥

ततः प्रहस्यापभयः पुरंदरं पुनर्बभाषे तुरगस्य रक्षिता ।
गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं कृती भवान् ॥५१॥

तत इति ॥ ततस्तुरगस्य रक्षिता रघुः प्रहस्य प्रहासं कृत्वा । अपभयो निर्भीकः सन् । पुनः पुरंदरं बभाषे । किमिति ? हे देवेन्द्र ! यद्येषोऽश्वामोचनरूपस्ते तव सर्गो निश्चयः । 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इत्यमरः । तर्हि शस्त्रं गृहाण । भवान् रघुं मामनिर्जित्य । कृतमनेनेति कृती । कृतकृत्यो न खलु । 'इष्टादिभ्यश्च' (पा. ५।२।८८) इतीनिप्रत्ययः । रघुमित्यनेनात्मनो दुर्जयत्वं सूचितम् ॥ ५१ ॥

स एवमुक्त्वा मघवन्तमुन्मुखः करिष्यमाणः सशरं शरासनम् ।
अतिष्ठदालीढविशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरः ॥ ५२ ॥

स इति ॥ स खेन्मुखः सन् मघवन्तमिन्द्रमेवमुक्त्वा शरासनं चापं सशरं करिष्यमाणः । आलीढेनालीढाख्येन स्थानभेदेन विशेषशोभिनाऽतिशयशोभिना वपुःप्रकर्षेण देहोच्छ्रयेन विडम्बितेश्वरोऽनुकृतपिनाकी सन् । अतिष्ठत् । आलीढलक्षणमाह यादवः—'स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् । त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति ॥ अन्वर्थं स्यात्समपदमालीढ [illegible] ॥

[illegible] ॥५३॥

रघोरिति ॥ रघोरवष्टम्भमयेन स्तम्भरूपेण । 'अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि' इति विश्वः । पत्रिणा बाणेन हृदि हृदये क्षतो विद्धः । अत एवामर्षणोऽसहनः । क्रुद्ध इत्यर्थः । गोत्रभिदिन्द्रोऽपि । 'संभावनीये चौरेऽपि गोत्रः क्षोणीधरे मतः' इति विश्वः । नवाम्बुदानामनीकस्य वृन्दस्य मुहूर्तं क्षणमात्रं लाञ्छने चिह्नभूते धनुषि । दिव्ये धनुषीत्यर्थः । अमोघमवन्ध्यं सायकं बाणं समधत्त संहितवान् ॥ ५३ ॥

पाठा०—१ 'आह पुनः'. २ 'इत्यपेतभीर्भूमिपुरंदरात्मजः'. ३ 'गर्वः'. ४ 'मार्गणम्'.

दिलीपसूनोः स बृहद्भुजान्तरं प्रविश्य भीमासुरशोणितोचितः ।
पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितम् ॥ ५४ ॥

दिलीपेति ॥ भीमानां भयंकराणामसुराणां शोणिते रुधिरे उचितः परिचितः स इन्द्रमुक्त आशुगः सायको दिलीपसूनो रघोर्बृहद्विशालं भुजान्तरं वक्षः प्रविश्य अनास्वादितपूर्वं पूर्वमनास्वादितम् । सुप्सुपेति समासः । मनुष्यशोणितं कुतूहलेनेव पपौ ॥ ५४ ॥

हरेः कुमारोऽपि कुमारविक्रमः सुरद्विपास्फालनकर्कशाङ्गुलौ ।
भुजे शचीपत्रविशेषकाङ्किते स्वनामचिह्नं निचखान सायकम् ॥५५॥

हरेरिति ॥ कुमारस्य स्कन्दस्य विक्रम इव विक्रमो यस्य स तथोक्तः । 'सप्तम्युपमान–' इत्यादिना समासः । कुमारोऽपि रघुरपि सुरद्विपस्यैरावतस्यास्फालनेन कर्कशा अङ्गुलयो यस्य सः । तस्मिन् । शच्याः पत्रविशेषैरङ्किते शचीपत्रविशेषकाङ्किते हरेरिन्द्रस्य भुजे स्वनामचिह्नं स्वनामाङ्कितं सायकं निचखान निखातवान् । निष्कण्टकराज्यमात्तस्यायं महानभिभव इति भावः ॥ ५५ ॥

जहार चान्येन मयूरपत्रिणा शरेण शक्रस्य महाशनिध्वजम् ।
चुकोप तस्मै स भृशं सुरश्रियः प्रसह्य केशव्यपरोपणादिव ॥५६॥

जहारेति ॥ अन्येन मयूरपत्रिणा मयूरपत्रवता शरेण शक्रस्येन्द्रस्य महाशनिध्वजं महान्तमशनिरूपं ध्वजं जहार चिच्छेद च । स शक्रः । सुरश्रियः प्रसह्य बलात्कृत्य केशानां व्यपरोपणादवतारणाच्छेदनादिव । तस्मै रघवे भृशमत्यर्थं चुकोप । तं हन्तुमियेषेत्यर्थः । 'क्रुधद्रुह–' (पा. १।४।३७) इत्यादिना संप्रदानात्वात्तुर्थी ॥ ५६ ॥

पत्रिभिर्बाणैरुपान्तस्थितास्तदस्याः सिद्धा देवा इन्द्रस्य सैनिकाश्च रघोर्येसि-स्तयोकं तुमुलं संकुलं युद्धं बभूव ॥ ५७ ॥

अतिप्रबन्धप्रहितास्त्रवृष्टिभिस्तमाश्रयं दुष्प्रसहस्य तेजसः ।
शशाक निर्वापयितुं न वासवः स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः ॥५८॥

अतीति ॥ वासवोऽतिप्रबन्धेनातिसातत्येन प्रहिताभिः प्रयुक्ताभिरस्त्रवृष्टिभिर्दुष्प्रसहस्य दुःखेन प्रसह्यत इति दुष्प्रसहं तस्य । दुःखेनाप्यसह्यस्येत्यर्थः । तेजसः प्रतापस्याश्रयं तं रघुम् । अम्बुदोऽद्भिः स्वतश्च्युतं निर्गतं वह्निमिव निर्वापयितुं न शशाक । रघोरपि लोकपालात्मकस्येन्द्रांशसंभवत्वादिति भावः ॥ ५८ ॥

ततः प्रकोष्ठे हरिचन्दनाङ्किते प्रमथ्यमानार्णवधीरनादिनीम् ।
रघुः शशाङ्कार्धमुखेन पत्रिणा शरासनज्यामलुनाद्बिडौजसः ॥५९॥

तत इति ॥ ततो रघुर्हरिचन्दनाङ्किते प्रकोष्ठे मणिबन्धे प्रमथ्यमानार्णवधीरनादिनीं[1] प्रमथ्यमानार्णव इव धीरं गम्भीरं नदतीति तां तथोक्ताम् । वेवेष्टि व्याप्नोतीति विट् व्यापकमोजो यस्य स तस्य [2]बिडौजस इन्द्रस्य । पृषोदरादित्वात्साधुः । शरासनज्यां धनुर्मौर्वीम् । शशाङ्कस्यार्धः खण्ड इव मुखं फलं यस्य तेन पत्रिणाऽलुनादच्छिनत् ॥ ५९ ॥

स चापमुत्सृज्य विवृद्धमत्सरः प्रणाशनाय प्रबलस्य विद्विषः ।
महीध्रपक्षव्यपरोपणोचितं स्फुरत्प्रभामण्डलमस्त्रमाददे ॥ ६० ॥

स इति ॥ विवृद्धमत्सरः प्रवृद्धवैरः स इन्द्रश्चापमुत्सृज्य प्रबलस्य विद्विषः शत्रोः प्रणाशनाय वधाय । महीं धारयन्तीति महीध्राः पर्वताः । मूलविभुजादित्वात्कप्रत्ययः । तेषां पक्षव्यपरोपणे पक्षच्छेद उचितं स्फुरत्प्रभामण्डलमस्त्रं वज्रायुधमाददे जग्राह ॥ ६० ॥

रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः ।
निमेषमात्रादवधूय च व्यथां सहोत्थितः सैनिकहर्षनिस्वनैः ॥ ६१ ॥

रघुरिति ॥ रघुस्तेन वज्रेण भृशमत्यर्थं वक्षसि ताडितो हतः सन् । सैनिकानामश्रुभिः सह भूमौ पपात । तस्मिन्पतिते ते रुरुदुरित्यर्थः । निमे-

पाठा०—१ 'व्यपरोपणोद्धतम्'; 'व्यपरोपणोद्धृतम्'. २ 'तद्व्यथाम्'.

टिप्प०—1 एतेन परानभिभाव्यतोक्ता—इति शिशु० ।

2 विडं भेदकमोजो तस्य स तस्य बिडौजसः, विटं व्यापकमोजो यस्येति वा वर्णविपर्यये वर्णस्य व्यत्ययः—इति शिशु० ।

पमानात्स्वव्यथां दुःखमवधूय तिरस्कृत्य सैनिकानां हर्षेण ये निस्वनाः क्ष्वेडास्तैः सहोत्थितश्च । तस्मिन्नुत्थिते हर्षोत्सिंहनादांश्चक्रुरित्यर्थः ॥ ६१ ॥

तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः ।
तुतोष वीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥ ६२ ॥

तथापीति ॥ तथापि वज्रपातेऽपि शस्त्राणामायुधानां व्यवहारेण व्यापारेण निष्ठुरे क्रूरे विपक्षभावे शात्रवे चिरं तस्थुषः स्थितवतोऽस्य रघोर्वीर्यातिशयेन । वृत्रं हतवानिति वृत्रहा । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' । (पा. ३।२।८७) तुतोष । स्वयं वीर एव वीरं जानातीति भावः । कथं, शत्रोः सतोषोऽत आह— गुणैः सर्वत्र शत्रुमित्रोदासीनेषु पदमङ्घ्रिर्निधीयते । गुणैः सर्वत्र संक्रम्यत इत्यर्थः । गुणाः शत्रूनप्यावर्जयन्तीति भावः ॥ ६२ ॥

असङ्गमद्रिष्वपि सारवत्तया न मे त्वदन्येन विसोढमायुधम् ।
अवेहि मां प्रीतमृते तुरंगमात्किमिच्छसीति स्फुटमाह वासवः ॥ ६३ ॥

असङ्गमिति ॥ सारवत्तयाऽद्रिष्वसङ्गमप्रतिबन्धं मे आयुधं वज्रं त्वदन्येन न विसोढम् । अतो मां प्रीतं संतुष्टमवेहि । तुरंगमादृते तुरंगं वर्जयित्वा । 'अन्यारादितरर्ते–' (पा. २।३।२९) इति पञ्चमी । किमिच्छसीति स्फुटं वासव आह । तुरंगमादन्यददेयं नास्तीति भावः ॥ ६३ ॥

ततो निषङ्गादसमग्रमुद्धृतं सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम् ।
नरेन्द्रसूनुः प्रतिसंहरन्निषुं प्रियंवदः प्रत्यवदत्सुरेश्वरम् ॥ ६४ ॥

तत इति ॥ ततो निषङ्गात्तूणीरादसमग्रं यथा तथोद्धृतं सुवर्णपुङ्खद्युतिभी रञ्जिता अङ्गुलयो येन तमिषुं प्रतिसंहरन्निवर्तयन् । 'नाप्रहरन्तं प्रहरेत्' इति निषेधादिति भावः । प्रियं वदतीति प्रियंवदः । 'प्रियवशे वदः खच्' (पा. ३।२।३८) इति खच्प्रत्ययः । 'अरुर्द्विषद्–' (पा. ६।३।६७) इत्यादिना मुमागमः । नरेन्द्रसूनू रघुः सुरेश्वरं प्रत्यवदत् । न तु प्राहरदिति भावः ॥ ६४ ॥

अमोच्यमश्वं यदि मन्यसे प्रभो ! ततः समाप्ते विधिनैव कर्मणि ।
अजस्रदीक्षाप्रयतः स मद्गुरुः क्रतोरशेषेण फलेन युज्यताम् ॥ ६५ ॥

अमोच्यमिति ॥ हे प्रभो इन्द्र । अश्वममोच्यं मन्यसे यदि ततस्त-

---

पाठा०—१ 'विधीयते'. २ 'असङ्गम्'. ३ 'अवेहि'. ४ 'वरं वृणीष्वेति तमाह वृत्रहा'; 'वरं वृणीष्वेति तमादिदेश सः'. ५ 'असमग्रनिःसृतम्'. ६ 'दिलीपसूनुः'. ७ 'प्रियंवदम्'. ८ 'स मे गुरुः'.

र्हाजस्रदीक्षायां प्रयतः स मद्गुरुर्मम पिता विधिनैव कर्मणि समाप्ते सति क्रतोर्यत्फलं तेन फलेनाशेषेण कृत्स्नेन युज्यतां युक्तोऽस्तु । अश्वमेधफललाभे किमश्वेनेति भावः ॥ ६५ ॥

यथा च वृत्तान्तमिमं सदोगतस्त्रिलोचनैकांशतया दुरासदः ।
तवैव संदेशहराद्विशांपतिः शृणोति लोकेश ! तथा विधीयताम् ६६

यथेति ॥ सदोगतः सदो गृहं गतस्त्रिलोचनस्येश्वरस्यैकांशतया, अष्टानामन्यतममूर्तित्वात् । दुरासदो माहशैर्दुष्प्राप्यो विशांपतिर्यथेमं वृत्तान्तं तव संदेशहराद्वार्ताहरादेव शृणोति च । हे लोकेशेन्द्र ! तथा विधीयताम् ॥ ६६ ॥

तथेति कामं प्रतिशुश्रुवान्रघोर्यथागतं मातलिसारथिर्ययौ ।
नृपस्य नातिप्रमनाः सदोगृहं सुदक्षिणासूनुरपि न्यवर्तत ॥ ६७ ॥

तथेति ॥ मातलिसारथिरिन्द्रो रघोः संबन्धिनं कामं मनोरथं तथेति 'तथास्तु' इति प्रतिशुश्रुवान् । 'भाषायां सदवसश्रुवः' (पा. ३।२।१०८) इति क्वसुप्रत्ययः । यथागतं ययौ सुदक्षिणासूनू रघुरपि नातिप्रमना विजयलाभेऽप्यश्वनाशादतीव हृष्टः सन् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । नृपस्य सदोगृहं प्रति न्यवर्तत ॥ ६७ ॥

तमभ्यनन्दत्प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः ।
परामृशन्हर्षजडेन पाणिना तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥ ६८ ॥

तमिति ॥ हरेरिन्द्रस्य शासनहारिणा पुरुषेण प्रथमं प्रबोधितो ज्ञापितः । वृत्तान्तमिति शेषः । प्रजेश्वरो दिलीपो हर्षजडेन हर्षशिशिरेण पाणिना कुलिशव्रणाङ्कितम् । तस्य रघोरिदं तदीयम् । अङ्गं शरीरं परामृशन्, तं रघुमभ्यनन्दत् ॥ ६८ ॥

इति क्षितीशो नवतिं नवाधिकां महाक्रतूनां महनीयशासनः ।
समारुरुक्षुर्दिवमायुषः क्षये ततान सोपानपरम्परामिव ॥ ६९ ॥

---

पाठा०–1 'इदम्'. २ 'देवेश;' 'देवेन्द्र'. ३ 'हर्षचलेन'. ४ 'हृदयम्'.

---

टिप्प०—1 दीक्षितस्याष्टमूर्तित्वम्-इति शिशु० ।

2 मातलिनामा सारथिर्यस्य स इन्द्रः यथाऽऽगतस्तथैव ययौ गतः, न तु रघुं मिलित्वा । मातलिसारथित्वेन शीघ्रगमनध्वनिः-इति शिशु० ।

इतीति ॥ महनीयशासनः पूजनीयाज्ञः क्षितीश इत्यनेन प्रकारेण। 'इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु' इत्यमरः। महाक्रतूनामश्वमेधानां नवभिरधिकां नवतिमेकोनशतमायुषः क्षये सति दिवं स्वर्गं समारुरुक्षुरारोढुमिच्छुः सोपानानां परम्परां पङ्क्तिमिव ततान ॥ ६९ ॥

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम्।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ ७० ॥

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृतौ रघुराज्याभिषेको नाम तृतीयः सर्गः।

---

अथेति ॥ अथ विषयेभ्यो व्यावृत्तात्मा निवृत्तचित्तः स दिलीपो यथाविधि यथाशास्त्रं यूने सूनवे नृपतिककुदं राजचिह्नम्। 'ककुद्वत्ककुदं श्रेष्ठे वृषाङ्के राजलक्ष्मणि' इति विश्वः। सितातपवारणं श्वेतच्छत्रं दत्त्वा तया देव्या सुदक्षिणया सह मुनिवनतरोश्छायां शिश्रिये श्रितवान्। वानप्रस्थाश्रमं स्वीकृतवानित्यर्थः। तथा हि–गलितवयसां वृद्धानामिक्ष्वाकूणामिक्ष्वाकोर्गोत्रापत्यानाम्। तद्राजसंज्ञकत्वादणो लुक्। इदं वनगमनं कुलव्रतम्। 'देव्या सह' इत्यनेन सपत्नीकवानप्रस्थाश्रमपक्ष उक्तः। तथा च याज्ञवल्क्यः (प्राय० ३।४५)– 'सुतविन्यस्तपत्नीकस्तया वाऽनुगतो वनम्। वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत् ॥' इति। हरिणीवृत्तमेतत्। तदुक्तम्—'रसयुगहयैन्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति ॥ ७० ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां संजीविनीसमाख्यायां तृतीयः सर्गः।

---

## चतुर्थः सर्गः।

शारदा शारदाम्भोजवदना वदनाम्बुजे।
सर्वदा सर्वदाऽस्माकं सन्निधिं संनिधिं क्रियात् ॥

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ।
दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥ १ ॥

---

टिप्प०—1 'छायामहती तु च्छायामाहे' छायासंपादनार्थम् इति–शिशु०।

स इति ॥ स रघुर्गुरुणा पित्रा दत्तं राज्यं राज्ञः कर्म प्रजापरिपालनात्मकम्। पुरोहितादिरवाप्य । प्रतिपद्य प्राप्य । दिनान्ते सायंकाले सवित्रा सूर्येण निहितं तेजः प्रतिपद्य हुताशनोऽग्निरिव । अधिकं बभौ । 'सौरं तेजः सायमग्निं संक्रमते । आदित्यो वा अस्तं यन्नग्निमनुप्रविशति । अग्निं वा आदित्यः सायं प्रविशति ।' इत्यादिश्रुतिप्रामाण्यात् ॥ १ ॥

दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।
पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥ २ ॥

दिलीपेति ॥ दिलीपानन्तरं राज्ये प्रतिष्ठितमवस्थितं तं रघुं निशम्याकर्ण्य पूर्वं दिलीपकाले राज्ञां हृदये प्रकर्षेण धूमोऽस्य संजातः प्रधूमितोऽग्निः संतापाग्निरुत्थित इव प्रज्वलित इव । पूर्वाभ्यधिकः संतापोऽभूदित्यर्थः । राजकर्तृकस्यापि निशमनस्याग्नावुपचाराच्च समानकर्तृकत्वविरोधः ॥ २ ॥

पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः ।
नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः ॥ ३ ॥

पुरुहूतेति ॥ पुरुहूतध्वज इन्द्रध्वजः । स किल राजभिर्भूत्यर्थं पूज्यत इत्युक्तं भविष्योत्तरे—'एवं यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर । पर्जन्यः कामवर्षी स्यात्तस्य राज्ये न संशयः ॥' इति । 'चतुरस्रं ध्वजाकारं राजद्वारे प्रतिष्ठितम् । आहुः शक्रध्वजं नाम पौरलोकसुखावहम् ॥' इति च । पुरुहूतध्वजस्येव तस्य रघोर्नवमभ्युत्थानमभ्युन्नतिमभ्युदयं च पश्यन्तीति नवाभ्युत्थानदर्शिन्यः । उद्गूर्य प्रस्थिता उन्नमिताश्च नयनपङ्क्तयो यासां ताः सप्रजाः सर्वसंतानाः प्रजाः जनाः । 'प्रजा [illegible] ।

[illegible]

सममिति ॥ द्विरद इव द्विरदेन गच्छतीति द्विरदगामिना । 'कर्तर्युपमाने' (पा. ३।२।७९) इति, 'सुप्यजातौ–' (पा. ३।२।७८) इति च णिनिः । तेन

पाठा०—१ 'न्यस्तशस्त्रं दिलीपे च तं च शुश्रूषुणां पतिम् । राज्ञामुद्धृतनाराचं हृदि शल्यमिवार्पितम् ॥'. २ 'प्रधूमितः'. ३ 'सुप्रजाः'. ४ 'पैत्र्यम्'.

टिप्प०—१ पुरुहूतो मेघो ध्वजो यस्य वेति कश्चित्—इति शिशु० ।
२ द्वौ रदौ यस्यासौ द्विरदः, तेन गन्तुं शीलमस्य सः । यद्वा–द्विरदवद्गच्छतीति उपमाने णिनिः । अभिषिक्तो राजा हस्तिनमारुह्य पुरे भ्रमतीत्याचारः—इति शिशु० ।

रघुणा समं युगपदेव द्वयं समाक्रान्तमधिष्ठितम् । किं तद्वयम्? पितुरागतं **पित्र्यम्** । 'पितुर्यत्-' ( पा. ४।३।७९ ) इति यत्प्रत्ययः । **सिंहासनम्** । **अखिलमरीणां मण्डलं राष्ट्रं च** ॥ ४ ॥

अथ सिंहासनारोहणानन्तरं तस्य लक्ष्मीसंनिधानमाह—

**छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ।**
**पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम् ॥ ५ ॥**

**छायेति** ॥ अत्र रघोस्तेजोविशेषेण स्वयं संनिहितया लक्ष्म्या छत्रधारणं कृतमित्युत्प्रेक्षते—**पद्मा** लक्ष्मीः । 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः । '**सा स्वयमदृश्या किल**। 'किल' इति संभावनायाम् । सती **छायामण्डललक्ष्येण** कान्तिपुञ्जानुमेयेन । न तु स्वरूपतो दृश्येन । 'छायामण्डलम्' इत्यनेनानातपज्ञानं लक्ष्यते । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्युभयत्राप्यमरः । **पद्मातपत्रेण** पद्ममेवातपत्रं तेन कारणभूतेन **साम्राज्यदीक्षितं** साम्राज्ये साम्राज्यकर्मणि मण्डलाधिपत्ये दीक्षितमभिषिक्तं **तं भेजे** । अन्यथा कथमेतादृशी कान्तिसंपत्तिरिति भावः ॥ ५ ॥

संप्रति सरस्वतीसांनिध्यमाह—

**परिकल्पितसांनिध्या काले काले च वन्दिषु ।**
**स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती ॥ ६ ॥**

**परिकल्पितेति** ॥ **सरस्वती च काले काले** सर्वेष्वपि योग्यकालेषु । 'नित्यवीप्सयोः' ( पा. ८।१।४ ) इति वीप्सायां द्विर्वचनम् । **वन्दिषु परिकल्पितसांनिध्या** कृतसंनिधाना सती **स्तुत्यं** स्तोत्रार्हं तं रघुम् । **अर्थ्याभिः**र्थादनपेताभिः । 'धर्मपथ्यर्थन्यायादनपेते' ( पा. ४।४।९२ ) इति यत्प्रत्ययः । **स्तुतिभिः** स्तोत्रैः । **उपतस्थे** । देवताबुद्ध्या पूजितवतीत्यर्थः । देवतात्वं च—'ना विष्णुः पृथिवीपतिः' इति वा लोकपालात्मकत्वाद्वेत्यनुसंधेयम् । एवं च सति 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिषु' (वा. ९१४) इति वक्तव्यादात्मनेपदं सिद्ध्यति ॥ ६ ॥

**मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः ।**
**तथाप्यनन्यपूर्वेव तस्मिन्नासीद्वसुंधरा ॥ ७ ॥**

टिप्प०—1 काले काले स्तुत्यवसरे वन्दिषु वैतालिकेषु परिकल्पितं घृतं सांनिध्यं यया सा सरस्वती-इत्याह शिशु० ॥ काले काले सर्वस्मिन्समये-इति सुमति० ।

**मन्विति** ॥ **वसुंधरा मनुप्रभृतिभिर्मन्वादिभिर्मान्यैः** पूज्यै राजभि**र्भुक्ता** यद्यपि । भुक्तैवेत्यर्थः । 'यद्यपि' इत्यवधारणे । 'अप्यर्थे यदि चार्थे 'स्यात्' इति केशवः । तथापि **तस्मिन्** राज्ञि । अन्यः पूर्वो यस्याः साऽन्यपूर्वा । अन्यपूर्वा न भवतीत्यनन्य**पूर्वा** । अनन्योपभुक्तेवासीत् । तत्प्रथमपतिकेवानुरक्तवतीत्यर्थः ॥ ७ ॥

अत्र कारणमाह—

स हि सर्वस्य लोकस्य युक्तदण्डतया मनः ।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥ ८ ॥

**स इति** ॥ हि यस्मात्कारणात् **स** रघु**र्युक्तदण्डतया** यथापराधदण्डतया **सर्वस्य लोकस्य मन आददे** जहार । क इव ? अतिशीतोऽत्युष्णो वा न भवतीति **नातिशीतोष्णः** । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । **दक्षिणो** दक्षिणदिग्भवो **नभस्वान्** वायुरिव । मलयानिल इवेत्यर्थः । 'युक्तदण्डतया' इत्यत्र कामन्दकः—'उद्वेजयति तीक्ष्णेन मृदुना परिभूयते । दण्डेन नृपतिस्तस्माद्युक्तदण्डः प्रशस्यते ॥' इति ॥ ८ ॥

मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ ।
फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥ ९ ॥

**मन्देति** ॥ **तेन** रघुणा **प्रजा गुरौ** दिलीपविषये । **सहकारो**ऽतिसौरभश्रुतः । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः । तस्य **फलेन पुष्पोद्गमे** पुष्पोदय **इव** । ततोऽपि **गुणाधिकतया** हेतुना **मन्दोत्कण्ठा** अल्पोत्सुक्याः **कृताः** । गुणोत्तरश्चोत्तरो विषयः पूर्वं विस्मारयतीति भावः ॥ ९ ॥

नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम् ।
पूर्व एवाभवत्पक्षस्तस्मिन्नाभवदुत्तरः ॥ १० ॥

**नयविद्भिरिति** ॥ **नयविद्भि**र्नीतिशास्त्रज्ञै**र्नवे तस्मिन्राज्ञि** विषये । तमधिकृत्येत्यर्थः । **सद्**धर्मयुद्धादिकम्, **असत्** कूटयुद्धादिकं **चोपदर्शितम्** । तस्मिन्राज्ञि **पूर्वः पक्ष एवाभवत्** । संक्रान्त इत्यर्थः । **उत्तरः पक्षो नाभवत्** । न संक्रान्त इत्यर्थः । तत्र सदसतोर्मध्ये सदेवाभिमतं नासत् । तदुद्भावनं तु ज्ञानार्थमेवेत्यर्थः । पक्षः साधनयोरर्थः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति केशवः ॥ १० ॥

पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः ।
नवे तस्मिन्महीपाले सर्वं नवमिवाभवत् ॥ ११ ॥

---

टिप्प०—1 अनेन विरोधाभास इत्याह दिल्लु० ।

**पञ्चानामिति** ॥ पृथिव्यादीनां पञ्चानां भूतानामपि गुणा गन्धादय उत्कर्षमतिशयं पुपुषुः । अत्रोत्प्रेक्षते—तस्मिन् रघौ नाम नवे महीपाले सति सर्वं वस्तुजातं नवमिवाभवत् । तदेव भूतजातमिदानीमपूर्वगुणयोगादपूर्वमिवाभवदिति भावः ॥ ११ ॥

> यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
> तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥ १२ ॥

[illegible]

तपनः सूर्यः । नन्द्यादित्वाल्ल्युप्रत्ययः । प्रतापात् संतापजननादन्वर्थः । तथैव स राजा प्रकृतिरञ्जनादन्वर्थः सार्थकराजशब्दोऽभूत् । यद्यपि 'राज'शब्दो राजतेर्दीप्त्यर्थात्कनिन्प्रत्ययान्तो न तु रञ्जेस्तथापि धातूनामनेकार्थत्वाद्रञ्जनाद्राजेत्युक्तं कविना ॥ १२ ॥

> कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने ।
> चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना ॥ १३ ॥

**काममिति** ॥ विशाले तस्य रघोर्लोचने कामं कर्णान्तयोर्विश्रान्ते कर्णप्रान्तगते । चक्षुष्मत्ता तु । चक्षुःफलं त्वित्यर्थः । सूक्ष्मान् कार्यार्थान्कर्तव्यार्थान् दर्शयति प्रकाशयतीति सूक्ष्मकार्यार्थदर्शिना शास्त्रेणैव । शास्त्रं दृष्टिर्विवेकिनामिति भावः ॥ १३ ॥

> लब्धप्रशमनस्वस्थमथैनं समुपस्थिता ।
> पार्थिवश्रीर्द्वितीयेव शरत्पङ्कजलक्षणा ॥ १४ ॥

**लब्धेति** ॥ अथ लब्धस्य राज्यस्य प्रशमनेन परिपन्थिनामनुरञ्जनप्रतीकाराभ्यां स्थिरीकरणेन स्वस्थं समाहितचित्तमेनं रघुं पङ्कजलक्षणा पद्मचिह्ना । श्रियोऽपि विशेषणमेतत् । शरत् । द्वितीया पार्थिवश्री राजलक्ष्मीरिव । समुपस्थिता प्राप्ता । 'रक्षा पौरजनस्य देशनगरग्रामेषु गुप्तिस्तथा योधानामपि संग्रहोऽपि तुल्या मानव्यवस्थापनम् । धर्म्यं लिङ्गिषु दानवृत्तिकरणं त्यागः समानेऽर्चने कार्याण्येव महीभुजां प्रशमनान्येतानि राज्ये नवे ॥' इति ॥ १४ ॥

---

पाठा०–१ "दर्शनः", २ 'लब्धप्रशमनं स्वस्थम्'.

---

टिप्प०–१ पृथिव्यप्तेजोवाय्वाकाशानि पञ्चमहाभूतानि, गन्धादयस्तद्विषयाः प्रसिद्धाः ।

निर्वृष्टलघुभिर्मेघैर्मुक्तवर्त्मा सुदुःसहः ।
प्रतापस्तस्य भानोश्च युगपद्व्यानशे दिशः ॥ १५ ॥

**निर्वृष्टेति** ॥ निःशेषं वृष्टा निर्वृष्टाः । कर्तरि क्तः । अत एव **लघवः,** **तैर्मेघैर्मुक्तवर्मा** त्यक्तमार्गः । अत एव **सुदुःसहः** । **तस्य** रघो**र्भानोश्च प्रतापः** पौरुषमातपश्च । 'प्रतापौ पौरुषातपौ' इति यादवः । **युगपद्दिशो व्यानशे** व्याप ॥ १५ ॥

वार्षिकं संजहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।
प्रजार्थसाधने तौ हि पर्यायोद्यतकार्मुकौ ॥ १६ ॥

**वार्षिकमिति** ॥ **इन्द्रः** । वर्षासु भवं **वार्षिकम्,** वर्षानिमित्तमित्यर्थः । 'वर्षाभ्यष्ठक्' ( पा. ४।३।१८ ) इति ठक्प्रत्ययः । **धनुः संजहार** । **रघुर्जैत्रं** जयशीलम् । 'जेतृ'शब्दात्तृन्नन्तात् 'प्रज्ञादिभ्यश्च' ( पा. ५।४।३८ ) इति स्वार्थेऽण्प्रत्ययः । **धनुर्दधौ** । **हि** यस्मात् **तावि**न्द्ररघू **प्रजानामर्थस्य** प्रयोजनस्य वृष्टिविजयलक्षणस्य **साधने** विषये पर्यायेणोद्यते कार्मुके याभ्यां तौ **पर्यायोद्यतकार्मुकौ** । **'पर्यायोद्यमविश्रमौ'** इति पाठान्तरे पर्यायेणोद्यमो विश्रमश्च ययोस्तौ पर्यायोद्यमविश्रमौ । द्वयोः पर्यायकरणादक्लेश इति भावः ॥ १६ ॥

चन्द्रे च द्वयोर्विषये तदा चक्षुष्मतां प्रीतिरनुरागः समरसा समस्वादा। तुल्यभोगेति यावत्। 'रसो गन्धे रसः स्वादे' इति विश्वः। आसीत् ॥ १८ ॥

हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु।
विभूतयस्तदीयानां पर्यस्ता यशसामिव ॥ १९ ॥[2]

हंसेति ॥ हंसानां श्रेणीषु पङ्क्तिषु। तारासु नक्षत्रेषु । कुमुदानि येषु सन्तीति कुमुद्वन्ति। 'कुमुद्वान्कुमुदप्राये' इत्यमरः। 'कुमुदनडवेतसेभ्यो ड्मतुप्' (पा. ४।२।८७)। तेषु। कुमुदप्रायेष्वित्यर्थः। वारिषु च तदीयानां रघुसंबन्धिनां यशसां विभूतयः संपदः पर्यस्ता इव प्रसारिताः किम्? इत्युत्प्रेक्षा। अन्यथा कथमेषां धवलिमेति भावः ॥ १९ ॥

इक्षुच्छायनिषादिन्यस्तस्य गोप्तुर्गुणोदयम्।
आकुमारकथोद्धातं शालिगोप्यो जगुर्यशः ॥ २० ॥

इक्ष्विति ॥ इक्षूणां छायेक्षुच्छायम्। 'छाया बाहुल्ये' (पा. २।४।२२) इति नपुंसकत्वम्; तत्र निषण्णा इक्षुच्छायनिषादिन्यः। 'इक्षुच्छायानिषादिन्यः' इति स्त्रीलिङ्गपाठ इक्षोश्छायेति विग्रहः; अन्यथा बहुत्वे नपुंसकत्वप्रसङ्गात्। शालीन् गोपायन्ति रक्षन्तीति शालिगोप्यः सस्यपालिकाः स्त्रियः। 'कर्मण्यण्' (पा. ३।२।१)। 'टिड्ढाणञ्—' (पा. ४।१।१५) इत्यादिना ङीप्। गोप्तू रक्षकस्य तस्य रघोः। गुणेभ्य उदयो यस्य तद्गुणोदयं गुणोत्पन्नमाकुमारं कुमारादारभ्य कथोद्धातः कथारम्भो यस्य तम्। कुमारैरपि स्तूयमानमित्यर्थः। यशो जगुर्गायन्ति स्म। अथवा,—कुमारस्य सतो रघोर्याः कथा इन्द्रविजयादयस्तत आरभ्याकुमारकथम्। तत्राप्यभिविधावव्ययीभावः। आकुमारकथमुद्धातो यस्मिन् कर्मणि। गानक्रियाविशेषणमेतत्। 'स्यादभ्यादानमुद्धात आरम्भः' इत्यमरः। 'आकुमारकथोद्भूतम्' इति पाठे कुमारस्य सतस्तस्य कथाभिश्चरितैरुद्भूतं यशः—स्वग्रश्च आरभ्य यशो जगुरिति व्याख्येयम् ॥ २० ॥

प्रससादोदयादम्भः कुम्भयोनेर्महौजसः।
रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः ॥ २१ ॥

प्रससादेति ॥ महौजसः कुम्भयोनेरगस्त्यस्य। 'अगस्त्यः कुम्भसंभवः' इत्यमरः। उदयादम्भः प्रससाद प्रसन्नं बभूव। महौजसो रघोरुदयादभि-

पाठा०—१ 'श्रेणिषु'. २ 'तस्य गोप्तुर्द्विरेफाणां कर्णोत्पलनिपातिनाम्। स्वरसंवादिभिः कण्ठैः शालिगोप्यो जगुर्गुणान् ॥'. ३ 'रघोः परिभवाशङ्कि'.

भवाशङ्कि द्विषतां मनश्चुक्षुभे कालुष्यं प्राप । 'अगस्त्योदये जलानि प्रसीदन्ति'-इत्यागमः ॥ २१ ॥

मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः ।
लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥ २२ ॥

**मदेति** ॥ **मदोदग्रा** मदोद्धताः । ककुदेषामस्तीति **ककुद्मन्तः** । महाककुद इत्यर्थः । यवादित्वान्मकारस्य वत्वाभावः । **सरितां** कूलान्युद्रुजन्तीति **कूलमुद्रुजाः** । 'उदि कूले रुजिवहोः' (पा. ३।२।३१) इति खश्प्रत्ययः । 'अरुर्द्विषद्-' (पा. ६।३।६७) इत्यादिना मुमागमः । महान्त उक्षाणो **महोक्षाः** । 'अचतुर-' (पा. ५।४।७७) इत्यादिना निपातनादकारान्तः । **लीलाखेलं** विलासमुभगं **तस्य** रघोरुत्साहवतो नृपस्य परमुञ्जकस्य **विक्रमं** शौर्यम् । **अनुप्रापुः** अनुचक्रुः ॥ २२ ॥

प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः ।
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥ २३ ॥

**प्रसवैरिति** ॥ मदस्येव गन्धो येषां तै**र्मदगन्धिभिः** । 'उपमानाच्च' (पा. ५।४।१३७) इतीकारः समासान्तः । **सप्तपर्णानां** वृक्षविशेषाणाम् । 'सप्तपर्णो विशालत्वक्शारदो विषमच्छदः' इत्यमरः । **प्रसवैः** पुष्पैराहतास्तस्य रघोर्नागा गजाः । 'गजेऽपि नागमातङ्गौ' इत्यमरः । **असूययेवा**हतिनिमित्तया स्पर्धयेव **सप्तधैव प्रसुस्रुवुर्मदं** ववृषुः । प्रतिगजगन्धाभिमानादिति भावः । 'कराटकाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः' इति पालकाप्ये । करान्नासारन्ध्राभ्यामित्यर्थः ॥ २३ ॥

सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् ।
यात्रायै चोदयामास तं शक्तेः प्रथमं शरत् ॥ २४ ॥

**सरित इति** ॥ **सरितो गाधाः** सुप्रतराः **कुर्वती** । **पथो** मार्गा**श्चाश्यानकर्दमा**ञ्शुष्कपङ्कान् **कुर्वती** । 'संयोगादेरातो धातोर्यण्वतः' (पा. ८।४।४३) इति श्यतेर्निष्ठातस्य नत्वम् । **शरच्छर**दृतुस्तं रघुं **शक्तेः** उत्साहशक्तेः **प्रथमं** अग्रयात्रायै दण्डयात्रायै **चोदयामास** प्रेरयामास । प्रभुमन्त्रशक्तिसंपन्नस्य शरत् स्वयमुत्साहमुत्पादयामासेत्यर्थः ॥ २४ ॥

तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ ।
प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥ २५ ॥

पाठा०-१ 'नोदयामास'; 'प्रेरयामास'. २ 'सम्यक्हुतः'. ३ 'एव'.

**तस्या इति** ॥ वाजिनामश्वानां **नीराजनाविधौ** नीराजनाख्ये शान्तिकर्मणि **सम्यग्विधिवद्धुतो** होमसमिद्धो **वह्निः** । प्रगता दक्षिणं **प्रदक्षिणम्** । तिष्ठद्गुप्रभृतित्वादव्ययीभावः । प्रदक्षिणं **यार्ऽचिर्ज्वाला** तस्या **व्याजेन हस्तेनेव तस्मै जयं ददौ** । उक्तं महायात्रायाम्—'इद्धः प्रदक्षिणगतो हुतभुङ् नृपस्य धात्रीं ससुद्ररशनां वशगां करोति' इति । 'वाजि'ग्रहणं गजादीनामप्युपलक्षणम्, तेषामपि नीराजनविधानात् ॥ २५ ॥

**स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः ।**
**षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ २६ ॥**

**स इति** ॥ गुप्तौ मूलं स्वनिवासस्थानं प्रत्यन्तः प्रान्तदुर्गं च येन स **गुप्तमूलप्रत्यन्तः** । **शुद्धपार्ष्णि**रुद्धृतपृष्ठशत्रुः सेनया रक्षितपृष्ठदेशो वा । **अयान्वितः** शुभदैवान्वितः । 'अयः शुभावहो विधिः' इत्यमरः । **स** रघुः **षड्विधं** मौलभृत्यादिरूपं **बलं** सैन्यम् । 'मौलं भृत्यः सुहृच्छ्रेणी द्विपदाटविकं बलम्' इति कोशः । **आदाय दिशां जिगीषया** जेतुमिच्छया **प्रतस्थे** चचाल ॥ २६ ॥

**अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः ।**
[illegible]

अव[illegible] लाजैः । **मन्दरोद्धूतैः पृषतैर्बिन्दुभिः क्षीरोर्मयः** क्षीरसमुद्रोर्मयोऽ**च्युतं** विष्णुमिव । **अवाकिरन्** पर्यक्षिपन् ॥ २७ ॥

**स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा ।**
**अहितानिलोद्धूतैस्तर्जयन्निव केतुभिः ॥ २८ ॥**

**स इति** ॥ प्राचीनबर्हिर्नाम कश्चिन्महाराज इति केचित् । **प्राचीनबर्हिरिन्द्रः** । 'पर्जन्यो मघवा वृषा हरिहयः प्राचीनबर्हिस्तथा' इतीन्द्रपर्यायेषु हलायुधाभिधानात् । तेन **तुल्यः स** रघुः । **अनिले**नानुकूलवातेनो**द्धूतैः केतुभि**र्ध्वजै**रहितान्** रिपून् । **तर्जयन्निव** भर्त्सयन्निव । तर्जिभर्त्सयोरनुदात्तत्वेऽपि चक्षिङो ङित्करणेनानुदात्तेत्वनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनात्परस्मैपदमिति वामनः । **प्रथमं प्राचीं** दिशं **ययौ** ॥ २८ ॥

**रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसंनिभैः ।**
**भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥ २९ ॥**

---

पाठा०—१ 'पर्यन्तः'. २ 'स्यन्दनोत्कीर्णैः'; 'तुरगोत्कीर्णैः'.

**रजोभिरिति** ॥ किं कुर्वन्? **स्यन्दनोद्धूतै रजोभिर्घनसंनिभैर्वर्णतः** क्रियातः परिमाणतश्च मेघतुल्यैर्गजैश्च यथाक्रमं **व्योमाकाशं भुवस्तलमिव भूतलं च व्योमेव कुर्वन्** । 'ययौ' इति पूर्वेण संबन्धः ॥ २९ ॥

**प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम् ।**
**ययौ पश्चाद्रथादीति चतुःस्कन्धेव सा चमूः ॥ ३० ॥**

**प्रताप इति** ॥ **अग्रे प्रतापस्तेजोविशेषः** । 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्' इत्यमरः । **ततः शब्दः** सेनाकलकलः । **तदनन्तरं परागो** धूलिः । 'परागः पुष्परजसि धूलिस्नानीययोरपि' इति विश्वः । **पश्चाद्रथादि** रथाश्वादिकं चतुरङ्गबलम् । **'रथानीकम्'** इति पाठे 'इति'शब्दाध्याहारेण योज्यम् । **इतीत्थं चतुःस्कन्धेव** चतुर्व्यूहेव । 'स्कन्धः प्रकाण्डे कायांशे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च' इति हैमः । **सा चमूर्ययौ** ॥ ३० ॥

**मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः ।**
**विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥ ३१ ॥**

**मर्विति** ॥ **स** रघुः **शक्तिमत्त्वात्**समर्थत्वा**न्मरुपृष्ठानि** निर्जलस्थानानि । 'समानौ मरुधन्वानौ' इत्यमरः । **उदम्भांस्युद्**भूतजलानि **चकार** । **नाव्या** नौभिस्तार्या **नदीः** । 'नाव्यं त्रिलिङ्गं नौतार्ये' इत्यमरः । 'नौवयोधर्मविषमूल–' (पा. ४।४।९१) इत्यादिना यत्प्रत्ययः । **सुप्रतराः** सुखेन तार्याश्च**कार** । **विपिनान्यरण्यानि** । 'अटव्यरण्यं विपिनम्' इत्यमरः । **प्रकाशानि** निर्वृक्षाणि **चकार** । शत्रुत्वपर्याप्तस्यागम्यं किमपि नासीदिति भावः ॥ ३१ ॥

**स सेनां महतीं कर्षन्पूर्वसागरगामिनीम् ।**
**बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥ ३२ ॥**

**स इति** ॥ **महतीं सेनां पूर्वसागरगामिनीं कर्षन् स** रघुः । **हरस्य**

---

पाठा०—१ 'पुरोगाः'. 'पुरोगैः कलुषास्तस्य सह प्रस्थायिभिः कृशाः । पश्चात्प्रयायिभिः पङ्काश्चक्रिरे मार्गनिम्नगाः ॥'

---

टिप्प०—1 शत्रूणां भयजननवार्ता प्रतापः—इति वल्लभः ।

2 सगरस्य पत्नी सुमतिः षष्टिसहस्रं पुत्राणां प्रासूत । यैश्चेन्द्रापहृतयज्ञाश्वशोधार्थं पृथिव्युत्खाता इति श्रूयते । गरेण विषेण सह जातः=सगरः, सगरेण निर्वृत्तः=सागरः, यच्चोक्तं पद्मपुराणे (स्वर्ग० )–'व्यजायत महाबाहुर्गरेणैव सह द्विज । सगरो नाम तेनाभूद्बालकोऽतिमनोहरः' इति । वायुपुराणेऽपि (२।२६।१२२) 'सगरस्तु सुतो बाहोर्जज्ञे सह गरेण वै । भृगोराश्रममासाद्य त्वौर्वेण परिरक्षितः' इत्युपक्रम्य 'पत्नी तु यादवी तस्य सगर्भं पृष्ठतोऽन्वगात् । सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया ॥' इति ।

जटाभ्यो भ्रष्टां गङ्गां कर्षन् । सापि पूर्वसागरगामिनी । भगीरथ इव । धर्मी । भगीरथो नाम कश्चित्कपिलदग्धानां सागराणां नप्ता तत्पावनाय हरकिरीटाद्गङ्गां प्रवर्तयिता राजा । यत्संबन्धाद्गङ्गा च भागीरथीति गीयते ॥ ३२ ॥

त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः ।
तस्यासीदुल्वणो मार्गः पादपैरिव दन्तिनः ॥ ३३ ॥

त्याजितैरिति ॥ 'फलं फले धने बीजे निष्पत्तौ भोगलाभयोः' इति केशवः । फलं लाभम् । वृक्षपक्षे,–प्रसवं च । त्याजितैः । त्यजेर्ण्यन्ताद्विकर्मकादप्रधाने कर्मणि क्तः । उत्खातैः स्वपदाच्च्यावितैः । अन्यत्र,–उत्पाटितैः । बहुधा भग्नैः रणे जितैः । अन्यत्र,–छिन्नैः । नृपैः । पादपैर्दन्तिनो गजस्येव तस्य रघोर्मार्ग उल्वणः प्रकाश आसीत् । 'प्रकाशं प्रकटं स्पष्टमुल्बणं विशदं स्फुटम्' इति यादवः ॥ ३३ ॥

पौरस्त्यानेवमाक्रामंस्तांस्ताञ्जनपदाञ्जयी ।
प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥ ३४ ॥

पौरस्त्यानिति ॥ जयी जयनशीलः । 'जिदृक्षिविश्री–' ( पा. ३।२।१५७ ) इत्यादिनेनिप्रत्ययः । स रघुरेवम् । पुरो भवान् पौरस्त्यान्प्राच्यान् । 'दक्षिणापश्चात्पुरसस्त्यक्' ( पा. ४।२।९८ ) इति त्यक्प्रत्ययः । तांस्तान्, सर्वानित्यर्थः । वीप्सायां द्विरुक्तिः । जनपदान्देशानाक्रामन् । तालीवनैः श्यामं महोदधेरुपकण्ठमन्तिकं प्राप ॥ ३४ ॥

अनम्राणां समुद्धर्तुस्तस्मात्सिन्धुरयादिव ।
आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम् ॥ ३५ ॥

अनम्राणामिति ॥ अनम्राणाम् । कर्मणि षष्ठी । समुद्धर्तुरुन्मूलयितुस्तस्मात्प्रघोः सकाशात् । 'भीत्रार्थानां भयहेतुः' ( पा. १।४।२५ ) इत्यपादानत्वात्पञ्चमी । सिन्धुरयान्नदीवेगादिव सुह्मैः सुह्मदेशीयैः । सुह्मादयः शब्दा जनपदवचनाः क्षत्रियमाचक्षते । वैतसीं वेतसः संबन्धिनीं वृत्तिम् । प्रणतिमित्यर्थः । आश्रित्य । आत्मा संरक्षितः । अत्र कौटिल्यः—'बलीयसाभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वैतसं धर्ममातिष्ठेत्' इति ॥ ३५ ॥

वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान्गङ्गास्रोतोन्तरेषु सः ॥ ३६ ॥

पाठा०—१ 'आस्थाय'. २ 'उद्धतान्'.

टिप्प०—1 सुह्मदेशीयैः राजभिः–इति वल्लभः ॥ सुह्मैः सुह्मदेशनृपैः–इति सुमति० ।

**वङ्गानिति** ॥ नेता नायकः स रघुर्नौभिः साधनैरुद्यतान्संनद्धान् **वङ्गान्** राज्ञ**स्तरसा** बलेन। 'तरसी बलरंहसी' इति यादवः। **उत्खाय** उन्मूल्य **गङ्गायाः स्रोतसां** प्रवाहाणाम् **अन्तरेषु** द्वीपेषु **जयस्तम्भान्निचखान।** स्थापितवानित्यर्थः ॥ ३६ ॥

**आपादपद्मप्रणताः कलमा इव ते रघुम् ।**
**फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः ॥ ३७ ॥**

**आपादेति** ॥ **आपादपद्मम्** अङ्घ्रिपद्मपर्यन्तं **प्रणताः** । अत एव, **उत्खाताः** पूर्वमुद्धृता अपि **प्रतिरोपिताः** पश्चात्स्थापितास्ते वङ्गाः । **कलमा इव** शालिविशेषा इव । 'शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी' इत्यमरः । तेऽप्यापादपद्मं पादपद्ममूलपर्यन्तं प्रणताः । 'पादो बुध्ने तुरीयांशशैलप्रत्यन्तपर्वताः' इति विश्वः । उत्खातप्रतिरोपिताश्च । **रघुं फलै**र्धनैः । अन्यत्र,—सस्यैः । **संवर्धयामासुः** । 'फलं फले धने बीजे निष्पत्तौ भोगलाभयोः । सस्ये' इति केशवः ॥ ३७ ॥

**स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः ।**
**उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ ॥ ३८ ॥**

**स इति** ॥ **स** रघुर्बद्धा द्विरदा एव **सेतवो** यैस्तैः **सैन्यैः कपिशां** नाम नदीं **तीर्त्वा** । '**करभाम्**' इति केचित्पठन्ति । **उत्कलै** राजभि**रादर्शितपथः** संदर्शितमार्गः सन् **कलिङ्गाभिमुखो ययौ** ॥ ३८ ॥

**स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत् ।**
**अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥ ३९ ॥**

**स इति** ॥ **स** रघु**र्महेन्द्रस्य** कुलपर्वतविशेषस्य । 'महेन्द्रो मलयः सह्यः शक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ।' इति विष्णुपुराणात् । **मूर्ध्नि तीक्ष्णं** दुःसहं **प्रतापम्** । **यन्ता** सारथि**र्गम्भीरवेदिनो द्विरदस्य** गजविशेषस्य **मूर्ध्नि तीक्ष्णं** निशितम**ङ्कुशमिव** । **न्यवेशयन्**निक्षिप्तवान् । 'त्वग्भेदाच्छोणितस्रावान्मांसस्य क्रथनादपि । आत्मानं यो न जानाति स स्याद्गम्भीरवेदिता ॥' इति राजपुत्रीये । 'चिरकालेन यो वेत्ति शिक्षां परिचितामपि । गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः ॥' इति मृगचर्मीये ॥ ३९ ॥

---

**पाठा०**—१ '°प्रवणाः'. २ 'उत्कलैर्देशित°'; 'उत्कलादेशित°'. ३ '°मुखम्'.

---

टिप्पा०—1 शाल्यादयरुत्खाय प्रतिरोपिताः सस्यसंवृद्धिमापद्यन्ते इति वृद्धचरम् ।
2 उत्कलाः संप्रति 'ओरिसा' इति यः परिचितः प्रदेशस्तदभिजनास्तैरिति भावः ।

प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥ ४० ॥

प्रतीति ॥ गजसाधनः सन् कालिङ्गः कलिङ्गानां राजा । 'द्व्यञ्मगधकलिङ्ग-' (पा. ४।१।१७०) इत्यादिनाण्प्रत्ययः । अस्त्रैरायुधैस्तं रघुम् । पक्षाणां छेदे उद्यतमुद्युक्तं शक्रं शिलावर्षी पर्वत इव । प्रतिजग्राह प्रत्यभियुक्तवान् ॥ ४० ॥

द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् ॥ ४१ ॥

द्विषामिति ॥ काकुत्स्थो रघुस्तत्र महेन्द्राद्रौ द्विषां नाराचदुर्दिनं नाराचानां बाणविशेषाणां दुर्दिनम् । लक्षणया वर्षमुच्यते । विषह्य सहित्वा सन्मङ्गलस्नात इव विजयमङ्गलार्थमभिषिक्त इव जयश्रियं प्रतिपेदे प्राप । 'यत्तु सर्वौषधिस्नानं तन्माङ्गल्यमुदीरितम्' इति यादवः ॥ ४१ ॥

ताम्बूलीनां दलैस्तत्र रचितापानभूमयः ।
नारिकेलासवं योधाः शात्रवं च पपुर्यशः ॥ ४२ ॥

ताम्बूलीनामिति ॥ तत्र महेन्द्राद्रौ । युध्यन्त इति योधाः । पचाद्यच् । रचिताः कल्पिता आपानभूमयः पानयोग्यप्रदेशा यैस्ते तथोक्ताः सन्तो नारिकेलासवं नारिकेलमद्यं ताम्बूलीनां नागवल्लीनां दलैः पपुः । तान्निज-हुरित्यर्थः । शात्रवं यशश्च पपुः, जहुरित्यर्थः ॥ ४२ ॥

गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः ।
श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥ ४३ ॥

गृहीतेति ॥ धर्मविजयी धर्मार्थविजयशीलः स नृपो रघुः । गृहीतश्चासौ प्रतिमुक्तश्च गृहीतप्रतिमुक्तः । तस्य महेन्द्रनाथस्य कालिङ्गस्य श्रियं जहार । धर्मार्थमिति भावः । मेदिनीं तु न जहार । शरणागतवात्सल्यादिति भावः ॥ ४३ ॥

ततो वेलातटेनैव फलवत्पूगमालिना ।
अगस्त्याचरितामाशामनाशास्यजयो ययौ ॥ ४४ ॥

---

पाठा०—१ 'चापन्यास्त्रविनिर्धूतारिपक्षविद्वान्महोदधेः । गजानीकस्य कालिङ्गं तार्क्ष्यः सर्पमिवाददे ॥'. २ 'नालिकेरासवम्'. ३ 'माहेन्द्रनाथस्य'. ४ 'अगस्त्य-चरिताम्'.

---

टिप्प०—१ विजिगीषूणां त्रैविध्यमाह [illegible]—धर्मविजयी, लोभविजयी, असुरविजयी चेति त्रिविधो राजा, 'यः शत्रुं निर्जित्य तदीयां नृपश्रियं नीत्वा तस्मिन्नेव स्थाने स्थापयति स 'धर्मविजयी' । यः शत्रुं निर्जित्य तदीयां श्रियं मेदिनीं च गृहीत्वा प्राणैर्न विकुरुते स 'लोभविजयी' । यः शत्रुं हत्वा तदीयां श्रियं मेदिनीं च गृह्णाति स 'असुरविजयी' इति ।

**तत इति** ॥ ततः प्राचीविजयानन्तरं **फलभरपूगमालिना** फलितक्रमुकश्रेणी-मता । व्रीह्यादित्वादिनिप्रत्ययः । **वेलायाः** समुद्रकूलस्य **तटेनो**पान्तेनै**वागस्त्येना-चरितामाशां** दक्षिणां दिश**मनाशास्यजयः** । अयत्नसिद्धत्वादप्रार्थनीयजयः सन् । **ययौ** । 'अगस्त्यो दक्षिणमाशामाश्रित्य नभसि स्थितः । वरुणस्यात्मजो योगी विन्ध्य-वातापिमर्दनः' इति ब्रह्मपुराणे ॥ ४४ ॥

**स सैन्यपरिभोगेण गजदानसुगन्धिना ।**
**कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥ ४५ ॥**

**स इति** ॥ **स** रघुः गजानां दानेन मदेन **सुगन्धिना** सुरभिगन्धिना । 'गन्धस्येदु–' (पा. ५।४।१३५) इत्यादिनेकारादेशः समासान्तः । यद्यपि गन्धस्येत्वे-तदेकान्तग्रहणं कर्तव्यमिति नैसर्गिकगन्धविवक्षायामेवेकारादेशः, तथापि 'निरङ्कुशाः कवयः' । तथा च माघकाव्ये ( ६।५० )—'बकुलपुष्पकच्छदगुच्छसुगन्धयः सततगास्तत-गानगिरोऽलिभिः', नैषधे च ( ३।९३ )—'अपां हि तृप्ताय न वारिधाराः स्वादु-सुगन्धिः स्वदते तुषारा' इति । 'न कर्मधारयान्मत्वर्थीय' इति निषेधादिनिप्रत्ययपक्षोऽपि जघन्य एव । सेनायां समवेताः **सैन्याः** । 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इत्यमरः । 'सेनाया वा' (पा. ४।४।४५) इति ण्यप्रत्ययः । तेषां **परिभोगेन** **कावेरीं** नाम सरितं **सरितां पत्युः** समुद्रस्य **शङ्कनीयां** न विश्वसनीया**मिवा-करोत्** । संभोगलिङ्गदर्शनाद्भर्तुरविश्वासो भवतीति भावः ॥ ४५ ॥

**बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः ।**
**मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः ॥ ४६ ॥**[1,2]

**बलैरिति** ॥ **विजिगीषो**र्विजेतुमिच्छो**र्गताध्वनस्तस्य** रघो**र्बलैः** सैन्यैः । 'बलं शक्तिर्बलं सैन्यम्' इति यादवः । **मारीचेषु** मरीचवनेषू**द्भ्रान्ताः** परिभ्रान्ता **हारीताः** पक्षिविशेषा यासु ताः । 'तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः' इत्यमरः । **मलयाद्रेरुपत्यका** आसन्नभूमयः । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । 'उपाधिभ्यां त्यकन्–' (पा. ५।४।३४) इत्यादिना त्यकन्प्रत्ययः । **अध्युषिताः** । उपत्यकास्वुषितमित्यर्थः । 'उपान्वध्याङ्वसः' (पा. १।४।४८) इति कर्मत्वम् ॥ ४६ ॥

**ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः ।**
**तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥ ४७ ॥**

---

पाठा०–१ 'मरीचोद्भ्रान्तहारीताः'; 'मरिचोद्भ्रान्तहरिता'. २ 'आजानेयखुर-क्षुण्णापक्कलाशेत्रसंभवम् । ययानशे सपदि व्योम कीटकाशाविलं रजः ॥'.

**ससञ्जुरिति** ॥ अश्वैः क्षुण्णानामेलानामेलालतानामुत्पतिष्णव उत्पतनशीलाः 'अलंकृञ्-' (पा. ३।२।१३६) इत्यादिनेष्णुच्प्रत्ययः । **फलरेणवः** फलरजांसि **तुल्यगन्धिषु** समानगन्धिषु । सर्वधनीतिवदिन्नन्ताद्बहुव्रीहिः । **मत्तेभानां कटेषु ससञ्जुः** सक्ताः । 'गजगण्डकटौ कटौ' इति कोषः ॥ ४७ ॥

**भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम् ।**
**नास्रसत्करिणां ग्रैवं त्रिपदीच्छेदिनामपि ॥ ४८ ॥**

**भोगीति** ॥ **चन्दनानां** चन्दनद्रुमाणां **भोगिवेष्टनमार्गेषु** सर्पवेष्टनाङ्कितेषु **समर्पितं** सञ्जितं **त्रिपदीच्छेदिनां** पादशृङ्खलच्छेदकानाम**पि** । 'त्रिपदी पादबन्धनम्' इति यादवः । **करिणाम्** । ग्रीवासु भवं **ग्रैवं** कण्ठबन्धनम् । 'ग्रीवाभ्योऽण्च' (पा. ४।३।५७) इत्यण्प्रत्ययः । **नास्रसन्न** स्रस्तमभूत् । 'द्युद्भ्यो लुङि' (पा. १।३।९१) इति परस्मैपदम् । पुषादित्वादङ् । 'अनिदिताम्-' (पा. ६।४।२४) इति नकारलोपः ॥ ४८ ॥

**दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।**
**तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥ ४९ ॥**

**दिशीति** ॥ **दक्षिणस्यां दिशि रवेरपि तेजो मन्दायते** मन्दं भवति । लोहितादित्वात्क्यष्प्रत्ययः । 'वा क्यषः' (पा. १।३।९०) इत्यात्मनेपदम् । दक्षिणायने तेजोमान्द्यादिति भावः । **तस्यामेव दिशि । पाण्ड्याः** पाण्डूना जनपदानां राजानः पाण्ड्याः । 'पाण्डोर्ड्यण्वक्तव्यः' (वा. २६७१) । **रघोः प्रतापं न विषेहिरे** न सोढवन्तः । सूर्यविजयिनोऽपि विजितवानिति नायकस्य महानुत्कर्षो गम्यते ॥ ४९ ॥

**ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः ।**
**ते निपत्य ददुस्तस्मै यशः स्वमिव संचितम् ॥ ५० ॥**

**ताम्रपर्णीति** ॥ **ते** पाण्ड्यास्ताम्रपर्ण्या नद्या **समेतस्य** सङ्गतस्य **महोदधेः** सम्बन्धि **संचितं मुक्तासारं** मौक्तिकश्रेष्ठम् । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः । **स्वं** स्वकीयं **संचितं यश इव तस्मै** रघवे **निपत्य** प्रणिपत्य **ददुः** । यशसः शुभ्रत्वादौपम्यम् । ताम्रपर्णीसङ्गमे मौक्तिकोत्पत्तिरिति प्रसिद्धम् ॥ ५० ॥

---

टिप्प०—1 त्रिपदीं छिन्दन्तीति त्रिपदीछेदिनः, तेषां सुदावस्थात्यागिनामपि । सुदावस्थितस्य गजस्य पदत्रयावस्था त्रिपदीत्युच्यते—इति वल्लभः ॥ चरणबन्धनमित्यन्ये ।
2 अर्वाचीनत्रावणकोरदेशान्तर्गता 'टिङ्गिल्-तिनेवेलि' इति ख्याता एते जनपदाः ।
3 ताम्रपर्णीयं पाल्मकोटातो मानारं प्रति वाहिनी 'ताम्बरवरी'त्यपरनामधेया नदीत्यवधेयं ।

इत्यमरः । 'क्षुद्राभ्रमरवटरपादपादञ्' ( पा. ४।३।११९) इति संज्ञायामञ्प्रत्ययः । तेषां **पटलैः** स्तबकैरिव । 'पटलं तिलके नेत्ररोगे छन्दसि संचये । पटिके परिवारे च' इति हैमः । **महीं वस्त्राराच्छादयामास** ॥ ६३ ॥

**अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।**
**प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ६४ ॥**

**अपनीतेति** ॥ **शेषा** हतावशिष्टा **अपनीतशिरस्त्राणा** अपसारितशीर्षण्याः सन्तः 'शीर्षकम् । शीर्षण्यं च शिरस्त्रे' इत्यमरः । शरणागतलक्षणमेतत् । **तं** रघुं **शरणं ययुः** । तथा हि–**महात्मनां संरम्भः** कोपः । 'संरम्भः संभ्रमे कोपे' इति विश्वः । **प्रणिपातः** प्रणतिरेव **प्रतीकारो** यस्य स **हि** । महतां परकीयमौद्धत्यमेवासह्यं, न तु जीवितमिति भावः ॥ ६४ ॥

**विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम् ।**
**आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ६५ ॥**

**विनयन्त इति** ॥ **तस्य** रघोर्योधा भटा **आस्तीर्णान्यजिनरत्नानि** चर्मश्रेष्ठानि यासु तासु **द्राक्षावलयानां भूमिषु** । 'मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च' इत्यमरः । **मधुभि**र्द्राक्षाफलप्रकृतिकैर्मद्यै**र्विजयश्रमं** युद्धखेदं **विनयन्ते स्मा**पनीतवन्तः । 'कर्तृस्थे चाशरीरे कर्मणि' (पा. १।३।३७) इत्यात्मनेपदम् । 'लट् स्मे' (पा. ३।२।११८) इति भूतार्थे लट् ॥ ६५ ॥

**ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम् ।**
**शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ॥ ६६ ॥**[2]

**तत इति** ॥ ततो रघु**र्भास्वान्** सूर्य **इव शरै**र्बाणै**रुस्रैः** किरणै**रिव** । 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः । **उदीच्या**नुदग्भवान्नृपान् **रसा**नुदकानी**वोद्धरिष्यन् कौबेरीं** कुबेरसंबन्धिनीं **दिश**मुदीचीं **प्रतस्थे** । अनेकेवशब्देनेयमुपमा । यथाह दण्डी—'एकानेकेवशब्दत्वात्सा वाक्यार्थोपमा द्विधा' इति ॥ ६६ ॥

पाठा०—१ 'औदीच्यान्'. २ 'जितालजय्यस्तानेव कृत्वा रथपुरःसरान् । महार्णवमिवौर्वाग्निः प्रविवेशोत्तरापथम् ॥'.

टिप्प०—1 मधुनः पिण्डैरिव महीं वस्त्राराच्छादयामास–इति दिनकर० ।
2 शेषा म्लेच्छभटा अपनीतानि त्यक्तानि शिरस्त्राणानि मुकुटा यैस्ते तथाभूता रघुं शरणं ययुः–इति सुमति० ।

**विनीताध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः[1] ।**
**दुधुवुर्वाजिनः स्कन्धाँल्लग्नकुङ्कुमकेसरान् ॥ ६७ ॥**

**विनीतेति** ॥ सिन्धुर्नाम काश्मीरदेशेषु कश्चिन्नदविशेषः । 'देशे नदविशेषेऽब्धेः सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । सिन्धोस्तीरे **विचेष्टनैः** अङ्गपरिवर्तनैर्**विनीताध्वश्रमास्तस्य** रघोर्**वाजिनो**ऽश्वा **लग्नाः कुङ्कुमकेसराः**[2] कुङ्कुमकुसुमकिञ्जल्का येषां तान् । यद्वा,–लग्नकुङ्कुमाः केसराः सटा येषां तान् । 'अथ कुङ्कुमम् । काश्मीरजन्म' इत्यमरः । 'केसरो नागकेसरे । तुरंगसिंहयोः स्कन्धकेशेषु बकुलद्रुमे । पुंनागवृक्षे किञ्जल्के स्यात्' इति हैमः । **स्कन्धान्** कायान् । 'स्कन्धः प्रकाण्डे कायेंऽसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च' इति हैमः । **दुधुवुः** कम्पयन्ति स्म ॥ ६७ ॥

**तत्र हूणावरोधानां[2] भर्तृषु व्यक्तविक्रमम् ।**
**कपोलपाटलादेशि बभूव रघुचेष्टितम् ॥ ६८ ॥**

**तत्रेति** ॥ **तत्रो**दीच्यां दिशि **भर्तृषु व्यक्तविक्रमम्** । भर्तृवधेन स्फुटपराक्रममित्यर्थः । **रघुचेष्टितं** रघुव्यापारः । **हूणा** जनपदाख्याः क्षत्रियाः । तेषाम**वरोधा**[3] अन्तःपुरस्त्रियस्तासां **कपोलेषु पाटलस्य** पाटलिम्नस्ताडनादिकृतारुण्यस्यादेष्टुपदेशकं **बभूव** । अथवा,–पाटल आदेश्यादेष्टा यस्य तद्बभूव । स्वयं लेख्यायत इत्यर्थः ॥ ६८ ॥

**काम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः ।**
**गजालानपरिक्लिष्टैरक्षोटैः[3] सार्धमानताः ॥ ६९ ॥**

**काम्बोजा इति** ॥ **काम्बोजा**[4] राजानः **समरे तस्य** रघोर्**वीर्यं** प्रभावम् । 'वीर्यं तेजःप्रभावयोः' इति हैमः । **सोढुमनीश्वरा** अशक्ताः सन्तः । **गजाना**-

पाठा०–१ 'वङ्क्षुतीर'; 'वङ्क्षुतीर'. २ 'हूना[=तुरुष्का]वरोधा'. ३ 'अङ्कोलैः'; 'अक्षोडैः'.

---

टिप्प०—1 वल्लभस्तु 'वङ्क्षुतीरविचेष्टनैः' इति पाठमादृत्य वङ्क्षुतीरनाम्नी नदी–इत्याह । वङ्क्षु नाम कश्मीरे ह्रदस्तत्तीरे यानि विचेष्टितानि तैर्लोठनादिभिः–इति शिशु० ।

2 कश्मीरदेशे कुङ्कुमक्षेत्रबाहुल्यात्तत्रालोठनेन लग्नकुंकुमकेशरत्व युक्तमिति दिनकर० ।

3 'अवरोध'शब्देन लक्षणया स्त्रिय उच्यन्ते–इति दिनकर० ।

4 कांबोजाः कंबोजदेशीया नृपाः–इति वल्लभः ।

**मालानं** बन्धनम्। भावे ल्युटि 'विभाषा लीयतेः' (पा. ६।१।५१) इत्यात्वम्। तेन **परिक्लिष्टैः** परिक्षतैरक्षोटैर्वृक्षविशेषैः **साधमानताः**॥ ६९॥

**तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः।**
**उपदा विविशुः शश्वन्नोत्सेकाः कोसलेश्वरम् ॥ ७० ॥**

**तेषामिति ॥ तेषां** काम्बोजानां **सद्भिरश्वैर्भूयिष्ठा** बहुलास्**तुङ्गा द्रविणानां** हिरण्यानाम्। 'हिरण्यं द्रविणं द्युम्नम्' इत्यमरः। **राशय** एवोप**दा** उपायनानि। 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः। **कोसलेश्वरं** कोसलदेशाधिपतिं तं रघुं **शश्वद**सकृद्**विविशुः**। 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यमरः। तथाप्युत्**सेका** गर्वास्तु **न विविशुः**। सत्यपि गर्वकारणे न जगर्वेत्यर्थः॥७०॥

**ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः।**
**वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥ ७१ ॥**

**तत इति ॥ ततो**ऽनन्तरम**श्वसाधनः** सन् **गौर्या गुरुं** पितरं **शैलं** हिमवन्तम्। **उद्धूतै**रश्वखुरोद्धूतैर्**धातू**नां गैरिकादीनां **रेणुभि**स्**तत्कूटां**स्तस्य शृङ्गाणि। 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः। **वर्धयन्निव**। **आरुरोह**। उत्पतद्धूलिदर्शनाद्गिरिशिखरवृद्धिभ्रमो जायत इति भावः ॥ ७१ ॥

**शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसंभ्रमम्।**
**गुहाशयानां सिंहानां परिवृत्यावलोकितम् ॥ ७२ ॥**

**शशंसेति ॥ तुल्यसत्त्वानां** सैन्यैः समानबलानाम्। गुहासु शेरत इति **गुहाशया**स्तेषाम्। 'अधिकरणे शेते' (पा. ३।२।१५) इत्यच्प्रत्ययः। 'दरी तु कन्दरो वा स्त्री देवखातबिले गुहा' इत्यमरः। **सिंहानां** हरीणाम्। 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः' इत्यमरः। संबन्धि **परिवृत्य** परावृत्या**वलोकितं** शयितैव ग्रीवाभङ्गेनावलोकनं कर्तृ **सैन्यघोषे** सेनाकलकले संभ्रमकारणे सत्य**प्यसंभ्रमम**न्तःक्षोभविरहितत्वम्। नञः प्रसज्यप्रतिषेधेऽपि समास इष्यते। **शशंस** कथयामास। 'सैन्येभ्यः' इत्यर्थालभ्यते। बाह्यचेष्टितमेव मनोवृत्तेरनुमापकमिति भावः। असंभ्रान्तत्वे हेतुः—तुल्यसत्त्वानामिति। न हि समबलः समबलाद्बिभेतीति भावः॥७२॥

पाठा०—१ 'तुङ्गद्रविणराशयः'. २ 'विविशुस्तं कोसलेशमुदन्वन्तमिवापगाः'; 'विविशुस्तं विशांनाथमुदन्वन्तमिवापगाः'. ३ 'उद्धृतैः'. ४ 'सैन्यघोषेऽथ संभ्रमम्'. ५ 'गुहागतानाम्'. ६ 'सत्त्वानाम्'.

भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः ।
गङ्गाशीकरिणो मार्गे मरुतस्तं सिषेविरे ॥ ७३ ॥

**भूर्जेष्विति** ॥ **भूर्जेषु** भूर्जपत्रेषु । 'भूर्जपत्रो भुजो भूर्जो मृदुत्वक्चर्मिका मता' इति यादवः । मर्मरः शुष्कपर्णध्वनिः । 'मर्मरः शुष्कपर्णानाम्' इति यादवः । अयं च शुक्लादिशब्दवद्गुणिन्यपि वर्तते । प्रयोज्यते च—'मर्मरैरगुरुधूपगन्धिभिः' इति । अतो **मर्मरीभूताः**[1] । 'मर्मर'शब्दवन्तो भूता इत्यर्थः । **कीचकानां**[2] वेणुविशेषाणां **ध्वनिहेतवः** । श्रोत्रसुखाश्चेति भावः । **गङ्गाशीकरिणः**[3] शीतला इत्यर्थः । **मरुतो** वाता **मार्गे तं सिषेविरे** ॥ ७३ ॥

विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः ।
दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः ॥ ७४ ॥

**विशश्रमुरिति** ॥ **सैनिकाः** सेनायां समवेताः । प्राग्वहतीयष्ठक्प्रत्ययः । **नमेरूणां** सुरपुंनागानां **छायासु निषण्णानां** दृषदुपविष्टानां **मृगाणां** कस्तूरीमृगाणां **नाभिभिर्वासितोत्सङ्गाः** सुरभिततला **दृषदः** शिला **अध्यास्या**धिष्ठाय । 'अधिशीङ्स्थासां कर्म' (पा. १।४।४६) इति कर्म । दृषत्स्वधिरुह्येत्यर्थः । **विशश्रमुः** विश्रान्ताः ॥ ७४ ॥

सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ।
आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः ॥ ७५ ॥

**सरलेति** ॥ **सरलेषु** देवदारुविशेषेष्वासक्तानि यानि **मातङ्गानां** गजानाम् । ग्रीवासु भवानि **ग्रैवेयाणि** कण्ठशृङ्खलानि । 'ग्रीवाभ्योऽण्च' (पा. ४।३।५७) इति चकाराड्ढञ्प्रत्ययः । तेषु **स्फुरितत्विषः** प्रतिफलितभास **ओषधयो** ज्वलन्तो ज्योतिर्लताविशेषा **नक्तं** रात्रौ **नेतुर्**नायकस्य रघोर**स्नेहदीपिका**स्तैलनिरपेक्षाः प्रदीपा **आसन्** ॥ ७५ ॥

तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः ।
गजवर्ष्म किरातेभ्यः शशंसुर्देवदारवः ॥ ७६ ॥

पाठा०—१ 'गजवर्म'.

टिप्प०—1 मर्मरीभूताः पत्रान्दोलनपराः-इति वल्लभः ।
2 कीचको विद्धो वेणुः, 'सच्छिद्रः कीचको वेणुः' इति त्रिविक्रमः ।
3 जाह्नवीजलकणयुक्ता इति वंशत्वम्-इति वल्लभः ।

**तस्येति** ॥ तस्य रघोरुत्सृष्टेषूज्झितेषु **निवासेषु** सेनानिवेशेषु **कण्ठरज्जु**भिर्गजग्रैवैः **क्षता** निघृष्टास्**त्वचो** येषां ते **देवदारवः किरातेभ्यो**[1] वनचरेभ्यो **गजानां वर्ष्म** प्रमाणम्। 'वर्ष्म देहप्रमाणयोः' इत्यमरः। **शशंसुः** कथितवन्तः, देवदारुस्कन्धत्वक्क्षतैर्गजानामौन्नत्यमनुमीयत इत्यर्थः ॥ ७६ ॥

**तत्र जन्यं[1] रघोर्घोरं पर्वतीयैर्[2]गणैरभूत् ।**
**[3]नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥ ७७ ॥**

**तत्रेति** ॥ **तत्र** हिमाद्रौ **रघोः** पर्वते भवैः **पर्वतीयैः**। 'पर्वताच्च' (पा. ४।२।१४३) इति छप्रत्ययः। **गणै**रुत्सवसंकेताख्यैः सप्तभिः सह। 'गणानुत्सवसंकेतानजयत्सप्त पाण्डवः' इति महाभारते। **नाराचा**नां बाणविशेषाणां **क्षेपणीया**नां भिन्दिपालानामश्मनां च **निष्पेषे**ण संघर्षेणोत्पतिता **अनला** यस्मिंस्तत्तथोक्तम्। 'क्षेपणीयो भिन्दिपालः खड्गो दीर्घो महाफलः' इति यादवः। **घोरं** भीमं **जन्यं** युद्धम**भूत्**। 'युद्धमायोधनं जन्यम्' इत्यमरः ॥ ७७ ॥

**शरै[4]रुत्सवसंकेतान्स कृत्वा विरतोत्सवान् ।**
**जयोदाहरणं बाह्वोर्गापयामास किंनरान् ॥ ७८ ॥**

**शरैरिति** ॥ **स** रघुः **शरै**र्बाणै**रुत्सवसंकेता**[2]न्नाम गणान्**विरतोत्सवान्कृत्वा**। जित्वेत्यर्थः। **किंनरान्बाह्वोः** स्वभुजयो**र्जयोदाहरणं**[3] जयख्यापकं प्रबन्धविशेषं **गापयामास**। 'गतिबुद्धि—'(पा. १।४।५२) इत्यादिना किंनराणां कर्मत्वम् ॥ ७८ ॥

**[5]परस्परेण विज्ञातस्तेषूपायनपाणिषु ।**
**राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा ॥ ७९ ॥**

---

पाठा०—१ 'युद्धम्'. २ 'पार्वतीयैः'. ३ 'विमर्दः सह तैस्तत्र निष्पेषोत्पतितानलः'. ४ 'उच्छिन्न'; 'उत्सन्न'. ५ 'परस्परस्य'.

---

टिप्प०—1 किरं पर्यन्तमन्तीति किराताः फलमूलाद्यशना हिंस्रवृत्तयश्चेति श्रूयते। तथा च पंचतन्त्रे तेषां वर्णनं–'पूर्णापूर्णे माने परिचितजनवञ्चनं तथा नित्यं। मिथ्याक्रयस्य कथनं प्रकृतिरियं स्यात् किरातानाम्' इति। 'पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं' (रत्ना. २।२९) इति।

2 उत्सवसंकेतनाम्नः क्षत्रियान्–इति वल्लभः।

3 जयोदाहरणगीतलक्षणं तु प्रतापरुद्रीये–'येन केनापि तालेन गद्यपद्यसमन्वितम्। जयत्युपक्रमं मालिन्यादिप्रासविचित्रितम्॥ तदुदाहरणं नाम विभक्त्यष्टाङ्गसंयुतम्' इति दिनकर०।

परस्परेति ॥ तेषु गणेषूपायनयुक्ताः पाणयो येषां तेषु सत्सु परस्परेणान्योन्यं राज्ञा हिमवतः सारो धनरूपो विज्ञातः । हिमाद्रिणाऽपि राज्ञः सारो बलरूपो विज्ञातः । एतेन तत्रत्यवस्तूनामनर्घ्यत्वं गणानामभूतपूर्वश्च पराजय इति ध्वन्यते ॥ ७९ ॥

तत्राक्षोभ्यं यशोराशिं निवेश्यावरुरोह सः ।
पौलस्त्यतुलितस्याद्रेरादधान इव ह्रियम् ॥ ८० ॥

तत्रेति ॥ स रघुस्तत्र हिमाद्रावक्षोभ्यमधृष्यं यशोराशिं निवेश्य निधाय पौलस्त्येन रावणेन तुलितस्य चालितस्याद्रेः कैलासस्य ह्रियमादधानो जनयन्निव । अवरुरोहावततार । कैलासमगत्वैव प्रतिनिवृत्त इत्यर्थः । न हि शूराः परेण पराजितमभियुञ्जन्त इति भावः ॥ ८० ॥

चकम्पे तीर्णलौहित्ये[1] तस्मिन्प्राग्ज्योतिषेश्वरः ।
तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः ॥ ८१ ॥

चकम्प इति ॥ तस्मिन्रघौ । तीर्णा लौहित्या नाम नदी येन तस्मिंस्तीर्णलौहित्ये सति । प्राग्ज्योतिषाणां जनपदानामीश्वरस्तस्य रघोर्गजानामालानतां प्राप्तैः कालागुरुद्रुमैः कृष्णागुरुवृक्षैः सह चकम्पे कम्पितवान् ॥ ८१ ॥

न प्रसेहे स रुद्धार्कमधारावर्षदुर्दिनम्[2] ।
रथवर्त्मरजोऽप्यस्य कुत एव पताकिनीम् ॥ ८२ ॥

नेति ॥ स प्राग्ज्योतिषेश्वरो रुद्धार्कमावृतसूर्यम् । अधारावर्षं च तद्दुर्दिनं च धारावृष्टिं विना दुर्दिनीभूतम् । अस्य रघो रथवर्त्मरजोऽपि न प्रसेहे । पताकिनीं सेनां तु कुत एव प्रसेहे ? न कुतोऽपीत्यर्थः ॥ ८२ ॥

तमीशः कामरूपाणामत्याखण्डलविक्रमम् ।
भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥ ८३ ॥

तमिति ॥ कामरूपाणां नाम देशानामीशोऽत्याखण्डलविक्रममतीन्द्रपराक्रमं तं रघुम् । भिन्नाः स्रवन्मदाः कटा गण्डा येषां तैर्नागैर्गजैः साधनैः ।

पाठा०—१ 'लौहित्ये'. २ 'अधारावर्षं दुर्दिनम्'.

टिप्प०—1 प्राग्ज्योतिषाख्योऽयं जनपदः शाकलदेशस्योदीचीं दिशमाश्रितः । महाभारतयुद्धसमये भगदत्ताख्यो नृपस्तत्र चासीत्, 'अत्रैव हि स्थितो ब्रह्मा प्राङ्नक्षत्र ससर्ज ह । ततः प्राग्ज्योतिषाख्येयं पुरी शक्रपुरीसमा' इति च महाभारते (सभा. अ. २६) वर्णनम् । स च प्रदेशोऽर्वाचीन-भोतान-आसाममध्यबिन्दुगत इत्यर्वाञ्चः

## पञ्चमः सर्गः

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥

**तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोशजातम् ।**
**उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ १ ॥**

**तमिति ॥ विश्वजिति** विश्वजिन्नाम्यध्वरे यज्ञे । 'यज्ञः सवोऽध्वरो यागः' इत्यमरः । **निःशेषं विश्राणितं** दत्तम् । 'श्रण दाने' चुरादिः । **कोशानाम**र्थराशीनां **जातं** समूहो येन तं तथोक्तम् । 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः । 'जातं जनिसमूहयोः' इति शाश्वतः । एतेन कौत्सस्यानवसरप्राप्तिं सूचयति । **तं क्षितीशं** रघु**मुपात्तविद्यो** लब्धविद्यो **वरतन्तोः शिष्यः कौत्सः** । 'ऋष्यन्धक-' (पा.४।१।११४) इत्यण् । इञोऽपवादः । **गुरुदक्षिणार्थी** । 'पुष्करादिभ्यो देशे' (पा.५।२।१३५) इत्यत्रार्थाच्चासंनिहिते तदन्ताच्चेतीनिः । अप्रस्ताव्येय इति भावः । **प्रपेदे** प्राप । अस्मिन्सर्गे वृत्तमुपजातिः । तल्लक्षणं तु—'स्यादिन्द्रवज्रा यदि तौ जगौ गः । उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति ॥ १ ॥

**स मृण्मये वीतहिरण्मयत्वात्पात्रे निधायार्घ्यमनर्घशीलः ।**
**श्रुतप्रकाशं यशसा प्रकाशः प्रत्युज्जगामातिथिमातिथेयः ॥ २ ॥**

**स इति । अनर्घशीलो**ऽमूल्यस्वभावः । असाधारणस्वभाव इत्यर्थः । 'मूल्ये पूजाविधावर्घः' इति । 'शीलं स्वभावे सद्वृत्ते' इति चामरशाश्वतौ । **यशसा** कीर्त्या । प्रकाशत इति प्रकाशः । पचाद्यच् । अतिथिषु साधु**रातिथेयः** । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' (पा.४।४।१०४) इति ढञ् । **स** रघुः । हिरण्यस्य विकारो हिरण्मयम् । 'दाण्डिनायन-' (पा.६।४।१७४) आदिसूत्रेण निपातः । **वीतहिरण्मयत्वा**दपगतसुवर्णपात्रत्वात् । यज्ञस्य सर्वस्वदक्षिणात्वादिति भावः । **मृण्मये** मृद्विकारे **पात्रे** । अर्घार्थमिदम**र्घ्यम्** । 'पादार्घाभ्यां च' (पा. ५।४।२५) इति यत् । पूजार्थं

टिप्प०—1 वरतन्तुनाम्नो गुरोर्वरतन्तोर्वंशिष्यस्य शिष्यो वा इति धर्ममेरुः । शिशुहितैषिणीटीका(B.O.R.I. संग्रहालयस्थ)मूलादर्शस्यात्र ५४-५५ तमं पत्रद्वयं नष्टमिति भाति, तत्स्थले च केनापि महानुभावेन धर्ममेरुटीकायाः पत्रद्वययोजनेन ग्रन्थपूर्तिः कृतेति प्रतीयते ।

द्रव्यं **निधाय** **श्रुतेन** शास्त्रेण **प्रकाशं** प्रसिद्धम् । श्रूयत इति श्रुतं वेदशास्त्रम् । 'श्रुतं शास्त्रावधृतयोः' इत्यमरः । **अतिथिमभ्यागतं** कौत्सम् । 'अतिथिर्ना गृहागते' इत्यमरः । **प्रत्युज्जगाम** ॥ २ ॥

**तमर्चयित्वा विधिवद्विधिज्ञस्तपोधनं मानधनाग्रयायी ।**
**विशांपतिर्विष्टरभाजमारात्कृताञ्जलिः कृत्यविदित्युवाच ॥ ३ ॥**

**तमिति** ॥ **विधिज्ञः** शास्त्रज्ञः । अकरणे प्रत्यवायभीरुरित्यर्थः । **मानधनानामग्रयायी**ऽग्रेसरः । अपयशोभीरुरित्यर्थः । **कृत्यवित्** कार्यज्ञः । आगमनप्रयोजनमवश्यं प्रष्टव्यमिति कृत्यवित् । **विशांपतिर्**मनुजेश्वरः । 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः । **विष्टरभाजमासनगतम्** । उपविष्टमित्यर्थः । 'विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्' । इत्यमरः । 'वृक्षासनयोर्विष्टरः' ( पा. ८।३।९३ ) इति निपातः । **तं तपोधनं** विधिवद्विध्यर्हम् । यथाशास्त्रमित्यर्थः । 'तदर्हम्' ( पा.५।१।११७ ) इति वतिप्रत्ययः । **अर्चयित्वा** । **आरात्** समीपे । 'आराद्दूरसमीपयोः' इत्यमरः । **कृताञ्जलिः** सन् । **इति** वक्ष्यमाणप्रकारेणो**वाच** ॥ ३ ॥

**अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे ! कुशली गुरुस्ते ।**
**यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥ ४ ॥**

**अप्यग्रणीरिति** ॥ **हे कुशाग्रबुद्धे** सूक्ष्मबुद्धे ! 'कुशाग्रीयमतिः प्रोक्तः सूक्ष्मदर्शी च यः पुमान्' इति हलायुधः । **मन्त्रकृतां** मन्त्रस्रष्टृणाम् । 'सुकर्मपापमन्त्र–' ( पा. ३।२।८९ ) इत्यादिना क्विप् । **ऋषीणामग्रणीः** श्रेष्ठस्ते तव **गुरुः** कुशल्यपि क्षेमवान्किम् ? 'अपि' प्रश्ने । 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यमरः । **यतो** यस्माद्गुरोः सकाशात् **त्वयाऽशेषं ज्ञानम्** । **लोकेनोष्णरश्मेः** सूर्याच्चैतन्यं प्रबोध **इव** । **आप्तं** स्वीकृतम् ॥ ४ ॥

**कायेन वाचा मनसापि शश्वद्यत्संभृतं वासवधैर्यलोपि ।**
**आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत् ॥ ५ ॥**

पाठा०–१ 'अयि'. २ 'चैतन्यमुष्णादिव दीधितेन'. ३ 'च'. ४ 'वज्रिणो धैर्यविलोपि तप्तम्'.

1 'अयाः' इति पाठमादृत्य यतस्तु गुरोस्त्व ज्ञानमया अधिगतवानसि, यथा जीवलोकोऽर्काद् सूर्यादालोकं प्राप्नोति । अयाः इति 'या प्रापणे' इत्यस्मात् । यतस्त्वया ज्ञानमशेषमाप्तमिति व्याख्यायां 'जीवलोक' इति प्रथमा । तेन वैषम्यं, 'अपि' इत्यपि पाठे तु 'अपि'शब्दः सानुनयप्रश्ने–इत्याह शिशु० ।

**कायेनेति** ॥ कायेनोपवासादिकृच्छ्रचान्द्रायणादिना **वाचा** वेदपाठेन **मनसा** गायत्रीजपादिना कायेन वाचा मनसापि करणेन वासवस्येन्द्रस्य धैर्यं लुम्पतीति **वासवधैर्यलोपि**। स्वपदापहारशङ्काजनकमित्यर्थः। **यत्तपः शश्वदसकृत्**। 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यमरः। **संभृतं** संचितं **महर्षिभिस्तत्**त्रिविधं वाङ्मनःकायजं **तत्तपोऽन्तरायैर्विघ्नैरिन्द्रप्रेरिताप्सरःशापेर्व्यय्यं** नाशं **नापाद्यते कच्चित्** न नीयते किम् ? 'कच्चित् कामप्रवेदने' इत्यमरः ॥ ५ ॥

> आधारबन्धप्रमुखैः प्रयत्नैः संवर्धितानां सुतनिर्विशेषम् ।
> कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥ ६ ॥

**आधारेति** ॥ **आधारबन्धप्रमुखै**रालवालनिर्माणादिभिः **प्रयत्नै**रुपायैः। 'आधार आलवालेऽम्बुबन्धेऽधिकरणेऽपि च' इति विश्वः। **सुते**भ्यो **निर्**गतो **विशेषो**ऽतिशयो यस्मिन्कर्मणि तत्तथा **संवर्धितानां श्रमच्छिदां** च **आश्रमपादपानां वाय्वादिः**। 'आदि'शब्दाद्दावानलादिः। **उपप्लवो** बाधको **न कच्चि**दस्ति किम् ? ॥ ६ ॥

> क्रियानिमित्तेष्वपि वत्सलत्वादभग्नकामा मुनिभिः कुशेषु ।
> तदङ्कशय्याच्युतनाभिनाला कच्चिन्मृगीणामनघा प्रसूतिः ॥ ७ ॥

**क्रियेति** ॥ **क्रियानिमित्ते**ष्वप्यनुष्ठानसाधनेष्वपि **कुशेषु मुनिभिर्वत्सलत्वा**न्मृगस्नेहा**दभग्नकामा**ऽप्रतिहतेच्छा। तेषां मुनीनामङ्का एव शय्यास्तासु **च्युतानि नाभिनालानि** यस्याः सा तथोक्ता **मृगीणां प्रसूतिः** संततिर**नघा**ऽव्यसना **कच्चित्?** अनपायिनी किमित्यर्थः। 'दुःखैनोव्यसनेष्वघम्' इति यादवः। ते हि व्यालभयाद्दशरात्रमङ्क एव धारयन्ति ॥ ७ ॥

> निर्वर्त्यते यैर्नियमाभिषेको येभ्यो निवापाञ्जलयः पितॄणाम् ।
> तान्युञ्छषष्ठाङ्कितसैकतानि शिवानि वस्तीर्थजलानि कच्चित् ॥ ८ ॥

**निर्वर्त्यत इति** ॥ **यै**स्तीर्थजलै**र्नियमाभिषेको** नित्यस्नानादि**र्निर्वर्त्यते** निष्पाद्यते। **येभ्यो** जलेभ्यः। उद्धृत्येति शेषः। **पितॄणा**मग्निष्वात्तादीनां **निवापाञ्जलय**स्तर्पणाञ्जलयः। 'पितृदानं निवापः स्यात्' इत्यमरः। निर्वर्त्यन्ते। **उञ्छा**नां प्रकीर्णोद्धृतधान्यानां षष्ठैः **षष्ठभागैः** पालकत्वाद्राजग्राह्यै**रङ्कितानि सैकतानि** पुलिनानि

टिप्प०—1 यद्यपि 'निवाप'शब्देन 'पितॄणा'मित्यपि लब्धम्, तथाप्यत्राचक्रादिशब्दवदुक्तिपोषकत्वान्न दोषः—इति दिनकर० ।

येषां तानि तथोक्तानि वो युष्माकं तानि तीर्थजलानि शिवानि भद्राणि कच्चित्? अनुपप्लवानि किमित्यर्थः। 'उञ्छो धान्यांशकादानं कणिशाद्यर्जनं शिलम्' इति यादवः। 'षष्ठाष्टमाभ्यां ञ च' (पा. ५।३।५०) इति षष्ठशब्दाद्भागार्थेऽन्प्रत्ययः। अत एवापूरणार्थत्वात् 'पूरणगुण-' (पा. २।२।११) इत्यादिना न षष्ठीसमासप्रतिषेधः। सिकता येषु सन्ति **सैकतानि**। 'सिकताशर्कराभ्यां च' (पा. ५।२।१०४) इत्यण्प्रत्ययः ॥ ८ ॥

नीवारपाकादि कडंगरीयैरामृश्यते जानपदैर्न कच्चित्।
कालोपपन्नातिथिकल्प्यभागं वन्यं शरीरस्थितिसाधनं वः ॥ ९ ॥

**नीवारेति** ॥ **काले**षु योग्यकालेषूपपन्नानामागतानामतिथीनां **कल्प्या** भागा यस्य तत्तथोक्तम्। वने भवं **वन्यम्**। **शरीरस्थिते**र्जीवनस्य **साधनं** **वो** युष्माकम्। पच्यत इति पाकः फलम्। धान्यमिति यावत्। **नीवारपाकादि**। 'आदि'शब्दाच्छयामाकादिधान्यसंग्रहः। जनपदेभ्य आगतै**र्जानपदैः**। 'तत आगतः' (पा. ४।३।७४) इत्यण्। **कडंगरीयैः**। कडंगरं बुसमर्हन्तीति कडंगरीयाः। 'कडंगरो बुसं क्लीबे धान्यत्वचि तुषः पुमान्' इत्यमरः। 'कडंगरदक्षिणाच्छ च' (पा. ५।१।६९) इति छप्रत्ययः। तैर्गोमहिषादिभि**र्नामृश्यते कच्चित्**? न भक्ष्यते किमित्यर्थः ॥ ९ ॥

अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीयानुमतो गृहाय।
कालो ह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते ॥ १० ॥

**अपीति** ॥ किंच, **त्वं प्रसन्नेन** सता **महर्षिणा सम्यग्विनीय** शिक्षयित्वा। विद्यामुपदिश्येत्यर्थः। **गृहाय** गृहस्थाश्रमं प्रवेष्टुम्। 'क्रियार्थोपपद-' (पा. २।३।१४) इत्यादिना चतुर्थी। **अनुमतो**ऽप्यनुज्ञातः किम्? **हि**[1] यस्मात्ते तव **सर्वे**षामाश्रमाणां ब्रह्मचर्य-वानप्रस्थ यतीनामुप**कारे क्षमं** शक्तम्। 'क्षमं शक्ते हिते त्रिषु' इत्यमरः। **द्वितीयमाश्रमं** गार्हस्थ्यं **संक्रमितुं** प्राप्तु**मयं कालः**। विद्याग्रहणानन्तर्यात्तस्येति भावः। 'कालसमयवेलासु तुमुन्' (पा. ३।३।१६४) इति तुमुन्। सर्वोपकारक्षममित्यत्र मनुः (३।७७)—'यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः। वर्तन्ते गृहिणस्तद्वदाश्रित्येतर आश्रमाः ॥' इति ॥ १० ॥

पाठा०—१ 'कडंकरीयैः'. २ 'अपि'.

टिप्प०—1 इतराश्रमाणामुपकारसमर्थमिति स्वीकारहेतुः—इति शिशु०। हि यस्मात् सर्वेषां ब्रह्मचारि-वानप्रस्थ-यतीनामुपकारसमर्थं द्वितीयमाश्रमं गृहाश्रमं प्रवेष्टुं तवायं काल'—इति दिनकर०।

कुशलप्रश्नं विधायागमनप्रयोजनप्रश्नं चिकीर्षुराह—

**तवार्हतो नाभिगमेन तृप्तं मनो नियोगक्रिययोत्सुकं मे ।**
**अप्याज्ञया शासितुरात्मना वा प्राप्तोऽसि संभावयितुं वनान्माम् ॥११॥**

**तवेति** ॥ अर्हतः पूज्यस्य प्रशंसस्य । 'अर्हः प्रशंसायाम्' (पा. ३।२।११३) इति शतृप्रत्ययः । **तवाभिगमेन**ागमनमात्रेण **मे मनो न तृप्तं** न तुष्टम् । किंतु **नियोगक्रियया**ऽऽज्ञाकरणेनो**त्सुकं** सोत्कण्ठम् । 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः । 'प्रसितोत्सुकाभ्यां तृतीया च' (पा.२।३।४४) इति सप्तम्यर्थे तृतीया । **शासितुर्**गुरो**राज्ञयाप्यात्मना** स्वतो **वा** । 'प्रकृत्यादिभ्य उपसंख्यानम्' ( वा. १४६६ ) इति तृतीया । **मां संभावयितुं वनात्प्राप्तोऽसि ?** गुर्वर्थं स्वार्थं वाऽऽगमनमित्यर्थः ॥ ॥ ११ ॥

**इत्यर्घ्यपात्रानुमितव्ययस्य रघोरुदारामपि गां निशम्य ।**
**स्वार्थोपपत्तिं प्रति दुर्बलाशस्तमित्यवोचद्वरतन्तुशिष्यः ॥ १२ ॥**

**इतीति** ॥ **अर्घ्यपात्रेण** मृण्मयेना**नुमितो व्ययः** सर्वस्वत्यागो यस्य तस्य **रघो**रित्युक्तप्रकारा**मुदारा**मौदार्ययुक्ता**मपि गां** वाचम् । 'मनो नियोगक्रिययोत्सुकं मे' ( ५।११ ) इत्येवंरूपाम् । 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्यमरः । **निशम्य** श्रुत्वा **वरतन्तुशिष्यः** कौत्सः **स्वार्थोपपत्तिं** स्वकार्यसिद्धिं **प्रति दुर्बलाशः** सन् मृण्मयपात्रदर्शनाच्छिथिलमनोरथः सन् । **तं** रघु**मिति** वक्ष्यमाणप्रकारेणा**वोचत्** ॥ १२ ॥

**सर्वत्र नो वार्तमवेहि राजन्नाथे कुतस्त्वय्यशुभं प्रजानाम् ।**
**सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा ॥ १३ ॥**

**सर्वत्रेति** ॥ हे **राजन्** ! त्वं **सर्वत्र नो**ऽस्माकं **वार्तं** स्वास्थ्य**मवेहि** जानीहि । 'वार्तं वल्गुन्यरोगे च' इत्यमरः । 'वार्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम्' इति यादवः । न चैतदाश्चर्यमित्याह—**नाथ** इति । **त्वयि नाथ** ईश्वरे सति **प्रजाना**म**शुभं** दुःखं **कुतः** ? तथा हि—अर्थान्तरं न्यस्यति **सूर्ये** इत्यादिना । **सूर्ये तपति** प्रकाशमाने सति **तमिस्रा** तमस्ततिः । 'तमिस्रं तिमिरं रोगे तमिस्रा तु तमस्ततौ ।

पाठा०—१ 'अनुग्रहेणाभिगमस्थितेन तवार्हतस्तृप्यति मे न चेतः', २ 'अयि', ३ 'तं प्रत्यवोचद्वरतन्तुशिष्यः'; 'प्रत्याह कौत्सस्तमपेतकुत्सम्'.

टिप्प०—1 सर्वत्र गुर्वाश्रमद्रुमप्रभृतिषु नोऽस्माकं वार्तं स्वास्थ्यमवेहि जानीहि—इति शिशु० ।

कृष्णपक्षे निशायां च' इति विश्वः । '**तमिस्रम्**' इति पाठे तमिस्रं तिमिरम् । 'तमिस्रं तिमिरं तमः' इत्यमरः । **लोकस्य** जनस्य । 'लोकस्तु भुवने जने' इत्यमरः । **दृष्टेरावरणाय कथं कल्पेत ?** दृष्टिमावरितुं नालमित्यर्थः । क्लृपेरलमर्थत्वात्तद्योगे 'नमःस्वस्ति—' (पा. २।३।१६) इत्यादिना चतुर्थी । 'अलमिति पर्याप्त्यर्थग्रहणम्' इति भगवान्भाष्यकारः । कल्पेत । संपद्येत । न कल्पत इत्यर्थः । 'क्लृपि संपद्यमाने चतुर्थी' (वा.१४५९) इति वक्तव्यात् ॥ १३ ॥

'तवार्हत—' ( ५।११ ) इत्यादिनोक्तं यत्तत्र चित्रमित्याह—

**भक्तिः प्रतीक्ष्येषु कुलोचिता ते पूर्वान्महाभाग ! तयातिशेषे ।**
**व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः ॥ १४॥**

**भक्तिरिति ॥** प्रतीक्ष्येषु पूज्येषु । 'पूज्यः प्रतीक्ष्यः' इत्यमरः । भक्तिरनुरागविशेषस्ते तव कुलोचिता कुलाभ्यस्ता । 'अभ्यस्तेऽप्युचितं न्याय्यम्' इति यादवः । **हे महाभाग** सार्वभौम ! **तया** भक्त्या **पूर्वानतिशेषे**ऽतिवर्तसे । किंतु सर्वत्र वार्तं चेत्तर्हि कथं खेदखिन्न इव दृश्यसेऽत आह—**व्यतीतेति** । **अहं व्यतीतकालो**ऽतिक्रान्तकालः सन्नर्थिभावात्त्वामभ्युपेत **इति मे** मम **विषादः** ॥१४॥

**शरीरमात्रेण नरेन्द्र ! तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः ।**
**आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः ॥ १५॥**

**शरीरेति ॥** हे **नरेन्द्र ! तीर्थे** सत्पात्रे **प्रतिपादिता** दत्ता **ऋद्धिर्येन** स तथोक्तः । 'योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि ॥' इति हलायुधः । **शरीरमात्रेण तिष्ठन्** । **आरण्यका** अरण्ये भवा मनुष्या मुनिप्रमुखाः । 'अरण्यान्मनुष्ये' ( पा. ४।२।१२९ ) इति वुञ्प्रत्ययः । तै**रुपात्ता फलमेव प्रसूतिर्यस्य स स्तम्बेन** काण्डेनावशिष्टः । प्रकृत्यादित्वात्तृतीया । **नीवार इव** । **आभासि** शोभसे ॥ १५ ॥

**स्थाने भवानेकनराधिपः सन्नकिंचनत्वं मखजं व्यनक्ति ।**
**पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः॥ १६ ॥**

**स्थान इति ॥** भवानेकनराधिपः सार्वभौमः सन् । मखजं मखजन्यम् । न विद्यते किंचन यस्येत्यकिंचनः । मयूरव्यंसकादित्वात्तत्पुरुषः । तस्य भावस्तत्त्वं निर्धनत्वं व्यनक्ति प्रकटयति । स्थाने युक्तम् । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः ।

पाठा०—१ 'महाभागतया'.

तथा हि-सुरैर्देवैः पर्यायेण क्रमेण पीतस्य हिमांशोः कलाक्षयो वृद्धेरप्युपचयाच्छ्लाघ्यतरो हि वरः खलु। 'मणिः शाणोल्लीढः समरविजयी हेतिनिहतो मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः। कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः॥' (भर्तृ० २।४४) इति भावः। अत्र कामन्दकः—'धर्मार्थं क्षीणकोशस्य क्षीणत्वमपि शोभते। सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव॥' इति॥ १६॥

तदन्यतस्तावदनन्यकार्यो गुर्वर्थमाहर्तुमहं यतिष्ये।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि॥ १७॥

तदिति॥ तत्तस्मात्। तावदनन्यकार्यः। 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इति विश्वः। प्रयोजनान्तररहितोऽहमन्यतो वदान्यान्तराद्गुर्वर्थं गुरुधनमाहर्तुमर्जयितुं यतिष्ये उद्योक्ष्ये। ते तुभ्यं स्वस्ति शुभमस्तु। 'नमःस्वस्ति-' (पा. २।३।१६) इत्यादिना चतुर्थी। तथा हि-चातकोऽपि। 'धरणीपतितं तोयं चातकानां रुजाकरम्' इति हेतोरनन्यगतिकोऽपीत्यर्थः। निर्गलितोऽम्ब्वेव गर्भो यस्य तं शरद्घनं नार्दति न याचते। 'अर्द गतौ याचने च' इति धातुः। 'याचनार्थे रणेऽर्दनम्' इति यादवः॥ १७॥

एतावदुक्त्वा प्रतियातुकामं शिष्यं महर्षेर्नृपतिर्निषिध्य।
किं वस्तु विद्वन्गुरवे प्रदेयं त्वया कियद्वेति तमन्वयुङ्क्त॥ १८॥

एतावदिति॥ एतावद्वाक्यमुक्त्वा प्रतियातुं कामो यस्य तं प्रतियातुकामं गन्तुकामम्। 'तुं काममनसोरपि' इति मकारलोपः। महर्षेर्वरतन्तोः शिष्यं कौत्सं नृपती रघुर्निषिध्य निवार्य, हे विद्वन्! त्वया गुरवे प्रदेयं

वस्तु किं किमात्मकं कियत् किंपरिमाणं वा? इत्येवं तं कौत्समन्वयुङ्क्तापृच्छत्।
'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः ॥ १८ ॥

ततो यथावद्विहिताध्वराय तस्मै स्मयावेशविवर्जिताय ।
वर्णाश्रमाणां गुरवे स वर्णी विचक्षणः प्रस्तुतमाचचक्षे ॥ १९ ॥

तत इति ॥ ततो यथावद्यथार्हम्। अर्हार्थे वतिः। विहिताध्वराय विधिवदनुष्ठितयज्ञाय। सदाचारायेत्यर्थः। स्मयावेशविवर्जिताय गर्वाभिनिवेशशून्याय। अनुद्धतायेत्यर्थः। वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां च गुरवे नियामकाय। 'वर्णाः स्युर्ब्राह्मणादयः' इति। 'ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये। आश्रमोऽस्त्री' इति चामरः। सर्वकार्यनिर्वाहकायेत्यर्थः। तस्मै रघवे विचक्षणो विद्वान् वर्णी ब्रह्मचारी। 'वर्णिनो ब्रह्मचारिणः' इत्यमरः। 'वर्णाद्ब्रह्मचारिणि' (पा. ५।२।१३४) इतीनिप्रत्ययः। सः कौत्सः प्रस्तुतं प्रकृतमाचचक्षे ॥ १९ ॥

समाप्तविद्येन[1] मया महर्षिर्विज्ञापितोऽभूद्गुरुदक्षिणायै ।
स मे चिरायास्खलितोपचारां तां भक्तिमेवागणयत्पुरस्तात् ॥ २० ॥

समाप्तेति ॥ समाप्तविद्येन मया महर्षिर्गुरुर्दक्षिणायै गुरुदक्षिणास्वीकारार्थं विज्ञापितोऽभूत्। स च गुरुश्चिरायास्खलितोपचारां तां दुष्करां मे भक्तिमेव पुरस्तात् प्रथमम्। अगणयत् संख्यातवान्। भक्त्यैव संतुष्टः, किं दक्षिणयेत्युक्तवानित्यर्थः। अथवा,—भक्तिमेव तां दक्षिणामगणयदिति योज्यम् ॥ २० ॥

निर्बन्धसंजातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः ।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति ॥ २१ ॥

निर्बन्धेति ॥ निर्बन्धेन प्रार्थनातिशयेन संजातरुषा संजातक्रोधेन गुरुणा। अर्थकार्श्यं दारिद्र्यमचिन्तयित्वाऽविचार्य। अहं वित्तस्य धनस्य चतस्रो दश च कोटीश्चतुर्दशकोटीर्मे मह्यमाहरानयेति विद्यापरिसंख्यया विद्यापरिसंख्यानुसारेणैवोक्तः। अत्र मनुः—'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥' इति ॥ २१ ॥

पाठा०—1 'समाप्तविद्येन'.

टिप्प०—1 अनुयमर्गो युजिः पृच्छार्थः—इति दिनकर० ।
2 सर्वेषामप्युपद्रवेनाचारोक्तिः—इति हेमाद्रिः ।॥ यथावत्कृत्यस्त्वेनादरोक्तिः—इति चित्तु० ।

**सोऽहं सपर्याविधिभाजनेन मत्वा भवन्तं प्रभुशब्दशेषम्।**
**अभ्युत्सहे संप्रति नोपरोद्धुमल्पेतरत्वाच्छ्रुतनिष्क्रयस्य ॥ २२ ॥**

**सोऽहमिति** ॥ **सोऽहं सपर्याविधिभाजनेन**ार्घ्यपात्रेण **भवन्तं 'प्रभु'**-शब्द एव शेषो यस्य तं मत्वा। निःस्वं निश्चित्येत्यर्थः। **श्रुतनिष्क्रयस्य** विद्यामूल्यस्याल्पेतरत्वादतिमहत्त्वात् **संप्रत्युपरोद्धुं** निर्बन्धुं **नाभ्युत्सहे** ॥ २२ ॥

**इत्थं द्विजेन द्विजराजकान्तिरावेदितो वेदविदां वरेण।**
**एनोनिवृत्तेन्द्रियवृत्तिरेनं जगाद भूयो जगदेकनाथः ॥ २३ ॥**

**इत्थमिति** ॥ **द्विजराजकान्तिः**श्चन्द्रकान्तिः। 'द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः' इत्यमरः। 'तस्मात्सोमो राजा नो ब्राह्मणानाम्' इति श्रुतेः। द्विजराजकान्तित्वेनार्थावाप्तिवैराग्यं[1] धारयति। एनसः पापान्निवृत्तेन्द्रियवृत्तिर्यस्य स **जगदेकनाथो** रघुर्**वेदविदां वरेण** श्रेष्ठेन **द्विजेन** कौत्सेन। **इत्थमावेदितो** निवेदितः सन्। **एनं** कौत्सं **भूयः** पुनर्**जगाद** ॥ २३ ॥

**गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम्।**
**गतो वदान्यान्तरमित्ययं मे मा भूत्परीवादनवावतारः ॥ २४ ॥**

**गुर्वर्थमिति** ॥ श्रुतस्य पारं दृष्टवाञ्छ्रुतपारदृश्वा। 'दृशेः क्वनिप्' (पा. ३।२।९४) इति क्वनिप्। **गुर्वर्थं** गुरुदक्षिणार्थं यथा तथाऽर्थी याचकः। विशेषणद्वयेनाप्यस्याप्रत्याख्येयत्वमाह। **रघोः सकाशात् कामं** मनोरथम**नवाप्या**प्राप्य **वदान्यान्तरं** दात्रन्तरं गतः। 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः। **इत्येवंरूपोऽयं परीवाद**स्यापवादस्य **नवो** नूतनः प्रथमोऽव**तार** आविर्भावो **मे मा भू**न्माऽस्तु। 'रघोः' इति स्वनामग्रहणं संभावितत्वद्योतनार्थम्। तथा च (भ. गी. २।३४)—'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति भावः ॥ २४ ॥

---

टिप्प०—1 हेमाद्रिस्तु द्विजराजकान्तित्वेन तदर्थप्राप्त्या वैराग्यं' इति,व्याख्याय चन्द्र-
[illegible]—इत्याह।

[illegible]

प्रयान्ति' इत्युदाहरति।

—3 अन्यो वदान्यो वदान्यान्तरम् इति मयूरव्यंसकादिः। 'अवतारावतरयोर्दीर्घह्रस्वव्यत्यासो कालिदासानाम्' इति वामनः। 'अवे ह्रस्वोर्धञ्' इति करणाधिकरणयोर्विधानात् मार्गपरत्वेनास्य निर्वाहः—इति हेमाद्रिः।

4 'नव'शब्देन प्रथममेव रघोः सकाशाद्याचका न गता इति भावः—इति शिशु०।

**स त्वं प्रशस्ते महिते मदीये वसंश्चतुर्थोऽग्निरिवाग्न्यगारे ।**
**द्वित्राण्यहान्यर्हसि सोढुमर्हन् ! यावद्यते साधयितुं त्वदर्थम् ॥ २५ ॥**

स इति ॥ स त्वं **महिते** पूजिते **प्रशस्ते** प्रसिद्धे **मदीयेऽग्न्यगारे** त्रेताग्निशालायां **चतुर्थोऽग्निरिव वसन्** [1] **द्वित्राणि**[2] द्वे त्रीणि वाऽहानि दिनानि । 'संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' (पा.२।२।२५) इति बहुव्रीहिः । 'बहुव्रीहौ संख्येये डजबहुगणात्' (पा. ५।४।७३) इति डच्प्रत्ययः समासान्तः । **सोढुमर्हसि** । हे अर्हन्मान्य ! **त्वदर्थं** तव प्रयोजनं **साधयितुं यावद्यते** यतिष्ये । 'यावत्पुरानिपातयोर्लट्' (पा.३।३।४) इति भविष्यदर्थे लट् ॥ २५ ॥

**तथेति तस्यावितथं प्रतीतः प्रत्यग्रहीत्संगरमग्रजन्मा ।**
**गामात्तसारां रघुरप्यवेक्ष्य निष्क्रष्टुमर्थं चकमे कुबेरात् ॥ २६ ॥**

तथेतीति ॥ **अग्रजन्मा** ब्राह्मणः **प्रतीतः** प्रीतः सन्, **तस्य** रघोरवितथममोघं **संगरं** प्रतिज्ञाम् । 'अथ प्रतिज्ञाजिसविदापत्सु संगरः' इत्यमरः । 'तां गिरम्' इति केचित्पठन्ति । **तथेति प्रत्यग्रहीत्** । **रघुरपि गां** भूमिमात्तसारां गृहीतधनामवेक्ष्य **कुबेरादर्थं निष्क्रष्टुमाहर्तुं चकमे** इयेष ॥ २६ ॥

**वसिष्ठमन्त्रोक्षणजात्प्रभावादुदन्वदाकाशमहीधरेषु ।**
**मरुत्सखस्येव बलाहकस्य गतिर्विजघ्ने न हि तद्रथस्य ॥ २७ ॥**

वसिष्ठेति ॥ **वसिष्ठस्य** यन्मन्त्रेणोक्षणमभिमन्त्र्य प्रोक्षणं **तज्जात्प्रभावात्** सामर्थ्याद्धेतोः । **उदन्वदाकाशमहीधरेषूदन्वत्युदधावाकाशे महीधरेषु** वा । **मरुत्सखस्य**[3] । मरुतः सखेति तत्पुरुषो बहुव्रीहौ समासान्ताभावात् । ततो वायुसहायस्येति लभ्यते । वारीणां वाहको **बलाहकः** । पृषोदरादित्वात्साधुः, तस्येव मेघस्येव । **तद्रथस्य गतिः** सचारो **न विजघ्ने** न विहता **हि** ॥ २७ ॥

---

पाठा०–१ 'महितः'. २ 'अवितथं प्रतीतः'. अवितथप्रयत्नः'.

---

टिप्प०—1 अग्नित्रयमुक्तं कुल्लूकेन–'पितैव गार्हपत्योऽग्निः, माता दक्षिणाग्निः, आचार्य आहवनीयः, सेयमग्नित्रेता श्रेष्ठतरा इति ।

2 'द्वे वा त्रीणि वा' इति समासे 'बहुव्रीहौ संख्येये डच्बहुगुणात्' इति डच्; बहुत्वं तु संशयस्योभयपक्षावलम्बित्वेन पञ्चवस्तुविषयत्वात्–इति हेमाद्रिः ।

3 मेघेन गमनार्थं मरुदपेक्षितत्वात् 'मरुत् सखा यस्य' इति समासोऽभिमतो न स्यात्; तस्य तत्पुरुषाभिधानात् तवश्चिन्त्यमिदम्–इति शिशु० ।

अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम् ।
सामन्तसंभावनयैव धीरः कैलासनाथं तरसा जिगीषुः ॥ २८ ॥

अथेति ॥ अथ प्रदोषे रजनीमुखे । तत्काले यानाधिरोहणविधानात् । प्रयतो धीरो रघुः । समन्ताद्भवः सामन्तः राजमात्रमिति संभावनयैव कैलासनाथं कुबेरं तरसा बलेन जिगीषुर्जेतुमिच्छुः सन् । कल्पितं रचितं शस्त्रं गर्भे यस्य तं रथमधिशिश्ये । रथे शयितवानित्यर्थः । 'अधिशीङ्स्थासां कर्म' (पा.१।४।४६) इति कर्मत्वम् ॥ २८ ॥

प्रातः प्रयाणाभिमुखाय तस्मै सविस्मयाः कोषगृहे नियुक्ताः ।
हिरण्मयीं कोषगृहस्य मध्ये वृष्टिं शशंसुः पतितां नभस्तः ॥ २९ ॥

प्रातरिति ॥ प्रातः प्रयाणाभिमुखाय तस्मै रघवे कोषगृहे नियुक्ता अधिकृता भाण्डागारिकाः सविस्मयाः सन्तः कोषगृहस्य मध्ये नभस्तो नभसः । पञ्चम्यास्तसिल्प्रत्ययः । पतितां हिरण्मयीं सुवर्णमयीम् । 'दाण्डिनायन-' (पा. ६।४।१७४) इत्यादिना निपातनात्साधुः । वृष्टिं शशंसुः कथयामासुः ॥२९॥

तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात् ।
दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥ ३० ॥

तमिति ॥ भूपती रघुः । अभियास्यमानादभिगमिष्यमाणात् कुबेराल्लब्धम् । वज्रेण कुलिशेन भिन्नं सुमेरोः पादं प्रत्यन्तपर्वतमिव स्थितम् । 'पादाः प्रत्यन्तपर्वताः' इत्यमरः । 'शृङ्गम्' इति क्वचित्पाठः । तं भासुरं भास्वरम् । 'भञ्जभासमिदो घुरच्' (पा. ३।२।१६१) इति घुरच् । हेमराशिं समस्तं कृत्स्नमेव कौत्साय दिदेश ददौ । न तु चतुर्दशकोटिमात्रमित्येवकारार्थः ॥३०॥

जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥ ३१ ॥

जनस्येति ॥ तावर्थि-दातारौ द्वावपि साकेतनिवासिनोऽयोध्यावासिनः । 'साकेतः स्यादयोध्यायां कोसला नन्दिनी च सा' इति यादवः । जनस्याभिनन्द्यसत्त्वौ स्तुत्यव्यवसायावभूताम् । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । कौ द्वौ ? गुरुप्रदेयादधिकेऽतिरिक्तद्रव्ये निःस्पृहोऽर्थी । अर्थिकामादर्थिमनोरथादधिकं प्रददातीति तथोक्तः । 'प्रे दाज्ञः' । (पा.३।२।६) इति कप्रत्ययः । नृपश्च ॥ ३१ ॥

---

पाठा०-१ 'कौत्सस्य'.

अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम्।
सामन्तसंभावनयैव धीरः कैलासनाथं तरसा जिगीषुः ॥ २८ ॥

अथेति ॥ अथ प्रदोषे रजनीमुखे । तत्काले यानाधिरोहणविधानात् । प्रयतो धीरो रघुः । समन्ताद्भवः सामन्तः राजमात्रमिवि संभावनयैव कैलासनाथं कुबेरं तरसा बलेन जिगीषुर्जेतुमिच्छुः सन् । कल्पितं सज्जितं शस्त्रं गर्भे यस्य तं रथमधिशिश्ये । रथे शयितवानित्यर्थः । 'अधिशीङ्स्थासां कर्म' (पा.१।४।४६ ) इति कर्मत्वम् ॥ २८ ॥

प्रातः प्रयाणाभिमुखाय तस्मै सविस्मयाः कोषगृहे नियुक्ताः ।
हिरण्मयीं कोषगृहस्य मध्ये वृष्टिं शशंसुः पतितां नभस्तः ॥ २९ ॥

प्रातरिति ॥ प्रातः प्रयाणाभिमुखाय तस्मै रघवे कोषगृहे नियुक्ता अधिकृता भाण्डागारिकाः सविस्मयाः सन्तः कोषगृहस्य मध्ये नभस्तो नभसः । पञ्चम्यास्तसिल्प्रत्ययः । पतितां हिरण्मयीं सुवर्णमयीम् । 'दाण्डिनायन-' (पा. ६।४।१७४) इत्यादिना निपातनात्साधुः । वृष्टिं शशंसुः कथयामासुः ॥२९॥

तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात् ।
दिदेश कौत्साय[1] समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥ ३० ॥

तमिति ॥ भूपती रघुः । अभियास्यमानादभिगमिष्यमाणात् कुबेराल्लब्धम् । वज्रेण कुलिशेन भिन्नं सुमेरोः पादं प्रत्यन्तपर्वतमिव स्थितम् । 'पादाः प्रत्यन्तपर्वताः' इत्यमरः । 'शृङ्गम्' इति क्वचित्पाठः । तं भासुरं भास्वरम् । 'भञ्जभासमिदो घुरच्' (पा. ३।२।१६१ ) इति घुरच् । हेमराशिं समस्तं कृत्स्नमेव कौत्साय दिदेश ददौ । न तु चतुर्दशकोटिमात्रमित्येवकारार्थः ॥३०॥

जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥ ३१ ॥

जनस्येति ॥ तावर्थि-दातारौ द्वावपि साकेतनिवासिनोऽयोध्यावासिन 'साकेतः स्यादयोध्यायां कोसला नन्दिनी च सा' इति यादवः । जनस्याभिनन्द्यसत्त्वौ स्तुत्यव्यवसायावभूताम् । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । कौ द्वौ ? गुरुप्रदेयादधिकेऽतिरिक्तद्रव्ये निःस्पृहोऽर्थी । अर्थिकामादर्थिमनोरथादधिकं प्रददातीति तथोक्तः । 'प्रे दाज्ञः' । ( पा.३।२।६ ) कप्रत्ययः । नृपश्च ॥ ३१ ॥

---

पाठा०–१ 'कौत्सस्य'.

श्रीः । **धीरा** स्थिरोन्नतचित्ता । 'स्थिरा चित्तोन्नतिर्या तु तद्धैर्यमिति संज्ञितम्' इति भूपालः । **कन्या पितुरिव । गुरोरनुज्ञामाचकाङ्क्षेप ।** यौवराज्यार्होऽभूदित्यर्थः । 'अनुज्ञा'शब्दात्पितृपारतन्त्र्यमुपमासामर्थ्यात्पाणिग्रहणयोग्यता च ध्वन्यते ॥ ३८ ॥

**अथेश्वरेण क्रथकैशिकानां स्वयंवरार्थं स्वसुरिन्दुमत्याः ।**
**आप्तः कुमारानयनोत्सुकेन भोजेन दूतो रघवे विसृष्टः ॥ ३९ ॥**

**अथेति ॥** अथ **स्वसु**र्भगिन्या **इन्दुमत्याः स्वयंवरार्थं कुमार**स्याजस्या**नयन उत्सुकेन क्रथकैशिकानां** विदर्भदेशानामी**श्वरेण** स्वामिना **भोजेन** राज्ञाप्तो हितो **दूतो रघवे विसृष्टः** प्रेषितः । क्रियामात्रयोगेऽपि चतुर्थी ॥ ३९ ॥

**तं श्लाघ्यसंबन्धमसौ विचिन्त्य दारक्रियायोग्यदशं च पुत्रम् ।**
**प्रस्थापयामास ससैन्यमेनमृद्धां विदर्भाधिपराजधानीम् ॥ ४० ॥**

**तमिति ॥** असौ रघुस्तं भोजं **श्लाघ्यसंबन्धम**नूचानत्वादिगुणयोगात्स्पृहणीयसंबन्धं **विचिन्त्य** विचार्य **पुत्रं च दारक्रियायोग्यदशं** विवाहयोग्यवयस्कं विचिन्त्य **ससैन्यमेनं** पुत्र**मृद्धां** समृद्धां **विदर्भाधिप**स्य भोजस्य **राजधानीं** पुरीं प्रति **प्रस्थापयामास** । धीयतेऽस्यामिति धानी । 'करणाधिकरणयोश्च' ( पा.३।३।११७ ) इत्यधिकरणे ल्युट्प्रत्ययः । राज्ञां धानीति विग्रहः ॥ ४० ॥

**तस्योपकार्यारचितोपचारा वन्येतरा जानपदोपदाभिः ।**
**मार्गे निवासा मनुजेन्द्रसूनोर्बभूवुरुद्यानविहारकल्पाः ॥ ४१ ॥**

**तस्येति ॥ उपकार्या**सु राजयोग्येषु पटभवनादिषु । 'सौधोऽस्त्री राजसदनमुपकार्योपकारिका' इत्यमरवचनव्याख्याने क्षीरस्वामी । उपक्रियत उपकरोति वा पटमण्डपादि राजसदनमिति । **रचिता उपचाराः** शयनादयो येषु ते तथोक्ताः । **जानपदानां** जनपदेभ्य आगतानामु**पदाभि**रुपायनैः । वन्या वने भवा इतरे येषां ते **वन्येतराः** । अवन्या इत्यर्थः । 'न बहुव्रीहौ' ( पा. १।१।२९ ) इति सर्वनामसंज्ञानिषेधः । तत्पुरुषे सर्वनामसंज्ञा दुर्वारैव । तस्य **मनुजेन्द्रसूनो**रजस्य **मार्गे निवासा** वासनिका **उद्यानान्या**क्रीडाः । 'पुमानाक्रीड उद्यानम्' इत्यमरः । तान्येव **विहारा** विहारस्थानानि **तत्कल्पाः** । तत्सदृशा इत्यर्थः । 'ईषदसमाप्तौ—' ( पा. ५।३।६७ ) इति कल्पप्प्रत्ययः । **बभूवुः** ॥ ४१ ॥

पाठा०—१ 'क्रथकौशकानाम्.' २ 'कीर्णान्तरा'.

टिप्प०—1 हेमाद्रिस्तु-उपकार्याः पटवेश्मानि कल्प्यः मार्गे निवासा बभूवुः, इति व्याख्याय 'यद्वा-मार्गेनिवासा इत्येकं पदम्' इति व्याचष्टे ।

स नर्मदारोधसि सीकरार्द्रैर्मरुद्भिरानर्तितनक्तमाले ।
निवेशयामास विलङ्घिताध्वा क्लान्तं रजोधूसरकेतु सैन्यम् ॥ ४२ ॥

स इति ॥ विलङ्घिताध्वाऽतिक्रान्तमार्गः सोऽजः सीकरार्द्रैः । शीतलैरित्यर्थः । मरुद्भिर्वातैरानर्तिताः कम्पिता नक्तमालाश्चिरबिल्वाख्यवृक्षभेदाः ( 'चिरबिल्वो नक्तमालः करजश्च करञ्जके' इत्यमरः । यस्मिंस्तस्मिन् । निवेशार्ह इत्यर्थः । नर्मदाया रोधसि रेवायास्तीरे क्लान्तं श्रान्तं रजोभिर्धूसराः केतवो ध्वजा यस्य तत्सैन्यं निवेशयामास ॥ ४२ ॥

अथोपरिष्टाद्भ्रमरैर्भ्रमद्भिः प्राक्सूचितान्तःसलिलप्रवेशः ।
निर्धौतदानामलगण्डभित्तिर्वन्यः सरित्तो गज उन्ममज्ज ॥ ४३ ॥

अथेति ॥ अथोपरिष्टादूर्ध्वम् । 'उपर्युपरिष्टात्' ( पा. ५।३।३१ ) इति निपातः । भ्रमद्भिः । मदलोभादिति भावः । भ्रमरैः प्रागुन्मज्जनात्पूर्वं सूचितो ज्ञापितोऽन्तःसलिले प्रवेशो यस्य स तथोक्तः । निर्धौतदाने क्षालितमदे अत एव, अमले गण्डभित्ती यस्य स तथोक्तः । 'दानं गजमदे त्यागे' इति शाश्वतः । प्रशस्तौ गण्डौ गण्डभित्ती । 'प्रशंसावचनैश्च' ( पा.२।१।६६ ) इति समासः । 'भित्ति'शब्दः प्रशस्तार्थः । तथा च गणरत्नमहोदधौ—'मतल्लिकोद्घनिभाः स्युः प्रकाण्डस्थलभित्तयः' इति । भित्तिः प्रदेशो वा । 'भित्तिः प्रदेशे कुड्येऽपि' इति विश्वः । निर्धौतदानेनामला गण्डभित्तिर्यस्येति वा । वन्यो गजः सरित्तो नर्मदायाः सकाशात् । पञ्चम्यास्तसिल्प्रत्ययः । उन्ममज्जोत्थितः ॥ ४३ ॥

संहारविक्षेपलघुक्रियेण हस्तेन तीराभिमुखः सशब्दम्।
बभौ स भिन्दन्बृहतस्तरंगान्वार्यर्गलाभङ्ग इव प्रवृत्तः ॥ ४५ ॥

संहारेति ॥ संहारविक्षेपयोः संकोचनप्रसारणयोर्लघुक्रियेण क्षिप्रव्यापारेण। 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः। हस्तेन शुण्डादण्डेन। 'हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि' इति विश्वः। सशब्दं सघोषं बृहतस्तरंगान्भिन्दन्विदारयंस्तीराभिमुखः स गजः वारी गजबन्धनस्थानम्। 'वारी तु गजबन्धनी' इति यादवः। वार्या[1] अर्गलाया विष्कम्भस्य भङ्गे भञ्जने प्रवृत्त इव बभौ ॥ ४५ ॥

शैलोपमः[3] शैवलमञ्जरीणां जालानि कर्षन्नुरसा[4] स पश्चात्।
पूर्वं तदुत्पीडितवारिराशिः सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६ ॥

शैलेति ॥ शैलोपमः स गजः शैवलमञ्जरीणां जालानि वृन्दान्युरसा कर्षन् पश्चात्तटमुत्ससर्प। पूर्वं तेन गजेनोत्पीडितो तुन्नो वारिराशिर्यस्य स सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६ ॥

तस्यैकनागस्य कपोलभित्त्योर्जलावगाह[5]क्षणमात्रशान्ता।
वन्येतरानेकपदर्शनेन पुनर्दिदीपे मददुर्दिनश्रीः ॥ ४७ ॥

तस्येति ॥ तस्यैकनागस्यैकाकिनो गजस्य कपोलभित्त्योर्जलावगाहेन[2] क्षणमात्रं शान्ता निवृत्ता मददुर्दिनश्रीर्मदवर्षलक्ष्मीर्वन्येतरेषां ग्राम्याणामनेकपानां द्विपानां दर्शनेन पुनर्दिदीपे ववृधे ॥ ४७ ॥

सप्तच्छदक्षीरकटुप्रवाहमसह्यमाघ्राय मदं तदीयम्।
विलङ्घिताधोरणतीव्रयत्नाः सेनागजेन्द्रा विमुखा[6] बभूवुः ॥ ४८ ॥

---

पाठा०—१ 'स भोगिभोगाधिकपीवरेण *संवेष्टितार्धप्रसृतेन दीर्घान्। विदेर तीराभिमुखः सशब्दं हस्तेन वारीपरिघानिवोर्वीन्'. (*'संवेष्टितोऽर्धप्रदरेण'.) २ 'सहसा'. ३ 'कारण्डवोत्सृष्टमृदुप्रवालाः *पुलिन्दयोषाम्बुविहारकाञ्चीः। कर्षन्स †सेवाललता नदीष्णः ‡प्रोद्दावलग्नास्तटमुत्ससर्प।'. (*'प्रतानाः'. †'शैवाल'. ‡'प्रोवाहलग्नाः'; 'प्रवाहलग्नाः'.) ४ 'तरसा'. ५ 'ह्रदावगाह'. ६ 'विमुखीबभूवुः'.

---

टिप्प०—1 वारी गजबन्धनस्थानम्, तस्या बहिर्गमनरोधार्थं दत्ताऽर्गला तस्या भङ्गे प्रवृत्त इव। 'वारी तु गजबन्धनी। तद्विष्कंभोऽर्गलं न ना।' यद्वा,–'वार्येव जलमेवार्गला' इति पाठान्तरम्–इति हेमाद्रिः।

2 जलावगाहात् क्षण एव क्षणमात्रं शान्ता मददुर्दिनश्रीर्वन्येतरानेकपानां सेनागजानां दर्शनेन पुनर्दिदीपे। 'दुर्दिन'शब्देन वर्षणमुच्यते। 'एक'शब्दः संख्यार्थो मुख्यार्थो वा–इति हेमाद्रिः।

सप्तच्छदेति ॥ सप्तच्छदस्य वृक्षविशेषस्य क्षीरवत् कटुः सुरभिः प्रवाहः प्रसारो यस्य तम्। 'कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्तिताः' इति यादवः। असह्यं तदीयं मदमाघ्राय सेनागजेन्द्राः। विलङ्घितस्तिरस्कृत आधोरणानां हस्तिपकानां तीव्रो महान् यत्नो यैस्ते तथोक्ताः सन्तः। 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः। विमुखाः पराङ्मुखा बभूवुः ॥ ४८ ॥

स च्छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्यस्तरथं क्षणेन।
रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार ॥ ४९ ॥

स इति ॥ स गजः। छिन्ना बन्धा यैस्ते छिन्नबन्धा द्रुताः पलायिताः युगं वहन्तीति युग्या वाहा यस्मिन्सः। स चासौ शून्यश्च तम्। भग्ना अक्षा रथावयवदारुविशेषाः। 'अक्षो रथस्यावयवे पाशकेऽप्यक्षमिन्द्रियम्' इति शाश्वतः। येषां ते भग्नाक्षा अत एव पर्यस्ताः पतिता रथा यस्मिंस्तम्। रामाणां स्त्रीणां परित्राणे संरक्षणे विहस्ता व्याकुलाः। 'विहस्तव्याकुलौ समौ' इत्यमरः। योधा यस्मिंस्तं सेनानिवेशं शिबिरं क्षणेन तुमुलं संकुलं चकार ॥ ४९ ॥

तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान्कुमारः।
निवर्तयिष्यन्विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः ॥ ५० ॥

तमिति ॥ नृपते राज्ञो वन्यः करी अवध्य इति श्रुतवान् शास्त्राज्ज्ञातवान्। कुमार आपतन्तमभिधावन्तं तं गजं निवर्तयिष्यन् तु प्रहरिष्यन्। अत एव नात्यायतमनतिदीर्घं यथा स्यात्। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। कृष्टशार्ङ्ग ईषदाकृष्टचापः सन्विशिखेन बाणेन कुम्भे जघान। अत्र चाक्षुषः— 'लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात्। इयं हि श्रीर्यद् वरिणः' इति। अत एव 'युद्धादन्यत्र' इति द्योतनार्थमेव 'वन्य'ग्रहणं कृतम् ॥ ५० ॥

स विद्धमात्रः किल नागरूपमुत्सृज्य तद्विस्मितसैन्यदृष्टः।
स्फुरत्प्रभामण्डलमध्यवर्ति कान्तं वपुर्व्योमचरं प्रपेदे ॥ ५१ ॥

स इति ॥ स गजो विद्धमात्रस्ताडितमात्रः किल न तु प्रहृतस्तथापि नागरूपं गजशरीरमुत्सृज्य तेन वृत्तान्तेन विस्मितैस्तद्विस्मितैः सैन्यैर्दृष्टः सन्।

पाठा०— १ 'चपलम्'. २ 'चापः'.

टिप्प०—1 हेमाद्रिस्तु 'सेनानिवेशं शिथिलं चकार' इति पाठमादृत्य स गजः सेनाया निवेशं स्थानं शिथिलं चकार। बध्यन्ते धर्मैरिति बन्धा रज्ज्वादयः छिन्नबन्धैर्द्रुतैर्युग्यैः शून्यं युग्यं यानवाहनं 'युग्यं च पत्र' इति साधुः; युगं वहतीति यत्प्रत्ययो वा' इति व्याचष्टे.

स्फुरतः प्रभामण्डलस्य मध्यवर्ति कान्तं मनोहरं व्योमचरं वपुः प्रपेदे प्राप ॥ ५१ ॥

अथ प्रभावोपनतैः कुमारं कल्पद्रुमोत्थैरवकीर्य पुष्पैः ।
उवाच वाग्मी दशनप्रभाभिः संवर्धितोरःस्थलतारहारः ॥ ५२ ॥

अथेति ॥ अथ प्रभावेनोपनतैः प्राप्तैः कल्पद्रुमोत्थैः कल्पवृक्षोत्पन्नैः पुष्पैः कुमारमजमवकीर्याभिवृष्य दशनप्रभाभिर्दन्तकान्तिभिः संवर्धिता उरःस्थले ये तारहाराः स्थूलमुक्ताहारास्ते येन स तथोक्तः । वाचोऽस्य सन्तीति वाग्मी वक्ता । 'वाचो ग्मिनिः' ( पा.५।२।१२४ ) इति ग्मिनिप्रत्ययः । स पुरुष उवाच ॥ ५२ ॥

मतङ्गशापादवलेपमूलादवाप्तवानस्मि मतङ्गजत्वम् ।
अवेहि गन्धर्वपतेस्तनूजं प्रियंवदं मां प्रियदर्शनस्य ॥ ५३ ॥

मतङ्गेति ॥ अवलेपमूलाद्गर्वहेतुकात् । 'अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च' इति विश्वः । मतङ्गस्य मुनेः शापान्मतङ्गजत्वमवाप्तवानस्मि । मां प्रियदर्शनस्य प्रियदर्शनाख्यस्य गन्धर्वपतेर्गन्धर्वराजस्य तनूजं पुत्रम् । 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः । 'तन्वादेर्वा' ( पा. ३।१।७९ ) इत्यूङिति केचित् । प्रियंवदं प्रियंवदाख्यमवेहि जानीहि । प्रियं वदतीति प्रियंवदः । 'प्रियवशे वदः खच्' ( पा.३।२।३८ ) इति खच्प्रत्ययः ॥ ५३ ॥

स चानुनीतः प्रणतेन पश्चान्मया महर्षिर्मृदुतामगच्छत् ।
उष्णत्वमग्न्यातपसंप्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य ॥ ५४ ॥

स इति ॥ स महर्षिश्च प्रणतेन मयाऽनुनीतः सन् पश्चान्मृदुतां शान्तिमगच्छत् । तथा हि-जलस्योष्णत्वमग्नेरातपस्य वा संप्रयोगात् संपर्कात् । न तु प्रकृत्योष्णत्वम् । यच्छैत्यं सा प्रकृतिः स्वभावः । विधेयप्राधान्यात् 'सा' इति स्त्रीलिङ्गनिर्देशः । महर्षीणां शान्तिरेव स्वभावो न क्रोध इत्यर्थः ॥ ५४ ॥

इक्ष्वाकुवंशप्रभवो यदा ते भेत्स्यत्यजः कुम्भमयोमुखेन ।
संयोक्ष्यसे स्वेन वपुर्महिम्ना तदेत्यवोचत्स तपोनिधिर्माम् ॥ ५५ ॥

पाठा०—१ 'चारुहारः'.

टिप्प०-1 'कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः । यक्षश्चक्रे' ( मेघदूते. १।१ ) इति पद्यं श्लोकेनानेन भावसाम्यं प्रतिपादयति ।

**प्रवेश्येति** ॥ **एनमजमग्रयायी** । सेवाधर्मेण पुरो गच्छन्नित्यर्थः । **नीचैर्नम्रः** पुरं **प्रवेश्य** प्रवेशं कारयित्वा प्रीत्याऽर्पितश्रीस्तथा येन प्रकारेणो**पाचरदुपच**रितवान् । **यथा** येन प्रकारेण तत्र पुरे **समेतो** मिलितो **जनो वैदर्भं** भोजमा**गन्तुं** प्राघूर्णिकं **मेने** । **अजं गृहेशं** गृहपतिं **मेने** ॥ ६२ ॥

तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टां
प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम् ।
रम्यां रघुप्रतिनिधिः स नवोपकार्यां
बाल्यात्परामिव दशां मदनोऽध्युवास ॥ ६३ ॥

**तस्येति** ॥ **रघुप्रतिनिधी** रघुकल्पः । रघुतुल्य इत्यर्थः । उक्तं च दण्डिना सादृश्यवाचकप्रस्तावे—'कल्पदेशीयदेश्यादि प्रख्यप्रतिनिधी अपि' इति । **सोऽजः प्रणतैर्नमस्कृतवद्भिः** । कर्तरि क्तः । तस्य भोजस्या**धिकारो** नियोगस्तस्य **पुरुषैः** । अधिकृतैरित्यर्थः । **प्रदिष्टां** निर्दिष्टां **प्राग्द्वारस्य वेद्यां विनिवेशितः** प्रतिष्ठापितः **पूर्णकुम्भो** यस्यास्ताम् । स्थापितमङ्गलकलशामित्यर्थः । **रम्यां** रमणीयां **नवोपकार्यां** नूतनं राजभवनम् । 'उपकार्या राजसद्मन्युपचारचितेऽन्यवत्' इति विश्वः । **मदनो बाल्यात्परां** शैशवादनन्तरां **दशामिव** । यौवनमिवेत्यर्थः । **अध्युवा**साधिष्ठितवान् । वनोषितवानित्यर्थः । 'उपान्वध्याङ्वसः' ( पा. १।४।४८ ) इति कर्मत्वम् ॥ ६३ ॥

तत्र स्वयंवरसमाहृतराजलोकं
कन्याललाम कमनीयमजस्य लिप्सोः ।
भावावबोधकलुषा दयितेव रात्रौ
निद्रा चिरेण नयनाभिमुखी बभूव ॥ ६४ ॥

**तत्रेति** ॥ तत्रोपकार्यायाम् । स्वयंवरनिमित्तं **समाहृतः** समेलितो **राजलोको** येन तत्कमनीयं स्पृहणीयं **कन्याललाम** कन्यासु श्रेष्ठम् । 'ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे । श्रेष्ठभूषापुण्ड्रशृङ्गपुच्छचिह्नाश्वलिङ्गिषु' इति यादवः ।

पाठा०—१ 'अधिकारिपुरुषैः'. २ 'हेमकुम्भाम्'.

टिप्प०—1 अधिकारिपुरुषैः कनकाध्यक्षादिभिर्निर्दिष्टा प्राग्द्वारं यस्याः सा इति दिनकर० ।

2 दिनकरमिश्रास्तु-प्राग्द्वारं यस्याः सा प्राग्द्वारा, सा चासौ वेदिश्च । तत्र निवेशितो हैमः कुम्भो यस्याः सा -इति व्याचख्युः ।

लिप्सोर्लब्धुमिच्छोः । लभेः सन्नन्तादुप्रत्ययः । अजस्य भावावबोधे पुरुषस्याभिप्रायपरिज्ञाने कलुषाऽसमर्था दयितेव । रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव । 'राजानं कामिनं चौरं प्रविशन्ति प्रजागराः' इति भावः । 'अभिमुखी'शब्दो ङीषन्तश्च्व्यन्तो वा ॥ ६४ ॥

तं कर्णभूषणनिपीडितपीवरांसं
शय्योत्तरच्छदविमर्दकृशाङ्गरागम् ।
सूतात्मजाः सवयसः प्रथितप्रबोधं
प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥ ६५ ॥

तमिति ॥ कर्णभूषणाभ्यां निपीडितौ पीवरौ पीनावंसौ यस्य तम् । शय्याया उत्तरच्छदस्योपर्यास्तरणवस्त्रस्य विमर्देन घर्षणेन कृशो विरलोऽङ्गरागो यस्य तम् । न त्वङ्गनासङ्गादिति भावः । प्रथितप्रबोधं प्रकृष्टज्ञानं तमेनमजं सवयसः समानवयस्का उदारवाचः प्रगल्भगिरः सूतात्मजा बन्दिपुत्राः । 'वैतालिकाः' इति वा पाठः । 'वैतालिका बोधकराः' इत्यमरः । वाग्भिः स्तुतिपाठैः । उषसि । प्राबोधयन् प्रबोधयामासुः ॥ ६५ ॥

रात्रिर्गता मतिमतां वर! मुञ्च शय्यां
धात्रा द्विधैव ननु धूर्जगतो विभक्ता ।
तामेकतस्तव बिभर्ति गुरुर्विनिद्र-
स्तस्या भवानपरधुर्यपदावलम्बी ॥ ६६ ॥

रात्रिरिति ॥ हे मतिमतां वर! निर्धारणे षष्ठी । रात्रिर्गता । शय्यां मुञ्च । विनिद्रो भवेत्यर्थः । विनिद्रत्वे फलमाह—धात्रेति ॥ धात्रा ब्रह्मणा जगतो धूर्भारः 'धूः स्यायानमुखे भारे' इति यादवः । द्विधैव । द्वयोरेवेत्यर्थः । एवकारस्तृतीयनिषेधार्थः । विभक्ता ननु विभज्य स्थापिता खलु । तत्किमत आह—तां धुरमेकत एककोटौ तव गुरुः पिता विनिद्रः सन् बिभर्ति । तस्या धुरो भवान् । धुरं वहतीति धुर्यो भारवाही । तस्य पदं वहनस्थानम् । अपरं यद्धुर्यपदं तदवलम्बी । ततो विनिद्रो भवेत्यर्थः । न ह्युभयवाह्यमेको वहतीति भावः ॥ ६६ ॥

---

पाठा०—१ 'वैतालिका ललितबन्धमनोहराभिः'. २ 'याम्'. ३ 'वितन्द्रः'.

---

टिप्प०—१ यथा काचिदनिताऽयं मम कान्तोऽन्यस्यामनुरक्त इति योऽसौ भावस्तस्यावबोधो विज्ञानं तेन कलुषाऽप्रसन्ना सती कथंचित्प्रियाभिमुखी जायते तथेत्यर्थः—इति दिनकरमिश्राः ।

**निद्रावशेन भवताप्यनवेक्षमाणा**
**पर्युत्सुकत्वमबला निशि खण्डितेव ।**
**लक्ष्मीर्विनोदयति येन दिगन्तलम्बी**
**सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥ ६७ ॥**

**निद्रेति** ॥ चन्द्रारविन्दराजवदनादयो लक्ष्मीनिवासस्थानानीति प्रसिद्धिमाश्रित्योच्यते। **निद्रावशेन** निद्राधीनेन। ध्यन्तरासङ्गोऽत्र ध्वन्यते। **भवता पर्युत्सुकत्वमपि** त्वय्यनुरक्तत्वमपीत्यर्थः । 'प्रसितोत्सुकाभ्यां तृतीया च' (पा. २।३।४४) इति सप्तम्यर्थे तृतीया । 'अपि'शब्दस्तद्विषयानुरागस्यानपेक्ष्यत्वद्योतनार्थः । **निशि खण्डिता** भर्तुरन्यासङ्गज्ञानकलुषिताऽबलेव नायिकेव । 'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' (२।२५) इति दशरूपके। **अनवेक्षमाणाऽ**विचारयन्ती सती। उपेक्षमाणेत्यर्थः । 'ह्यनवेक्ष्यमाणा' इति पाठे निद्रावशेन भवताऽनवेक्ष्यमाणाऽनिरीक्ष्यमाणा । कर्मणि शानच्। लक्ष्मीः प्रयोजककर्त्री । येन । प्रयोज्येन चन्द्रेण । **पर्युत्सुकत्वं** त्वद्विरहवेदनाम् । 'कालाक्षमत्वमौत्सुक्यं मनस्तापज्वरादिकृत्' इत्यलंकारे। विनोदयति निरासयतीति योजना । शेषं पूर्ववत् । नाथस्त्वर्थोपपत्तिमपश्यन्निमं पक्षमुपैक्षिष्ट। **लक्ष्मीर्येन** चन्द्रेण सह । त्वदाननसदृशत्वादिति भावः । **विनोदयति** विनोदं करोति। 'विनोद'शब्दात् 'तत्करोति तदाचष्टे' (ग.सू. २०४) इति णिच्प्रत्ययः । सादृश्यदर्शनादयो हि विरहिणां विनोदस्थानानीति भावः । **स चन्द्रोऽपि दिगन्तलम्बी** पश्चिमाशां गतः सन् । अस्तं गच्छन्नित्यर्थः । अत एव

पाठा०–१ 'निद्रावशं त्वयि गते नितरां कथंचिदात्मानमाननरुचा भवतो वियुज्य। लक्ष्मीर्विभातसमयेऽपि हि दर्शनेन पर्युत्सुका प्रणयिनी निशि खण्डितेव'. २ 'अप्यनपेक्षमाणा'; 'अप्यनवेक्ष्यमाणा'; 'ह्यनपेक्ष्यमाणा'.

निशि रात्रौ नायन्तरसङ्गाद् भर्त्राऽनवेक्ष्यमाणा सती कापि तत्प्रतिनिधिगृहसंनिधाने औत्सुक्यं विनोदयति–इति वल्लभः ॥ अतः शयनं परित्यज्य स्वकीयामाननलक्ष्मीं स्वीकुरु। यतः–'सद्यः प्रणयमुज्झन्ति म्रियन्ते चातिकोपनाः। मानिन्यः खण्डिता एव तत्क्षणादप्रसादिताः'–इति शिशु० ॥ यथा प्रमदान्तरानुरक्तं कान्तमनिच्छन्ती खण्डिता नायिका पुरुषान्तरेण संक्रीडते, सोऽपि भीत्या पलायमानो दिगन्तानालम्बते इति छायार्थः । 'प्रयोगादुचिते यस्या वासके नागतः प्रियः। तदनागमनार्त्ता तु खण्डितेत्यभिसंज्ञिता' इति त्रिलोचनादित्य– इति दिनकर० ।

त्वदाननरुचिं त्वन्मुखप्रसादयं विजहाति । त्यजतीत्यर्थः । अतो निद्रां विहाय तां लक्ष्मीमनन्यशरणां परिगृहाणेति भावः ॥ ६७ ॥

तद्वल्गुना युगपदुन्मिषितेन ताव-
　त्सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्त-
　श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥ ६८ ॥

तदिति ॥ तत्तस्माल्लक्ष्मीपरिग्रहणाद्वल्गुना मनोज्ञेन । 'वल्गु स्थाने मनोज्ञे च वल्गु भाषितमन्यवत्' इति विश्वः । युगपत्तावदुन्मिषितेन युगपदेवोन्मीलनेन सद्यो द्वे अपि परस्परतुलामन्योन्यसादृश्यमधिरोहतां प्राप्नुताम् । प्रार्थनायां लोट् । के द्वे ? अन्तः प्रस्पन्दमाना चलन्ती परुषेतरा स्निग्धा तारा कनीनिका यस्य तत्तथोक्तम् । 'तारकाक्ष्णः कनीनिका' इत्यमरः । तव चक्षुः । अन्तः प्रचलितभ्रमरं चलद्भृङ्गं पद्मं च । युगपदुन्मिषिते सति संपूर्णसादृश्यलाभ इति भावः ॥ ६८ ॥

वृन्ताच्छ्लथं हरति पुष्पमनोकहानां
　संसृज्यते सरसिजैररुणांशुभिन्नैः ।
स्वाभाविकं परगुणेन विभातवायुः
　सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥ ६९ ॥

वृन्तादिति ॥ विभातवायुः प्रभातवायुः स्वाभाविकं नैसर्गिकं ते तव मुखमारुतस्य निःश्वासपवनस्य सौरभ्यम् । तादृक्सौगन्ध्यमित्यर्थः । परगुणेनान्यदीयगुणेन । सांक्रामिकगन्धेनेत्यर्थः । ईप्सुराप्तुमिच्छुरिव । 'आप्ज्ञप्यृधामीत्' ( पा. ७।४।५५ ) इतीकारादेशः । अनोकहानां वृक्षाणां श्लथं शिथिलं पुष्पं वृन्तात् प्रसवबन्धनात् । 'वृन्तं प्रसवबन्धनम्' इत्यमरः । हरत्यादत्ते । अरुणांशुभिन्नैस्तरणिकिरणोद्बोधितैः सरसि जातैः सरसिजैः कमलैः सह । 'तत्पुरुषे कृति बहुलम्' ( पा. ६।३।१४ ) इति सप्तम्या अलुक् । संसृज्यते संगच्छते । सृजेर्दैवादिकात्कर्तरि लट् ॥ ६९ ॥

पाठा०–१ 'वृन्तश्लथम्'. २ 'सौरभ्यमीप्सुरिव ते मुखमारुतस्य यत्नो गुणान्प्रति निशापरिणामवायुः'.

ताम्रोदरेषु पतितं तरुपल्लवेषु
निर्धौतहारगुलिकाविशदं हिमाम्भः ।
आभाति लब्धपरभागतयाधरोष्ठे
लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥ ७० ॥

ताम्रेति ॥ ताम्रोदरेष्वरुणाभ्यन्तरेषु तरुपल्लवेषु पतितं निर्धौता या हारगुलिका मुक्तामणयस्तद्वद्विशदं हिमाम्भो लब्धपरभागतया लब्धोत्कर्षतया । 'परभागो गुणोत्कर्षे' इति यादवः । अधरोष्ठे त्वदीयं सदशनार्चिर्दन्तकान्तिसहितं लीलास्मितमिवाभाति शोभते ॥ ७० ॥

यावत्प्रतापनिधिराक्रमते न भानु-
रह्नाय तावदरुणेन तमो निरस्तम् ।
आयोधनाग्रसरतां त्वयि वीर ! याते
किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ? ॥ ७१ ॥

यावदिति ॥ प्रतापनिधिस्तेजोनिधिर्भानुर्यावन्नाक्रमते नोद्गच्छति । 'आङ उद्गमने' ( पा. १।३।४० ) इत्यात्मनेपदम् । तावत् । भानावनुदित एवेत्यर्थः । अह्नाय झटिति । 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः । अरुणेनानूरुणा । 'सूर्यसूतोऽरुणोऽनूरुः' इत्यमरः । तमो निरस्तम् । तथा हि-हे वीर ! त्वय्यायोधनेषु युद्धेषु । 'युद्धमायोधनं जन्यम्' इत्यमरः । अग्रसरतां पुरःसरतां याते सति तव गुरुः पिता रिपून् स्वयमुच्छिनत्ति किं वा ? नोच्छिनत्त्येवेत्यर्थः । न खलु योग्यपुत्रन्यस्तभाराणां स्वामिनां स्वयं व्यापारखेद इति भावः ॥ ७१ ॥

पाठा०—१ 'द्रुमपल्लवेषु'. २ 'निर्धूतहारगुटिका'.

टिप्प०—1 अहो वीर ! त्वयि आयोधनाग्रसरतां युद्धाग्रयायित्वं याते गते सति तव गुरुः पिता रिपून् स्वयमुच्छिनत्ति किम् ? न मारयतीत्यर्थः; 'युद्धमायोधनं जन्यम्' । 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति सूत्रे न्यासकृत् । 'अग्रेसर' इत्येतद्रूपं सप्तम्या अलुकापि सिध्यत्येव । अग्रे सरतीति सप्तम्यन्त उपपदे 'अग्रेसर' इति तद्रूपं यथा स्यादित्येवमर्थं 'अग्रे'शब्दस्यैकारान्तत्वं विज्ञेयमिति । 'अग्रसर' इति प्रयोगश्चिन्त्यः; 'पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरस्सराः' इत्यमरः । यथात्रैव षष्ठे सर्गे 'अग्रेसरैर्वाजिभिरुत्थितानि' इति हेमाद्रिनिरूप्य 'पचाद्यच्' इति विशेषणसमासे साधुत्वमिति वा । 'यङोऽचि च' इति सूत्रे सर्वे धातवः पचाद्यन्तःपातिनः इति न्यासकृत्' इति समाधत्ते ।

शय्यां जहत्युभयपक्षविनीतनिद्राः
　स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते[1] ।
येषां विभान्ति तरुणारुणरागयोगा-
　द्भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥ ७२ ॥

शय्यामिति ॥ उभाभ्यां पक्षाभ्यां पार्श्वाभ्यां विनीताऽपगता निद्रा येषां त उभयपक्षविनीतनिद्राः । अत्र समासविषय 'उभ'शब्दस्थाने 'उभय'शब्दप्रयोग एव साधुरित्यनुसंधेयम् । यथाह कैयटः—'-"उभादुदात्तो नित्यम्" इति नित्यग्रहण-स्येदं प्रयोजनं वृत्तिविषय 'उभ'शब्दस्य प्रयोगो मा भूत् । 'उभय'शब्दस्यैव यथा स्यात् । उभयपुत्र इत्यादि भवति' इति । मुखराण्युत्थानचलनाच्छब्दायमानानि शृङ्खलानि निगडानि कर्षन्तीति तथोक्तास्ते तव स्तम्बे रमन्त इति स्तम्बेरमा हस्तिनः । 'स्तम्बकर्णयो रमिजपोः' (पा. ३।२।१३) इत्यच्प्रत्ययः । 'हस्तिसूच-कयोः' (वा. १९९४) इति वक्तव्यात् । 'इभः स्तम्बेरमः पद्मी' इत्यमरः । 'तत्पु-रुषे कृति बहुलम्' (पा.६।३।१४) इति सप्तम्या अलुक् । शय्यां जहति त्यजन्ति येषां स्तम्बेरमाणाम् । दन्ताः कोशाः इव दन्तकोशाः । दन्तकुड्मलास्तरुणा-रुणरागयोगाद्बालार्कारुणसंपर्काद्धेतोर्भिन्नाद्रिगैरिकतटा[2] इव विभान्ति । धातुरक्ता इव भान्तीत्यर्थः ॥ ७२ ॥

दीर्घेष्वमी नियमिताः पटमण्डपेषु
　निद्रां विहाय वनजाक्ष[3] ! वनायुदेश्याः ।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
　लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥ ७३ ॥

दीर्घेष्विति ॥ हे वनजाक्ष[2] नीरजाक्ष ! 'वनं नीरं वनं सत्त्वम्' इति शाश्वतः । दीर्घेषु पटमण्डपेषु नियमिता बद्धा वनायुदेश्या वनायुदेशे[1]

पाठा०—१ 'सेनां गजा मुखर°'. २ 'कान्तियोगात्'. ३ 'वनजाक्ष वनायु-जास्ते'; 'वनजेक्षणबाह्लिदेश्याः'.

टिप्प०—1 भिन्नाद्रिगैरिकतटा इव भेदं प्राप्ता गैरिकस्थली इव इत्यन्वयः । उभयपक्षाभ्यां वामदक्षिणपार्श्वाभ्यां परिवर्तनेन विनीताऽपगता निद्रा येषां ते उभयपक्षविनीतनिद्राः । हस्तिनां स्वभावोऽयम् । हस्तिनः पश्चिमरात्रौ जागरूका भवन्ति । मुखराः शब्दायमानाः शृङ्खलाः कर्षयन्त्येवंशीला मुखरशृङ्खलकर्षिणः- इति सुमति० ।

2 वनं पानीयं तस्माज्जातं वनजं कमलम्; तद्वदक्षिणी यस्य स तत्संबुद्धौ-इति शिशु० ।

भवाः । 'पारसीका वनायुजाः' इति हलायुधः । अमी वाहा अश्वा निद्रां विहाय पुरोगतानि लेह्यान्यास्वाद्यानि सैन्धवशिलाशकलानि । 'सैन्धवोऽस्त्री शितशिवं माणिमन्थं च सिन्धुजे' इत्यमरः । वक्त्रोष्मणा मलिनयन्ति मलिनानि कुर्वन्ति । उक्तं च सिद्धयोगसंग्रहे—'पूर्वाह्णकाले चाश्वानां प्रायशो लवणं हितम् । शूलानाहविबन्धघ्नं लवणं सैन्धवं वरम् ॥' इत्यादि ॥ ७३ ॥

> भवति विरलभक्तिर्म्लानपुष्पोपहारः
> स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः ।
> अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्ता-
> मनुवदति शुकस्ते मञ्जुवाक्पञ्जरस्थः ॥ ७४ ॥

भवतीति ॥ म्लानः पुष्पोपहारः पुष्पपूजा म्लानत्वादेव विरलभक्तिर्विरलरचनो भवति । प्रदीपाश्च स्वकिरणानां परिवेषस्य मण्डलस्योद्भेदेन स्फुरणेन शून्या भवन्ति, निस्तेजस्का भवन्तीत्यर्थः । अपि चायं मञ्जुवाङ्मधुरवचनः पञ्जरस्थस्ते तव शुकस्त्वत्प्रबोधनिमित्तं प्रयुक्तामुच्चारितां नोऽस्माकं गिरं वाणीमनुवदति, अनुकृत्य वदतीत्यर्थः । इत्थं प्रभातलिङ्गानि वर्तन्ते, अतः प्रबोद्धव्यमिति भावः ॥ ७४ ॥

> इति विरचितवाग्भिर्बन्दिपुत्रैः कुमारः
> सपदि विगतनिद्रस्तल्पमुज्झांचकार ।
> मदपटुनिनदद्भिर्बोधितो राजहंसैः
> सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥ ७५ ॥

इतीति ॥ इतीत्थं विरचितवाग्भिर्बन्दिपुत्रैर्वैतालिकैः । 'पुत्र'ग्रहणं समानवयस्कत्वद्योतनार्थम् । सपदि विगतनिद्रः कुमारः । तल्पं शय्याम् । 'तल्पं शय्याट्टदारेषु' इत्यमरः । उज्झांचकार विससर्ज । 'इजादेश्च गुरुमतोऽनृच्छः' (पा. ३।१।३६) इत्याम्प्रत्ययः । कथमिव ? मदेन पटु मधुरं निनदद्भी राजहंसैर्बोधितः सुप्रतीकाख्यः सुरगज ईशानदिग्गजः । गङ्गाया इदं

---

पाठा०—१ 'इति स विगतनिद्रस्तल्पमल्पेतराशः सुरगज इव गङ्गासैकतं सुप्रतीकः । परिजनवनितानां पादयोर्न्यापृतानां वलयमणिविदिष्टं प्रच्छदान्तं मुमोच ॥'. २ 'विहितनिद्रः'; 'विहतनिद्रः'.

---

टिप्प०—1 श्लेष्मनिवारणार्थमास्वाद्यानि-इति वल्लभः । मुख्यर्थं लेह्यानि-इति शिशु० ।

गाङ्गम्। सैकतं पुलिनमिव। 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः। 'सिकताशर्कराभ्यां च' (पा. ५।२।१०४) इत्यण्प्रत्ययः। 'सुप्रतीक'ग्रहणं प्रायशः कैलासवासिनस्तस्य नित्यं गङ्गातटविहारसंभवादित्यनुसंधेयम्॥ ७५॥

अथ विधिमवसाय्य शास्त्रदृष्टं
दिवसमुखोचितमञ्चिताक्षिपक्ष्मा।
कुशलविरचितानुकूलवेषः
क्षितिपसमाजमगात्स्वयंवरस्थम्॥ ७६॥

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृतावजस्वयंवराभिगमनो नाम पञ्चमः सर्गः।

---

अथेति॥ अथोत्थानानन्तरम्। अञ्चितानि चारूण्यक्षिपक्ष्माणि यस्य सोऽजः शास्त्रे दृष्टमवगतं दिवसमुखोचितं प्रातःकालोचितं विधिमनुष्ठानमवसाय्य समाप्य। स्यतेर्ण्यन्ताल्ल्यप्। कुशलैः प्रसाधनदक्षैर्विरचितोऽनुकूलः स्वयंवरोचितो वेषो नेपथ्यं यस्य स तथोक्तः सन् स्वयंवरस्थं क्षितिपसमाजं राजसमूहमगादगमत्। 'इणो गा लुङि' (पा. २।४।४५) इति गादेशः। पुष्पिताग्रावृत्तमेतत्। तल्लक्षणम्—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति॥ ७६॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशव्याख्यायां संजीविनीसमाख्यायां पञ्चमः सर्गः।

---

## षष्ठः सर्गः।

जाह्नवी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ।
कामारिं कामतातं वा कंचिदेकं भजामहे॥

स तत्र मञ्चेषु मनोज्ञवेषान्सिंहासनस्थानुपचारवत्सु।
वैमानिकानां मरुतामपश्यदाकृष्टलीलान्नरलोकपालान्॥ १॥

स इति॥ सोऽजस्तत्र स्थान उपचारवत्सु राजोपकरणवत्सु मञ्चेषु पर्यङ्केषु सिंहासनस्थान् मनोज्ञवेषान् मनोहरनेपथ्यान् वैमानिकानां विमानैश्चर-

पाठा०—१ 'मनुरूपवेषः'.

टिप्प०—1 सिंहासनस्योपरि सिंहासने मञ्चकं कथ्यते—इति सुमतिः।

ताम्। 'चरति' (पा. ४।४।८) इति ठक्प्रत्ययः। **मरुतामपराणाम्**। 'मरुतौ पवनामरौ' इत्यमरः। **आकृष्टलीलान्** गृहीतसौभाग्यान्। आकृष्टमरुल्लीलानित्यर्थः। सापेक्षत्वेऽपि गमकत्वात्समासः। नरलोकं पालयन्तीति **नरलोकपालाः**। कर्मण्यण्प्रत्ययः। तान्भूपालानपश्यत्। सर्गेऽस्मिन्नुपजातिश्छन्दः॥ १॥

**रतेर्गृहीतानुनयेन कामं प्रत्यर्पितस्वाङ्गमिवेश्वरेण।**
**काकुत्स्थमालोकयतां नृपाणां मनो बभूवेन्दुमतीनिराशम्॥२॥**

**रतेरिति**॥ 'रतिः स्मरप्रियायां च रागे च सुरते स्मृता' इति विश्वः। **रतेः** कामप्रियाया **गृहीतानुनयेन** स्वीकृतप्रार्थनेन। गृहीतरत्यनुनयेनेत्यर्थः। सापेक्षत्वेऽपि गमकत्वात्समासः। **ईश्वरेण** हरेण **प्रत्यर्पितस्वाङ्गं काममिव** स्थितं **काकुत्स्थमजमालोकयतां नृपाणां मन इन्दुमतीनिराशं** वैदर्भीनिःस्पृहं **बभूव**, 'इन्दुमती सत्पतिमेनं विहाय नास्मान्वरिष्यति' इति निश्चिक्युरित्यर्थः। सर्वातिशयसौन्दर्यं मत्वेति भावः॥ २॥

**वैदर्भनिर्दिष्टमसौ कुमारः क्लृप्तेन सोपानपथेन मञ्चम्।**
**शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह॥ ३॥**

**वैदर्भेति**॥ **असौ** कुमारो **वैदर्भेण** भोजेन **निर्दिष्टं** प्रदर्शितं **मञ्चं** पर्यङ्कं **क्लृप्तेन** सुविहितेन **सोपानपथेन**। **मृगराजशावः** सिंहपोतः। 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः। **शिलानां विभङ्गैर्**भङ्गीभिस्**तुङ्ग**मुन्नतं **नगोत्सङ्गं** शैलाग्रमिव। **आरुरोह**॥ ३॥

**परार्ध्यवर्णास्तरणोपपन्नमासेदिवान्रत्नवदासनं सः।**
**भूयिष्ठमासीदुपमेयकान्तिर्मयूरपृष्ठाश्रयिणा गुहेन॥ ४॥**

**परार्ध्येति**॥ **परार्ध्याः** श्रेष्ठा **वर्णा** नीलपीतादयो यस्य तेनास्**तरणेन** कम्बलादिनो**पपन्नं** संगतं **रत्नवद्**रत्नखचितम**ासनं** सिंहासनम**ासेदिवान**धिष्ठितवान् **सो**ऽजः। **मयूरपृष्ठाश्रयिणा गुहेन** सेनान्या सह। 'सेनानीरग्निभूर्गुहः' इत्यमरः। **भूयिष्ठ**मत्यर्थ**मुपमेयकान्तिरासीत्**। मयूरस्य विचित्ररूपत्वात्तत्साम्यं रत्नासनस्य, तद्द्वारा च तदारूढयोरपीति भावः॥ ४॥

---

पाठा०—१ 'अथो'.

---

टिप्प०—1 प्रशस्तवर्णाच्छादनपट्टयुक्तम्—इति वल्लभः।

**तासु श्रिया राजपरम्परासु प्रभाविशेषोदयदुर्निरीक्ष्यः ।**
**सहस्रधात्मा व्यरुचद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव ॥ ५ ॥**

**तास्विति** ॥ **तासु** राजपरम्परासु **श्रिया** लक्ष्म्या कर्त्र्या **पयोमुचां** मेघानां **पङ्क्तिषु** [2]**विद्युतेव सहस्रधा विभक्तः** [3]। तरंगेषु तरणिरिव स्वयमेक एव प्रत्येकं संक्रामित इत्यर्थः । [4]**प्रभाविशेषस्योदयेना**विर्भावेन **दुर्निरीक्ष्यो** दुर्दर्श **आत्मा** श्रियः स्वरूपं **व्यरुचद्**द्योतिष्ट । 'द्युद्भ्यो लुङि' (पा. १।३।९१) इति परस्मैपदम् । द्युतादित्वादङ्प्रत्ययः । तस्मिन्समये प्रत्येकं संक्रान्तलक्ष्मीकतया तेषां किमपि दुरासदं तेजः प्रादुरासीदित्यर्थः ॥ ५ ॥

**तेषां महार्हासनसंस्थितानामुदारनेपथ्यभृतां स मध्ये ।**
**रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः ॥ ६ ॥**

**तेषामिति** ॥ **महार्हासनसंस्थितानां** श्रेष्ठसिंहासनस्थानाम् । **उदार-नेपथ्यभृता**मुज्ज्वलवेषधारिणां **तेषां** राज्ञां **मध्ये** । **कल्पद्रुमाणां** मध्ये **पारिजात इव** सुरद्रुमविशेष **इव** । 'पञ्चैते देवतरवो मन्दारः पारिजातकः । संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥' इत्यमरः । **स रघुसूनुरेव धाम्ना** तेजसा । **'भूम्ना'** इति पाठेऽतिशयेनेत्यर्थः । **रराज** । अत्र '[5]कल्पद्रुम'शब्दः पञ्चान्यतमविशेषवचनः ।

---

**पाठा०—१ 'सहस्रधामा'. २ 'संश्रितानाम्'.**

---

टिप्प०—1 अत्र मेघोपमा राज्ञां मालिन्यार्थम्-इति हेमाद्रिः ।

2 विद्युत्स्वरूपमिव, विद्युत्पक्षे प्रभाविशेषो वर्णभेदः । 'वाताय कपिला विद्युदातपायातिलोहिता । पीता शस्याय विज्ञेया दुर्भिक्षाय सिता भवेत्'-इति हेमाद्रिः ।

3 अखण्डत्वेऽपि विभक्तशब्दे यथाऽत्रैव, 'विभक्तात्मा विभुस्तासामेकः कुक्षिष्वनेकधा'-इति हेमाद्रिः ।

4 प्रभाया विशेषः प्रभाविशेषः, प्रभाविशेषस्योदयः प्रभाविशेषोदयः, प्रभाविशेषोदयेन दुर्निरीक्ष्यः दीप्त्यतिशयदुर्दर्शः । कया इव ? विद्युता इव । यथा विद्युता सौदामिन्या आत्मा तेजःपुञ्जः पयोमुचां मेघानां पंक्तिषु श्रेणिषु सहस्रधा विभक्तः स व्यरुचत् शोभते-इति वल्लभः ॥ दिनकरमिश्रास्तु-'सहस्रधामा' इति पाठमादृत्य यथा मेघपंक्तिषु विद्योतनं विद्युत्प्रकाशस्तथा सहस्रधामा सूर्यो विराजते- इति व्याचख्युः ।

5 कल्पयति मनोरथं कल्पः, स चासौ द्रुमश्च तेषां मध्ये । पारमस्यास्तीति पारी, पारिण्यब्धौ जातः पारिजात इव । पञ्चानां मध्य एकस्य कल्पद्रुमस्य शब्दवाच्यत्वं यद्यपि प्रतीयते तथापि प्रवृत्तिनिमित्तस्य संकल्पार्थस्य 'कल्प'शब्दार्थस्य पूरणेन पञ्चानामपि साधारण्यात् 'कल्पद्रुमाणाम्' इति बहुवचनम् । तथा माघकाव्ये (५।१६) 'कल्पद्रुमैः सह विचित्रफलैर्विरेजुः'-इति हेमाद्रिः ।

उपकल्पयन्ति मनोरथानिति व्युत्पत्त्या सुरद्रुममात्रोपलक्षकतया प्रयुक्त इत्यनुसंधेयम्। कल्पा इति द्रुमाः कल्पद्रुमा इति विग्रहः ॥ ६ ॥

**नेत्रव्रजाः पौरजनस्य तस्मिन्विहाय सर्वान्नृपतीन्निपेतुः ।**
**मदोत्कटे रेचितपुष्पवृक्षा गन्धद्विपे वन्य इव द्विरेफाः ॥ ७ ॥**

**नेत्रेति** ॥ **पौरजनस्य नेत्रव्रजाः सर्वान्नृपतीन्विहाय तस्मिन्नजे निपेतुः** । स एव सर्वोत्कर्षेण ददृश इत्यर्थः । कथमिव ? **मदोत्कटे** मदेनोद्भिन्नगण्डे निर्भरमदे वा **वन्ये गन्धद्विपे** गन्धप्रधाने द्विपे गजे । **रेचिता** रिक्तीकृताः **पुष्पाणां वृक्षा** यैस्ते । त्यक्तपुष्पवृक्षा इत्यर्थः । **द्विरेफा** भृङ्गा **इव** । द्विपस्य 'वन्य'विशेषणं द्विरेफाणां पुष्पवृक्षत्यागसंभावनार्थं कृतम् ॥ ७ ॥

त्रिभिर्विशेषकमाह—

**अथ स्तुते वन्दिभिरन्वयज्ञैः सोमार्कवंश्ये नरदेवलोके ।**
**संचारिते चागुरुसारयोनौ धूपे समुत्सर्पति वैजयन्तीः ॥ ८ ॥**

**अथेति** ॥ अथान्वयज्ञै राजवंशाभिज्ञैर्वन्दिभिः स्तुतिपाठकैः । 'वन्दिनः स्तुतिपाठकाः' इत्यमरः । **सोमार्कवंश्ये** सोमसूर्यवंशभवे **नरदेवलोके** राजसमूहे **स्तुते** सति । विवेशेत्युत्तरेण संबन्धः । एवमुत्तरत्रापि योज्यम् । **संचारिते** समन्तात्प्रचारिते । **अगुरुसारो योनिः** कारणं यस्य तस्मिन् **धूपे** च **वैजयन्तीः** पताकाः **समुत्सर्पति** सति अतिक्रम्य गच्छति सति ॥ ८ ॥

**पुरोपकण्ठोपवनाश्रयाणां कलापिनामुद्धतनृत्यहेतौ ।**
**प्रध्मातशङ्खे परितो दिगन्तांस्तूर्यस्वने मूर्च्छति मङ्गलार्थे ॥ ९ ॥**

**पुरोपकण्ठेति** ॥ किंच, **पुरस्योपकण्ठे** समीप **उपवनान्याश्रयो** येषां तेषां **कलापिनां** बर्हिणामुद्धतनृत्यहेतौ मेघध्वनिसादृश्यात्ताण्डवकारणे । **प्रध्माताः** पूरिताः **शङ्खा** यत्र तस्मिन् । **मङ्गलार्थे** मङ्गलप्रयोजनके । **तूर्यस्वने** वाद्यघोषे । **परितः** सर्वतो **दिगन्तान्मूर्च्छति** व्याप्नुवति सति ॥ ९ ॥

---

पाठा०—१ 'शिखास्थापितकेतुमाले'. 'शिखाभावितकेतुमाले'. २ 'आश्रितानाम्'. ३ 'शिखण्डिनाम्'.

---

टिप्प०—1 'यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः । तं गन्धहस्तिनं प्राहुर्नृपतेर्विजयावहम्' इति-गजशास्त्रकाराः-इति दिनकर० ।

मनुष्यवाह्यं चतुरस्रयानमध्यास्य कन्या परिवारशोभि।
विवेश मञ्चान्तरराजमार्गं पतिंवरा क्लृप्तविवाहवेषा ॥ १० ॥

मनुष्येति ॥ पतिं वृणोतीति **पतिंवरा** स्वयंवरा। 'अथ स्वयंवरा। पतिंवरा च वर्याथ' इत्यमरः। 'संज्ञायां भृतॄवृजि–' (पा. ३।२।४६) इत्यादिना खच्प्रत्ययः। **क्लृप्तविवाहवेषा** कन्येन्दुमती **मनुष्यैर्वाह्यं परिवारेण** परिजनेन **शोभि चतुरस्रयानं** चतुरस्रवाहनं शिबिकामध्यास्यारुह्य **मञ्चान्तरे** मञ्चमध्ये यो राजमार्गस्तं **विवेश** ॥ १० ॥

तस्मिन्विधानातिशये विधातुः कन्यामये नेत्रशतैकलक्ष्ये।
निपेतुरन्तःकरणैर्नरेन्द्रा देहैः स्थिताः केवलमासनेषु ॥ ११ ॥

**तस्मिन्निति** ॥ **नेत्रशतानामेकलक्ष्य** एकदृश्ये **कन्यामये** कन्यारूपे **तस्मिन्विधातुर्विधानातिशये** सृष्टिविशेषे **नरेन्द्रा अन्तःकरणैर्निपेतुः**। **आसनेषु देहैः** केवलं देहैरेव **स्थिताः**। देहानपि विस्मृत्य तत्रैव दत्तचित्ता बभूवुरित्यर्थः। अन्तःकरणकर्तृके निपतने नरेन्द्राणां कर्तृत्वव्यपदेश आदरातिशयार्थः ॥ ११ ॥

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥ १२ ॥

**तामिति** ॥ तामिन्दुमतीं **प्रति**। **अभिव्यक्तमनोरथानां** प्ररूढाभिलाषाणां **महीपतीनां** राज्ञां **प्रणयाग्रदूत्यः**। प्रणयः प्रार्थना प्रेम वा। 'प्रणयास्त्वमी। विस्रम्भयाञ्चाप्रेमाणः' इत्यमरः। प्रणयेष्वग्रदूत्यः प्रथमदूतिकाः। प्रणयप्रकाशकत्वसाम्याद्दूतीत्वव्यपदेशः। **विविधाः शृङ्गारचेष्टाः** शृङ्गारविकाराः **पादपानां प्रवालशोभाः** पल्लवसंपद **इव बभूवु**रुत्पन्नाः। अत्र शृङ्गारलक्षणं रससुधाकरे—'विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः। नीता सदस्यरस्यत्वं रतिः शृङ्गार उच्यते ॥'

पाठा०–१ 'चतुरं च यानम्'.

टिप्प०—1 इन्दुमतीदर्शनमात्रेण तेषां मन आचकर्ष वाक्यार्थः–इति हेमाद्रिः।

2 'अन्योन्यानुरक्तयोः स्त्रीपुंसयोश्चेष्टाविशेषः शृङ्गारः' इति रुद्रटः; यथा–'स्वमिन्द्रियाणां प्रवृत्तो वाङ्मनःसुखाभिमानः शृङ्गारः' इति भोजः। यदाह—'चेष्टा भवन्ति यत्रार्योर्या रत्युभावतिरिक्तयोः। संभोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः।', 'ऋतुमाल्यालंकारैः प्रियजनगान्धर्वसेवाभिः। उपवनगमनविहारैः शृङ्गाररसः समुद्भवति। नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमोदैश्च। ललितैश्चाङ्गविहारैस्तदभिनयः संप्रयोक्तव्यः' इति भरतः।

रतिरिच्छाविशेषः । तच्चोक्तं तत्रैव—'यूनोरन्योन्यविषयस्थायिनीच्छा रतिः स्मृता' इति । 'चेष्टा'शब्देन तदनुभावविशेषा उच्यन्ते । तेऽपि तत्रैवोक्ताः—'भावं मनोगतं साक्षात्स्वहेतुं व्यञ्जयन्ति ये । तेऽनुभावा इति ख्याता भ्रूविक्षेपस्मितादयः । ते चतुर्धा चित्तगात्रवाग्बुद्ध्यारम्भसंभवाः ॥' इति । तत्र गात्रारम्भसंभवांश्चेष्टाशब्दोक्ताननुभावान् 'कश्चित्' ( ६।१३ ) इत्यादिभिः श्लोकैर्वक्ष्यति । शृङ्गाराभासश्चायम्; एकत्रैव प्रतिपादनात् । तदुक्तम्—'एकत्रैवानुरागश्चेत्तिर्यक्शब्दगतोऽपि वा । योषितां बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः ॥' इति ॥ १२ ॥

'शृङ्गारचेष्टा बभूवुः' ( ६।१२ ) इत्युक्तम्, ता एव दर्शयति—

**कश्चित्कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम् ।**
**रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयांचकार ॥ १३ ॥**

**कश्चिदिति** ॥ कश्चिद्राजा **कराभ्यां** पाणिभ्याम्**उपगूढनालं** गृहीतनालम् । **आलोलै**श्चलैः **पत्रैरभिहता**स्ताडिता **द्विरेफा** भ्रमरा येन तत्तथोक्तम् । **रजोभिः** परागैरन्तःपरिवेषं मण्डलं बध्नातीत्य**न्तःपरिवेषबन्धि । लीलारविन्दं भ्रमयांचकार** । 'करस्थलीलारविन्दवत्त्वयाऽहं भ्रमयितव्य.' इति—नृपाभिप्रायः । 'हस्तघूर्णकोऽयमपलक्षणकः'—इतीन्दुमत्यभिप्रायः ॥ १३ ॥

**विस्रस्तमंसादपरो विलासी रत्नानुविद्धाङ्गदकोटिलग्नम् ।**
**प्रालम्बमुत्कृष्य यथावकाशं निनाय साचीकृतचारुवक्त्रः ॥१४॥**

**विस्रस्तमिति** ॥ विलसनशीलो **विलासी** । 'वौ कषलसकत्थस्रम्भः' ( पा. ३।२।१४३ ) इति घिनुण्प्रत्ययः । **अपरो** राजा । **अंसा**द्विस्रस्तं **रत्नानुविद्धं** रत्नखचितं यदङ्गदं केयूरं तस्य **कोटिलग्नं प्रालम्ब**मृजुलम्बिनीं स्रजम् । 'प्रालम्बमृजुलम्बि स्यात्कण्ठात्' इत्यमरः । **'प्रावारम्'** इति पाठे उत्तरीयं वस्त्रम् । **उत्कृष्यो**द्धृत्य **साचीकृतं** तिर्यक्कृतं **चारु वक्त्रं** यस्य स तथोक्तः सन्, **यथावकाशं** स्वस्थानं **निनाय** । 'प्रावारोत्क्षेपणच्छलेनाहं त्वामेवं परिरप्स्ये'—इति नृपाभिप्रायः । 'गोपनीयं किंचिदङ्गेऽस्ति ततोऽयं प्रावृणुते'—इतीन्दुमत्यभिप्रायः ॥ १४ ॥

**आकुञ्चिताग्राङ्गुलिना ततोऽन्यः किंचित्समावर्जितनेत्रशोभः ।**
**तिर्यग्विसंसर्पिनखप्रभेण पादेन हैमं विलिलेख पीठम् ॥ १५ ॥**

पाठा०—१ 'अन्तःपरिवेषशोभि'; 'अन्त.परिवारबन्धि'. २ 'प्रावारमालंब्य'; 'प्रालंबमुत्क्षिप्य'. ३ 'यथाप्रदेशम्'. ४ 'शोभी'. ५ 'रत्नांशुसंरक्तनखप्रभेण'.

आकुञ्चितेति ॥ ततः पूर्वोक्तादन्योऽपरो राजा किंचित्समावर्जितनेत्रशोभ ईषदवांवपातितनेत्रशोभः सन् । आकुञ्चिता आभुग्ना अग्राङ्गुलयो यस्य तेन तिर्यग्विसंसर्पिण्यो नखप्रभा यस्य तेन च पादेन हैमं हिरण्मयं पीठं पादपीठं विलिलेख लिखितवान् । पादाङ्गुलीनामाकुञ्चनेन 'त्वं मत्समीपमागच्छ'— इति नृपाभिप्रायः । 'भूमिविलेखकोऽयमपलक्षणकः'—इतीन्दुमत्याशयः । भूमिविलेखनं तु लक्ष्मीविनाशहेतुः ॥ १५ ॥

निवेश्य वामं भुजमासनार्धे तत्संनिवेशादधिकोन्नतांसः ।
कश्चिद्विवृत्तत्रिकभिन्नहारः सुहृत्समाभाषणतत्परोऽभूत् ॥१६॥

निवेश्येति ॥ कश्चिद्राजा वामं भुजमासनार्धे सिंहासनैकदेशे निवेश्य संस्थाप्य तत्संनिवेशात्तस्य वामभुजस्य संनिवेशात्संस्थापनादधिकोन्नतांऽसो वामांस एव यस्य स तथोक्तः सन् । विवृत्ते परावृत्ते त्रिके त्रिकप्रदेशे भिन्नहारो लुण्ठितहारः सन् । 'पृष्ठवंशाधरे त्रिकम्' इत्यमरः । सुहृत्समाभाषणतत्परोऽभूत् । वामपार्श्ववर्तिनैव मित्रेण संभाषितुं प्रवृत्त इत्यर्थः । अत एव विवृत्तत्रिकत्वं घटते । 'त्वया वामाङ्गे निवेशितया सहैवं वार्तां करिष्ये'—इति नृपाभिप्रायः । परं 'दृष्ट्वा पराङ्मुखोऽयं न कार्यकर्ता'—इतीन्दुमत्यभिप्रायः ॥ १६ ॥

विलासिनीविभ्रमदन्तपत्रमापाण्डुरं केतकबर्हमन्यः ।
प्रियानितम्बोचितसंनिवेशैर्विपाटयामास युवा नखाग्रैः ॥ १७ ॥

विलासिनीति ॥ अन्यो युवा विलासिन्याः प्रियाया विभ्रमार्थं दन्तपत्रं दन्तपत्रभूतमापाण्डुरं केतकबर्हं केतकदलम् । 'दलेऽपि बर्हम्' इत्यमरः । प्रियानितम्ब उचितसंनिवेशैरभ्यस्तनिक्षेपणैर्नखाग्रैर्विपाटयामास । 'अहं तव नितम्ब एवं नखव्रणानि दास्यामि'–इति नृपाशयः । 'तृणच्छेदकवत् पत्रपाटकोऽयमपलक्षणकः'—इतीन्दुमत्याशयः ॥ १७ ॥

कुशेशयाताम्रतलेन कश्चित्करेण रेखाध्वजलाञ्छनेन ।
रत्नाङ्गुलीयप्रभयानुविद्धानुदीरयामास सलीलमक्षान् ॥ १८ ॥

कुशेशयेति ॥ कश्चिद्राजा कुशेशयं शतपत्रमिवाताम्रं तलं यस्य तेन । 'शतपत्रं कुशेशयम्' इत्यमरः । रेखारूपो ध्वजो लाञ्छनं यस्य तेन करेण । अङ्गुषु भवान्यङ्गुलीयान्यूर्मिकाः । 'अङ्गुलीयकमूर्मिका' इत्यमरः । 'जिह्वामूलाङ्गुलेश्छः' (पा. ४।३।६२) इति छप्रत्ययः । रत्नानामङ्गुलीयानि तेषां प्रभयाऽनुविद्धान्

व्याघ्रानक्षान् पाशान्। 'अक्षास्तु देवनाः पाशकाश्च ते' इत्यमरः। **सलीलमुदीरयामासोच्चिक्षेप**। 'अहं त्वया सहैवं रंस्ये'—इति नृपाभिप्रायः। 'अक्षचातुर्यं कापुरुषोऽयम्'—इतीन्दुमत्यभिप्रायः। 'अक्षैर्मा दीव्यः' इति श्रुतिनिषेधात्॥ १८॥

**कश्चिद्यथाभागमवस्थितेऽपि स्वसंनिवेशाद्व्यतिलङ्घिनीव।**
**वज्रांशुगर्भाङ्गुलिरन्ध्रमेकं व्यापारयामास करं किरीटे॥ १९॥**

**कश्चिदिति॥ कश्चिद्यथाभागं** यथास्थानम**वस्थितेऽपि स्वसंनिवेशाद्व्यतिलङ्घिनीव** स्वस्थानाच्चलित इव **किरीटे** वज्राणां किरीटगतानामंशवो **गर्भे** येषां तान्यङ्गुलिरन्ध्राणि यस्य तमेकं **करं व्यापारयामास**। 'किरीटवन्मम शिरसि स्थितामपि त्वां भारं न मन्ये'—इति नृपाभिप्रायः। 'शिरसि न्यस्तहस्तोऽयमपलक्षणः'—इतीन्दुमत्यभिप्रायः॥१९॥

**ततो नृपाणां श्रुतवृत्तवंशा पुंवत्प्रगल्भा प्रतिहाररक्षी।**
**प्राक्संनिकर्षं मगधेश्वरस्य नीत्वा कुमारीमवदत्सुनन्दा॥ २०॥**

**तत इति॥ ततो**ऽनन्तरं **नृपाणां श्रुतवृत्तवंशा**। श्रुतवृत्तवंशेत्यर्थः। सापेक्षत्वेऽपि गमकत्वात्समासः। **प्रगल्भा** वाग्मिनी **सुनन्दा** सुनन्दाख्या प्रतिहारं रक्षतीति **प्रतिहाररक्षी** द्वारपालिका। कर्मण्यण्प्रत्ययः। 'टिड्ढाणञ्—' (पा.४।१।१५) इत्यादिना ङीप्। **प्राक्** प्रथमं **कुमारी**मिन्दुमतीं **मगधेश्वरस्य संनिकर्षं** समीपं **नीत्वा पुंवत्** पुंसा तुल्यम्। 'तेन तुल्यं क्रिया चेद्वतिः' (पा. ५।१।११५) इति वतिप्रत्ययः। **अवदत्**॥ २०॥

**असौ शरण्यः शरणोन्मुखानामगाधसत्त्वो मगधप्रतिष्ठः।**
**राजा प्रजारञ्जनलब्धवर्णः परंतपो नाम यथार्थनामा॥ २१॥**

**असाविति॥ असौ** राजा। 'असौ' इति पुरोवर्तिनो निर्देशः। एवमुत्तरत्रापि द्रष्टव्यम्। **शरणोन्मुखानां** शरणार्थिनां **शरण्यः** शरणे रक्षणे साधुः। इति यत्प्रत्ययः। शरणं भवितुमर्हः शरण्य इति–नाथनिरुक्तिर्निर्मूलैव। **अगाधसत्त्वो** गम्भीरस्वभावः। 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः' इति विश्वः। मगधा जनपदाः, तेषु प्रतिष्ठास्पदं यस्य स **मगधप्रतिष्ठः**। 'प्रतिष्ठाकृत्यमास्पदम्' इत्यमरः। **प्रजारञ्जने लब्धवर्णो** विचक्षणः। यद्वा,–प्रजारञ्जनेन लब्धोत्कर्षः। पराञ्शत्रूंस्तापयतीति

---

पाठा०–१ 'यथास्थानम्'. २ 'स्वसंनिवेशा'. ३ 'वज्रांशुभिन्नाङ्गुलिरन्ध्रम्'; 'वज्रांशुभिन्नाङ्गुलिरत्नम्'. ४ 'प्रतिहाररक्षा'.

परंतपः परंतपाख्यः । 'द्विषत्परयोस्तापेः' (पा.३।२।३९) इति खच्प्रत्ययः । 'खचि ह्रस्वः' (पा.६।४।९४) इति ह्रस्वः । 'अरुर्द्विषदजन्तस्य मुम्' (पा.६।३।६७) इति मुमागमः । नामेति प्रसिद्धौ । यथार्थनामा । शत्रुसंतापनादिति भावः ॥२१॥

कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥२२॥

काममिति ॥ अन्ये नृपाः कामं सहस्रशः सन्तु । भूमिमनेन राजन्वतीं शोभनराजवतीमाहुः । नैतादृक्कश्चिदस्तीत्यर्थः । 'सुराज्ञि देशे राजन्वान्स्यात्ततोऽन्यत्र राजवान्' इत्यमरः । 'राजन्वान्सौराज्ये' (पा. ८।२।१४) इति निपातनात्साधुः । तथा हि-नक्षत्रैरश्विन्यादिभिस्ताराभिः साधारणैर्ज्योतिर्भिर्ग्रहैर्भौमादिभिश्च संकुलाऽपि रात्रिश्चन्द्रमसैव ज्योतिरस्या अस्तीति ज्योतिष्मती । नान्येन ज्योतिषेत्यर्थः ॥ २२ ॥

क्रियाप्रबन्धादयमध्वराणामजस्रमाहूतसहस्रनेत्रः ।
शच्याश्चिरं पाण्डुकपोललम्बान्मन्दारशून्यानलकांश्चकार ॥२३॥

क्रियेति ॥ अयं परंतपोऽध्वराणां क्रतूनां क्रियाप्रबन्धादनुष्ठानसातत्यात्, अविच्छिन्नादनुष्ठानादित्यर्थः । अजस्रं नित्यमाहूतसहस्रनेत्रः सन्, चिरं शच्या अलकान् पाण्डुकपोलयोर्लम्बान्स्रस्तान् । पचाद्यच् । मन्दारैः कल्पद्रुमकुसुमैः शून्यांश्चकार । प्रोषितभर्तृका हि केशसंस्कारं न कुर्वन्ति । 'प्रोषिते मलिना कृशा' इति 'क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥' (याज्ञ० १।३।८४) इति च स्मरणात् ॥ २३ ॥

अनेन चेदिच्छसि गृह्यमाणं पाणिं वरेण्येन कुरु प्रवेशे ।
प्रासादवातायनसंश्रितानां नेत्रोत्सवं पुष्पपुराङ्गनानाम् ॥ २४ ॥

अनेनेति ॥ वरेण्येन वरणीयेन । वृणोतेरौणादिक एन्यप्रत्ययः । अनेन राज्ञा गृह्यमाणं पाणिमिच्छसि चेत् । पाणिग्रहणमिच्छसि चेदित्यर्थः । प्रवेशे

पाठा०—१ 'रुचि'. २ 'सहस्रसंख्यः'. ३ 'संश्रयाणां'; 'संस्थितानाम्'.

टिप्प०—1 परंतपत्वेन क्रूरत्वं लोकरक्षणव्यग्रता चेन्दुमत्या वैराग्यसूचनम् । अजव्यतिरिक्तेषु स्तुतिनिन्दापरत्वात् सर्वत्र लेशालंकारः-इति दिनकर० ।

2 एतेन तस्य यज्ञकर्मैकपरत्वेनेन्दुमत्या वैराग्यहेतुत्वं सूचितम्-इति दिनकर० ।

3 चेदिति ससार्वत्रिकाः-इति हेमाद्रिः ॥ अनेनाननोऽनंगाकरः सुनंदया सूचितः-इति शिशु० ।

प्रवेशकाले **प्रासादवातायनसंस्थितानां** राजभवनगवाक्षस्थितानां **पुष्पपुराङ्गनानां** पाटलिपुराङ्गनानां **नेत्रोत्सवं कुरु**। सर्वोत्तमानां तासामपि दर्शनीया भविष्यसीति भावः ॥ २४ ॥

**एवं तयोक्ते तमवेक्ष्य किंचिद्विस्रंसिदूर्वाङ्कमधूकमाला।**
**ऋजुप्रणामक्रियथैव तन्वी प्रत्यादिदेशैनमभाषमाणा ॥ २५ ॥**

**एवमिति ॥ एवं तया** सुनन्दयो**क्ते** सति **तं** परंतप**मवेक्ष्य किंचिद्विस्रंसिनी दूर्वाङ्का** दूर्वाचिह्ना **मधूकमाला** गुडपुष्पमाला यस्याः सा। 'मधूके तु गुडपुष्पमधुद्रुमौ' इत्यमरः। वरणे शिथिलप्रयत्नेति भावः। **तन्वी**न्दुमती। **एनं** नृप**मभाषमाणम्**। **ऋज्व्या** भावशून्यया **प्रणामक्रिययैव प्रत्यादिदेश** परिजहार ॥ २५ ॥

**तां सैव वेत्रग्रहणे नियुक्ता राजान्तरं राजसुतां निनाय।**
**समीरणोत्थेव तरंगलेखा पद्मान्तरं मानसराजहंसीम् ॥ २६ ॥**

**तामिति ॥ सैव** नान्या। चिरज्ञत्वादिति भावः। **वेत्रग्रहणे नियुक्ता** दौवारिकी सुनन्दा **तां राजसुतां राजान्तर**मन्यराजानं **निनाय**। नयतिर्द्विकर्मकः। कथमिव? **समीरणोत्था** वातोत्पन्ना **तरंगलेखो**र्मिपङ्क्ति**र्मानसे** सरसि या **राजहंसी** तां **पद्मान्तरमिव** ॥ २६ ॥

**जगाद चैनामयमङ्गनाथः सुराङ्गनाप्रार्थितयौवनश्रीः।**
**विनीतनागः किल सूत्रकारैरैन्द्रं पदं भूमिगतोऽपि भुङ्क्ते ॥ २७॥**

**जगादेति ॥ एना**मिन्दुमतीं **जगाद**। किमिति? **अयमङ्गनाथो**ऽङ्गदेशाधीश्वरः **सुराङ्गना**भिः **प्रार्थिता** कामिता **यौवनश्री**र्यस्य स तथोक्तः। पुरा किलैनमिन्द्रसाहाय्यार्थमिन्द्रपुरगामिनमकामयन्ताप्सरस इति प्रसिद्धिः। किंच, **सूत्रकारै**र्गजशास्त्रकृद्भिः पालकाप्यादिभिर्महर्षिभि**र्विनीतनागः** शिक्षितगजः। **'किल'** इत्यैतिह्ये। अत एव **भूमिगतोऽप्यैन्द्रं भुङ्क्ते**। भूलोक एव स्वर्गसुखमनुभवतीत्यर्थः। गजाप्सरोदेवर्षिसेव्यत्वं 'ऐन्द्रपद'शब्दार्थः। पुरा किल कुतश्चिच्छापकारणा-

**पाठा०**—१ 'इव'. २ 'तरंगमाला'. ३ 'विनीतभागः किल सूत्रकारैः'; 'विनीतभागः किल सत्रकारैः'.

टिप्प०—1 अत्र '"संश्रयाणां' इति पाठमादृत्य संश्रयाणां संस्थितानामित्युक्तम्; संपूर्वात् निवर्तेर्मूर्तिवाचकादनड्· इत्याह सुमति०।

2 विवाहसमये कन्या मङ्गलार्थं दूर्वाङ्कमधूकमालां कण्ठे बिभर्ति-इति सुमति० ॥ मङ्गलार्थत्वेन दूर्वाङ्कमधूकमाला युक्ता इति—दिनकर०।

3 यायजूकोऽयं ब्रह्मचारित्वेन वन्द्यः—इति हेमाद्रिः।

द्भुवमवतीर्णं दिग्गजवर्गमालोक्य स्वयमशक्तैरिन्द्राभ्यनुज्ञयानीतैर्देवर्षिभिः प्रणीतेन शास्त्रेण गजान्वशीकृत्य भुवि संप्रदायं प्रावर्तयदिति कथा गीयते ॥ २७ ॥

अनेन पर्यासयताश्रुबिन्दून्मुक्ताफलस्थूलतमान्स्तनेषु ।
प्रत्यर्पिताः शत्रुविलासिनीनामुन्मुच्य सूत्रेण विनैव हाराः ॥२८॥

**अनेनेति** ॥ **शत्रुविलासिनीनां** स्तनेषु **मुक्ताफलस्थूलतमानश्रुबिन्दून्** । 'अस्रमश्रुणि शोणिते' इति विश्वः । **पर्यासयता** प्रस्तारयता । भर्तृवधादिति भावः । **अनेना**ङ्गनाथेनो**न्मुच्या**क्षिप्य **सूत्रेण विना हारा एव प्रत्यर्पिताः** । अविच्छिन्नाश्रुबिन्दुप्रवर्तनादुत्सूत्रहारार्पणमेव कृतमित्युत्प्रेक्षा गम्यते ॥ २८ ॥

निसर्गभिन्नास्पदमेकसंस्थमस्मिन्द्वयं श्रीश्च सरस्वती च ।
कान्त्या गिरा सूनृतया च योग्या त्वमेव कल्याणि! तयोस्तृतीया ॥२९॥

**निसर्गेति** ॥ **निसर्गतः** स्वभावतो **भिन्नास्पदं** भिन्नाश्रयम् । सहानवस्थानविरोधीत्यर्थः । **श्रीश्च सरस्वती चेति द्वयमस्मि**न्नङ्गनाथ एकत्र संस्था स्थितिर्यस्य तदे**कसंस्थम्** । उभयमिह संगतमित्यर्थः । हे **कल्याणि** । 'बह्वादिभ्यश्च' ( पा. ४।१।४५ ) इति ङीप् । **कान्त्या सूनृतया** सत्यप्रियया **गिरा च योग्या** संसर्गार्हा **त्वमेव तयोः** श्रीसरस्वत्योस्**तृतीया** । समानगुणयोर्युवयोर्दांपत्यं युज्यत एवेति भावः । दक्षिणनायकत्वं चास्य ध्वन्यते । तदुक्तम्—'तुल्योऽनेकत्र दक्षिणः' इति ॥ २९ ॥

अथाङ्गराजादवतार्य चक्षुर्याहीति जन्यामवदत्कुमारी ।
नासौ न काम्यो न च वेद सम्यग्द्रष्टुं न सा भिन्नरुचिर्हि लोकः ॥३०॥

**अथेति** ॥ **अथ कुमार्यङ्गराजाच्चक्षुरवतार्य** । अपनीयेत्यर्थः । **जन्यां** मातृसखीम् । 'जन्या मातृसखीमुदोः' इति विश्वः । सुनन्दां **याहि** गच्छेत्य**वदत्** । **'यातेति जन्यानवदत्'** इति पाठे-जनीं वधूं वहन्तीति जन्या वधूबन्धवः । तान्यात गच्छतेत्यवदत् । 'जन्यो वरवधूज्ञातिप्रियतुल्याहितेऽपि च' इति विश्वः । अथवा,-जन्या वधूभृत्याः । 'भृत्याश्चापि नवोढायाः' इति केशवः । 'संज्ञायां जन्या'

पाठा०—१ 'पर्याश्रयता'. २ 'आक्षिप्य'. ३ 'यातेति यान्यानवदत्'.

टिप्प—1 अनेन प्रायस्तृतीया पत्नी न शुभावहा इत्युक्तम्, तृतीयविवाहेऽर्कविवाहस्य शौनकोक्तत्वात्। सपत्नीभद्राशो वा इति हेमाद्रिः ॥ 'प्रायेण हीश्वरा मूर्खाः पण्डिता अपि निर्धनाः' इत्युपक्रम्य, 'लक्ष्मी-सरस्वतीरूपसपत्नीसमवादस्य त्यागः सचित्र-इत्याद सिद्ध०।

(पा. ४।४।८२) इति यत्प्रत्ययान्तो निपातः। यदत्राह वृत्तिकारः—'जनीं वधूं वहन्तीति जन्या जामातुर्वयस्याः' इति। यच्चामरः—'जन्याः स्निग्धा वरस्य ये' इति। तत्सर्वमुपलक्षणार्थमित्यविरोधः। न चायमङ्गराजनिषेधो दृश्यदोषाच्चापि द्रष्टृदोषादित्याह—नेत्यादिना॥ असावङ्गराजः **काम्यः** कमनीयो **नेति न,** किंतु काम्य एवेत्यर्थः। सा कुमारी **च सम्यग्द्रष्टुं** विवेक्तुं **न वेदेति न,** वेदेत्यर्थः। **लोको** जनो **भिन्नरुचिर्हि** रुचिरमपि किंचित्कस्मैचिन्न रोचते। कि कुर्मो न हीच्छा नियन्तुं शक्यत इति भावः॥ ३०॥

**ततः परं दुःप्रसहं द्विषद्भिर्नृपं नियुक्ता प्रतिहारभूमौ।**
**निदर्शयामास विशेषदृश्यमिन्दुं नवोत्थानमिवेन्दुमत्यै॥ ३१॥**

**तत इति॥ ततो**ऽनन्तरं **प्रतिहारभूमौ** द्वारदेशे **नियुक्ता** दौवारिकी। 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः। **द्विषद्भिः** शत्रुभि**र्दुःप्रसहं** दुःसहम्। शूरमित्यर्थः। **विशेषेण दृश्यं** दर्शनीयम्। रूपवन्तमित्यर्थः। **परम**न्यं **नृपम्। नवोत्थानं** नवोदयमि**न्दुमिव। इन्दुमत्यै निदर्शयामास**॥ ३१॥

**अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः।**
**आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति॥३२॥**

**अवन्तीति॥ उदग्रबाहु**र्दीर्घबाहु**र्विशालवक्षास्तनुवृत्तमध्यः** कृशवर्तुलमध्योऽयं राजा**ऽवन्तिनाथो**ऽवन्तिदेशाधीश्वरः। **त्वष्ट्रा** विश्वकर्मणा। भर्तुस्तेजोवेगमसहमानया दुहित्रा संज्ञादेव्या प्रार्थितेनेति शेषः। **चक्रभ्रमं** चक्राकारं शाणोत्तेजनयन्त्रम्। 'भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुण्डाख्ये शिल्पियन्त्रके' इति विश्वः। **आरोप्य यत्नेनोल्लिखित उष्णतेजाः** सूर्य **इव विभाति**। अत्र मार्कण्डेयः—'विश्वकर्मा त्वनुज्ञातः शाकद्वीपे विवस्वता। भ्रममारोप्य तत्तेजः शातनायोपचक्रमे॥' इति॥३२॥

**अस्य प्रयाणेषु समग्रशक्तेरग्रेसरैर्वाजिभिरुत्थितानि।**
**कुर्वन्ति सामन्तशिखामणीनां प्रभाप्ररोहास्तमयं रजांसि॥ ३३॥**

**अस्येति॥ समग्रशक्तेः** शक्तित्रयसंपन्नस्यास्यावन्तिनाथस्य **प्रयाणेषु** जैत्र-

पाठा०—१ 'परेषाम्'. २ 'प्रयुक्त'. ३ 'विशेषकान्तम्'.

टिप्प०—1 'त्वष्टा संज्ञाभिधाया दुहितुरादित्यपत्न्यास्तत्तेजोऽसहमानायाः कृते रविं यन्त्रेऽलिखदित्यागमः'-इति हेमाद्रिः॥ पूर्वं सूर्यस्य तेजोऽसहमानाया रविपत्न्याः कृते त्वष्टा सूर्यः शस्त्रमार्जनयन्त्रे रोपित इति। भ्रमणकर्मणीति केचित्-इति शिशु०।

3 भवेन परदेशयात्राभिनिवेश उक्तः-इति हेमाद्रिः। अतिदेशस्थितवर्णनं वैराग्यहेतुः-इति दिनकर०।

यात्रास्वग्रेसरैर्वाजिभिरश्वैरुत्थितानि रजांसि सामन्तानां समन्ताद्भवानां राज्ञां ये शिखामणयश्चूडामणयस्तेषां प्रभाप्ररोहास्तमयं तेजोऽङ्कुरनाशं कुर्वन्ति । नाशीरैरेवास्य शत्रवः पराजीयन्त इति भावः ॥ ३३ ॥

असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः[1] ।
तमिस्रपक्षेऽपि सह प्रियाभिर्ज्योत्स्नावतो निर्विशति प्रदोषान्[2] ॥ ३४ ॥

असाविति ॥ असाववन्तिनाथः महाकालं नाम स्थानविशेषः, तदेव निकेतनं स्थानं यस्य तस्य चन्द्रमौलेरीश्वरस्याऽदूरे समीपे वसन् । अत एव हेतोस्तमिस्रपक्षे कृष्णपक्षेऽपि प्रियाभिः सह ज्योत्स्नावतः प्रदोषान्रात्रीर्निर्विशत्यनुभवति किल । नित्यज्योत्स्नाविहारत्वमेतस्यैव नान्यस्येति भावः ॥३४॥

अनेन यूना सह पार्थिवेन रम्भोरु ! कच्चिन्मनसो रुचिस्ते ? ।
सिप्रातरंगानिलकम्पितासु विहर्तुमुद्यानपरंपरासु ॥ ३५ ॥

अनेनेति ॥ रम्भे कदलीस्तम्भाविवोरू यस्याः सा रम्भोरुस्तस्याः संबोधनम् । हे रम्भोरु ! 'ऊरूत्तरपदादौपम्ये' ( पा. ४।१।६९ ) इत्यूङ्प्रत्ययः । नदीत्वाद्ध्रस्वः । यूनाऽनेन पार्थिवेन सह । सिप्रा नाम तत्रत्या नदी तस्यास्तरंगाणामनिलेन कम्पितासूद्यानानां परंपरासु पङ्क्तिषु विहर्तुं ते तव मनसो रुचिः कच्चित् ? स्पृहाऽस्ति किमित्यर्थः । 'अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम्' इत्यमरः ॥ ३५ ॥

तस्मिन्नभिद्योतितबन्धुपद्मे प्रतापसंशोषितशत्रुपङ्के ।
बबन्ध सा नोत्तमसौकुमार्या कुमुद्वती भानुमतीव भावम् ॥ ३६ ॥

तस्मिन्निति ॥ उत्तमसौकुमार्योत्कृष्टमार्दवा सेन्दुमती । अभिद्योतितान्युल्लसितानि बन्धव एव पद्मानि येन तस्मिन् । प्रतापेन तेजसा संशो-

पाठा०—१ 'चन्द्रार्धमौलेर्निवसन्नदूरे'. २ 'दिवापि जालान्तरचन्द्रिकाणां नारीसखः स्पर्शसुखानि भुङ्क्ते'. ३ 'तामिस्र'. ४ 'क्षिप्रा'.

टिप्प०—1 चण्डीश्वरस्येदं धामावन्त्यां प्रख्यातमेव । तथा च मेघदूते ( १।३३-३४ ) वर्णनम्—'भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य' इति । मालतीमाधवेऽपि ( १।५ ) 'संनिपतितश्च भगवतः कालप्रियनाथस्य यात्राप्रसंगेन' इत्यादौ ।

2 अनेनास्य बहुस्त्रीकता सूचिता—इति हेमाद्रिः ।

3 'कच्चित्' इत्यनेन सुनन्दाया असंमतित्वम्—इति शिशु० ।

चिताः शत्रव एव पङ्काः कर्दमा येन तस्मिन्। तस्मिन्नवन्तिनाथे कुमुद्वती। 'कुमुदनडवेतसेभ्यो ड्मतुप्' (पा. ४।२।८७) इति ड्मतुप्प्रत्ययः। भानुमत्यंशुमतीव। भावं चित्तं न बबन्ध। न तत्रानुरागमकरोदित्यर्थः। बन्धूनां पद्मत्वेन शत्रूणां पङ्कत्वेन च निरूपणं राज्ञः सूर्यसाम्यार्थम् ॥ ३६ ॥

तामग्रतस्तामरसान्तराभामनूपराजस्य गुणैरनूनाम्।
विधाय सृष्टिं ललितां विधातुर्जगाद भूयः सुदतीं सुनन्दा ॥ ३७॥

तामिति ॥ सुनन्दा तामरसान्तराभां पद्मोदरतुल्यकान्तिम्। कनकगौरीमित्यर्थः। गुणैरनूनाम्। अधिकामित्यर्थः। शोभना दन्ता यस्याः सा सुदती। 'वयसि दन्तस्य दतृ' (पा. ५।४।१४१) इति दत्रादेशः। 'उगितश्च' (पा. ४।१।६) इति ङीप्। तां प्रकृतां प्रसिद्धां वा विधातुर्ललितां सृष्टिम्। मधुरनिर्माणां स्त्रियमित्यर्थः। अनुगता आपो येषु तेऽनूपा नाम देशाः। 'ऋक्पूरब्धूः पथामानक्षे' (पा. ५।४।७४) इत्यप्रत्ययः समासान्तः। 'ऊदनोर्देशे' (पा. ६।३।९८) इत्यूदादेशः। तेषां राज्ञोऽनूपराजस्याग्रतो विधाय व्यवस्थाप्य भूयः पुनर्जगाद ॥ ३७ ॥

सङ्ग्रामनिर्विष्टसहस्रबाहुरष्टादशद्वीपनिखातयूपः।
अनन्यसाधारणराजशब्दो बभूव योगी किल कार्तवीर्यः॥ ३८॥

सङ्ग्रामेति ॥ सङ्ग्रामेषु युद्धेषु निर्विष्टा अनुभूताः सहस्रं बाहवो यस्य स तथोक्तः। युद्धादन्यत्र द्विभुज एव दृश्यत इत्यर्थः। अष्टादशसु द्वीपेषु निखाताः स्थापिता यूपा येन स तथोक्तः। सर्वक्रतुयाजी सार्वभौमश्चेति भावः। जरायुजादिसर्वभूतरञ्जनादनन्यसाधारणो राजशब्दो यस्य स तथोक्तः। योगी। ब्रह्मविद्वानित्यर्थः। स किल भगवतो दत्तात्रेयाल्लब्धयोग इति प्रसिद्धिः। कृतवीर्यस्यापत्यं पुमान् कार्तवीर्यो नाम राजा बभूव किलेति। अयं चास्य महिमा सर्वोऽपि दत्तात्रेयवरप्रसादलब्ध इति भारते (वन. अ. ११५; अनु. अ. १५२) दृश्यते ॥३८॥

---

टिप्प०—1 अनेन कुमार्याः सौकुमार्यं राज्ञस्तैक्ष्ण्य सूचितम्—इति हेमाद्रिः।

2 'अग्रान्त-' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वादत्रादेशः, 'वयसि दन्तस्य' इत्यत्र सञ्ज्ञा स्वपूर्वस्य' इत्यनुवृत्तेरिति चेत्,—तन्न; सुदत्यादयः स्त्र्यभिधायिनो योगरूढाः शब्दाः। तेन 'स्त्रियां संज्ञायाम्' इति दत्रादेशे 'उगितश्च' इति ङीप्' इति हेमाद्रिः।

3 प्रायेणोर्व्यां सप्तद्वीपत्वम्, अवान्तरगणनायामष्टादशद्वीपता—इति वल्लभः। तथा च नैषधीयेऽपि (१।५) 'अगाहताष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम्' इति।

4 यथोक्तं विष्णु (४।११) पुराणे—'न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः। यज्ञैर्दानैस्तपोभिर्वा प्रश्रयेण श्रुतेन वा' इति।

अकार्यचिन्तासमकालमेव प्रादुर्भवंश्चापधरः पुरस्तात् ।
अन्तःशरीरेष्वपि यः प्रजानां प्रत्यादिदेशाविनयं विनेता ॥ ३९ ॥

**अकार्येति** ॥ **विनेता** शिक्षको यः कार्तवीर्यः । **अकार्यस्या**प्रकार्यस्य **चिन्त**या च 'अहं चौर्यादिकं करिष्यामी'ति बुद्ध्या । **समकाल**मेककाल**मेव** यथा तथा **पुरस्ता**दग्रे **चापधरः प्रादुर्भव**न्सन् । **प्रजानां** जनानाम् । 'प्रजा स्यात्संततौ जने' इत्यमरः । **अन्तःशरीरे**ष्वन्तःकरणेषु[1] । 'शरीर'शब्देनेन्द्रियं लक्ष्यते । **अविनयमपि प्रत्यादिदेश** । मानसापराधमपि निवारयामासेत्यर्थः । अन्ये तु वाक्कायापराधमात्रप्रतिकर्तार इति भावः ॥ ३९ ॥

ज्यावन्धनिष्पन्दभुजेन यस्य विनिःश्वसद्वक्त्रपरंपरेण ।
कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमा प्रसादात् ॥ ४० ॥

**ज्यावन्धेति** ॥ ज्यया[2] मौर्व्या **वन्धेन** वन्धनेन **निष्पन्दा** निश्चेष्टा **भुजा** यस्य तेन **विनिःश्वसती** ज्यावन्धोपरोधाद्दीर्घं निःश्वसती **वक्त्रपरंपरा** दशमुखी यस्य तेन **निर्जितवासवेने**न्द्रविजयिना । अत्रेन्द्रादयोऽप्यनेन जितप्राया एवेति भावः । **लङ्केश्वरेण** दशास्येन **यस्य** कार्तवीर्यस्य **कारागृहे** वन्धनागारे । 'कारा स्याद्वन्धनालये' इत्यमरः । **आ प्रसादा**दनुग्रहपर्यन्त**मुषितं** स्थितम् । 'नपुंसके भावे क्तः' (पा. ३।३।११४) । एतत्प्रसाद एव तस्य मोक्षोपायो न तु क्षात्रमिति भावः ॥ ४० ॥

तस्यान्वये भूपतिरेष जातः प्रतीप इत्यागमवृद्धसेवी ।
येन श्रियः संश्रयदोषरूढं स्वभावलोलेत्ययशः प्रमृष्टम् ॥ ४१ ॥

**तस्येति** ॥ **आगमवृद्धसेवी** श्रुतवृद्धसेवी **प्रतीप इति**[3] । ख्यात इति शेषः । **एष भूपति**स्तस्य कार्तवीर्य**स्यान्वये** वंशे **जातः** । **येन** प्रतीपेन **संश्रय**स्याश्रयस्य पुंसो **दोषै**र्व्यसनादिभी **रूढ**मुत्पन्नं **श्रियः** संबन्धि **स्वभावलोला**[4] प्रकृतिचञ्चले-

---

टिप्प०—1 यदा कोऽपि कस्योपरि विरुद्धं चिन्तयति तदा चापं गृहीत्वा समये एव प्रकटीभवति । कार्तवीर्ये राज्यं कुर्वाणे केनापि चित्तेऽप्यन्यायं चिन्तयितुं न शक्यते, किमुत कर्तुम्-इति सुमति० ।

2 पुरा किल जलकेलिलोलविलासिनीं जनस्नानार्थं पार्श्वभुजपरिघरुद्धेन रेवाजलप्रवाहेण स्वकृतशिवलिङ्गार्चापुष्पोपहारस्यापहरणात् क्रुद्धं रणरसागतं रावणं युद्धे पराभूय माहिष्मतीपुर्याः पतिः सहस्रबाहुः कार्तवीर्योऽर्जुनस्तं स्वीयधनुर्ज्याबन्धेन बबन्ध इति कथानकं श्रीमद्रामायणतो ( उत्तर० ३१ सर्गतो )ऽवगन्तव्यम् ।

3 यतोऽयं विद्यावृद्धसेवी अत एव लक्ष्मीनाशकदोषाभावात् स्थिराऽभूत्-इति शिशु० ।

4 निसर्गतश्चञ्चला यथाः-'मनो मधुकरो मेघो मानिनी मदनो मरुत् । मा मदो मर्कटो मत्स्यो मकारा दश चञ्चलाः' इति ।

त्येवंरूपमयशो दुष्कीर्तिः **प्रमृष्टं** निरस्तम् । दुष्टाश्रयत्यागशीलायाः श्रियः प्रकृतिचापलप्रवादो मूढजनपरिकल्पित इत्यर्थः । अयं तु दोषराहित्यान्न कदाचिदपि श्रिया त्यज्यत इति भावः ॥ ४१ ॥

**आयोधने कृष्णगतिं सहायमवाप्य यः क्षत्रियकालरात्रिम् ।**
**धारां शितां रामपरश्वधस्य संभावयत्युत्पलपत्रसाराम् ॥४२॥**

**आयोधन इति** ॥ यः प्रतीप **आयोधने** युद्धे **कृष्णगतिं** कृष्णवर्त्मानमग्निं **सहायमवाप्य क्षत्रियाणां कालरात्रिम्** । संहाररात्रिमित्यर्थः । **रामपरश्वधस्य** जामदग्न्यपरशोः । 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः' इत्यमरः । **शितां** तीक्ष्णां **धारां** मुखम् । 'खड्गादीनां च निशितमुखे धारा प्रकीर्तिता' इति विश्वः । उत्पलपत्रस्य **सार** इव सारो यस्यास्तां तथाभूतां **संभावयति** मन्यते । एतन्नगरजिगीषयागतान्रिपून्स्वयमेव धक्ष्यामीति भगवता वैश्वानरेण दत्तवरोऽयं राजा दह्यन्ते च तथागताः शत्रव इति भारते (वन. अ. ११७) कथानुसंधेया ॥ ४२ ॥

**अस्याङ्कलक्ष्मीर्भव दीर्घबाहोर्माहिष्मतीवप्रनितम्बकाञ्चीम् ।**
**प्रासादजालैर्जलवेणिरम्यां रेवां यदि प्रेक्षितुमस्ति कामः ॥४३॥**

**अस्येति** ॥ [2]**दीर्घबाहोरस्य** प्रतीपस्या**ङ्कलक्ष्मीर्भव** । एनं वृणीष्वेत्यर्थः । अनेनायं विष्णुतुल्य इति ध्वन्यते । **माहिष्मती** नामास्य नगरी । तस्या **वप्रः** प्राकार एव **नितम्बः** । तस्य **काञ्चीं** रशनाभूतां **जलानां वेण्या** प्रवाहेण **रम्याम्** । 'ओघः प्रवाहो वेणी च' इति हलायुधः । **रेवां** नर्मदां **प्रासादजालै**र्गवाक्षैः । 'जालं समूह आनायो गवाक्षक्षारकावपि' इत्यमरः । **प्रेक्षितुं काम** इच्छाऽस्ति **यदि** ॥४३॥

**तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितीशो रुचये बभूव ।**
**शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्याप्तकलो नलिन्याः ॥ ४४ ॥**

**तस्या इति** ॥ **प्रकामं प्रियं** प्रीतिकरं **दर्शनं** यस्य **सोऽपि** । दर्शनीयोऽपीत्यर्थः । **स क्षितीशः** । **शरदा प्रमृष्टाम्बुधरोपरोधो** निरस्तमेघावरणः **पर्याप्तकलः** पूर्णकलः **शशी नलिन्या इव** । **तस्या** इन्दुमत्या **रुचये न बभूव** । रुचिं नाजीजनदित्यर्थः । लोको भिन्नरुचिरिति भावः ॥ ४४ ॥

---

पाठा०—१ 'शिवाम्'. २ 'उत्पलपत्रसारम्'.

---

टिप्प०—1 'वरेण तोषयामास तं नृप स्विष्टकृत्तदा' इति भारते सहायत्वहेतुः-इति हेमाद्रिः ।

2 अङ्कस्थायास्तवालिङ्गनमेव स्यादिति दीर्घबाहुत्वम्-इति हेमाद्रिः ।

सा शूरसेनाधिपतिं सुषेणमुद्दिश्य लोकान्तरगीतकीर्तिम् ।
आचारशुद्धोभयवंशदीपं शुद्धान्तरक्ष्या जगदे कुमारी ॥ ४५ ॥

सेति ॥ लोकान्तरे स्वर्गादावपि गीतकीर्तिमाचारेण शुद्धयोरुभयोर्वंशयोर्मातापितृकुलयोर्दीपं प्रकाशकम् । 'उभयवंश'इत्यत्रोभयपक्षवन्निर्वाहः । शूरसेनानां देशानामधिपतिं सुषेणं नाम नृपतिमुद्दिश्याभिसंधाय शुद्धान्तरक्ष्याऽन्तःपुरपालिकया । 'कर्मण्यण्' (पा. ३।२।१)। 'टिड्ढाणञ्–' (पा. ४।१।१५) इति ङीप् । सा कुमारी जगदे ॥ ४५ ॥

नीपान्वयः पार्थिव एष यज्वा गुणैर्यमाश्रित्य परस्परेण ।
सिद्धाश्रमं शान्तमिवैत्य सत्त्वैर्नैसर्गिकोऽप्युत्ससृजे विरोधः ॥ ४६ ॥

नीपेति ॥ यज्वा विधिवदिष्टवान् । 'सुयजोर्ङ्वनिप्' (पा. ३।२।१०३) इति ङ्वनिप्प्रत्ययः । एष पार्थिवः । नीपो नामान्वयोऽस्येति नीपान्वयो नीपवंशजः । यं सुषेणमाश्रित्य गुणैर्ज्ञानमौनादिभिः । शान्तं प्रसन्नं सिद्धाश्रममृष्याश्रममेत्य प्राप्य सत्त्वैर्गजसिंहादिभिः प्राणिभिरिव । नैसर्गिकः स्वाभाविकोऽपि परस्परेण विरोध उत्ससृजे त्यक्तः ॥ ४६ ॥

यस्यात्मगेहे नयनाभिरामा कान्तिर्हिमांशोरिव संनिविष्टा ।
हर्म्याग्रसंरूढतृणाङ्कुरेषु तेजोऽविषह्यं रिपुमन्दिरेषु ॥ ४७ ॥

यस्येति ॥ हिमांशोः कान्तिश्चन्द्रकिरणा इव नयनयोरभिरामा यस्य सुषेणस्य कान्तिः शोभाऽऽत्मगेहे स्वभवने संनिविष्टा संक्रान्ता । अविषह्यं विसोढुमशक्यं तेजः प्रतापस्तु । हर्म्याग्रेषु धनिकमन्दिरप्रान्तेषु । 'हर्म्यादि धनिनां वासः' इत्यमरः । संरूढास्तृणाङ्कुरा येषां तेषु । शून्येष्वित्यर्थः । रिपुमन्दिरेषु शत्रुनगरेषु । 'मन्दिरं नगरे गृहे' इति विश्वः । संनिविष्टम् । स्वजनाह्लादकोऽयं द्विषंतपश्चेति भावः ॥ ४७ ॥

यस्यावरोधस्तनचन्दनानां प्रक्षालनाद्वारिविहारकाले ।
कलिन्दकन्या मथुरां गतापि गङ्गोर्मिसंसक्तजलेव भाति ॥ ४८ ॥

---

पाठा०–१ 'देशान्तर'. २ 'आत्मदेहे'. ३ 'मथुरागतापि'. ४ 'संपृक्त'.

---

टिप्प०—1 सु शोभना सेना यस्य स सुषेणः, 'सुषामादिषु–' इत्यत्र काशिकावृत्तौ 'पति संज्ञायामगात्' इत्यस्य च विवरणम् । षकारपरस्य सकारस्य मूर्धन्यादेशो भवति; इण्कोरुत्तरस्याकारात्परस्य संज्ञायां विषये–इति हेमाद्रिः ।

**यस्येति** ॥ यस्य सुषेणस्य **वारिविहारकाले** जलक्रीडासमयेऽवरोधाङ्गनानामन्तःपुराङ्गनानां **स्तनेषु चन्दनानां** मलयजानां **प्रक्षालनाद्धेतोः कलिन्दो** नाम शैलस्तत्कन्या यमुना। 'कालिन्दी सूर्यतनया यमुना शमनस्वसा' इत्यमरः। **मथुरा** नामास्य राज्ञो नगरी। तां **गतापि**। गङ्गाया विप्रकृष्टापीत्यर्थः। मथुराया गङ्गाभावं सूचयति 'अपि'शब्दः। कालिन्दीतीरे मथुरा लवणासुरवधकाले शत्रुघ्नेन निर्मास्यतेति वक्ष्यति। तत्कथमधुना मथुरासम्भव इति चिन्त्यम्। मथुरा मधुरापुरीति शब्दभेदः। यद्वा,–साम्येति गङ्गाया भागीरथ्या **ऊर्मिभिः संसक्तजलेव भाति।** धवलचन्दनसंसर्गात्प्रयागादन्यत्राप्यत्र गङ्गासङ्गतेव भातीत्यर्थः। 'सितासिते हि गङ्गायमुने' इति घण्टापथः ॥ ४८ ॥

**त्रस्तेन तार्क्ष्यात्किल कालियेन मणिं विसृष्टं यमुनौकसा यः।**
**वक्षःस्थलव्यापिरुचं दधानः सकौस्तुभं ह्रेपयतीव कृष्णम् ॥ ४९ ॥**

**त्रस्तेनेति** ॥ तार्क्ष्याद्गरुडात्**त्रस्तेन**। **यमुनौकः** स्थानं यस्य तेन। **कालियेन** नाम नागेन **विसृष्टं किला**भयदाननिष्क्रयत्वेन दत्तम्। **'किल'** इत्यैतिह्ये। **वक्षःस्थलव्यापिरुचं मणिं दधानो** यः सुषेणः **सकौस्तुभं कृष्णं** विष्णुं **ह्रेपयतीव** व्रीडयतीव। 'अर्तिह्री–' (पा. ७।३।३६) इत्यादिना पुगागमः। कौस्तुभमणेरप्युत्कृष्टोऽस्य मणिरिति भावः ॥ ४९ ॥

**संभाव्य भर्तारममुं युवानं मृदुप्रवालोत्तरपुष्पशय्ये।**
**वृन्दावने चैत्ररथादनूने निर्विश्यतां सुन्दरि! यौवनश्रीः ॥ ५० ॥**

**संभाव्येति** ॥ **युवानममुं** सुषेणं **भर्तारं संभाव्य** मत्वा। पतित्वेनाङ्गीकृत्येत्यर्थः। **मृदुप्रवालोत्तरो**परिप्रस्तारितकोमलपल्लवा **पुष्पशय्या** यस्मिंस्तत्तस्मिंश्चैत्ररथात्कुबेरोद्यानाद**नूने वृन्दावने** वृन्दावननामक उद्याने हे **सुन्दरि! यौवनश्री**र्यौवनफलं **निर्विश्यतां** भुज्यताम् ॥ ५० ॥

**अध्यास्य चाम्भःपृषतोक्षितानि शैलेयगन्धीनि शिलातलानि।**
**कलापिनां प्रावृषि पश्य नृत्यं कान्तासु गोवर्धनकन्दरासु ॥ ५१ ॥**

**अध्यास्येति** ॥ किंच, **प्रावृषि** वर्षासु **कान्तासु गोवर्धन**स्याद्रेः **कन्दरासु** दरीषु। 'दरी तु कन्दरो वा स्त्री' इत्यमरः। **अम्भसः पृषतै**र्बिन्दुभि**रुक्षितानि**

पाठा०–१ 'त्रातेन'. २ 'विष्णुम्'. ३ 'शैलेयनद्धानि'.

टिप्प०–1 काद्रवेयकुलोत्पन्नो विरमणकद्वीपकृतवसतिर्नागोऽयं स्वभक्ष्यभक्षणक्रुद्धाद्गरुडात् संग्रामे त्रस्तो यमुनायां वसतिं चकारेति (भाग० १०।१६) कथानकम्।

शिलानि । शिलायां भवं शैलेयम् । 'शिलाजतु च शैलेयम्' इति यादवः । यद्वा,— शिलापुष्पाख्य ओषधिविशेषः । 'कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु । शैलेयम्' इत्यमरः । 'शिलाया ढः' (पा. ५।३।१०२) इत्यत्र शिलाया इति योगविभागादिवार्थे ढञ्प्रत्ययः । तद्गन्धवन्ति शैलेयगन्धीनि शिलातलान्यध्यास्याधिष्ठाय कलापिनां बर्हिणां नृत्यं पश्य ॥ ५१ ॥

नृपं तमावर्तमनोज्ञनाभिः सा व्यत्यगादन्यवधूर्भवित्री ।
महीधरं मार्गवशादुपेतं स्रोतोवहा सागरगामिनीव ॥ ५२ ॥

नृपमिति ॥ 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । आवर्तमनोज्ञा नाभिर्यस्याः सा । इदं च नदीसाम्यार्थमुक्तम् । अन्यवधूरन्यपत्नी भवित्री भाविनी सा कुमारी महीधरं तं नृपम् । सागरगामिनी सागरं गन्त्री स्रोतोवहा नदी मार्गवशादुपेतं प्राप्तं महीधरं पर्वतमिव । व्यत्यगादतीत्य गता ॥ ५२ ॥

अथाङ्गदाश्लिष्टभुजं भुजिष्या हेमाङ्गदं नाम कलिङ्गनाथम् ।
आसेदुषीं सादितशत्रुपक्षं बालामबालेन्दुमुखीं बभाषे ॥ ५३ ॥

अथेति ॥ अथ भुजिष्या किंकरी सुनन्दा । 'भुजिष्या किंकरी मता' इति हलायुधः । अङ्गदाश्लिष्टभुजं केयूरनद्धबाहुं सादितशत्रुपक्षं विनाशितशत्रुवर्गं हेमाङ्गदं नाम कलिङ्गनाथमासेदुषीमाश्रयामबालेन्दुमुखीं पूर्णेन्दुमुखीं बालामिन्दुमतीं बभाषे ॥ ५३ ॥

असौ महेन्द्राद्रिसमानसारः पतिर्महेन्द्रस्य महोदधेश्च ।
यस्य क्षरत्सैन्यगजच्छलेन यात्रासु यातीव पुरो महेन्द्रः ॥ ५४ ॥

असाविति ॥ महेन्द्राद्रेः समानसारस्तुल्यसत्त्वोऽसौ हेमाङ्गदो महेन्द्रस्य नाम कुलपर्वतस्य महोदधेश्च पतिः स्वामी । महेन्द्रमहोदधी एवास्य गिरिजलदुर्गे इति भावः । यस्य यात्रासु क्षरतां मदस्राविणां सैन्यगजानां छलेन महेन्द्रो महेन्द्राद्रिः पुरोऽग्रे यातीव । अद्रिकल्पा अस्य गजा इत्यर्थः ॥ ५४ ॥

ज्याघातरेखे सुभुजो भुजाभ्यां बिभर्ति यश्चापभृतां पुरोगः ।
रिपुश्रियां साञ्जनबाष्पसेके बन्दीकृतानामिव पद्धती द्वे ॥ ५५ ॥

ज्याघातेति ॥ सुभुजश्चापभृतां पुरोगो धनुर्धराग्रेसरो यः । बन्दीकृतानां प्रग्रहीतानाम् । 'प्रग्रहोपग्रहौ बन्द्याम्' इत्यमरः । रिपुश्रिया साञ्जनो बाष्पसेको ययोस्ते । कज्जलमिश्राश्रुसिक्ते इत्यर्थः । पद्धती इव । द्वे ज्याघातानां मौर्वी

पाठा०—१ 'रिपुश्रियाः'; 'रिपुश्रियः'. २ 'बन्दीकृतायाः'.

किणाङ्कौ रेखे राजी भुजाभ्यां बिभर्ति। द्विवचनात्सव्यसाचित्वं गम्यते। रिपुश्रिया भुजाभ्यामेवाहरणात्तद्गतरेखयोस्तत्पद्धतित्वेनोत्प्रेक्षा। तयोः श्यामत्वात्साञ्जनाश्रुसेकोक्तिः॥ ५५॥

यमात्मनः सद्मनि संनिकृष्टो मन्द्रध्वनित्याजितयामतूर्यः।
प्रासादवातायनदृश्यवीचिः प्रबोधयत्यर्णव एव सुप्तम्॥ ५६॥

यमिति॥ आत्मनः सद्मनि सुप्तं यं हेमाङ्गदं संनिकृष्टः समीपस्थोऽत एव प्रासादवातायनैर्दृश्यवीचिर्मन्द्रेण गम्भीरेण। 'मन्द्रस्तु गम्भीरे' इत्यमरः। ध्वनिना त्याजितं विवर्जितं यामस्य तूर्यं प्रहरावसानसूचकं वाद्यं येन स तथोक्तः। 'द्वौ यामप्रहरौ समौ' इत्यमरः। अर्णव एव प्रबोधयति। अर्णवस्यैव तूर्यकार्यकारित्वात्तद्वैयर्थ्यमित्यर्थः। समुद्रस्यापि सेव्यः किमन्येषामिति भावः॥ ५६॥

अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु।
द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः॥ ५७॥

अनेनेति॥ अनेन राज्ञा सार्धं तालीवनैर्मर्मरेषु मर्मरेति ध्वनत्सु। 'अथ मर्मरः। स्वनिते वस्त्रपर्णानाम्' इत्यमरवचनाद्गुणपरस्यापि 'मर्मर'शब्दस्य गुणिपरत्वं प्रयोगादवसेयम्। अम्बुराशेः समुद्रस्य तीरेषु द्वीपान्तरेभ्य आनीतानि लवङ्गपुष्पाणि देवकुसुमानि यैस्तैः। 'लवङ्गं देवकुसुमम्' इत्यमरः। मरुद्भिर्वातैरपाकृताः प्रशमिताः स्वेदस्य लवा बिन्दवो यस्याः सा तथाभूता सती त्वं विहर क्रीड॥५७॥

प्रलोभिताप्याकृतिलोभनीया विदर्भराजावरजा तयैवम्।
तस्मादपावर्तत दूरकृष्टा नीत्येव लक्ष्मीः प्रतिकूलदैवात्॥ ५८॥

प्रलोभितेति॥ आकृत्या रूपेण लोभनीयाऽऽकर्षणीया। न तु वर्णनमात्रेणेत्यर्थः। विदर्भराजावरजा भोजानुजेन्दुमती तया सुनन्दयैवं प्रलोभितापि प्रचोदितापि। नीत्या पुरुषकारेण दूरकृष्टा दूरमानीता लक्ष्मीः प्रतिकूलं दैवं यस्य तस्मात्पुंस इव। तस्माद्धेमाङ्गदादपावर्तत प्रतिनिवृत्ता॥ ५८॥

अथोरगाख्यस्य पुरस्य नाथं दौवारिकी देवसरूपमेत्य।
इतश्चकोराक्षि! विलोकयेति पूर्वानुशिष्टां निजगाद भोज्याम्॥५९॥

अथेति॥ अथ द्वारे नियुक्ता दौवारिकी सुनन्दा। 'तत्र नियुक्तः' (पा. ४।४।६९) इति ठक्प्रत्ययः। 'द्वारादीनां च' (पा. ७।३।४) इत्यै-

पाठ०—१ 'संनिकृष्टम्'; 'संनिविष्टम्'; 'संनिविष्टः'. २ 'देवसरूपम्'; 'देवसमानम्'. ३ 'नागाङ्गनानाम्'.

आगतः। आकारेण देवसरूपं देवतुल्यम्। उरगाख्यस्य पुरस्य पाण्ड्यदेशे कान्यकुब्जतीरवर्तिनागपुरस्य नाथमेत्य प्राप्य। हे चकोराक्षि! इतो विलोकयेति पूर्वानुशिष्टां पूर्वमुक्तां भोजस्य राज्ञो गोत्रापत्यं स्त्रियं भोज्यामिन्दुमतीम्। 'कौसल्यादिभ्यश्च' (पा. ४।१।८०) इत्यत्र 'भोजात्क्षत्रियात्' इत्युपसंख्यानात्ष्यङ्प्रत्ययः। 'यङश्चाप्' (पा. ४।१।७४) इति चाप्। निजगाद। 'इतो विलोकय' इति पूर्वमुक्त्वा पश्चाद्वक्तव्यं निजगादेत्यर्थः ॥ ५९ ॥

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥ ६० ॥

पाण्ड्य इति ॥ अंसयोरर्पिता लम्बन्त इति लम्बा हारा यस्य सः। हरिचन्दनेन गोशीर्षाख्येन चन्दनेन। 'तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्' इत्यमरः। क्लृप्ताङ्गरागः विलिप्ताङ्गोऽयं पाण्डूनां जनपदानां राजा पाण्ड्यः। 'पाण्डोर्जनपदशब्दात्क्षत्रियाड्ड्यण्वक्तव्यः' (वा. २६७१) इति ड्यण्प्रत्ययः। 'तस्य राजन्यपत्यवत्' इति वचनात्। बालातपेन रक्ता अरुणाः सानवो यस्य स सनिर्झरोद्गारः प्रवाहस्यन्दनसहितः। 'वारिप्रवाहो निर्झरो झरः' इत्यमरः। अद्रिराज इवाभाति ॥ ६० ॥

विन्ध्यस्य संस्तम्भयिता महाद्रेर्निःशेषपीतोज्झितसिन्धुराजः।
प्रीत्याश्वमेधावभृथार्द्रमूर्तेः सौस्नातिको यस्य भवत्यगस्त्यः ॥ ६१ ॥

विन्ध्यस्येति ॥ विन्ध्यस्य नाम्नो महाद्रेः। तपनमार्गनिरोधाय वर्धमानस्येति शेषः। संस्तम्भयिता निवारयिता। निःशेषं पीत उज्झितः पुनस्त्यक्तः सिन्धुराजः समुद्रो येन सोऽगस्त्योऽश्वमेधस्यावभृथे दीक्षान्ते कर्मणि। 'दीक्षान्तोऽवभृथो यज्ञे' इत्यमरः। आर्द्रमूर्तेः स्नातस्येत्यर्थः। यस्य पाण्ड्यस्य प्रीत्या स्नेहेन। न तु दाक्षिण्येन। सुस्नातं पृच्छतीति सौस्नातिकः। भवति। 'पृच्छतौ सुस्नातादिभ्यः' (वा. २९५२) इत्युपसंख्यानाट्ठक् ॥ ६१ ॥

---

पाठा०—१ 'अंसार्पितलम्बिहारः'. २ 'कृताङ्गरागः'.

अस्त्रं हरादाप्तवता दुरापं येनेन्द्रलोकावजयाय दृप्तः ।
पुरा जनस्थानविमर्दशङ्की संधाय लङ्काधिपतिः प्रतस्थे ॥ ६२ ॥

अस्त्रमिति ॥ पुरा पूर्वं जनस्थानस्य खरालयस्य विमर्दशङ्की दृप्त उद्धतो लङ्काधिपती रावणो दुरापं दुर्लभमस्त्रं ब्रह्मशिरोनामकं हरादाप्तवता येन पाण्ड्येन संधाय इन्द्रलोकावजयायेन्द्रलोकं जेतुं प्रतस्थे । इन्द्रविजयिनो रावणस्यापि विजेतेत्यर्थः ॥ ६२ ॥

अनेन पाणौ विधिवद्गृहीते महाकुलीनेन महीव गुर्वी ।
रत्नानुविद्धार्णवमेखलाया दिशः सपत्नी भव दक्षिणस्याः ॥ ६३ ॥

अनेनेति ॥ महाकुलीनेन महाकुले जातेन । 'महाकुलादञ्खञौ' (पा. ४।१।१४१) इति खञ्प्रत्ययः । अनेन पाण्ड्येन पाणौ त्वदीये विधिवद्यथाशास्त्रं गृहीते सति गुर्वी गुरुः । 'वोतो गुणवचनात्' (पा. ४।१।४४) इति ङीष् । महीव रत्नैरनुविद्धो व्याप्तोऽर्णव एव मेखला यस्यास्तस्याः । इदं विशेषणं मह्यामिन्दुमत्यां च योज्यम् । दक्षिणस्या दिशः सपत्नी भव । अनेन सपत्न्यन्तराभावो ध्वन्यते ॥ ६३ ॥

ताम्बूलवल्लीपरिणद्धपूगास्वेलालतालिङ्गितचन्दनासु ।
तमालपत्रास्तरणासु रन्तुं प्रसीद शश्वन्मलयस्थलीषु ॥ ६४ ॥

ताम्बूलेति ॥ ताम्बूलवल्लीभिर्नागवल्लीभिः परिणद्धाः परिरब्धाः पूगाः क्रमुका यासु तासु । 'ताम्बूलवल्ली ताम्बूली नागवल्ल्यपि' इति, 'घोण्टा तु पूगः क्रमुकः' इति चामरः । एलालताभिरालिङ्गिताश्चन्दना मलयजा यासु तासु । 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः । तमालस्य तापिच्छस्य पत्राण्येवास्तरणानि यासु तासु । 'कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि' इत्यमरः । मलयस्थलीषु शश्वन्मुहुः सदा वा रन्तुं प्रसीदानुकूला भव ॥ ६४ ॥

इन्दीवरश्यामतनुर्नृपोऽसौ त्वं रोचनागौरशरीरयष्टिः ।
अन्योन्यशोभापरिवृद्धये वां योगस्तडित्तोयदयोरिवास्तु ॥ ६५ ॥

इन्दीवरेति ॥ असौ नृप इन्दीवरश्यामतनुः, त्वं रोचना गोरोचनेव गौरी शरीरयष्टिर्यस्याः सा । ततस्तडित्तोयदयोर्विद्युन्मेघयोरिव वां युवयोर्योगः समागमोऽन्योन्यशोभायाः परिवृद्धयेऽस्तु ॥ ६५ ॥

---

टिप्प०—1 गोदावर्या दक्षिणतीरस्थमिदं स्थानं संप्रति 'नासिक-पञ्चवटी' इति नाम्ना प्रथितं वरीवर्ति । यथा च भवभूतिः (उत्तरराम १।२८) 'जनस्थाने शून्ये विकलकरणैरार्यचरितैः' इति ।
2 घनविद्युतोः क्षणिकयोगादिदं दोषोक्तिः—इति दिनकर० ।

स्रसुर्विदर्भाधिपतेस्तदीयो लेभेऽन्तरं चेतसि नोपदेशः ।
दिवाकरादर्शनबद्धकोशे नक्षत्रनाथांशुरिवारविन्दे ॥ ६६ ॥

स्रसुरिति ॥ विदर्भाधिपतेर्भोजस्य स्वसुरिन्दुमत्याश्चेतसि तदीयः सुनन्दासंबन्ध्युपदेशो वाक्यम्। दिवाकरस्यादर्शनेन बद्धकोशे मुकुलितेऽरविन्दे नक्षत्रनाथांशुश्चन्द्रकिरण इव । अन्तरमवकाशं न लेभे ॥ ६६ ॥

संचारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥ ६७ ॥

संचारिणीति ॥ पतिंवरा सेन्दुमती रात्रौ संचारिणी दीपशिखेव यं यं भूमिपालं व्यतीयायातीत्य गता स स भूमिपालः । स सर्व इत्यर्थः। 'नित्यवीप्सयोः' ( पा. ८।१।४ ) इति वीप्सायां द्विर्वचनम् । नरेन्द्रमार्गे राजपथेऽट्टाख्यो गृहभेद इव । 'स्यादट्टः क्षौममस्त्रियाम्' इत्यमरः । विवर्णभावं विच्छायत्वम्। अट्टस्तु तमोवृतत्वम् । प्रपेदे ॥ ६७ ॥

तस्यां रघोः सूनुरुपस्थितायां वृणीत मां नेति समाकुलोऽभूत् ।
वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद ॥ ६८ ॥

तस्यामिति ॥ तस्यामिन्दुमत्यामुपस्थितायामासन्नायां सत्यां रघोः सूनुरजो मां वृणीत न वेति समाकुलः संशयितोऽभूत् । अथास्याजस्य वामेतरो वामादितरो दक्षिणो बाहुः । केयूरं बध्यतेऽस्मिन्निति केयूरबन्धोऽङ्गदस्थानम् । तस्योच्छ्वसितैः स्फुरणैः संशयं नुनोद ॥ ६८ ॥

तं प्राप्य सर्वावयवानवद्यं व्यावर्ततान्योपगमात्कुमारी ।
न हि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदाली ॥ ६९ ॥

तमिति ॥ कुमारी । सर्वेष्ववयवेष्वनवद्यमदोषं तमजं प्राप्य । अन्योपगमाद्राजान्तरोपगमाद्व्यावर्तत निवृत्ता। तथा हि–षट्पदाली भृङ्गावलिः । प्रफुल्लतीति प्रफुल्लं विकसितम् । पुष्पितमित्यर्थः । प्रपूर्वात्फुल्लतेः पचाद्यच् । फलतेस्तु प्रफुल्लमिति पठितव्यम्। 'अनुपसर्गात्–' ( पा. ८।२।५५ ) इति निषेधात् । इत्युभयथापि न कदाचिदनुपपत्तिरित्युक्तं प्राक् । सहकारं चूतविशेषमेत्य । 'आम्रश्चूतो

पाठा०–१ 'तारापतेरंशुः'. २ 'मा नेति'.

टिप्प०—1 श्लोकोऽयं–'यां यां प्रियः प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव' इति माघोक्तिं संस्मारयति ।

रसालोऽसौ सहकारोऽतिसौरभ' इत्यमर । **वृक्षान्तरं न काङ्क्षति** । न हि सर्वोत्कृष्टवस्तुलाभेऽपि वस्त्वन्तरस्याभिलाष स्यादित्यर्थ. ॥ ६९ ॥

**तस्मिन्समावेशितचित्तवृत्तिमिन्दुप्रभामिन्दुमतीमवेक्ष्य ।**
**प्रचक्रमे वक्तुमनुक्रमज्ञा सविस्तरं वाक्यमिदं सुनन्दा ॥ ७० ॥**

**तस्मिन्निति** ॥ **तस्मिन्नजे समावेशिता** सङ्क्रामिता **चित्तवृत्तिर्यया ताम्** । **इन्दोः प्रभेव प्रभा** यस्यास्ताम् । आह्लादकत्वादिन्दुसाम्यम् । **इन्दुमतीमवेक्ष्यानुक्रमज्ञा** वाक्यपौर्वापर्याभिज्ञा **सुनन्देदं** वक्ष्यमाण **सविस्तर** सप्रपञ्चम् । 'प्रथने चावशब्दे' ( पा ३।३।३३ ) इति घञो निषेधात्', 'ऋदोरप्' ( पा ३।३।५७ ) इत्यप्प्रत्यय । 'विस्तारो विग्रहो व्यास. स च शब्दस्य विस्तर' इत्यमर । **वाक्यं वक्तुं प्रचक्रमे** ॥ ७० ॥

**इक्ष्वाकुवंश्यः ककुदं नृपाणां ककुत्स्थ इत्याहितलक्षणोऽभूत् ।**
**काकुत्स्थशब्दं यत उन्नतेच्छाः श्लाघ्यं दधत्युत्तरकोसलेन्द्राः ॥ ७१ ॥**

**इक्ष्वाकिति** ॥ **इक्ष्वाकोर्मनुपुत्रस्य वंश्यो** वंशे भव । **नृपाणां ककुदं** श्रेष्ठ । 'ककुच्च ककुद श्रेष्ठे वृषाङ्गे राजलक्ष्मणि' इति विश्व । **आहितलक्षणः** प्रख्यातगुण । 'गुणै प्रतीते तु कृतलक्षणाहितलक्षणौ' इत्यमर । ककुदि वृषाङ्गे तिष्ठतीति **ककुत्स्थ इति प्रसिद्ध कश्चिद्राजाभूत्** । यत. ककुत्स्थादारभ्योन्नतेच्छा महाशया । 'महेच्छस्तु महाशय' इत्यमर । **उत्तरकोसलेन्द्रा** राजानो दिलीपादय **श्लाघ्यं** प्रशस्तम् । ककुत्स्थस्यापत्य पुमान् **काकुत्स्थ इति शब्दं** सज्ञा **दधति** बिभ्रति । तन्नामसस्पर्शोऽपि वंशस्य कीर्तिकर इति भाव । पुरा किल पुरञ्जयो नाम साक्षाद्भगवतो विष्णोरंशावतार कश्चिदैक्ष्वाको राजा देवै सह समयबन्धेन देवासुरयुद्धे महोक्षरूपधारिणो महेन्द्रस्य ककुदि स्थित्वा पिनाकिलीलया निखिलमसुरकुल निहत्य ककुत्स्थसज्ञा लेभ इति पौराणिकी कथाऽत्रानुसन्धेया । वक्ष्यते चायमेवार्थ उत्तरश्लोके ॥ ७१ ॥

**महेन्द्रमास्थाय महोक्षरूपं यः संयति प्राप्तपिनाकिलीलः ।**
**चकार बाणैरसुराङ्गनानां गण्डस्थलीः प्रोषितपत्त्रलेखाः ॥ ७२ ॥**

**महेन्द्रमिति** ॥ **यः** ककुत्स्थः **संयति** युद्धे । महानुक्षा **महोक्षः** । 'अचतुर-' (पा. ५।४।७७ ) इत्यादिना निपात । तस्य रूपमिव रूप यस्य तं **महेन्द्रमास्थाय** आरुह्य । अत एव प्राप्ता **पिनाकिन** ईश्वरस्य **लीला** येन स तथोक्त सन् **बाणै**-

टिप्प०-1 इक्ष्वाकुराजर्षे पौत्रो विकुक्षेश्चात्मजोऽयमस्येतिवृत्त देवीभागवता(७।९)दवसेयम् ।

रघुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखा निवृत्तपत्ररचनाश्चकार । तद्भर्तॄनसुरानवधीदित्यर्थः । न हि विधवाः प्रसाध्यन्त इति भावः ॥ ७२ ॥

ऐरावतास्फालनविश्लथं यः संघट्टयन्नङ्गदमङ्गदेन ।
उपेयुषः स्वामपि मूर्तिमग्र्यामर्धासनं गोत्रभिदोऽधितष्ठौ ॥७३॥

ऐरावतेति ॥ यः ककुत्स्थ ऐरावतस्य स्वर्गजस्यास्फालनेन ताडनेन विश्लथं शिथिलमङ्गदमैन्द्रमङ्गदेन स्वकीयेन संघट्टयन् संघर्षयन् स्वामग्र्यां श्रेष्ठां मूर्तिमुपेयुषोऽपि प्राप्तस्यापि गोत्रभिद इन्द्रस्यार्धमासनस्यार्धासनम् । 'अर्धं नपुंसकम्' (पा. २।२।२) इति समासः । अधितष्ठावधिष्ठितवान् । 'स्थादिष्वभ्यासेन चाभ्यासस्य' (पा. ८।३।६४) इत्यभ्यासेन व्यवायेऽपि षत्वम् । न केवलं महोक्षरूपधारिण एव तस्य ककुदमारुरुक्षत् । किंतु निजरूपधारिणोऽपीन्द्रस्यार्धासनमित्यपिशब्दार्थः । अथवा,–अर्धासनमपीत्यपेरन्वयः ॥ ७३ ॥

जातः कुले तस्य किलोरुकीर्तिः कुलप्रदीपो नृपतिर्दिलीपः ।
अतिष्ठदेकोनशतक्रतुत्वे शक्राभ्यसूयाविनिवृत्तये यः ॥ ७४ ॥

जात इति ॥ उरुकीर्तिर्महायशाः कुलप्रदीपो वंशप्रदीपको दिलीपो नृपतिस्तस्य ककुत्स्थस्य कुले जातः किल । यो दिलीपः शक्राभ्यसूयाविनिवृत्तये । न त्वशक्त्येति भावः । एकेनोनाः शतं क्रतवो यस्य स एकोनशतक्रतुस्तस्य भावे तत्त्वेऽतिष्ठत् । इन्द्रप्रीतये शततमं क्रतुमवशेषितवानित्यर्थः ॥ ७४ ॥

यस्मिन्महीं शासति वाणिनीनां निद्रां विहारार्धपथे गतानाम् ।
वातोऽपि नास्रंसयदंशुकानि को लम्बयेदाहरणाय हस्तम् ॥ ७५ ॥

यस्मिन्निति ॥ यस्मिन् दिलीपे महीं शासति सति । विहरत्यत्रेति विहारः क्रीडास्थानम् । तस्यार्धपथे निद्रां गतानां वाणिनीनां मत्ताङ्गनानाम् । 'वाणिनी नर्तकीमत्ताविदग्धवनितासु च' इति विश्वः । 'वाणिन्यौ नर्तकीमत्ते' इत्यमरश्च । अंशुकानि वस्त्राणि वातोऽपि नास्रंसयन्नाकम्पयत् । आहरणायापहर्तुं को हस्तं लम्बयेत् ? तस्याज्ञासिद्धत्वादकुतोभयसंचाराः प्रजा इत्यर्थः । अर्धश्चासौ पन्थाश्चेति विग्रहः । समप्रविभागे प्रमाणाभावादेकदेशिसमासः ॥ ७५ ॥

पुत्रो रघुस्तस्य पदं प्रशास्ति महाक्रतोर्विश्वजितः प्रयोक्ता ।
चतुर्दिगावर्जितसंभृतां यो मृत्पात्रशेषामकरोद्विभूतिम् ॥ ७६ ॥

---

पाठा०–१ 'अधिवस्थे'. २ 'कामिनीनाम्'. ३ 'विहारार्धपथे'. ४ 'आभरणाय'. ५ 'चतुर्दिगावर्जनसंभृतानाम्'.

**पुत्र** इति ॥ **विश्वजितो** नाम **महाक्रतोः प्रयोक्ता**ऽनुष्ठाता **तस्य** दिलीपस्य **पुत्रो रघुः पदं** पैतृकमेव । **प्रशास्ति** पालयति । **यो** रघुश्चतसृभ्यो दिग्भ्य आवर्जिताहृता समृता सम्यग्वर्धिता च या तां **चतुर्दिगावर्जितसंभृतां विभूतिं** संपदं **मृत्पात्रमेव शेषो** यस्यास्तामकरोत् । विश्वजिद्यागस्य सर्वस्वदक्षिणाकत्वादित्यर्थः ॥ ७६ ॥

**आरूढमद्रीनुदधीन्वितीर्णं भुजंगमानां वसतिं प्रविष्टम् ।**
**ऊर्ध्वं गतं यस्य न चानुबन्धि यशः परिच्छेत्तुमियत्तयालम् ॥ ७७ ॥**

**आरूढमिति** ॥ किंच, **अद्रीनारूढम्** । **उदधीन्वितीर्णम**वगाढम् । सकलभूगोलव्यापकमित्यर्थः । **भुजंगमानां वसतिं** पातालं **प्रविष्टम्** । **ऊर्ध्वं** स्वर्गादिकं **गतं** व्याप्तम् । इत्थं सर्वदिग्व्यापीत्यर्थः । अनुबध्नातीत्य**नुबन्धि चा**विच्छेदि । कालत्रयव्यापकं चेत्यर्थः । अत एवंभूतं **यस्य यश इयत्तया** देशतः कालतो वा केनचिन्मानेन **परिच्छेत्तुं** परिमातुं **नालं** न शक्यम् ॥ ७७ ॥

**असौ कुमारस्तमजोऽनुजातस्त्रिविष्टपस्येव पतिं जयन्तः ।**
**गुर्वीं धुरं यो भुवनस्य पित्रा धुर्येण दम्यः सदृशं बिभर्ति ॥ ७८ ॥**

**असाविति** ॥ **असा**वजाख्यः **कुमारः** । **त्रिविष्टपस्य** स्वर्गस्य **पतिमिन्द्रं जयन्त इव** । 'जयन्तः पाकशासनिः' इत्यमरः । **तं रघुमनुजातः** । तस्माज्जात इत्यर्थः । तज्जातोऽपि तदनुजातो भवति; जन्यजनकयोरानन्तर्यात् । 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' (पा. ३।४।७२) इति क्तः । सोपसर्गत्वात्सकर्मकत्वम् । आह चात्रैव सूत्रे वृत्तिकारः—'श्लिषादयः सोपसर्गाः सकर्मका भवन्ति' इति । **दम्यः** शिक्षणीयावस्थः । **यो**ऽजो **गुर्वीं भुवनस्य धुरं धुर्येण** धुरंधरेण चिरनिरूढेन **पित्रा सदृशं** तुल्यं यथा तथा **बिभर्ति** । यथा कश्चिद्वत्सतरोऽपि धुर्येण महोक्षेण समं वहतीत्युपमालंकारो ध्वन्यते । 'दम्यवत्सतरौ समौ' इत्यमरः ॥ ७८ ॥

**कुलेन कान्त्या वयसा नवेन गुणैश्च तैस्तैर्विनयप्रधानैः ।**
**त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन ॥ ७९ ॥**

पाठा०—१ 'प्रतीर्णम्'. २ 'सदृशीम्'.

टिप्प०—1 वर्णितं कालिदासेन प्राक् ( ५।१ ) 'तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोषजातम्' इत्यादौ ।

2 अनुजनन यद्यपि भ्रातृविषये प्रसिद्धम्, तथापीह प्रकरणवशाज्जन्यजनकविषयकमित्यवगन्तव्यम् । तस्माज्जात इत्ययमर्थोऽवच्छिष्यते-इति हेमाद्रिः ।

कुलेनेति ॥ कुलेन कान्त्या लावण्येन नवेन वयसा यौवनेन विनयः प्रधानं येषां तैर्गुणैः श्रुतशीलादिभिश्चात्मनस्तुल्यं स्वानुरूपममुमजं त्वं वृणीष्व । किं बहुना, रत्नं काञ्चनेन समागच्छतु संगच्छताम् । प्रार्थनायां लोट् । रत्नकाञ्चनयोरिवात्यन्तानुरूपत्वादुवयोः समागमः प्रार्थ्यत इत्यर्थः ॥ ७९ ॥

ततः सुनन्दावचनावसाने लज्जां तनूकृत्य नरेन्द्रकन्या ।
दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत्संवरणस्रजेव ॥ ८० ॥

तत इति ॥ ततः सुनन्दावचनस्यावसानेऽन्ते नरेन्द्रकन्येन्दुमती लज्जां तनूकृत्य संकोच्य प्रसादेन मनःप्रसादेनामलया प्रसन्नया दृष्ट्या संवरणस्य स्रजा स्वयंवरणार्थं स्रजेव कुमारमजं प्रत्यग्रहीत् स्वीचकार । सम्यक्सानुरागमपश्यदित्यर्थः ॥ ८० ॥

सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम् ।
रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः ॥ ८१ ॥

सेति ॥ सा कुमारी यूनि तस्मिन्नजेऽभिलाषबन्धमनुरागग्रन्थिं शालीनतयाऽधृष्टतया । 'स्यादधृष्टे तु शालीनः' इत्यमरः । 'शालीनकौपीने अधृष्टाकार्ययोः' (पा.५।२।२०) इति निपातः । वक्तुं न शशाक । तथाप्यरालकेश्याः सोऽभिलाषबन्धो रोमाञ्चलक्ष्येण पुलकव्याजेन । 'व्याजोऽपदेशो लक्ष्यं च' इत्यमरः । गात्रयष्टिं भित्त्वा निराक्रामत् । सात्त्विकाविर्भावलिङ्गेन प्रकाशित इत्यर्थः ॥ ८१ ॥

तथागतायां परिहासपूर्वं सख्यां सखी वेत्रभृदाबभाषे ।
आर्ये ! व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥ ८२ ॥

तथेति ॥ सख्यामिन्दुमत्यां तथागतायां तथाभूतायाम् । दृष्टानुरागायां सत्यामित्यर्थः । सखी सहचरी । 'सख्यशिश्वीति भाषायाम्' (पा.४।१।६२) इति

१ 'वेत्रधरा'. २ 'एनम्'.

टिप्प०—1 त्वं तावत् स्त्रीरत्नम्, अयं महानुभावस्तु सुवर्णम्, अतो रत्नस्य काञ्चनेन योगः—इति सुमति० । 'ययोरेव समं वित्तं ययोरेव समं श्रुतम् । तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥'—इति हेमाद्रिः ।

2 अत्र प्रतिवस्तूपमालंकारः; 'वस्तु किंचिदुपन्यस्य न्यसनात् तत्सधर्मणः । साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा'—इति तल्लक्षणं काव्यादर्शे ।

3 अत्र गूढकूलेति लोकोक्तिः—इति हेमाद्रिः ।

4 मूले 'सखी'शब्दस्य व्यवहारो दृश्यते; यथा कुमारसंभवे (३।१२) 'सर्वं सखे! त्वय्युपपन्नमेतत्' इति; यथा च किराते (१।५) 'स किंसखा साधु न शास्ति योऽधिपम्'—इति हेमाद्रिः ।

निपातनान्ङीप् । वेत्रभृत् सुनन्दा । हे आर्ये पूज्ये । अन्यतोऽन्यं प्रति व्रजाम इति परिहासपूर्वमावभाषे । अथ वधूरिन्दुमत्येनां सुनन्दामसूयया रोषेण कुटिलं ददर्श । अन्यागमनस्यासह्यत्वादित्यर्थः ॥ ८२ ॥

सा चूर्णगौरं रघुनन्दनस्य धात्रीकराभ्यां करभोपमोरूः ।
आसञ्जयामास यथाप्रदेशं कण्ठे गुणं मूर्तमिवानुरागम् ॥ ८३ ॥

सेति ॥ करभः करप्रदेशविशेषः । 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः । करभ उपमा ययोस्तावूरू यस्याः सा करभोपमोरूः । 'ऊरूत्तरपदादौपम्ये' (पा.४।१।६९) इत्यूङ्प्रत्ययः । सा कुमारी चूर्णेन[1] मङ्गलचूर्णेन गौरं लोहितं गुणं[2] स्रजम् । मूर्तं मूर्तिमन्तमनुरागमिव । धात्र्या उपमातुः सुनन्दायाः कराभ्यां रघुनन्दनस्याजस्य कण्ठे यथाप्रदेशं यथास्थानमासञ्जयामास। सक्तं कारयामास । न तु स्वयमाससञ्ज, अनौचित्यात् ॥ ८३ ॥

तया स्रजा मङ्गलपुष्पमय्या विशालवक्षःस्थललम्बया सः ।
अमंस्त कण्ठार्पितबाहुपाशां विदर्भराजावरजां वरेण्यः ॥ ८४ ॥

तयेति ॥ वरेण्यो वरणीय उत्कृष्टः । 'वृञ एण्यः' । सोऽजो मङ्गलपुष्पमय्या मधूकादिकुसुममय्यां विशालवक्षःस्थले लम्बया लम्बमानया तया प्रकृतया स्रजा विदर्भराजावरजामिन्दुमतीं कण्ठार्पितौ बाहू एव पाशौ यया ताम-मंस्त । मन्यतेर्लुङ् । बाहुपाशकल्पसुखमन्वभूदित्यर्थः ॥ ८४ ॥

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ ८५ ॥

शशिनमिति ॥ तत्र स्वयंवरे समगुणयोस्तुल्यगुणयोरिन्दुमती-रघुनन्दनयोर्योगेन प्रीतिर्येषां ते समगुणयोगप्रीतयः पौराः पुरे भवा जनाः इयमजसंगतेन्दुमती

---

1 कुङ्कुमादिक्षोदारुण हरिद्राचूर्णे पीत वा-इति हेमाद्रिः । काश्मीरजातिमाङ्गल्यद्रव्येण गौर पीत-इति शिशु० ।

2 गुणस्तन्तु', तेन माला लक्ष्यते ; 'स्रक्'शब्द विहायानुरागोपमार्थं 'गुण'शब्दः प्रयुक्तः 'मूर्तमिव' इत्यनुरागाख्यो गुणः स्नेहमालायामोतत्वात्तस्मिन्नर्पित इति भावः ।

मेघैर्मुक्तं शशिनं शरच्चन्द्रमुपगता कौमुदी। अनुरूपं सदृशं जलनिधिमवतीर्णा प्रविष्टा जह्नुकन्या भागीरथी। तत्सदृशीत्यर्थः। इत्येवं नृपाणां श्रवणयोः कटु परपक्षमविसंवादि वाक्यमेकवाक्यं विवव्रुः। मालिनीवृत्तम् ॥ ८५ ॥

प्रमुदितवरपक्षमेकतस्तत्क्षितिपतिमण्डलमन्यतो वितानम्।
उषसि सर इव प्रफुल्लपद्मं कुमुदवनप्रतिपन्ननिद्रमासीत् ॥ ८६ ॥

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृतौ स्वयंवरवर्णनो नाम षष्ठः सर्गः।

---

प्रमुदितेति ॥ एकत एकत्र प्रमुदितो हृष्टो वरस्य जामातुः पक्षो वर्गो यस्य तत्तथोक्तम्। अन्यतोऽन्यत्र वितानं शून्यम्। भग्नाशत्वादप्रहृष्टमित्यर्थः। तत्क्षितिपतिमण्डलम्। उषसि प्रफुल्लपद्मं कुमुदवनेन प्रतिपन्ननिद्रं प्राप्तनिमीलनं सर इव सरस्तुल्यम्। आसीत्। पुष्पिताग्रावृत्तमेतत् ॥ ८६ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां संजीविनीसमाख्यायां रघुवंशटीकायां षष्ठः सर्गः।

---

## सप्तमः सर्गः।

भजेमहि निपीयैकं मुहुरन्यं पयोधरम्।
मार्गन्तं बालमालोक्याश्वासयन्तौ हि दंपती ॥

अथोपयन्त्रा सदृशेन युक्तां स्कन्देन साक्षादिव देवसेनाम्।
स्वसारमादाय विदर्भनाथः पुरप्रवेशाभिमुखो बभूव ॥ १ ॥

अथेति ॥ अथ विदर्भनाथो भोजः सदृशेनोपयन्त्रा वरेण युक्ताम्। अत एव साक्षात् प्रत्यक्षम्। 'साक्षात्प्रत्यक्षतुल्ययोः' इत्यमरः। स्कन्देन युक्तां देव-

सेनामिव । देवसेना नाम देवपुत्री स्कन्दपत्नी तामिव स्थितां **स्वसारं** भगिनीमिन्दुमतीमादाय गृहीत्वा **पुरप्रवेशाभिमुखो बभूव** । उपजातिवृत्तं सर्गेऽस्मिन् ॥ १ ॥

**सेनानिवेशान्पृथिवीक्षितोऽपि जग्मुर्विभातग्रहमन्दभासः ।**
**भोज्यां प्रति व्यर्थमनोरथत्वाद्रूपेषु वेशेषु च साभ्यसूया ॥ २ ॥**

**सेनेति** ॥ भोजस्य राज्ञो गोत्रापत्यं स्त्री **भोज्या** तामिन्दुमतीं **प्रति** व्यर्थमनोरथत्वाद्रूपेष्वाकृतिषु **वेशेषु** नेपथ्येषु **च साभ्यसूया** वृथेति निन्दन्तः । किंच **विभाते** प्रातःकाले ये ग्रहाश्चन्द्रादयस्त इव **मन्दभासः** क्षीणकान्तयः **पृथिवीक्षितो** नृपा **अपि सेनानिवेशान्** शिबिराणि **जग्मुः** ॥ २ ॥

ननु क्रुद्धाश्चेत्क्षुभ्यन्तां तत्राह—

**सांनिध्ययोगात्किल तत्र शच्याः स्वयंवरक्षोभकृतामभावः ।**
**काकुत्स्थमुद्दिश्य समत्सरोऽपि शशाम तेन क्षितिपाललोकः ॥ ३ ॥**

**सांनिध्येति** ॥ **तत्र** स्वयंवरक्षेत्रे **शच्या** इन्द्राण्या । संनिधिरेव **सांनिध्यम्** । तस्य **योगात्**सद्भावाद्धेतोः **स्वयंवरस्य क्षोभकृतां** विघ्नकारिणाम**भावः किल** । 'किल' इति स्वयंवरविघातकाः शच्या विनाश्यन्त इत्यागमसूचनार्थम् । **तेन** हेतुना **काकुत्स्थम**जम**ुद्दिश्य समत्सरोऽपि** सवैरोऽपि **क्षितिपाललोकः शशाम** नाक्षुभ्यत् ॥ ३ ॥

**तावत्प्रकीर्णाभिनवोपचारमिन्द्रायुधद्योतिततोरणाङ्कम् ।**
**वरः सवध्वा सह राजमार्गं प्राप ध्वजच्छायनिवारितोष्णम् ॥ ४ ॥**

पाठा०—१ 'पृथिवीभृतः'. २ 'शय्या'. ३ "र्णानभिनवो". ४ "द्योतन". ५ 'आपत्'.

टिप्प०—1 देवसेना देवसेनेन्द्रकन्येवमभूताम्, तयोः पूर्वं स्वपतित्वे स्कन्दोऽभिषिक्त इत्यागमः–इति हेमाद्रिः । 'देवसेनेन्द्रकन्यायां सेनायां च दिवौकसां' इति विश्वः ॥ स्कंदेन कार्तिकेयेन युक्तां साक्षाद्देवसेनां इन्द्रपुत्रीमिव । यथा देवसेनां साक्षात्प्रत्यक्षतः स्कंदेन युक्तामाशय इन्द्रः स्वर्गाभिमुखो भवति तद्वत्–इति सुमति० ।

2 शच्या इन्द्राण्याः सांनिध्ययोगात्स्वयंवरे ये क्षोभकृतो विघ्नकारिणस्तेषामभावः किलेत्यागमः—शच्याः संनिध्याद्विघ्नरहितं विवाहसमाप्तिर्भवति–इति दिनकर० । शचीसन्निधौ ये विघ्नमुपजनयन्ति ते त्वचिरात्प्रलीयन्ते इति प्रवादः–इति हेमाद्रिः । स्वयंवरादौ शचीपूजनं प्रार्थना च प्रयोगरत्नाकरे द्रष्टव्या; तत्फलं चोक्तं तैत्तिरीयसंहितायां–'इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् । न ह्यस्या अपरं च न जरसा मरते पतिः ॥' इति ।

तावदिति ॥ 'यावत्तावच्च साकल्ये' इत्यमरः । तावत्प्रकीर्णा साकल्येन प्रसारिता अभिनवा नूतना उपचाराः पुष्पप्रकरादयो यस्य तं तथोक्तम् । इन्द्रायुधानीव द्योतितानि प्रकाशितानि तोरणान्यङ्काश्चिह्नानि यस्य तम् । ध्वजानां छाया ध्वजच्छायम्, 'छाया बाहुल्ये' (पा. २।४।२२) इति नपुंसकत्वम् । तेन निवारित उष्ण आतपो यत्र तं तथा राजमार्गं स वरो वोढा वध्वा सह प्राप विवेश ॥४॥

ततस्तदालोकनतत्पराणां सौधेषु चामीकरजालवत्सु ।
बभूवुरित्थं पुरसुन्दरीणां त्यक्तान्यकार्याणि विचेष्टितानि ॥ ५ ॥

तत इति ॥ ततस्तदनन्तरं चामीकरजालवत्सु सौवर्णगवाक्षयुक्तेषु सौधेषु तस्याजस्यालोकने तत्पराणामासक्तानां पुरसुन्दरीणामित्थं वक्ष्यमाणप्रकाराणि त्यक्तान्यन्यकार्याणि केशबन्धनादीनि येषु तानि विचेष्टितानि व्यापाराः । नपुंसके भावे क्तः । बभूवुः ॥ ५ ॥

तान्येवाह पञ्चभिः श्लोकैः—

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।
बद्धुं न संभावित एव तावत्करेण रुद्धोऽपि च केशपाशः ॥ ६ ॥

आलोकेति ॥ सहसाऽऽलोकमार्गं गवाक्षपथं व्रजन्त्या कयाचित्कामिन्योद्वेष्टनवान्तमाल्यः । उद्वेष्टनो द्रुतगतिवशादुन्मुक्तबन्धनः । अत एव वान्तमाल्यो बन्धविश्लेषेणोद्गीर्णमाल्यः । करेण रुद्धो गृहीतोऽपि च केशपाशः केशकलापः । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । तावदालोकमार्गप्राप्तिपर्यन्तं बद्धुं बन्धनार्थं न संभावितो न चिन्तित एव ॥ ६ ॥

प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव ।
उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां पदवीं ततान ॥ ७ ॥

पाठा०—१ 'सुरसुन्दरीणाम्'. २ 'मुक्तान्यकार्याणि'. ३ 'वीतमाल्यः'. ४ 'हि'.

टिप्प०—1 इन्द्रायुधस्य द्योतनं तोरणमेव पक्षः चिह्नं यत्र । 'बुधैर्वन्दनमाला तु तोरणं परिकीर्त्यते' इति हलायुधः । नानारत्नदीप्तिसमूहं इन्द्रायुधमिति कविप्रसिद्धिः—इति हेमाद्रिः ।

2 'आलोकमार्गम्' इति श्लोकात् 'तासां मुखैरासवगन्धगर्भैः' (७।११) इति यावत् श्लोकषट्कं कालिदासेन कुमारसंभवे (७।५७-६२) शिवपरिणये यथावत्प्रयुक्तं लभ्यते ।

3 उद्धतं च तद्वेष्टनं च तेन वान्तानि माल्यानि येन सः । 'तावदेव'शब्दाभ्यां बन्धस्य दूरावस्थोच्यते । यत्र करणे रोधमात्रमपि नास्ति तत्र बन्धस्तावद्दूरापास्तः—इति हेमाद्रिः ।

4 उद्गिरणं भुक्तस्योर्ध्वगतिः, मुख्यार्थं परित्यज्य गौणेऽप्येवं वर्तमानो 'वान्त'शब्दो न ग्राम्यः; तथा काव्यादर्शे—'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयात् । अतिसुंदरमन्यत्र ग्राम्यकक्षां विगाहते ॥'—इति हेमाद्रिः ।

**प्रसाधिकेति** ॥ काचित् । प्रसाधिकयाऽलंकर्त्र्या **लम्बितं** रञ्जनार्थं धृतं **द्रवरागमेवार्द्रलक्तकमेव** । अग्रश्चासौ पादश्चेत्यग्रपाद इति कर्मधारयसमासः । 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्' (का. सू.) इति वामनः । **तमाक्षिप्या-कृष्य** । **उत्सृष्टलीलागतिः**त्यक्तमन्दगमना सती । **आ गवाक्षाद्**गवाक्षपर्यन्तं **पदवीं** पन्थानमलक्तकाङ्कां लाक्षारागचिह्नां **ततान** विस्तारयामास ॥ ७ ॥

**विलोचनं दक्षिणमञ्जनेन संभाव्य तद्वञ्चितवामनेत्रा ।**
**तथैव वातायनसंनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ८ ॥**

**विलोचनमिति** ॥ **अपरा** स्त्री **दक्षिणं विलोचनमञ्जनेन संभाव्या-**लंकृत्य । संभ्रमादिति भावः । **तद्वञ्चितं** तेनाञ्जनेन वर्जितं **वामनेत्रं** यस्याः सा सती **तथैव शलाकामञ्जनतूलिकां वहन्ती** सती **वातायनसंनिकर्षं** गवाक्षसमीपं **ययौ** । 'दक्षिण'ग्रहणं संभ्रमाद्व्युत्क्रमकरणद्योतनार्थम् । 'सव्यं हि पूर्वं मनुष्या अञ्जते' इति श्रुतेः ॥ ८ ॥

**जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् ।**
**नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥ ९ ॥**

**जालेति** ॥ **अन्या** स्त्री **जालान्तरप्रेषितदृष्टिर्**गवाक्षमध्यप्रेरितदृष्टिः सती **प्रस्थानेन** गमनेन **भिन्नां** त्रुटितां **नीवीं** वसनग्रन्थिम् । 'नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि' इति विश्वः । **न बबन्ध** । किंतु **नाभिप्रविष्टाभरणानां** कङ्कणादीनां **प्रभा** यस्य तेन । प्रभैव नाभेराभरणमभूदिति भावः । **हस्तेन वासोऽवलम्ब्य** गृहीत्वा **तस्थौ** ॥ ९ ॥

**अर्धाञ्चिता सत्वरमुत्थितायाः पदे पदे दुर्निमिते गलन्ती ।**
**कस्याश्चिदासीद्रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ १० ॥**

**अर्धेति** ॥ **सत्वरमुत्थितायाः** कस्याश्चि**दर्धाञ्चिता** मणिभिरर्धगुम्फिता **दुर्निमिते** संभ्रमाद्दुरुत्क्षिप्ते । 'डुमिञ् प्रक्षेपणे' इति धातोः कर्मणि क्तः । **पदे पदे** प्रतिपदम् । वीप्सायां द्विर्भावः । **गलन्ती** गलद्रत्ना सती **रशना** मेखला **तदानीं** गमनसमयेऽ**ङ्गुष्ठमूले**ऽ**र्पितं सूत्रमेव शेषो** यस्याः सा । **आसीत्** ॥ १० ॥

पाठा०—१ 'प्रासाद'. २ 'अर्धाचिता'; अर्धार्चिता'. ३ 'दुर्नमिते'.

1 अङ्गुष्ठमूले सूत्रमारोप्य मेखलादि ग्रथ्यते इति स्त्रीणां जातिस्वभावः—इति सुमति० ॥ पदे पदे गलन्ती रशाना मध्यादाकृष्यमाना मेखला तदानीमङ्गुष्ठमूलेऽर्पितः सूत्रशेषो यस्याः सा तथाऽभूत्—इति दिनकर० ।

**तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।**
**विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन् ॥ ११ ॥**[1]

**तासामिति** ॥ तदानीं **सान्द्रकुतूहलानां** तासां स्त्रीणामा**सवगन्धो गर्भे** येषां तैः । **विलोलानि नेत्राण्येव भ्रमरा** येषां तैः । **मुखैर्व्याप्तान्तरा**श्छन्नावकाशा **गवाक्षाः सहस्रपत्राभरणा इव** कमलालंकृता इव । 'सहस्रपत्रं कमलम्' इत्यमरः । **आसन्** ॥ ११ ॥

**ता राघवं दृष्टिभिरापिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।**
**तथा हि [3]शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥ १२ ॥**

**ता इति** ॥ **ता नार्यो** रघोरपत्यं **राघव**मजम् । 'तस्यापत्यम्' (पा. ४।१।९२) इत्यण्प्रत्ययः । **दृष्टिभिरापिबन्त्यो**ऽतितृष्णया पश्यन्त्यो **विषयान्तरा**ण्यन्यान्विषयान्न **जग्मुः** । न विविदुरित्यर्थः । **तथा हि**–**आसां** नारीणां **शेषेन्द्रियवृत्ति**श्चक्षुर्व्यतिरिक्तश्रोत्रादीन्द्रियव्यापारः **सर्वात्मना** स्वरूपकार्त्स्न्येन **चक्षुः प्रविष्टेव** । श्रोत्रादीनीन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्तेश्चक्षुरेव प्रविश्य कौतुकात्स्वयमप्येनमुपलभन्ते किमु । अन्यथा स्वस्वविषयाधिगमः किं न स्यादिति भावः ॥ १२ ॥

'शृण्वन्कथाः श्रोत्रसुखाः कुमारः' (७।१६) इति वक्ष्यति । ताः कथयति 'स्थाने' इत्यादिभिस्त्रिभिः—

**स्थाने वृता भूपतिभिः [4]परोक्षैः स्वयंवरं साधुममंस्त भोज्या ।**
**पद्मेव नारायणमन्यथासौ लभेत कान्तं कथमात्मतुल्यम् ? ॥ १३ ॥**

[illegible]

वे । असाविन्दुमती । पद्ममस्या अस्तीति पद्मा लक्ष्मीः । 'अर्शआदिभ्योऽच्' (पा. ५।१।१२७) इत्यच्प्रत्ययः । **नारायणमिव** । **आत्मतुल्यं** स्वानुरूपं **कान्तं** पतिं **कथं लभेत ?** न लभेतैव । सदसद्विवेकासौकर्यादिति भावः ॥ १३ ॥

**परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।**
**अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां [6]वितथोऽभविष्यत् ॥ १४ ॥**

---

पाठा०–१ 'प्रयुक्तपद्माभरणा'. २ 'स्तनंधयन्तं तनयं विहाय विलोकनाय त्वरया व्रजन्ती । संप्रस्नुताभ्यां पदवीं स्तनाभ्यां सिषेच काचित्पयसा गवाक्षम् ॥'. ३ 'सर्वेन्द्रिय'. ४ 'परोक्षे'. ५ 'भार्या'. ६ 'विफलः'.

---

टिप्प०—1 इन्द्रियान्तरव्यापारं त्यक्त्वा तद्विलोकनमेव चक्षुरिति वाक्यार्थः-इति हेमाद्रिः । विषयान्तराणि विहाय राघवदर्शनेनैकतानता बभूवुः-इति दिनकर० ।

**परस्परेणेति** ॥ **स्पृहणीयशोभं** सर्वाशास्यसौन्दर्यमिदं **द्वन्द्वं** मिथुनम् । 'द्वन्द्वं रहस्य-' (पा. ८।१।१५) इत्यादिना निपातः । **परस्परेण नायोजयिष्यच्चेत्** न योजयेद्यदि तर्हि **प्रजानां पत्युर्विधातुरस्मिन्द्वये** द्वन्द्वे **रूपविधानयत्नः** सौन्दर्यनिर्माणप्रयासो **वितथो** विफलो**ऽभविष्यत्** । एतादृशानुरूपस्त्रीपुंसान्तराभावादिति भावः । 'लिङ्निमित्ते लृङ्क्रियातिपत्तौ' (पा. ३।३।१३९) इति लृङ् । 'कुतश्चित्कारणवैगुण्यात्क्रियाया अनभिनिष्पत्तिः क्रियातिपत्तिः' इति वृत्तिकारः ॥ १४ ॥

**रतिस्मरौ[1] नूनमिमावभूतां[2] राज्ञां सहस्रेषु तथा हि बाला ।**
**गतेयमात्मप्रतिरूपमेव[3] मनो हि जन्मान्तरसंगतिज्ञम् ॥ १५ ॥**

**रतीति** ॥ **रतिस्मरौ** यौ नित्यसहचरावित्यभिप्रायः । **नूनं** तावेवेमं चायं चेमौ दंपती । **अभूताम्** । एतद्रूपेणोत्पन्नौ । कुतः ? **तथा हि—इयं** बाला **राज्ञां सहस्रेषु** राजसहस्रमध्ये । सत्यपि व्यत्यासकरण इति भावः । **आत्मप्रतिरूपं** स्वतुल्यमेव । 'तुल्यसंकाशनीकाशप्रकाशप्रतिरूपकाः' इति दण्डी । **गता** प्राप्ता । तदपि कथं जातमत आह—**हि** यस्मान्**मनो जन्मान्तरसंगतिज्ञं** भवति । 'तदेवेदम्' इति प्रत्यभिज्ञाभावेऽपि वासनाविशेषवशादनुभूतार्थेषु मनःप्रवृत्तिरस्तीत्युक्तम् । जन्मान्तरसाहचर्यमेवात्र प्रवर्तकमिति भावः ॥ १५ ॥

**इत्युद्गताः पौरवधूमुखेभ्यः शृण्वन्कथाः श्रोत्रसुखाः कुमारः ।**
**उद्भासितं मङ्गलसंविधाभिः संबन्धिनः सद्म समाससाद ॥ १६ ॥**

**इतीति** ॥ **इति** 'स्थाने वृता' (७।१३) इत्याद्युक्तप्रकारेण **पौरवधूमुखेभ्य उद्गता** उत्पन्नाः **श्रोत्रयोः सुखा** मधुराः । 'सुख'शब्दो विशेष्यनिघ्नः । 'पापपुण्यसुखादि च' इत्यमरः । **कथा** गिरः **शृण्वन् कुमारो**ऽजो **मङ्गलसंविधाभि-**

पाठा०—१ 'जातिस्मरौ'. २ 'इवावभूताम्'. ३ 'यातेय'.

टिप्प०—1 अयमपि श्लोकः कुमारसंभवे (७।६६) वर्णव्यत्ययं विना प्रयुक्तः कालिदासेन । 'यद्यप्येते श्लोकाः कुमारोत्पत्तावपि विद्यन्ते, तथाप्येककर्तृकत्वान्न दोषः'—इति दिङ्मु० ।

3 तात्र मङ्गलरचना सुवर्णिता भागवते—'संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्या- [illegible] ॥ सवृन्त- [illegible] तण्डुलना- [illegible] पात्रान्तरे [illegible]

मङ्गलरचनाभिरुद्भासितं शोभितं संबन्धिनः कन्यादायिनः सद्म गृहं समाससाद प्राप ॥ १६ ॥

ततोऽवतीर्याशु करेणुकायाः स कामरूपेश्वरदत्तहस्तः ।
वैदर्भनिर्दिष्टमथो विवेश नारीमनांसीव चतुष्कमन्तः ॥ १७ ॥

तत इति ॥ ततोऽनन्तरं करेणुकाया हस्तिन्याः सकाशादाशु शीघ्रमवतीर्य । कामरूपेश्वरे दत्तो हस्तो येन सोऽजः । अथो अनन्तरं वैदर्भेण निर्दिष्टं प्रदर्शितमन्तश्चतुष्कं चत्वरम् । नारीणां मनांसीव विवेश ॥ १७ ॥

महार्हसिंहासनसंस्थितोऽसौ सरत्नमर्घ्यं मधुपर्कमिश्रम् ।
भोजोपनीतं च दुकूलयुग्मं जग्राह सार्धं वनिताकटाक्षैः ॥ १८ ॥

महार्हेति ॥ महार्हसिंहासने संस्थितोऽसावजः । भोजेनोपनीतम् । रत्नैः सहितं सरत्नम् । मधुपर्कमिश्रमर्घ्यं पूजासाधनद्रव्यं दुकूलयोः क्षौमयोर्युग्मं च वनिताकटाक्षैरन्यस्त्रीणामपाङ्गदर्शनैः सार्धम् । जग्राह गृहीतवान् ॥ १८ ॥

दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधरक्षैः ।
वेलासकाशं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥ १९ ॥

दुकूलेति ॥ दुकूलवासाः सोऽजः विनीतैर्नम्रैरवरोधरक्षैरन्तःपुराधिकृतैर्वधूसमीपं निन्ये । तत्र दृष्टान्तः—स्फुटफेनराजिरुदन्वान् समुद्रो नवैर्नूतनैश्चन्द्रपादैश्चन्द्रकिरणैर्वेलायाः सकाशं समीपमिव । पूर्णदृष्टान्तोऽयम् ॥ १९ ॥

---

पाठा०—१ 'अथ'. २ 'अजः'. ३ 'मधुमच्च गव्यम्'. ४ 'अवरोधरक्ष्यैः'.

---

टिप्प०—1 सुमतिविजयः 'वैदर्भनिर्दिष्टपथः' इति पाठमाश्रित्य 'वैदर्भेण भोजेन निर्दिष्टो दर्शित पन्था मार्गो यस्य सः' इति व्याचष्टे ।

2 अयमपि श्लोकः कुमारसंभवे (७।२२) यथावत्प्रयुक्तो लभ्यते ।

3 यथा समुद्रश्चन्द्रकिरणैर्वेलायास्तटभूमेः सकाशं समीपं नीयते–इति प्रकम्य अजस्य समुद्रोपमानम्, दुकूलस्य फेनोपमानम्, इन्दुमत्या वेलोपमानम्; अवरोधरक्षाणां चन्द्रपादोपमानम्–इत्याह सुमतिः।

हविःशमीपल्लवलाजगन्धी पुण्यः कृशानोरुदियाय धूमः ।
कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे ॥ २६ ॥

हविरिति ॥ हविष आज्यादेः शमीपल्लवानां लाजानां च गन्धोऽस्यास्तीति हविःशमीपल्लवलाजगन्धी । 'शमीपल्लवमिश्राँल्लाजानञ्जलिना वपति' इति कात्यायनः । पुण्यो धूमः कृशानोः पावकादुदियायोद्भूतः । कपोलयोः संसर्पिणी प्रसरणशीला शिखा यस्य स तथोक्तः स धूमस्तस्या वध्वा मुहूर्तं कर्णोत्पलतां कर्णाभरणतां प्रपेदे ॥ २६ ॥

तदञ्जनक्लेदसमाकुलाक्षं प्रम्लानबीजाङ्कुरकर्णपूरम् ।
वधूमुखं पाटलगण्डलेखमाचारधूमग्रहणाद्बभूव ॥ २७ ॥

तदिति ॥ तद्वधूमुखमाचारेण प्राप्ताद्धूमग्रहणात् । अञ्जनस्य क्लेदोऽञ्जनक्लेदः । अञ्जनमिश्रबाष्पोदकमित्यर्थः । तेन समाकुलाक्षम् । प्रम्लानो बीजाङ्कुरो यवाङ्कुर एव कर्णपूरोऽवतंसो यस्य तत् पाटलगण्डलेखमरुणगण्डस्थलं च बभूव ॥ २७ ॥

तौ स्नातकैर्बन्धुमता च राज्ञा पुरंध्रिभिश्च क्रमशः प्रयुक्तम् ।
कन्याकुमारौ कनकासनस्थावार्द्राक्षतारोपणमन्वभूताम् ॥ २८ ॥

ताविति ॥ कनकासनस्थौ तौ कन्याकुमारौ स्नातकैर्गृहस्थविशेषैः । 'स्नातकस्त्वाप्लुतो व्रती' इत्यमरः । बन्धुमता । बन्धुपुरःसरेणेत्यर्थः । राज्ञा च पुरंध्रिभिः पतिपुत्रवतीभिर्नारीभिश्च क्रमशः प्रयुक्तं स्नातकादीनां पूर्वपूर्ववैशिष्ट्यक्रमेण कृतमार्द्राक्षतानामारोपणमन्वभूतामनुभूतवन्तौ ॥ २८ ॥

इति स्वसुर्भोजकुलप्रदीपः संपाद्य पाणिग्रहणं स राजा ।
महीपतीनां पृथगर्हणार्थं समादिदेशाधिकृतानधिश्रीः ॥ २९ ॥

पाठा०—१ 'गन्धि'. २ 'तस्याम्'.

टिप्प०—1 तद्वधूवक्त्रमाचारार्थं यद्धूमग्रहणं तस्मादीदृशमासीत् । 'लाजाहोमं कृत्वा धूममाजिघ्रेत्' इति गृह्यविदः । अन्ये तु वृद्धाचाराद्धूमग्रहणमित्याहुः—इति दिनकर० । लाजाहोमं कृत्वा धूमं गृह्णन्तीति वृद्धाचारः—इति सुमति० ।

2 हेमपीठस्थितौ तौ वधूवरौ स्नातकैर्गृहस्थैर्बान्धवसहितेन राज्ञा भोजेन च पुरन्ध्रिभिः सुचरित्राभिः स्त्रीभिश्च यथानुक्रमं प्रयुक्तं विहितमार्द्राक्षतानामारोपणमनुभूतवन्तौ । त्रिविधा हि स्नातकाः—विद्यास्नातका व्रतस्नातका विद्याव्रतस्नातका इति—दिनकर० ।

इतीति ॥ अधिश्रीरधिकसंपन्नो भोजकुलप्रदीपः स राजा । इति खसुरिन्दुमत्याः पाणिग्रहणं विवाहं संपाद्य कारयित्वा । महीपतीनां राज्ञां पृथगेकैकशोऽर्हणार्थं पूजार्थमधिकृतानधिकारिणः समादिदेशाज्ञापयामास ॥ २९ ॥

लिङ्गैर्मुदः संवृतविक्रियास्ते ह्रदाः प्रसन्ना इव गूढनक्राः ।
वैदर्भमामन्त्र्य ययुस्तदीयां प्रत्यर्प्य पूजामुपदाछलेन ॥ ३० ॥

लिङ्गैरिति ॥ मुदः संतोषस्य लिङ्गैश्चिह्नैः कपटहासादिभिः संवृतविक्रिया निगूहितमत्सराः । अत[1] एव प्रसन्ना बहिर्निर्मला गूढनक्रा अन्तर्लीनग्राहा ह्रदा इव स्थितास्ते नृपा वैदर्भं भोजमामन्त्र्यापृच्छ्य तदीयां वैदर्भीयां पूजामुपदाछलेनोपायनमिषेण प्रत्यर्प्य ययुर्गतवन्तः ॥ ३० ॥

स राजलोकः कृतपूर्वसंविदारम्भसिद्धौ समयोपलभ्यम् ।
आदास्यमानः प्रमदामिषं तदावृत्य पन्थानमजस्य तस्थौ ॥ ३१ ॥

स इति ॥ आरम्भसिद्धौ कार्यसिद्धौ विषये । पूर्वं कृता कृतपूर्वा । सुप्सुपेति समासः । कृतपूर्वा संवित् संकेतो मार्गावरोधरूप उपायो येन स तथोक्तः । 'संविद्युद्धे प्रतिज्ञायां संकेताचारनामसु' इति केशवः । स राजलोकः समयोपलभ्यम्[2] अजप्रस्थानकाले लभ्यम् । तदा तस्यैकाकित्वादिति भावः । 'समरोपलभ्यम्'[3] इति पाठे युद्धसाध्यमित्यर्थः । तत्प्रमदैवामिषं भोग्यवस्तु । 'आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि' इति केशवः । आदास्यमानो ग्रहीष्यमाणः सन्, अजस्य पन्थानमावृत्यावरुध्य तस्थौ ॥ ३१ ॥

भर्तापि तावत्क्रथकैशिकानामनुष्ठितानन्तरजाविवाहः ।
सत्त्वानुरूपाहरणीकृतश्रीः प्रास्थापयद्राघवमन्वगाच्च ॥ ३२ ॥

भर्तेति ॥ अनुष्ठितः[4] संपादितोऽनन्तरजाया अनुजाया विवाहो येन स

पाठा०—१ 'समरेण लभ्यम्'. २ 'शक्त्यानुरूपाभरणीकृतश्रीः'.

टिप्प०—1 गूढनक्रा हि बहिःप्रसन्ना भवंति–इति शिशु० ।
2 समयेन शपथेनोपस्थानकालेन वोपलभ्यं प्रमदैवामिषं रभ्योपहार्यं–इति शिशु० ।
3 'समराक्षलभ्यं' इति पाठे समरः संग्रामः स एवाक्षः द्यूतं तल्लभ्यं–इति दिनकर० । समयोपलभ्यं प्रमदैवामिषं रभ्योपहार्यं तद्वस्तु आदास्यमानो ग्रहीतुकामः इत्यन्वयः । आरम्भः कन्याहरणलक्षणं कार्यस्य सिद्धिर्निष्पत्तिस्तत्र कृता पूर्वसंवित् 'अमुकस्थाने गत्वा मार्गं रुध्वा स्थेयम्' इति संकेतो येन–इति सुमति० ।
4 'अनुष्ठितानन्तरजा' इति दुःप्रतीतिकरं चिन्त्यमित्याह सुमति० ।

तथोक्तः **क्रथकैशिकानां** देशाना **भर्ता** स्वामी भोजोऽपि **तावत्** तदा **सत्त्वानुरूपम्** उत्साहानुरूप यथा तथा । आ समन्तात् । अनेनानियतवस्तुदानमित्यर्थः। हरणं कन्यायै देयं धनम्। 'यौतकादि तु यद्देयं सुदायो हरण च तत्' इत्यमर.। **आहरणीकृता श्रीर्येन** तथोक्तः सन्, **राघवमजं प्रास्थापयत्** प्रस्थापितवान्। **स्वयमन्वगात्** अनुजगाम **च** ॥ ३२ ॥

**तिस्रस्त्रिलोकप्रथितेन सार्धमजेन मार्गे वसतीरुषित्वा ।**
**तस्मादपावर्तत कुण्डिनेशः पर्वात्यये सोम इवोष्णरश्मेः ॥ ३३ ॥**

**तिस्र इति ॥ कुण्डिनं** विदर्भनगर तस्येशो भोजस्त्रिषु लोकेषु **प्रथितेनाजेन सार्धं मार्गे** पथि **तिस्रो वसती** रात्रीरुषित्वा स्थित्वा। 'वसती रात्रिवेश्मनो.' इत्यमरः। 'कालाध्वनोरत्यन्तसंयोगे' (पा. २।३।५) इति द्वितीया। **पर्वात्यये** दर्शान्त **उष्णरश्मेः** सूर्यात् **सोमः** चन्द्र **इव। तस्मात्** अजाद् **अपावर्तत**। तं विसृज्य निवृत्त इत्यर्थः ॥ ३३ ॥

**प्रमन्यवः प्रागपि कोसलेन्द्रे प्रत्येकमात्तस्वतया बभूवुः ।**
**अतो नृपाश्चक्षमिरे समेताः स्त्रीरत्नलाभं न तदात्मजस्य ॥ ३४ ॥**

**प्रमन्यव इति ॥ नृपा** राजानः **प्रागपि प्रत्येकमात्तस्वतया** दिग्विजये गृहीतधनत्वेन **कोसलेन्द्रे** रघौ **प्रमन्यवो** रूढवैरा **बभूवुः। अतो** हेतोः **समेताः** संगता सन्तस्तदात्मजस्य रघुसूनोः **स्त्रीरत्नलाभं न चक्षमिरे** न सेहिरे ॥ ३४ ॥

**तमुद्वहन्तं पथि भोजकन्यां रुरोध राजन्यगणः स दृप्तः ।**
**बलिप्रदिष्टां श्रियमाददानं त्रैविक्रमं पादमिवेन्द्रशत्रुः ॥ ३५ ॥**

**तमिति ॥ दृप्त** उद्धत. **स राजन्यगणो** राजसंघातः। **भोजकन्यामुद्वहन्तं** नयन्त **तम्** अजम्। **बलिना** वैरोचनिना **प्रदिष्टां** दत्ता **श्रियमाददानं** स्वीकुर्वाणम्। त्रिविक्रमस्येमं **त्रैविक्रमम्। पादमिन्द्रशत्रुः** प्रह्लाद **इव। पथि रुरोध**। तथा च ब्रह्माण्डपुराणे—'विरोचनविरोधेऽपि प्रह्लादः प्राक्तनं स्मरन्। विष्णोस्तु क्रममाणस्य पादाम्भोज रुरोध ह ॥' इति ॥ ३५ ॥

पाठा०—१ 'आभरणीकृतश्री.'. २ 'त्रिलोकी'.

टिप्प०—1 क्रथकैशिका =विदर्भदेशाः। 'शक्त्यानुरूपा' इति पाठमादृत्य,-'शक्त्यानुरूपा शक्तिसदृशयाभरणीकृता श्रीर्लक्ष्मीर्येन'-इति व्याचख्यौ सुमति०।

2 स्त्रीणां मध्ये रत्न श्रेष्ठाया लाभ स्त्रीरत्नलाभ तैर्विचारितम्। इन्दुमतीमादायैनं मारयाम इति भाव-इति सुमति०।

तस्याः स रक्षार्थमनल्पयोधमादिश्य पित्र्यं सचिवं कुमारः।
प्रत्यग्रहीत्पार्थिववाहिनीं तां भागीरथीं शोण इवोत्तरंगः ॥ ३६ ॥

तस्या इति ॥ स कुमारोऽजस्तस्या इन्दुमत्या रक्षार्थमनल्पयोधं बहुभटम्। पितुरागतं पित्र्यम्। आप्तमित्यर्थः। सचिवमादिश्याज्ञाप्य तां पार्थिववाहिनीं राजसेनाम्। 'ध्वजिनी वाहिनी सेना' इत्यमरः। भागीरथीमुत्तरंगः शोणः शोणाख्यो नद इव। प्रत्यग्रहीदभियुक्तवान् ॥ ३६ ॥

पत्तिः पदातिं रथिनं रथेशस्तुरंगसादी तुरगाधिरूढम्।
यन्ता गजस्याभ्यपतद्गजस्थं तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥ ३७ ॥

पत्तिरिति ॥ पत्तिः पादचारो योद्धा पदातिं पादचारमभ्यपतत्। पदा पादाभ्यामततीति पदातिः। 'पादस्य पद्-' (पा. ६।३।५२) इत्यादिना पदादेशः। 'पदातिपत्तिपदगपादातिकपदाजयः' इत्यमरः। रथेशो रथिको रथिनं रथारोहमभ्यपतत्। तुरंगसाद्यश्वारोहस्तुरगाधिरूढमश्वारोहमभ्यपतत्। 'रथिनः स्यन्दनारोहा अश्वारोहास्तु सादिनः' इत्यमरः। गजस्य यन्ता हस्त्यारोहो गजस्थं पुरुषमभ्यपतत्। इत्थमनेन प्रकारेण तुल्यप्रतिद्वन्द्व्येकजातीयप्रतिभटं युद्धं बभूव। अन्योन्यं द्वन्द्वं कलहोऽस्त्येषामिति प्रतिद्वन्द्विनो योधाः। 'द्वन्द्वं कलहयुग्मयोः' इत्यमरः ॥ ३७ ॥

नदत्सु तूर्येष्वविभाव्यवाचो नोदीरयन्ति स्म कुलोपदेशान्।
बाणाक्षरैरेव परस्परस्य नामोर्जितं चापभृतः शशंसुः ॥ ३८ ॥

नदत्स्विति ॥ तूर्येषु नदत्सु सत्सु, अविभाव्यवाचोऽनवधार्यगिरश्चापभृतो धानुष्काः कुलमुपदिश्यते प्रख्याप्यते यैस्ते कुलोपदेशास्तान्कुलनामानि नोदीरयन्ति स्म नोच्चारयामासुः। श्रोतुमशक्यत्वाद्वाचो नाब्रुवन्नित्यर्थः। किंतु बाणाक्षरैर्बाणेषु लिखिताक्षरैरेव परस्परस्यान्योन्यस्योर्जितं प्रख्यातं नाम शशंसुरूचुः ॥ ३८ ॥

उत्थापितः संयति रेणुरश्वैः सान्द्रीकृतः स्यन्दनवंशचक्रैः।
विस्तारितः कुञ्जरकर्णतालैर्नेत्रक्रमेणोपरुरोध सूर्यम् ॥ ३९ ॥

पाठा०—१ 'ज्योतीरथाम्'. २ 'स्यन्दनवंशतालैः'; 'संयति नेमिचक्रैः'. ३ 'अनुक्रमेण'.

टिप्प०—1 शोणो नदो ज्योतीरथानाम्नी स्रोतस्विनी तामिव, कुत्रापि भागीरथीमिव इति पाठः, तत्र गङ्गामिव—इति शिशु०।

**उत्थापित इति** ॥ **संयति** संग्रामेऽश्वैरुत्थापितः । **स्यन्दनवंशानां** रथसमूहानां **चक्रै** रथाङ्गैः **सान्द्रीकृतो** घनीकृतः । 'वंशः पृष्ठास्थि गेहोर्ध्वकाष्ठे वेणौ गणे कुले' इति केशवः । **कुञ्जरकर्णानां तालैस्ताडनैर्विस्तारितः** प्रसारितो **रेणुर्नेत्रक्रमेणांशुकपरिपाट्या** । अंशुकमिवेत्यर्थः । 'स्याज्जटांशुकयोर्नेत्रम्' इति, 'क्रमोऽङ्घ्रौ परिपाट्यां च' इति च केशवः । **सूर्यमुपरुरोध** आच्छादयामास ॥ ३९ ॥

मत्स्यध्वजा वायुवशाद्विदीर्णैर्मुखैः प्रवृद्धध्वजिनीरजांसि ।
बभुः पिबन्तः परमार्थमत्स्याः पर्याविलानीव नवोदकानि[1] ॥ ४० ॥

**मत्स्येति** ॥ **वायुवशाद्विदीर्णै**र्विवृतै**र्मुखैः प्रवृद्धानि ध्वजिनीरजांसि** सैन्यरेणून् **पिबन्तो** गृह्णन्तो **मत्स्यध्वजा** मत्स्याकारा ध्वजाः **पर्याविलानि** परितः कलुषाणि **नवोदकानि पिबन्तः परमार्थमत्स्याः** सत्यमत्स्या **इव** । **बभु**र्भान्ति स्म ॥ ४० ॥

रथो रथाङ्गध्वनिना विजज्ञे विलोलघण्टाक्कणितेन नागः ।
स्वभर्तृनामग्रहणाद्बभूव सान्द्रे रजस्यात्मपरावबोधः ॥ ४१ ॥

**रथ इति** ॥ **सान्द्रे** प्रवृद्धे **रजसि रथो रथाङ्गध्वनिना** चक्रस्वनेन **विजज्ञे** ज्ञातः । **नागो** हस्ती **विलोलानां घण्टानां क्कणितेन** नादेन **विजज्ञे** । **आत्मपरावबोधः** स्वपरविवेकः । योधानामिति शेषः । **स्वभर्तृणां** स्वस्वामिनां **नामग्रहणा**न्नामोच्चारणा**द्बभूव** । रजोऽन्धतया सर्वे स्वं परं च शब्दादेवानुमाय प्रजहुरित्यर्थः ॥ ४१ ॥

आवृण्वतो लोचनमार्गमाजौ रजोऽन्धकारस्य विजृम्भितस्य ।
शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोऽभूद्रुधिरप्रवाहः ॥ ४२ ॥

**आवृण्वत इति** ॥ **लोचनमार्गमावृण्वतो** दृष्टिपथमुपरुन्धतः । **आजौ** युद्धे **विजृम्भितस्य** व्याप्तस्य । **रज** एवान्धकारं तस्य । **शस्त्रक्षतेभ्योऽश्वद्विपवीरेभ्यो** जन्म यस्य स तथोक्तो **रुधिरप्रवाहो बालारुणो** बालार्कोऽ**भूत्** । 'अरुणो भास्करेऽपि स्यात्' इत्यमरः । बालविशेषणं रुधिरसावर्ण्यार्थम् ॥ ४२ ॥

स च्छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात्पवनावधूतः ।
अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवावभासे ॥ ४३ ॥

---

पाठा०—१ 'वनोदकानि'.

---

टिप्प०—1 योद्धृणां सिंहकूर्ममत्स्यादिध्वजाः क्रियन्ते—इति शिशु० ।
2 नवोदकत्व तेजःसामर्थ्यम्—इति शिशु० ।

स इति ॥ क्षतजेन रुधिरेण छिन्नमूलः । त्याजितभूतलसंबन्ध इत्यर्थः । तस्य क्षतजस्योपरिष्टात् पवनावधूतो वाताहतः स रेणुः । अङ्गारशेषस्य हुताशनस्याग्नेः पूर्वोत्थितो धूम इव । आबभासे दिदीपे ॥ ४३ ॥

प्रहारमूर्च्छापगमे रथस्था यन्तॄनुपालभ्य निवर्तिताश्वान् ।
यैः सादिता लक्षितपूर्वकेतूंस्तानेव सामर्षतया निजघ्नुः ॥ ४४ ॥

प्रहारेति ॥ रथस्था रथिनः प्रहारेण या मूर्च्छा तस्या अपगमे सति । मूर्च्छितानामन्यत्र नीत्वा संरक्षणं सारथिधर्म इति कृत्वा । निवर्तिताश्वान्यन्तॄन् सारथीनुपालभ्य 'असाधु कृतम्' इत्यधिक्षिप्य । पूर्वं यैः स्वयं सादिता हताः । लक्षितपूर्वकेतून् । पूर्वदृष्टैः केतुभिः प्रत्यभिज्ञातानित्यर्थः । तानेव सामर्षतया सक्रोधत्वेन हेतुना निजघ्नुः प्रजह्रुः ॥ ४४ ॥

अप्यर्धमार्गे परबाणलूना धनुर्भृतां हस्तवतां पृषत्काः ।
संप्रापुरेवात्मजवानुवृत्त्या पूर्वार्धभागैः फलिभिः शरव्यम् ॥ ४५ ॥

अपीति ॥ अर्धश्चासौ मार्गश्च तस्मिन्नर्धमार्गे परेषां बाणैर्लूनाश्छिन्ना अपि हस्तवतां कृतहस्तानां धनुर्भृतां पृषत्काः शरा आत्मजवानुवृत्त्या स्ववेगानुबन्धेन हेतुना फलिभिर्लोहाग्रवद्भिः । 'सस्यबाणाग्रयोः फलम्' इति विश्वः । पूर्वार्धभागैः । शृणातीति शरुः । तस्मै हितं शरव्यं लक्ष्यम् । 'उगवादिभ्यो यत्' (पा. ५।१।२) इति यत्प्रत्ययः । 'लक्षं लक्ष्यं शरव्यं च' इत्यमरः । संप्रापुरेव, न तु मध्ये पतिता इत्यर्थः ॥ ४५ ॥

आधोरणानां गजसंनिपाते शिरांसि चक्रैर्निशितैः क्षुराग्रैः ।
हृतान्यपि श्येननखाग्रकोटिव्यासक्तकेशानि चिरेण पेतुः ॥ ४६ ॥

आधोरणानामिति ॥ गजसंनिपाते गजयुद्धे निशितैरत एव क्षुराग्रैः क्षुरस्याग्रमिवाग्रं येषां तैश्चक्रैरायुधविशेषैर्हृतानि छिन्नान्यपि । श्येनानां पक्षि-

पाठा०-१ 'रथस्थान्'. २ 'विवर्तिताश्वान्'; 'निवर्तिताश्वाः'. ३ 'मुक्तैः'. ४ 'क्षुराग्रैः'. ५ 'हतानि'.

विशेषणम् । 'पत्त्री श्येनः' इत्यमरः । **नखाग्रकोटिषु व्यासक्ताः केशा येषां** तानि । **आधोरणानां** हस्त्यारोहाणाम् । 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः । **शिरांसि चिरेण पेतुः** पतितानि । शिरःपातात्प्रागेवारुह्य पश्चादुत्पतितां पक्षिणां नखेषु केशसङ्गश्चिरपातहेतुरिति भावः ॥ ४६ ॥

**पूर्वं प्रहर्ता न जघान भूयः प्रतिप्रहाराक्षममश्वसादी ।**
**तुरंगमस्कन्धनिषण्णदेहं प्रत्याश्वसन्तं रिपुमाचकाङ्क्ष ॥ ४७ ॥**

**पूर्वमिति** ॥ **पूर्वं** प्रथमं **प्रहर्ताऽश्वसादी** तौरंगिकः **प्रतिहारेऽक्षममशक्तं तुरंगमस्कन्धे निषण्णदेहम्** । मूर्च्छितमित्यर्थः । **रिपुं भूयो न जघान** पुनर्न प्रजहार । किंतु **प्रत्याश्वसन्तं** पुनरुज्जीवन्तम् **आचकाङ्क्ष** । 'नायुधव्यसनं प्राप्तं नार्तं नातिपरिक्षतम्' ( मनु. ७।९३ )इति निषेधादिति भावः ॥ ४७ ॥

**तनुत्यजां वर्मभृतां विकोशैर्बृहत्सु दन्तेष्वसिभिः पतद्भिः ।**
**उद्यन्तमग्निं शमयांबभूवुर्गजा विविग्नाः करशीकरेण ॥ ४८ ॥**

**तनुत्यजामिति** ॥ **तनुत्यजाम्** । तनुषु निःस्पृहाणामित्यर्थः । **वर्मभृतां** कवचिनां संबन्धिभिर्**बृहत्सु दन्तेषु पतद्भिरत** एव **विकोशैः** पिधानादुद्धृतैः । 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः । **असिभिः** खड्गैरुद्यन्तमुत्थितम**ग्निं विविग्ना** भीता **गजाः करशीकरेण** शुण्डादण्डजलकणेन **शमयांबभूवुः** शान्तं चक्रुः ॥ ४८ ॥

**शिलीमुखोत्कृत्तशिरःफलाढ्या च्युतैः शिरस्त्रैश्चषकोत्तरेव ।**
**रणक्षितिः शोणितमद्यकुल्या रराज मृत्योरिव पानभूमिः ॥ ४९ ॥**

**शिलीमुखेति** ॥ **शिलीमुखै**र्बाणैर**त्कृत्ता**नि **शिरांस्येव फलानि तैराढ्या** संपन्ना । **च्युतैर्भ्रष्टैः** शिरांसि त्रायन्त इति **शिरस्त्रा**णि शीर्षण्यानि । 'शीर्षण्यं च शिरस्त्रे च' इत्यमरः । **तैश्चषकोत्तरा** चषकः पानपात्रमुत्तरं यस्याः **सेव** । 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । **शोणितान्येव मद्यं** तस्य **कुल्याः** प्रवाहा यस्यां सा । 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः । **रणक्षिति**र्युद्धभूमि**र्मृत्योः पानभूमिरिव रराज** ॥ ४९ ॥

**उपान्तयोर्निष्कुषितं विहंगैराक्षिप्य तेभ्यः पिशितप्रियापि ।**
**केयूरकोटिक्षततालुदेशा शिवा भुजच्छेदमपाचकार ॥ ५० ॥**

पाठा०—१ 'उद्वृत्तम्'. २ 'निर्धुपितम्'.

टिप्प०—1 'जीवत्वय वराकः' इति पुनर्मारयितुं नोत्सुकोऽभूदित्यर्थः— इति शिशु० ।

उपान्तयोरिति ॥ उपान्तयोः प्रान्तयोर्विहंगैः पक्षिभिर्निष्कुषितं खण्डितम् । 'इण्निष्ठायाम्' (पा. ७।२।४७) इतीडागमः । भुजच्छेदं भुजखण्डं तेभ्यो विहंगेभ्य आक्षिप्याच्छिद्य पिशितप्रिया मांसप्रियाऽपि शिवा क्रोष्ट्री । 'शिवः कीलः शिवा क्रोष्ट्री' इति विश्वः । केयूरकोट्याऽङ्गदाग्रेण क्षतस्तालुदेशो यस्याः सा सती । अपाचकारापसारयामास । किरतेः करोतेर्वा लिट् ॥ ५० ॥

कश्चिद्द्विषत्खड्गहृतोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य ।
वामाङ्गसंसक्तसुराङ्गनः स्वं नृत्यत्कबन्धं समरे ददर्श ॥ ५१ ॥

कश्चिदिति ॥ द्विषतः खड्गेन हृतोत्तमाङ्गश्छिन्नशिराः कश्चिद्वीरः सद्यो विमानप्रभुतां विमानाधिपत्यम् । देवत्वमित्यर्थः । उपेत्य प्राप्य वामाङ्गसंसक्ता वामोत्सङ्गसङ्गिनी सुराङ्गना यस्य स तथोक्तः सन्, समरे नृत्यत्स्वं निजं कबन्धं अशिरस्कं कलेवरं ददर्श । 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्' इत्यमरः ॥ ५१ ॥

अन्योन्यसूतोन्मथनादभूतां तावेव सूतौ रथिनौ च कौचित् ।
व्यश्वौ गदाव्यायतसंप्रहारौ भग्नायुधौ बाहुविमर्दनिष्ठौ ॥ ५२ ॥

अन्योन्येति ॥ कौचिद्वीरावन्योन्यस्य सूतयोः सारथ्योरुन्मथनाद्वधनात्तावेव सूतौ रथिनौ योद्धारौ चाभूताम् । तावेव व्यश्वौ नष्टाश्वौ सन्तौ गदाभ्यां व्यायतो दीर्घः संप्रहारो युद्धं ययोस्तावभूताम् । ततो भग्नायुधौ सन्तौ बाहुविमर्दे निष्ठा नाशो ययोस्तौ बाहुयुद्धसक्तावभूताम् । 'निष्ठा निष्पत्तिनाशान्ताः' इत्यमरः ॥ ५२ ॥

परस्परेण क्षतयोः प्रहर्त्रोरुत्क्रान्तवाय्वोः समकालमेव ।
अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः ॥ ५३ ॥

परस्परेणेति ॥ परस्परेणान्योन्यं क्षतयोः क्षततन्वोः समकालमेककालं यथा तथोत्क्रान्तवाय्वोर्युगपदुद्गतप्राणयोः । एकैवाप्सराः प्रार्थिता याभ्यां तयोरेका-

प्सरःप्रार्थितयोः। प्रार्थितेऽप्सरसोरित्यर्थः। 'वाहिताग्न्यादिषु' (पा. २।२।३७) इति परनिपातः। अथवा,-एकस्यामप्सरसि प्रार्थितं प्रार्थना ययोरिति विग्रहः। 'स्त्रियां बहुष्वप्सरसः' इति बहुत्वाभिधानं प्रायिकम्। कयोश्चित्प्रद्युम्नयोर्योधयोरमर्त्यभावेऽपि देवत्वेऽपि विवादः कलह आसीत्। एकामिषाभिलाषो हि महद्वैरबीजमिति भावः ॥ ५३ ॥

व्यूहावुभौ तावितरेतरस्माद्भङ्गं जयं चापतुरव्यवस्थम्।
पश्चात्पुरोमारुतयोः प्रवृद्धौ पर्यायवृत्त्येव महार्णवोर्मी ॥ ५४ ॥

व्यूहाविति ॥ तावुभौ व्यूहौ सेनासंघातौ। 'व्यूहस्तु बलविन्यासः' इत्यमरः। पश्चात्पुरश्च यौ मारुतौ तयोः पर्यायवृत्त्या क्रमवृत्त्या प्रवृद्धौ महान्तावर्णवोर्मी महार्णवोर्मी इव। इतरेतरस्मादन्योन्यस्मादव्यवस्थं व्यवस्थारहितमनियतं जयं भङ्गं पराजयं चापतुः प्राप्तवन्तौ ॥ ५४ ॥

परेण भग्नेऽपि बले महौजा ययावजः प्रत्यरिसैन्यमेव।
धूमो निवर्त्येत समीरणेन यतस्तु कक्षस्तत एव वह्निः ॥ ५५ ॥

परेणेति ॥ बले स्वसैन्ये परेण परबलेन भग्नेऽपि महौजा महाबलोऽजोऽरिसैन्यं प्रत्येव ययौ। तथा हि—समीरणेन वायुना धूमो निवर्त्येत कक्षादपसार्येत। वर्ततेर्ण्यन्तात्कर्मणि संभावनायां लिङ्। वह्निस्तु यतो यत्र कक्षस्तृणम्। 'कक्षौ तु तृणवीरुधौ' इत्यमरः। तत एव तत्रैव। प्रवर्तत इति शेषः। सार्वविभक्तिकस्तसिः ॥ ५५ ॥

रथी निषङ्गी कवची धनुष्मान्दृप्तः स राजन्यकमेकवीरः।
निवारयामास महावराहः कल्पक्षयोद्वृत्तमिवार्णवाम्भः ॥ ५६ ॥

पाठा०-१ 'इतरेतरोत्थम्'. २ 'निवर्तेत'. ३ 'यतो हि'. ४ 'विलोडयामास'. ५ 'कल्पक्षयोद्धतम्'.

टिप्प०—1 यस्तु रणे हन्यते स्वर्गामिन दिव्यतामुपगतं तमनुग्रहीतुमप्सरसः समायान्तीत्यागमः। इह तु युगपत्पराञ्चतामुपगतयोरेकस्यामेवागतायां दिव्याङ्गनायां कामुकयोरनयोः स्वर्गेऽपि युद्धमासीदिति भावः, अत एव एकस्यामप्सरसि प्रार्थित ययोः इति समासो युक्त-इति दिनकर० ॥ स्त्रिया बहुवचनमस्तीति ज्ञापयितुं 'बहुषु' इत्युक्तम्, न नियमार्थम्; 'अप्सरा', इत्येकवचनान्तस्यापि प्रयोगदर्शनात्-इति सुबोधिनीकारः। 'काचिदप्सरा भूत्वा प्राञ्जलिर्व्यजिज्ञपत्' इति दशकुमारे प्रयोगः।

2 सैन्यस्य तृणसामान्येनाजस्य महाशक्तितोक्ता-इति हेमाद्रिः।

रथीति ॥ रथी रथारूढो निषङ्गी तूणीरवान् । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः । कवची वर्मधरो धनुष्मान् धनुर्धरो दृप्तो रणदृप्त एकवीरोऽसहायशूरः सोऽजो राजन्यकं राजसमूहम् । 'गोत्रोक्ष—' (पा. ४।२।३९) इत्यादिना वुञ्प्रत्ययः । महावराहो वराहावतारो विष्णुः कल्पक्षये कल्पान्तकाल उद्वृत्तमुद्वेलमर्णवाम्भ इव । निवारयामास ॥ ५६ ॥

स दक्षिणं तूणमुखेन वामं व्यापारयन्हस्तमलक्ष्यताजौ ।
आकर्णकृष्टा सकृदस्य योद्धुर्मौर्वीव बाणान्सुषुवे रिपुघ्नान् ॥ ५७ ॥

स इति ॥ सोऽजः । आजौ संग्रामे दक्षिणं हस्तं तूणमुखेन निषङ्गविवरेण वाममतिसुन्दरम् । 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे' इति विश्वः । व्यापारयन्नलक्ष्यत, शरसंधानादयस्तु दुर्लक्ष्या इत्यर्थः । सकृदाकर्णकृष्टा । योद्धुरस्याजस्य मौर्वी ज्या रिपून्घ्नन्तीति रिपुघ्नाः । तान् । 'अमनुष्यकर्तृके च' (पा.३।२।५३) इति टक्प्रत्ययः । बाणान्सुषुव इव सुषुवे किमु । इत्युत्प्रेक्षा ॥ ५७ ॥

स रोषदष्टाधिकलोहितोष्ठैर्व्यक्तोर्ध्वरेखा भ्रुकुटीर्वहद्भिः ।
तस्तार गां भल्लनिकृत्तकण्ठैर्हुंकारगर्भैर्द्विषतां शिरोभिः ॥ ५८ ॥

स इति ॥ सोऽजः रोषेण दष्टा अत एवाधिकलोहिता ओष्ठा येषां तानि तैः । व्यक्ता ऊर्ध्वा रेखा यासां ता भ्रुकुटीर्भ्रूभङ्गान्वहद्भिः । भल्लनिकृत्ता बाणविशेषच्छिन्नाः कण्ठा येषां तैः । हुंकारगर्भैः सहुंकारैः । हुंकुर्वद्भिरित्यर्थः । द्विषतां शिरोभिर्गां भूमिं तस्तार छादयामास ॥ ५८ ॥

सर्वैर्बलाङ्गैर्द्विरदप्रधानैः सर्वायुधैः कङ्कटभेदिभिश्च ।
सर्वप्रयत्नेन च भूमिपालास्तस्मिन्प्रजह्रुर्युधि सर्व एव ॥ ५९ ॥

सर्वैरिति ॥ द्विरदप्रधानैर्गजमुख्यैः सर्वैर्बलाङ्गैः सेनाङ्गैः । 'हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्' इत्यमरः । कङ्कटभेदिभिः कवचभेदिभिः । 'उरश्छदः

पाठा०—१ 'रोषदष्टाधरलोहिताक्षः'. २ 'हुंकारगर्भैः'. ३ 'बलौघैः'.

---

टिप्प०—1 'तूणमुखे न' इति पाठनाद्न्व आजौ युद्धे दक्षिणं हस्तं तूणीरस्य मुखे व्यापारयन्नाऽऽद्यश्य न ज्ञातः, न च वामं हस्तं प्रसारयन् ज्ञातः । अनेकधुवे—कर्णपर्यन्तमाकृष्टस्याजस्य मौर्वी प्रत्यञ्चा रिपुहनने निपुणान्बाणानजीजनदिव—इत्यादि दिनकर० ।

2 हुंकारगर्भैर्व्यक्तोर्ध्वरेखा इत्यनेन [illegible] इत्युक्तम्—इति सुमतिवि० ।

कञ्चुको ऽजगरः कवचोऽस्त्रियाम्' इत्यमरः। **सर्वायुधैश्च** बाह्यबलमुक्त्वान्तरमाह —**सर्वप्रयत्नेन च सर्वे एव भूमिपाला युधि तस्मिन्नजे प्रजह्रुः**। तं प्रजह्रुरित्यर्थः। सर्वत्र सर्वकारकशक्तिसंभवात्कर्मणोऽप्यधिकरणविवक्षायां सप्तमी। तदुक्तम्—'अनेकशक्तियुक्तस्य विश्वस्यानेककर्मणः। सर्वदा सर्वथाभावात्क्वचित्किंचिद्विवक्ष्यते॥' ५९॥

**सोऽस्त्रव्रजैश्छन्नरथः परेषां ध्वजाग्रमात्रेण बभूव लक्ष्यः।**
**नीहारमग्नो दिनपूर्वभागः किंचित्प्रकाशेन विवस्वतेव॥ ६०॥**

**स इति॥ परेषां** द्विषामस्त्रव्रजैश्छन्नरथः **सोऽजः। नीहारैर्हिमैर्मग्नो दिनपूर्वभागः** प्रातःकालः **किंचित्प्रकाशेने**षल्लक्ष्येण **विवस्वतेव। ध्वजाग्रमात्रेण लक्ष्यो बभूव।** ध्वजाग्रादन्यत्र किंचिल्लक्ष्यते स्मेत्यर्थः॥ ६०॥

**प्रियंवदात्प्राप्तमसौ कुमारः प्रायुङ्क्त राजस्वधिराजसूनुः।**
**गान्धर्वमस्त्रं कुसुमास्त्रकान्तः प्रस्वापनं स्वप्ननिवृत्तलौल्यः॥ ६१॥**

**प्रियंवदादिति॥ अधिराजसूनु**र्महाराजपुत्रः **कुसुमास्त्रकान्तो** मदनसुन्दरः **स्वप्ननिवृत्तलौल्यः** स्वप्नवितृष्णः। जागरूक इत्यर्थः। **असौ कुमारो**ऽजः **प्रियंवदात्**पूर्वोक्ताद्गन्धर्वात्**प्राप्तं गान्धर्वं** गन्धर्वदेवताकम्। 'सास्य देवता' (पा.४।२।२४) इत्यण्। प्रस्वापयतीति **प्रस्वापनं** निद्राजनकमस्त्रं **राजसु प्रायुङ्क्त** प्रयुक्तवान्॥ ६१॥

**ततो धनुष्कर्षणमूढहस्तमेकांसपर्यस्तशिरस्त्रजालम्।**
**तस्थौ ध्वजस्तम्भनिषण्णदेहं निद्राविधेयं नरदेवसैन्यम्॥ ६२॥**

**तत इति॥ ततो धनुष्कर्षणे** चापकर्षणे **मूढहस्त**मव्यापृतहस्तम्। **एकस्मिन्नंसे पर्यस्तं** स्रस्तं **शिरस्त्राणां** शीर्षण्यानां **जालं** समूहो यस्य तत्। **ध्वजस्तम्भेषु निषण्णा** अवष्टब्धा **देहा** यस्य तत्। **नरदेवानां** राज्ञां तेनैव **सैन्यम्।** चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः। **निद्राविधेयं** निद्रापरतन्त्रं **तस्थौ**॥ ६२॥

पाठा०—१ 'छिन्नरथः'. २ 'लक्ष्यम्'. ३ 'अथो कुमारः'; 'अथ प्रियार्हः'; 'अथ प्रियार्हम्'.

टिप्प०—1 हिमयुक्तः यथा दिनपूर्वभागः विवस्वता सूर्येण दृश्यो भवति तथाऽजोपि—इति सुमति०॥ नीहारे तुषारे मग्नो दिनस्य पूर्वभागो यथाऽल्पप्रकाशेन सूर्येण दृश्यो भवति तथा सोऽजो ध्वजाग्रमात्रेण लक्ष्यो दृश्योऽभूत्। शत्रूणामस्त्रवृन्दैराच्छादितत्वादिति भावः—इति दिनकर०।

ततः प्रियोपात्तरसेऽधरोष्ठे निवेश्य दध्मौ जलजं कुमारः ।
तेन स्वहस्तार्जितमेकवीरः पिबन्यशो मूर्तमिवावभासे ॥ ६३ ॥

तत इति ॥ ततः कुमारोऽजः प्रिययेन्दुमत्योपात्तरसे आस्वादितमाधुर्ये । अविश्लाष्य इति भावः । अधरोष्ठे जलजं शङ्खं निवेश्य । 'जलजं शङ्खपद्मयोः' इति विश्वः । दध्मौ मुखमारुतेन पूरयामास । तेनौष्ठनिविष्टेन शङ्खेनैकवीरः स स्वहस्तार्जितं मूर्तं मूर्तिमद्यशः पिबन्निवावभासे । यशसः शुभ्रत्वादिति भावः ॥ ६३ ॥

शङ्खस्वनाभिज्ञतया निवृत्तास्तं सन्नशत्रुं ददृशुः स्वयोधाः ।
निमीलितानामिव पङ्कजानां मध्ये स्फुरन्तं प्रतिमाशशाङ्कम् ॥ ६४ ॥

शङ्खेति ॥ शङ्खस्वनस्याजशङ्खध्वनेरभिज्ञतया प्रत्यभिज्ञातत्वान्निवृत्ताः प्राक्प-लाय्य संप्रति प्रत्यागताः स्वयोधाः सन्नशत्रुं निद्राणशत्रुं तमजम् । निमीलितानां मुकुलितानां पङ्कजानां मध्ये स्फुरन्तं प्रतिमा चासौ शशाङ्कश्च तं प्रतिमाशशाङ्कं प्रतिबिम्बचन्द्रमिव ददृशुः ॥ ६४ ॥

सशोणितैस्तेन शिलीमुखाग्रैर्निक्षेपिताः केतुषु पार्थिवानाम् ।
यशो हृतं संप्रति राघवेण न जीवितं वः कृपयेति वर्णाः ॥ ६५ ॥

सशोणितैरिति ॥ संप्रति राघवेण रघुपुत्रेण । पूर्वं रघुणेति भावः । हे राजानः ! वो युष्माकं यशो हृतं, जीवितं तु कृपया न हृतम् । न त्वशक्त्येति भावः । इत्येवंरूपा वर्णाः । एतदर्थप्रतिपादकं वाक्यमित्यर्थः । सशोणितैः शोणितलिप्तैः शिलीमुखाग्रैर्बाणाग्रैः साधनैस्तेनाजेन प्रयोजककर्त्रा । पार्थिवानां राज्ञां केतुषु ध्वजस्तम्भेषु निक्षेपिताः प्रयोज्यैर्लेखकैर्निवेशिताः लेखिता इत्यर्थः । क्षिपेर्ण्यन्तात्कर्मणि क्तः ॥ ६५ ॥

स चापकोटीनिहितैकबाहुः शिरस्त्रनिष्कर्षणभिन्नमौलिः ।
ललाटबद्धश्रमवारिबिन्दुर्भीतां प्रियामेत्य वचो बभाषे ॥ ६६ ॥

स इति ॥ चापकोट्यां निहित एकबाहुर्येन सः । शिरस्त्रस्य निष्कर्षणेनापनयनेन भिन्नमौलिः श्लथकेशबन्धः । 'चूडाकिरीटं केशाश्च संयता मौलयस्त्रयः' इत्यमरः । ललाटे बद्धाः श्रमवारिबिन्दवो यस्य सः सोऽजो भीतां प्रियामिन्दुमतीमेत्यासाद्य वचो बभाषे ॥ ६६ ॥

किमित्याह—

इतः परानर्भकहार्यशस्त्रान्वैदर्भि ! पश्यानुमता मयासि ।
एवंविधेनाहवचेष्टितेन त्वं प्रार्थ्यसे हस्तगता ममैभिः ॥ ६७ ॥

स इति ॥ हे वैदर्भि इन्दुमति ! इत इदानीमर्भकहार्यशस्त्रान् बालकापहार्यायुधान् परान्शत्रून्पश्य । मयाऽनुमतासि । द्रष्टुमिति शेषः । एभिर्वैरिभिरेवंविधेन निद्रारूपेणाहवचेष्टितेन रणकर्मणा मम हस्तगता । हस्तगतवद्दुर्ग्रहेत्यर्थः । त्वं प्रार्थ्यसे । अपजिहीर्ष्यस इत्यर्थः । 'एवंविधेन' इत्यत्र स्वहस्तनिर्देशेन सोपहासमुवाचेति द्रष्टव्यम् ॥ ६७ ॥

तस्याः प्रतिद्वन्द्विभवाद्विषादात्सद्यो विमुक्तं मुखमाबभासे ।
निःश्वासबाष्पापगमात्प्रपन्नः प्रसादमात्मीयमिवात्मदर्शः ॥ ६८ ॥

तस्या इति ॥ प्रतिद्वन्द्विभवाद्रिपुत्थाद्विषादाद्दैन्यात् सद्यो विमुक्तं तस्या मुखम् । निःश्वासस्य यो बाष्प ऊष्मा । 'बाष्पो नेत्रजलोष्मणोः' इति विश्वः । तस्यापगमाद्धेतोरात्मीयं प्रसादं नैर्मल्यं प्रपन्नः प्राप्तः । आत्मा स्वरूपं दृश्यतेऽनेनेत्यात्मदर्शो दर्पण इव । आबभासे ॥ ६८ ॥

हृष्टापि सा ह्रीविजिता न साक्षाद्वाग्भिः सखीनां प्रियमभ्यनन्दत् ।
स्थली नवाम्भःपृषताभिवृष्टा मयूरकेकाभिरिवाभ्रवृन्दम् ॥ ६९ ॥

हृष्टेति ॥ सेन्दुमती हृष्टापि पत्युः पौरुषेण प्रमुदितापि ह्रिया विजिता यतोऽतः प्रियमजं साक्षात् स्वयं नाभ्यनन्दत् प्रशशंस । किंतु नवैरम्भः-

पाठा०—१ 'चापकोटी निहितैकबाहुः'. २ 'प्रपन्नम्'. ३ 'स्वरूपम्'. ४ 'अभिषिक्ता'. ५ 'अभ्रजालम्'.

टिप्प०—1 अत्र न पुनरुक्तिदोषः, तथा महाकविप्रयोगात् । यत्तत्सकृदन्यत्र (पृ. ११९) प्रतिपादितम् ।

2 परपुरुषान्कथं पश्यामीत्यत आह–मया त्वनुमताऽनुज्ञातासि, मदनुज्ञया पश्येत्यर्थः–इति दिनकर० ।

पृषतैः पयोबिन्दुभिरभिवृष्टाऽभिषिक्ता स्थल्यकृत्रिमा भूमिः। 'जानपदकुण्डगोण-स्थल-' (पा. ४।१।४२) इत्यादिनाऽकृत्रिमार्थे ङीप्। अभ्रवृन्दं मेघसंघं मयूर-केकाभिरिव सखीनां वाग्भिरभ्यनन्दत्॥ ६९॥

इति शिरसि स वामं पादमाधाय राज्ञा-
मुदवहदनवद्यां तामवद्यादपेतः।
रथतुरगरजोभिस्तस्य रूक्षालकाग्रा
समरविजयलक्ष्मीः सैव मूर्ता बभूव॥ ७०॥

इतीति॥ नोद्यते नोच्यत इत्यवद्यं गर्ह्यम्। 'अवद्यपण्य-' (पा. ३।१।१०१) इत्यादिना निपातः। 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इत्यमरः। तस्माद-पेतः। निर्दोष इत्यर्थः। सोऽज इति राज्ञां शिरसि वामं पादमाधायानव-द्यामदोषां तामिन्दुमतीमुदवहदुपानयत्। आत्मसाच्चकारेत्यर्थः। अयमर्थः 'तमुद्व-हन्तं पथि भोजकन्याम्' (७।३५) इत्यत्र न श्लिष्टः। तस्याजस्य रथतुरगाणां रजोभी रूक्षाणि परुषाण्यलकाग्राणि यस्याः सा सैन्दुमत्येव मूर्ता मूर्तिमती समरविजयलक्ष्मीर्बभूव। एतल्लाभादन्यः को विजयलक्ष्मीलाभ इत्यर्थः॥ ७०॥

प्रथमपरिगतार्थस्तं रघुः संनिवृत्तं
विजयिनमभिनन्द्य श्लाघ्यजायासमेतम्।
तदुपहितकुटुम्बः शान्तिमार्गोत्सुकोऽभू-
न्न हि सति कुलधुर्ये सूर्यवंश्या गृहाय॥ ७१॥

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृतावजस्वयंवराभिगमनो नाम सप्तमः सर्गः।

---

पाठा०-१ 'रुक्षालकाग्रा'; 'रूक्षालकान्ता'.

---

टिप्प०—1 यथा नवाम्बुकणसिक्ता स्थली मयूराणां केकाभिर्घनपटलमानन्दयति तथेन्दु-मती प्रमुदितापि ह्रिया जिता लज्जापरवशा सखीनां वाग्भिः स्तुतिवचनैरजमभ्यनन्दत्-यद्यपि 'केका'शब्देन मयूरध्वनिर्लब्धस्तथापि 'मयूर'शब्दस्य 'करिकलभादि'वद् उक्तिपोषकत्वान्न दोषः-इति दिनकर०।

2 ननु विवाहस्य पूर्वमेव जातत्वात् कथमिदानीं 'उदवहत्' इति प्रयोगः? उच्यते-प्रबलतर-वैरिनिवहविजयादिदानीमेवेन्दुमतीलाभाद्विवाहोऽभूत्, यदि तान्नात्र व्यजेष्यत्तर्हि तैरिन्दुम-त्यपहारे कृते विवाहोऽप्यकृत एव स्यादिति भावः-इति दिनकर०।

**प्रथमेति** ॥ प्रथममजागमनात्प्रागेव परिगतो ज्ञातोऽर्थो विवाहविजयरूपो येन स **प्रथमपरिगतार्थो रघुर्विजयिनं** विजययुक्तं **श्लाघ्यजायासमेतं** संनिवृत्तं प्रत्यागतं **तमजमभिनन्द्य । तस्मिन्नज उपहितकुटुम्बः** सन् । 'सुतविन्यस्तपत्नीकः' (याज्ञ. ३।४५१) इति याज्ञवल्क्यस्मरणादिति भावः । **शान्तिमार्गो** मोक्षमार्ग **उत्सुकोऽभूत् ।** तथा हि—**कुलधुर्ये** कुलधुरंधरे सति **सूर्यवंश्या गृहाय** गृहस्थाश्रमाय **न भवन्ति** ॥ ७१ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशव्याख्यायां संजीविनीसमाख्यायां सप्तमः सर्गः ।

---

## अष्टमः सर्गः ।

हेरम्बमवलम्बेऽहं यस्मिन्पातालकेलिषु ।
दन्तेनोद्दसति क्षोणीं विश्राम्यन्ति फणीश्वराः ॥

**अथ तस्य विवाहकौतुकं ललितं बिभ्रत एव पार्थिवः ।**
**वसुधामपि हस्तगामिनीमकरोदिन्दुमतीमिवापराम् ॥ १ ॥**

**अथेति** ॥ अथ **पार्थिवो** रघुर्**ललितं** सुभगं **विवाहकौतुकं** विवाहमङ्गलं विवाहहस्तसूत्रं वा **बिभ्रत एव** । 'कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले' इति शाश्वतः । **तस्या**जस्य । **अपरामिन्दुमतीमिव । वसुधामपि हस्तगामिनीमकरोत्** । अस्मिन्सर्गे वैतालीयं छन्दः ॥ १ ॥

**दुरितैरपि कर्तुमात्मसात्प्रयतन्ते नृपसूनवो हि यत् ।**
**तदुपस्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णया ॥ २ ॥**

**दुरितैरिति** ॥ **नृपसूनवो** राजपुत्रा यद्राज्यं **दुरितैरपि** विषप्रयोगादिनिषिद्धोपायैरपि **आत्मसात्** स्वाधीनम् । 'तदधीनवचने' (पा. ५।४।५४) इति सातिप्रत्ययः । **कर्तुं प्रयतन्ते हि** । प्रयतन्त एवेत्यर्थः । 'हि'शब्दोऽवधारणे । 'हि

---

टिप्प०—1 कौतुकबन्धनं चाह्वाश्वलायनः—'अथ वधूवरौ सर्वेश्वसुगन्धं धारयित्वाऽन्योन्यं परस्परविल्वकं कुरुतः; कण्ठे स्रजं चानुलग्नः, कौतुकसूत्रं च करे बध्नीयातान्'–इति ।

2 तस्याजस्यापरां द्वितीयामिन्दुमतीमिव वसुधामपि भुवमपि हस्तगामिनीं हस्तगतामकरोत् । अजं राज्येऽभिषिक्तवानित्यर्थः । 'अपरां' इत्यनेन साधारणभोग्यत्वमाह–इति शिशु० ।

3 यथोक्तं कामन्दकेन–'राजपुत्रा मदोद्धता गजा इव निरङ्कुशाः । भ्रातरं पितरं वापि निघ्नन्त्येवाभिमानिनः' इति ।

हेतावेवधारणे' इत्यमरः । उपस्थितं स्वतःप्राप्तं तद्राज्यम् । अजः पितुराज्ञेति हेतोरग्रहीत् स्वीचकार । भोगतृष्णया तु नाग्रहीत् ॥ २ ॥

अनुभूय वसिष्ठसंभृतैः सलिलैस्तेन सहाभिषेचनम् ।
विशदोच्छ्वसितेन मेदिनी कथयामास कृतार्थतामिव ॥ ३ ॥

अनुभूयेति ॥ मेदिनी भूमिर्महिषी च ध्वन्यते । वसिष्ठेन संभृतैः सलिलैस्तेनाजेन सहाभिषेचनमनुभूय विशदोच्छ्वसितेन स्फुटमुद्भेदेन । आनन्दनिर्मलोच्छ्वसितेन चेति ध्वन्यते । कृतार्थतां गुणवद्भर्तृलाभकृतं साफल्यं कथयामासेव । न चैतावता पूर्वेषा[3]मपकर्षः; प्रशंसापरत्वात् । 'सर्वत्र जयमन्विच्छेत् पुत्रादिच्छेत्पराजयम्' इत्यङ्गीकृतत्वाच्च ॥ ३ ॥

स बभूव दुरासदः परैर्गुरुणाऽथर्वविदा कृतक्रियः ।
पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा ॥ ४ ॥

स इति ॥ [2]अथर्वविदाऽथर्ववेदाभिज्ञेन गुरुणा वसिष्ठेन कृतक्रियः । अथर्वोक्तविधिना कृताभिषेकसंस्कार इत्यर्थः । सोऽजः परैः शत्रुभिर्दुरासदो दुर्धर्षो बभूव । तथा हि—अस्त्रतेजसा क्षत्रतेजसा सहितं युक्तं यद्ब्रह्म ब्रह्मतेजोऽयं पवनाग्निसमागमो हि तत्कल्प इत्यर्थः । 'पवनाग्नि'इत्यत्र पूर्वनिपातशास्त्रस्यानित्यत्वात् 'द्वन्द्वे घि' (पा. २।२।३२) इति नाग्निशब्दस्य पूर्वनिपातः । तथा च काशिकायाम्—'अयमेकस्तु लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारचिह्नम्' इति । क्षात्रेणैवायं दुर्धर्षः किमयं पुनर्वसिष्ठमन्त्रप्रभावे सतीत्यर्थः । अत्र मनुः—'नाक्षत्रं ब्रह्म भवति क्षत्रं नाब्रह्म वर्धते । ब्रह्मक्षत्रे तु संयुक्ते इहामुत्र च वर्धते ॥' इति ॥ ४ ॥

रघुमेव निवृत्तयौवनं तममन्यन्त न[1]वेश्वरं प्रजाः ।
स हि तस्य न केवलां श्रियं प्रतिपेदे सकलान्गुणानपि ॥ ५ ॥

---

पाठा०—१ 'नरेश्वरम्'.

---

टिप्प०—1 अन्याऽपि रमणी भर्तृसङ्गमनुभूयानन्दोच्छ्वसितेन संभोगनिर्वृतिं कथयति-इति शिशु० ।

2 राज्याभिषेके चाथर्वणीयान्याशीर्वचांसि वदेदुपाध्यायः इति नीलकण्ठभट्टैरुक्तं राज्याभिषेकप्रयोगे ।

3 एतेन पूर्वेभ्यो नृपेभ्योऽस्य महत्त्वमुक्तम्-इति शिशु० ।

**रघुमिति** ॥ **प्रजा नवेश्वरं** तमजं **निवृत्तयौवनं** प्रत्यावृत्तयौवनं **रघुमेवामन्यन्त** । न किंचिद्विदक्रमस्तीत्यर्थः । कुतः ? **हि** यस्मात् **सोऽजस्तस्य** रघोः **केवलामेवां श्रियं न प्रतिपेदे** । किंतु **सकलान्गुणान्** शौर्यदाक्षिण्यादीनपि **प्रतिपेदे** । अतस्तद्गुणयोगात्तद्बुद्धिर्युक्तेत्यर्थः ॥ ५ ॥

**अधिकं शुशुभे शुभंयुना द्वितयेन द्वयमेव संगतम् ।**
**पदमृद्धमजेन पैतृकं विनयेनास्य नवं च यौवनम् ॥ ६ ॥**

**अधिकमिति** ॥ **द्वयमेव शुभंयुना** शुभवता । 'शुभंयुस्तु शुभान्वितः' इत्यमरः । 'अहंशुभमोर्युस्' (पा. ५।२।१४०) इति युस्प्रत्ययः । **द्वितयेन संगतं** युतं सद् **अधिकं शुशुभे** । किं केनेत्याह—**पदमिति** । **पैतृकं** पितुरागतम् । 'ऋतष्ठञ्' (पा. ४।३।७८) इति ठञ्प्रत्ययः । **ऋद्धं** समृद्धं **पदं** राज्यम**जेन अस्य**ाजस्य **नवं यौवनं विनयेन**ेन्द्रियजयेन **च** । 'विजयो हीन्द्रियजयस्तद्युक्तः शास्त्रमर्हति' इति कामन्दकः । राज्यस्थोऽपि प्राकृतवन्न दृप्तोऽभूदित्यर्थः ॥ ६ ॥

**सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति ।**
**अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ॥ ७ ॥**

**सदयमिति** ॥ **महाभुजः सोऽजोऽचिरोपनतां** नवोपगतां **मेदिनीं** भुवम् । **नवं पाणिग्रहणं** विवाहो यस्यास्तां नवोढां **वधूमिव** । **सहसा** बलात्कारेण चेद् । 'सहो बलं सहा मार्गः' इत्यमरः । **इयं** मेदिनीर्वा । **उद्वेगं** भयं **व्रजेदिति** हेतोः । **सदयं** सकृपं **बुभुजे** भुक्तवान् । 'भुजोऽनवने' (पा. १।३।६६) इत्यात्मनेपदम् ॥ ७ ॥

**अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।**
**उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥ ८ ॥**

पाठा०—१ 'नरेश्वरः'. २ 'अस्य भूपतेः'.

टिप्प०—1 यथा प्रजा रघौ प्रीतिमत्योऽभूवन् तथाऽजेऽपि आसन्निति तात्पर्यम्–इति शिशु० ।

2 हेमाद्रिश्चात्र–एवकारस्तु शुभंयुविशेषणमाकाङ्क्षम्, यथा–विदुषा देवदत्तेन यज्ञदत्तः ... न्यः इत्याह ।

...स्तु दुर्लभ; असौ

... रुद्रट– 'मुग्धाम- र्जयेन्मृदूपायैः मौग्ध्यैरालिङ्गनैर्वाक्यैश्चुम्बनैश्चोपसान्त्वयेत्' इति रतिरहस्ये–इति शिशु० ।

5 'बुभुजे' इत्यत्रोपभोगविवक्षयाऽऽत्मनेपदम्–इत्याह दिनकर० ।

अहमिति ॥ **प्रकृतिषु** प्रजासु मध्ये **सर्वोऽपि** जनः । अथवा,— प्रकृतिष्वित्यहमित्यनेनान्वयः । व्यवधानं तु सह्यम् । सर्वोऽपि जनः **प्रकृतिष्वहमेव महीपतेर्मतो** महीपतिना मन्यमानः । 'मतिबुद्धिपूजार्थेभ्यश्च' ( पा. ३।२।१८८ ) इति वर्तमाने क्तः, 'क्तस्य च वर्तमाने' ( पा. २।३।६७ ) इति षष्ठी । **इत्यचिन्तयद्**-मन्यत । उदधेर्निम्नगाशतेष्विवास्य नृपस्य कर्तुः । 'कर्तृकर्मणोः कृति' ( पा. २।३।६५ ) इति कर्तरि षष्ठी । **क्वचिदपि** जनविषये **विमानना**ऽवगणना तिरस्कारो **नाभवत्**, यतो न कंचिदवमन्यतेऽतः सर्वोऽप्यहमेवास्य मत इत्यमन्यतेत्यर्थः ॥ ८ ॥

**न खरो न च भूयसा मृदुः पवमानः पृथिवीरुहानिव ।**
**स पुरस्कृतमध्यमक्रमो नमयामास नृपाननुद्धरन् ॥ ९ ॥**

नेति ॥ **स** नृपो **भूयसा** बाहुल्येन **खर**स्तीक्ष्णो **न** । **भूयसा मृदु**रतिमृदुरपि **न** । किंतु **पुरस्कृतमध्यमक्रमः** सन्, मध्यमपरिपाटीमवलम्ब्येत्यर्थः । **पवमानो** वायुः **पृथिवीरुहां**स्तरूनिव **नृपाननुद्धर**न्ननुत्पाटयन्नेव **नमयामास** । अत्र कामन्दकः—'मृदुश्चेदवमन्येत तीक्ष्णादुद्विजते जनः । तीक्ष्णश्चैव मृदुश्चैव प्रजानां स च संमतः ॥' इति ॥ ९ ॥

**अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवत्तया ।**
**विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निःस्पृहोऽभवत् ॥ १० ॥**

अथेति ॥ **अथ रघुरात्मजं** पुत्र**मात्मवत्तया** । निर्विकारमनस्कतयेत्यर्थः । 'उदयादिष्वविकृतिर्मनसः सत्त्वमुच्यते । आत्मवान्सत्त्ववानुक्तः' इत्युत्पलमालायाम् । **प्रकृतिष्व**मात्यादिषु **प्रतिष्ठितं** रूढमूलं **वीक्ष्य** ज्ञात्वा विनाशो धर्मो येषां तेषु **विनाशधर्मसु** । अनित्येष्वित्यर्थः । 'धर्मादनिच्केवलात्' ( पा. ५।४।१२४ ) इत्यनिच्प्रत्ययः समासान्तः । **त्रिदिवस्थेषु** स्वर्गस्थेष्वपि **विषयेषु** शब्दादिषु **निःस्पृहो** निर्गतेच्छोऽ**भवत्** ॥ १० ॥

कुलधर्मश्चायमेवेत्याह—

**गुणवत्सुतरोपितश्रियः परिणामे हि दिलीपवंशजाः ।**
**पदवीं तरुवल्कवाससां प्रयताः संयमिनां प्रपेदिरे ॥ ११ ॥**

---

पाठा०—१ '°श्रियः'. २ 'अनन्तराम्'. ३ 'आत्मवित्तया' (=आत्मज्ञत्वेन)-४ 'विनाशधर्मिषु'. ५ 'ककुत्स्थवंशजाः'. ६ 'यमिनः संप्रयताः'.

---

टिप्प०—1 'तीक्ष्णादुद्विजते लोको मृदुः सर्वत्र बाध्यते । एवं बुद्धा महाराज ! मा तीक्ष्णो मा मृदुर्भवेति'-इत्युदाहरति शिशु० ।

गुणवदिति ॥ दिलीपवंशजाः परिणामे वार्धके गुणवत्सुतेषु रोपितश्रियः स्थापितलक्ष्मीकाः प्रयताश्च सन्तः । तरुवल्कान्येव वासांसि येषां संयमिनां यतीनां पदवीं प्रपेदिरे । यस्मात्तस्मादस्यापीदमुचितमित्यर्थः ॥ ११ ॥

तमरण्यसमाश्रयोन्मुखं शिरसा वेष्टनशोभिना सुतः ।
पितरं प्रणिपत्य पादयोरपरित्यागमयाचतात्मनः ॥ १२ ॥

तमिति ॥ अरण्यसमाश्रयोन्मुखं वनवासोद्युक्तं पितरं तं रघुं सुतोऽजः । वेष्टनशोभिनोष्णीषमनोहरेण शिरसा पादयोः प्रणिपत्य । आत्मनोऽपरित्यागमयाचत । मा परित्यज्य न गन्तव्यमिति प्रार्थितवानित्यर्थः ॥ १२ ॥

रघुरश्रुमुखस्य तस्य तत्कृतवानीप्सितमात्मजप्रियः ।
न तु सर्प इव त्वचं पुनः प्रतिपेदे व्यपवर्जितां श्रियम् ॥ १३ ॥

रघुरिति ॥ आत्मजप्रियः पुत्रवत्सलो रघुः । अश्रूणि मुखे यस्य तस्याश्रुमुखस्याजस्य तदपरित्यागरूपमीप्सितमभिलषितं कृतवान् । किंतु सर्पस्त्वचमिव व्यपवर्जितां त्यक्तां श्रियं पुनर्न प्रतिपेदे न प्राप ॥ १३ ॥

स किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः ।
समुपास्यत पुत्रभोग्यया स्नुषयेवाविकृतेन्द्रियः श्रिया ॥ १४ ॥

स इति ॥ स रघुः किलान्त्यमाश्रमं प्रव्रज्यामाश्रितः पुरान्नगराद्बहिरावसथे स्थाने निवसन्नविकृतेन्द्रियः । जितेन्द्रियः सन्नित्यर्थः । अत एव

टिप्प०—1 गुणाः शौर्यधैर्यादय आभिगामिका वा ते विद्यन्ते येषां ते गुणवन्तस्तेषु सुतेषु-इति शिशु० ।

2 यमिनां मुनीनां पदवीं वानप्रस्थाश्रमं प्राप्ताः । अनस्तथा कृतवतो रघोरप्येतदुक्तमिति भावः-इति दिनकर० ।

3 वनवासाभिमुखं तं रघुं चरणयोर्नमस्कृत्यात्मनोऽपरित्यागं प्रार्थयामास, मां विहाय वनं मा गच्छेत्यवादीदित्यर्थः-इति दिनकर० ।

4 तेन पट्टबन्धेन चाभिषेको लक्ष्यते । उष्णीषं वेष्टनं च पादयोः केशस्पर्शनं मा भूदिति वा; शिरसाऽवेष्टनशोभिना इत्यकारप्रश्लेषो वा । उष्णीषं त्यक्त्वा नतमित्यर्थः-इति हेमाद्रिः । तस्य पादयोः केशमाल्यादिमस्पर्शपरिहारोक्तिः-इति शिशु० ।

5 प्रियोऽभिमत आत्मजः पुत्रो यस्य स आत्मजप्रियः स रघुरश्रूणि मुखे यस्य तस्य याच्यमानस्याजस्यापरित्यागरूपं वाञ्छितं चकार । न पुनर्व्यपवर्जितां परित्यक्तां लक्ष्मीं स्वीकृतवान्, यथा सर्पस्त्यक्तं कञ्चुकं नादत्ते-इति दिनकर० ।

6 अन्त्याश्रमो वानप्रस्थाश्रमः, 'ब्राह्मणस्यैव सन्यासः' इत्युक्तत्वात्-इति हेमाद्रिः ।

7 श्रियमगृहीत्वैव तयौदासीन्येन स्थित इत्यर्थः-इति हेमाद्रिः ॥ श्रियं परित्यज्यौदासीन्येन तत्र स्थित इत्यर्थः-इति शिशु० ॥ यतोऽसौ यतिस्ततो यमनियमाद्यष्टाङ्गयोगयुक्तः-इति वल्लभः ।

स्नुषयेव वध्वेव पुत्रभोग्यया न स्वभोग्यया। श्रिया समुपास्यत शुश्रूषितः। जितेन्द्रियस्य तस्य स्नुषयेव श्रियापि पुष्पफलोदकाहरणादिशुश्रूषाव्यतिरेकेण न किंचिदपेक्षितमासीदित्यर्थः ॥ अत्र यद्यपि 'ब्राह्मणाः प्रव्रजन्ति' इति श्रुतेः। 'आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्' (६।३८) इति मनुस्मरणात्। 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्। बाहुजातोरुजातानामयं धर्मो न विद्यते ॥' इति निषेधाच्च ब्राह्मणस्यैव प्रव्रज्या न क्षत्रियादेरित्याहुः। तथापि 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इत्यादिश्रुतेस्त्रैवर्णिकसाधारण्यात्। 'त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः' इति सूत्रकारवचनात्। 'ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद्गृहात्' (मनु. १०।११७) इति स्मरणात्। 'मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम्। बाहुजातोरुजातानां त्रिदण्डं न विधीयते ॥' इति निषेधस्य त्रिदण्डविषयत्वदर्शनाच्च। कुत्रचिद्ब्राह्मणपदस्योपलक्षणमाचक्षाणाः केचित्त्रैवर्णिकाधिकारं प्रतिपेदिरे। तथा सति 'स किलाश्रममन्त्यमाश्रितः' (८।१४) इत्यत्रापि कविनाप्ययमेव पक्षो विवक्षित इति प्रतीमः। अन्यथा वानप्रस्थाश्रमतया व्याख्याते 'विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित्' (८।२५) इति वक्ष्यमाणेनानग्निसंस्कारेण विरोधः स्यात्; अग्निसंस्काररहितस्य वानप्रस्थस्यैवाभावात् इत्यलं प्रासङ्गिकेन ॥ १४ ॥

प्रशमस्थितपूर्वपार्थिवं कुलमभ्युद्यतनूतनेश्वरम्।
नभसा निभृतेन्दुना तुलामुदितार्केण समारुरोह तत् ॥ १५ ॥

प्रशमेति ॥ प्रशमे स्थितः पूर्वपार्थिवो रघुर्यस्य तत्। अभ्युद्यतोऽभ्युदितो नूतनेश्वरोऽजो यस्य तत्। प्रसिद्धं कुलं निभृतेन्दुनाऽस्तमयासन्नचन्द्रेणोदितार्केण प्रवर्धितसूर्येण च नभसा तुलां सादृश्यं समारुरोह प्राप। न च 'नभसा तुलाम्' इत्यत्र 'तुल्यार्थैः—' (पा. २।३।७२) इत्यादिना प्रतिषेधस्तृतीयायाः। तस्य सदृशवाचि'तुला'शब्दविषयत्वात्। 'कृष्णस्य तुला नास्ति' इति प्रयोगात्; अस्य च सादृश्यवाचित्वात् ॥ १५ ॥

यतिपार्थिवलिङ्गधारिणौ ददृशाते रघुराघवौ जनैः।
अपवर्गमहोदयार्थयोर्भुवमंशाविव धर्मयोर्गतौ ॥ १६ ॥

---

पाठा०—१ 'स्पूर्वपार्थिवः'. २ 'अपवर्गमहोदयार्थिनौ'; 'अपवृत्तिमहोदयार्थयोः'.

भावितो लोष्टो मृत्पिण्डः काञ्चनं सुवर्णं च यस्य स **समलोष्टकाञ्चनः** निःस्पृह इत्यर्थः। 'लोष्टानि लेष्टवः पुंसि' इत्यमरः। **रघुरपि गुणत्रयं** सत्त्वादिकम्। 'गुणाः सत्त्वं रजस्तमः' इत्यमरः। प्रकृतौ साम्यावस्थायामेव तिष्ठतीति **प्रकृतिस्थं** पुनर्विकारशून्यं यथा तथाऽजयत् ॥ २१ ॥

**न नवः प्रभुरा फलोदयात्स्थिरकर्मा विरराम कर्मणः।**
**न च योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात् ॥ २२ ॥**

**नेति** ॥ **स्थिरकर्मा** फलोदयकर्मकारी **नवः प्रभुरज आ फलोदयात्** फलसिद्धिपर्यन्तं **कर्मण** आरम्भात् **विरराम** न निवृत्तः। 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' (वा. १०७९) इत्यपादानात्पञ्चमी। 'व्याङ्परिभ्यो रमः' (पा. १।३।८३) इति परस्मैपदम्। **स्थिरधीर्निश्चलचित्तो नवेतरो** रघुश्चा**परमात्मदर्शनात्** परमात्मसाक्षात्कारपर्यन्तं **योगविधेरै**क्यानुसंधानात् **विरराम** ॥ २२ ॥

**इति शत्रुषु चेन्द्रियेषु च प्रतिषिद्धप्रसरेषु जाग्रतौ।**
**प्रसितावुदयापवर्गयोरुभयीं सिद्धिमुभाववापतुः ॥ २३ ॥**

**इतीति** ॥ **इत्येवं प्रतिषिद्धः प्रसरः** स्वार्थप्रवृत्तिर्येषां तेषु **शत्रुषु चेन्द्रियेषु च जाग्रताव**प्रमत्ता**वुदयापवर्गयोर**भ्युदयमोक्षयो **प्रसितावा**सक्तौ। 'तत्परे प्रसितासक्तौ' इत्यमरः। **उभाव**जरघू **उभयीं** द्विविधामभ्युदयमोक्षरूपाम्। 'उभादुदात्तो नित्यम्' (पा. ५।२।४४) इति तयप्प्रत्ययस्यायजादेशः। 'टिड्ढा–' (पा. ४।१।१५) इति ङीप्। **सिद्धिं** फल**मवापतुः**। उभावुभे सिद्धी यथासंख्यमवापतुरित्यर्थः ॥ २३ ॥

**अथ काश्चिदजव्यपेक्षया गमयित्वा समदर्शनः समाः।**
**तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः ॥ २४ ॥**

**अथेति** ॥ **अथ रघुः समदर्शनः** सर्वभूतेषु समदृष्टिः सन्न**जव्यपेक्षयाऽ**जात्मजानुरोधेन **काश्चित्समाः** कतिचिद्वर्षाणि। 'समा वर्षं समं तुल्यम्' इति विश्वः।

**पाठा०—१ 'परमार्थं'. २ 'प्रसक्तौ'. ३ 'उभयाम्'.**

टिप्प०—1 योगश्चित्तवृत्तिनिरोधस्तस्य 'विधि' करणं तस्माद्योगविधेः—इति दिनकर०। जीवात्मपरमात्मनोः संयोगो योग इत्यन्ये। 'संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः' इति योगवसिष्ठः। योगश्चित्तवृत्तिनिरोधः—इति हेमाद्रिः।

2 अजव्यपेक्षया पुत्रोपरोधेन, न तु स्वेच्छया—इति हेमाद्रिः।

3 स्वनिर्देशवचनाभावाच्च समाशब्दो बहुवचनान्तः एकवचनान्तो वा। तथा प्रयोग-मालायाम्—'संवत्सरे समा च स्त्री भूम्नैकत्वे च दृश्यते'—इति हेमाद्रिः।

**गमयित्वा** नीत्वा **योगसमाधिनै**क्यानुसंधानेन । 'संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः' इति वसिष्ठः । **अव्ययमविनाशिनं तमसः परम**विद्यायाः परम् । मायातीतमित्यर्थः । **पुरुषं** परमात्मानम् । **आपत्** प्राप । सायुज्यं प्राप्त इत्यर्थः ॥ २४ ॥

**श्रुतदेहविसर्जनः पितुश्चिरमश्रूणि विमुच्य राघवः ।**
**विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित् ॥ २५ ॥**

**श्रुतेति** ॥ **अग्निचि**दग्निं चितवानाहितवान् । 'अग्नौ चेः' ( पा. ३।२।९१ ) इति क्विप्प्रत्ययः । **राघवो**ऽजः[1] **पितुः श्रुतदेहविसर्जन** आकर्णितपितृतनुत्यागः सं**श्चिरमश्रूणि** बाष्पा**न्विमुच्य** विसृज्या**स्य पितुरनग्निम्** । अग्निसंस्काररहितमित्यर्थः । **नैष्ठिकं** निष्ठायामन्ते भवं **विधिमाचारम**न्त्येष्टिं **यतिभिः** संन्यासिभिः **सार्धं** सह **विदधे** चक्रे । 'अनग्निं विधिम्'इत्यत्र शौनकः—'सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्यं नैव पिण्डोदकक्रिया ॥ निदध्यात्प्रणवेनैव बिले भिक्षोः कलेवरम् । प्रोक्षणं खननं चैव सर्वं तेनैव कारयेत् ॥' इति ॥ २५ ॥

**अकरोत्स**[3] **तदौर्ध्वदैहिकं पितृभक्त्या पितृकार्यकल्पवित् ।**
**न हि तेन पथा तनुत्यजस्तनयावर्जितपिण्डकाङ्क्षिणः ॥ २६ ॥**

**अकरोदिति** ॥ **पितृकार्य**[1]स्य तातश्राद्धस्य **कल्पवि**द्विधानज्ञः **सो**ऽजः **पितृभक्त्या** पितरि प्रेम्णा करणेन न पितुः परलोकसुखापेक्षया । मुक्तत्वादिति भावः । **तस्य** रघो**रौर्ध्वदैहिकम्**[2] । देहादूर्ध्वं भवतीति तत्तिलोदकपिण्डदानादिकम**करोत्** । 'ऊर्ध्वं देहाच्च' इति वक्तव्यात्ठञ्प्रत्ययः । अनुशतिकादित्वादुभयपदवृद्धिः । ननु कथं भक्तिरेव श्राद्धादिफलप्रेप्सापि कस्मान्नाभूदित्याशङ्क्याह—**न हीति** । **तेन पथा** योगरूपेण मार्गेण **तनुत्यजः** शरीरत्यागिनः पुरुषा**स्तनयेनावर्जितं** दत्तं **पिण्डं काङ्क्षन्तीति** तथोक्ता **न हि** भवन्ति ॥ २६ ॥

पाठा०—१ 'विसृज्य'. २ 'अग्निवित्'. ३ 'च'.

टिप्प०—1 पितॄणां कार्याणि तेषां कल्पाः प्रतिपादनग्रंथास्तान्वेत्तीति तथोक्तः—इति हेमाद्रिः
2 सुतेनावश्यं पितॄणामुदकक्रिया कार्या; पितृभक्ते सति तु किमुच्यते ? पितरः पुत्रहस्तेन पिण्डं वाञ्छन्तीति पारलौकिकाचारः । हि निश्चितम्, तेन पथा तेन मार्गेण तनुत्यजो योगविधिना देहत्यागिनः तनयावर्जितपिण्डकाङ्क्षिणो न भवन्ति अजरममरपदं प्राप्ता नित्यतृप्ता भवन्ति । उक्तं च—'न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम'—इति वल्लभः ।

**स परार्ध्यगतेरशोच्यतां पितुरुद्दिश्य सदर्थवेदिभिः ।**
**शमिताधिरधिज्यकार्मुकः कृतवानप्रतिशासनं जगत् ॥ २७ ॥**

**स इति ॥ परार्ध्यगतेः** प्रशस्तगतेः प्राप्तमोक्षस्य **पितुरशोच्यतामशोचनी**यत्व**मुद्दिश्या**भिसंधाय । शोको न कर्तव्य इत्युपदिश्येत्यर्थः । **सदर्थवेदिभिः** परमार्थज्ञैर्विद्वद्भिः **शमिताधि**र्निवारितमनोव्यथः । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । **सोऽज्ञोऽधिज्यकार्मुकः** अधिज्यमारोपितमौर्वीकं कार्मुकं यस्य स तथोक्तः सन् । **जगत्** कर्मभूत**मप्रतिशासनं** द्वितीयाज्ञारहितम् । आत्माज्ञाविधेयमित्यर्थः । **कृतवां**श्चकार ॥ २७ ॥

**क्षितिरिन्दुमती च भामिनी पतिमासाद्य तमग्र्यपौरुषम् ।**
**प्रथमा बहुरत्नसूरभूदपरा वीरमजीजनत्सुतम् ॥ २८ ॥**

**क्षितिरिति ॥ क्षिति**र्मही **भामिनी** कामिनी**न्दुमती च** । 'भामिनी कामिनी च' इति हलायुधः । **अग्र्यपौरुषं** महापराक्रममुत्कृष्टभोगशक्तिं **च तमजं पतिमासाद्य** प्राप्य । तत्र **प्रथमा** क्षितिः । बहूनि रत्नानि श्रेष्ठवस्तूनि सूत इति **बहुरत्नसूरभूत्** । 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः । **अपरे**न्दुमती **वीरं सुतम**जीजन**ज्जनयति स । जायतेर्णौ लुङि रूपम् । सहोक्त्या सादृश्यमुच्यते ॥ २८ ॥

किंनामकोऽसावत आह—

**दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।**
**दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥ २९ ॥**

**दशेति ॥** दश रश्मिशतानि यस्य स **दशरश्मिशतः** सूर्यः स **उपमा** यस्याः सा दशरश्मिशतोपमा द्युतिर्यस्य तम् । **यशसा** करणेन **दशस्वपि दिक्ष्**वाशासु **श्रुतं** प्रसिद्धम् । **दशकण्ठारे** रावणारे रामस्य **गुरुं** पितरं **यं** सुतम् । **आख्यया** नाम्ना **दशपूर्वो** 'दश'शब्दपूर्वो **रथो** रथशब्दस्तम् । दशरथमित्यर्थः । **बुधा** विद्वांसो **विदुर्वदन्ति** । 'विदो लटो वा' (पा. ३।४।८३) इति झेर्जुसादेशः ॥ २९ ॥

---

**पाठा०**—१ 'आजग्मतुः'. २ 'उग्रपौरुषम्'. ३ 'बहुरत्नभूः'. ४ 'त्वपरा'.

---

टिप्प०—1 कोपना सैव भामिनी । 'भामिनी' शब्देन भुवः सापत्न्यत्वात् स्पर्धयेव पुत्रप्रसूतेति भावः, 'भाविनि' इति पाठे भावाः शृंगारचेष्टाः—इति हेमाद्रिः ।

2 एतत्सदृशः 'यमिन्द्रशब्दार्थनिषूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते' इति माघे (१।४२) प्रयोगः । 'दश'शब्दस्यार्थपरत्वे शब्दपरत्वे वा विवक्षितस्यार्थस्य कष्टकल्पनायाः प्रवीनाबलङ्कारज्ञा नानुमन्यन्ते । प्रयोगाश्च—'हिरण्यपूर्वं कशिपु' इति माघकाव्ये, 'धनुरुपपद वेदमभ्यादिश' इति किरातार्जुनीये । 'यमाख्यये'ति संधिना प्राम्यम्; यमप्रवीते—इति हेमाद्रिः ।

ऋषिदेवगणस्वधाभुजां श्रुतयागप्रसवैः स पार्थिवः ।
अनृणत्वमुपेयिवान्बभौ परिधेर्मुक्त इवोष्णदीधितिः ॥ ३० ॥

ऋषीति ॥ श्रुतयागप्रसवैरध्ययनयज्ञसंतानैः करणैः यथासंख्यमृषीणां देवगणानामिन्द्रादीनां स्वधाभुजां पितृणामनृणत्वमृणविमुक्तत्वम् । उपेयिवान् प्राप्तवान् । 'एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वा' इति श्रुतेः । स पार्थिवोऽजः परिधेः परिवेषात् । 'परिवेषस्तु परिधिः' इत्यमरः । मुक्तो निर्गतः । कर्मकर्ता । उष्णदीधितिः सूर्य इव । बभौ दिदीपे । इत्युपमा ॥ ३० ॥

बलमार्तभयोपशान्तये विदुषां सत्कृतये बहु श्रुतम् ।
वसु तस्य विभोर्न केवलं गुणवत्तापि परप्रयोजना ॥ ३१ ॥

बलमिति ॥ तस्य विभोरजस्य केवलं वसु धनमेव परप्रयोजनं परोपकारकं नाभूत् । किंतु गुणवत्तापि गुणत्वमपि परप्रयोजना परेषामन्येषां प्रयोजनं यस्याः सा । विधेयांशत्वेन प्राधान्याद्गुणवत्ताया विशेषणं वस्विलिङ्ग ऊहनीयम् । तथा हि-बलं पौरषमार्तानामापन्नानां भयस्योपशान्तये निषेधाय । न तु स्वार्थं परपीडनाय वा । बहु भूरि श्रुतं विद्या विदुषां सत्कृतये सत्काराय । न तूद्वेजाय बभूव तस्य धनं परोपयोगीति किं वक्तव्यम् । बलश्रुतादयोऽपि गुणाः परोपयोगिन इत्यर्थः ॥ ३१ ॥

स कदाचिदवेक्षितप्रजः सह देव्या विजहार सुप्रजाः ।
नगरोपवने शचीसखो मरुतां पालयितेव नन्दने ॥ ३२ ॥

स इति ॥ अवेक्षितप्रजोऽकुतोभयत्वेनानुसंहितप्रजः । 'नित्यमसिच्प्रजामेधयोः' (पा. ५।४।१२२) इत्यसिच्प्रत्ययः । न केवलं स्वेन इति भावः । शोभना प्रजा यस्यासौ सुप्रजाः सुपुत्रवान् । पुत्रन्यस्तभार इति भावः । सोऽजः कदाचिद्देव्या महिष्येन्दुमत्या सह नगरोपवने । नन्दने नन्दनाख्येऽमरावत्युपकण्ठवने शचीसखः । शच्या सहेत्यर्थः । मरुतां देवानां पालयितेन्द्र इव । विजहार चिक्रीड ॥ ३२ ॥

अथ रोधसि दक्षिणोदधेः श्रितगोकर्णनिकेतमीश्वरम् ।
उपवीणयितुं ययौ रवेरुदयावृत्तिपथेन नारदः ॥ ३३ ॥

---

पाठा०—१ 'संपतये'; 'संततये'. २ 'न केवलं विभोः'. ३ 'परप्रयोजनम्'. ४ 'नन्दनम्.' ५ 'श्रुत'. ६ 'उपवर्णयितुम्'. ७ 'उदगावृत्तिपथेन'. (=उदीच उत्तरस्या दिश आगाय आवृत्तिर्निवर्तनम् । तस्या पन्था गतिप्रकारस्तेन यथा विदारस्या दिशो भ्यागत्य दक्षिणमार्गमागच्छति तद्वदित्यर्थः).

**अथेति** ॥ **अथ दक्षिणस्योदधेः** समुद्रस्य **रोधसि तीरे श्रितगोकर्णनिकेनम**धिष्ठितगोकर्णाख्यस्थानम**ीश्वरं शिवमुपवीणयितु** वीणयोप समीपे गातुम् 'सत्यापाश–' (पा ३।१।२५) इत्यादिना 'वीणा'शब्दादुपगानार्थे णिच्प्रत्यय· । ततस्तुमुन् । **नारदो** देवर्षी **रवेः** सूर्यस्य सबन्धिना। **उदयावृत्तिपथेना**काश-मार्गेण **ययौ** जगाम । सूर्योपमानेनास्यातितेजस्त्वमुच्यते ॥ ३३ ॥

**कुसुमैर्ग्रथितामपार्थिवैः स्रजमातोद्यशिरोनिवेशिताम्।**
**अहरत्किल तस्य वेगवानधिवासस्पृहयेव मारुतः ॥ ३४ ॥**

**कुसुमैरिति** ॥ **अपार्थिवै**रभौमै· । दिव्यैरित्यर्थ । **कुसुमैर्ग्रथितां** रचिताम् । **तस्य नारदस्यातोद्यस्य** वाद्यस्य वीणायाः **शिरस्यग्रे निवेशिताम्** । 'चतुर्विधमिद वाद्य वादित्रातोद्यनामकम्' इत्यमर । **स्रजं** माला **वेगवान्मारुतः** । **अधिवासे** वासनाया **स्पृहयेव** । स्रजा स्वाङ्ग सस्कर्तुमित्यर्थः । 'सस्कारो गन्धमाल्याद्यैर्य स्यात्तदधिवासनम्' इत्यमर । **अहरत्किल** । 'किल' इत्यैतिह्ये ॥ ३४ ॥

**भ्रमरैः कुसुमानुसारिभिः परिकीर्णा परिवादिनी मुनेः ।**
**ददृशे पवनावलेपजं सृजती बाष्पमिवाञ्जनाविलम् ॥ ३५ ॥**

**भ्रमरैरिति** ॥ **कुसुमानुसारिभिः** पुष्पानुयायिभि**र्भ्रमरै**रलिभि **परिकीर्णा** व्याप्ता **मुने**र्नारदस्य **परिवादिनी** वीणा 'वीणा तु वल्लकी। विपञ्ची सा तु तन्त्रीभिः सप्तभि परिवादिनी ॥' इत्यमर । **पवनस्य** वायो**रवलेपो**ऽधिक्षेपस्तज्जमञ्जनेन

पाठा०–१ 'विनिकीर्णा'.

टिप्प०–1 अथानन्तर नारदो मुनि रवे· सूर्यस्य, उदयावृत्तिपथेनोदयस्यावृत्ति पुन पुन करण सूर्यस्य दक्षिणोत्तरगती उदयावृत्तिस्तन्मार्गेणेश्वरमुपवीणयितु ययौ, व्योममार्गेण शिव गातु जगाम । किंभूतम् ? दक्षिणोदधे श्रुतगोकर्णनिकेतन दक्षिणार्णवतटे प्रसिद्ध गोकर्णाख्य निकेतनादितीर्थं तत्र कृतस्थिति गोकर्णेश्वरमित्यर्थ"–इति वल्लभ' ।

2 यद्यपि 'आतोद्य'शब्दश्चतुर्विधे वाद्ये वर्तते, तथाप्यत्र प्रकरणाद्वीणावाची–इति दिनकर० ।

3 अधिवासो गन्धपुष्पादिकृत संस्कारस्तद्वाञ्छयेव, अनया स्रजाऽहमपि संस्कृतो भवामी त्याशयेन–इति दिनकर०॥ स्पृहयेव–अधिवासस्पृहयेवाधिकसौरभ्यवाञ्छयेव–इति–वल्लभ ।

4 एवविध वायुपराभवजातमश्रु इव मुञ्चन्ती मुनेः परिवादिनी ददृशे । पराभवात्किल नारी रोदिति–इति वल्लभः ।

कज्जलेनाविलं कलुषं बाष्पमश्रु सृजतीव मुञ्चतीव । ददृशे दृष्टा । भ्रमराणां साञ्जनबाष्पबिन्दुसादृश्यं विवक्षितम् । 'वा नपुंसकस्य' (पा. ७।१।७९) इति वर्तमाने 'आच्छीनद्योर्नुम्' (पा. ७।१।८०) इति नुम्विकल्पः ॥ ३५ ॥

अभिभूय विभूतिमार्तवीं मधुगन्धातिशयेन वीरुधाम् ।
नृपतेरमरस्रगाप सा दयितोरुस्तनकोटिसुस्थितिम् ॥ ३६ ॥

अभिभूयेति ॥ साऽमरस्रग्दिव्यमाला । मधुगन्धयोर्मकरन्दसौरभयोरतिशयेनाधिक्येन । वीरुधां लतानाम् । 'लता प्रतानिनी वीरुत्' इत्यमरः । ऋतोः प्राप्तामार्तवीमृतुसंबन्धिनीं विभूतिं समृद्धिमभिभूय तिरस्कृत्य नृपतेरजस्य दयिताया इन्दुमत्या उर्वोर्विशालयोः स्तनयोर्ये कोटी चूचुकौ तयोः सुस्थितिं गोप्यस्थाने पतितत्वात्प्रशस्तं स्थानम् । आप प्राप्ता ॥ ३६ ॥

क्षणमात्रसखीं सुजातयोः स्तनयोस्तामवलोक्य विह्वला ।
निमिमील नरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी ॥ ३७ ॥

क्षणमिति ॥ सुजातयोः सुजन्मनोः । सुन्दरयोरित्यर्थः । स्तनयोः क्षणमात्रं सखीं सखीमिव स्थिताम् । सुजातत्वसाधर्म्यात्स्रजः स्तनसखीत्वमिति भावः । तां स्रजमवलोक्येषद्दृष्ट्वा विह्वला परवशा नरोत्तमप्रियेन्दुमती । तमसा राहुणा । 'तमस्तु राहुः स्वर्भानुः' इत्यमरः । हृतचन्द्रा कौमुदी चन्द्रिकेव । निमिमील मुमोह, ममारेत्यर्थः । 'निमीलो दीर्घनिद्रा च' इति हलायुधः । कौमुद्या निमीलनं प्रतिसंहारः ॥ ३७ ॥

वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत् ।
ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम् ॥ ३८ ॥

वपुषेति ॥ करणैरिन्द्रियैरुज्झितेन मुक्तेन । 'करणं साधकतमं क्षेत्रगात्रेन्द्रिये-

पाठा०—१ 'दयितोरश्छदकोटिरत्नयोः [=दयिताया उरश्छदयोः कोटिः अग्रे-चूचुकौ त एव रत्ने तयोः ].

टिप्प०—1 'तमसा हृतचन्द्रचन्द्रिका समसंसा निमिमील सुंदरी' इति अन्यः पाठः इति पठित्वा 'संसा-अवस्था-प्रणिधि-समा-प्राकार-मृत्युषु' इति यादवः इत्युदाहरति दिनकर० ।

2 अत्र वल्लभः-'सममेव नराधिपेन सा गुरुसंमोहविलुप्तचेतसा । अगमत्सह तैलबिन्दुना नवदीपार्चिरिव क्षितेस्तलम् ॥' इति पाठं पठित्वा-सेन्दुमती नराधिपेन राज्ञाऽजेन सममेव क्षितेस्तलमगमत् भूतले निपपात । किंभूतेन नराधिपेन ? गुरुसंमोहविलुप्तचेतसा गुरुणा संमोहेन विलुप्तं नष्टं चेतो यस्य स गुरुसंमोहविलुप्तचेताः, तेन मोहातिशयनष्टचित्तेन । के इव ? यथा नवदीपार्चिस्तत्कालप्रज्वलितदीपज्वाला तैलबिन्दुना सह क्षितेर्मूलं याति-इति व्याचष्टे ।

ष्वपि' इत्यमरः । **वपुषा निपतन्ती सेन्दुमती पतिमजमप्यपातयत्** पातयति स्म । तथा हि-निषिच्यत इति निषेकः । तैलस्य निषेकस्**तैलनिषेकः** । क्षरत्तैलमित्यर्थः । तस्य **बिन्दुना सह दीपार्चि**र्दीपज्वाला **मेदिनीं** भुव**मुपैति ननूपैत्येव।** 'ननु' अत्रावधारणे । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः । इन्दुमत्या दीपार्चिरुपमानम् । अजस्य तैलबिन्दुः । तत एव तस्या जीवितसमाप्तिस्तस्य जीवितशेषश्च सूच्यते ॥ ३८ ॥

**उभयोरपि पार्श्ववर्तिनां तुमुलेनार्तरवेण वेजिताः ।**

**विहगाः कमलाकरालयाः समदुःखा इव तत्र चुक्रुशुः ॥ ३९ ॥**

**उभयोरिति ॥ उभयो**र्दम्पत्योः **पार्श्ववर्तिनां** परिजनानां **तुमुलेन** संकुले**नार्तरवेण** करुणस्वनेन **वेजिता** भीताः **कमलाकरालयाः** सरःस्थिता **विहगा** हंसादयोऽपि **तत्रो**पवने **समदुःखा इव** तत्पार्श्ववर्तिनां समानशोका इव **चुक्रुशुः** क्रोशन्ति स्म ॥ ३९ ॥

**नृपतेर्व्यजनादिभिस्तमो नुनुदे सा तु तथैव संस्थिता ।**

**प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते ॥ ४० ॥**

**नृपतेरिति ॥ नृपते**रजस्य **तमो**ऽज्ञानं **व्यजनादिभिः** साधनैर्**नुनुदे**ऽपसारितम् । 'आदि'शब्देन जलसेककर्पूरक्षोदादयो गृह्यन्ते । **सा** त्विन्दुमती **तथैव संस्थिता** मृता । तथा हि-**प्रतिकारविधानं** चिकित्सा**युषो** जीवितकालस्य **शेषे सति** विद्यमाने । 'आयुर्जीवितकालो ना' इत्यमरः । **फलाय** सिद्धये **कल्पत** आरोग्याय भवति, नान्यथा । नृपतेरायुःशेषसद्भावात्प्रतीकारस्य साफल्यम् । तस्यास्तु तदभावाद्वैफल्यमित्यर्थः ॥ ४० ॥

**प्रतियोजयितव्यवल्लकी**[illegible] ।

**स निनाय नितान्तव**[illegible]

**प्रतीति ॥ अथ सत्त्वस्य**[illegible]

येषु सत्त्वम्' इत्यमरः । **प्रतियोजयितव्या** तन्त्रीभिर्योजनीया । न तु योजिततन्त्रीत्यर्थः । या **वल्लकी** वीणा । तस्याः **समाऽवस्था** दशा यस्यास्ता**मङ्गनां** वनितां

पाठा०—१ 'परिपार्श्ववर्तिनाम्'. २ 'कमलाकराश्रयाः'. ३ 'विह्वलां. ४ 'अङ्कम्'.

टिप्प०—1 सम्पूर्वस्थिधातुर्मरणार्थः-इति दिनकर० ।

2 समवस्थेत्यत्र 'सम'शब्दस्तुल्यार्थः 'श्रोणाभ्यां समर्षाभ्यां' इत्यादिवत्; यद्वा,-'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्युक्त्याऽन्त्वोपसर्गस्याकारलोपः । समावस्था यस्या इत्यर्थः -इति दिनकर० ।

नितान्तवित्सलोऽतिप्रेमवान् सोऽजः परिगृह्य हस्ताभ्यां गृहीत्वोचितं परिचितमङ्कमुत्सङ्गं निनाय नीतवान्। वल्लकीपक्षे तु-सत्त्वं तन्त्रीणामवष्टम्भकः शलाकाविशेषः ॥ ४१ ॥

पतिरङ्कनिषण्णया तया करणापायविभिन्नवर्णया।
समलक्ष्यत विभ्रदाविलां मृगलेखामुषसीव चन्द्रमाः ॥ ४२ ॥

पतिरिति ॥ पतिरङ्कनिषण्णयोत्सङ्गस्थितया करणानामिन्द्रियाणामपायेनापगमेन हेतुना विभिन्नवर्णया विच्छायया तया। उषसि प्रातःकाल आविलां मलिनां मृगलेखां मृगरेखारूपं लाञ्छनं विभ्रद्धारयंश्चन्द्रमा इव। समलक्ष्यतादृश्यत। इत्युपमा ॥ ४२ ॥

विललाप स वाष्पगद्गदं सहजामप्यपहाय धीरताम्।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥ ४३ ॥

विललापेति ॥ सोऽजः सहजां स्वाभाविकीमपि धीरतां धैर्यमपहाय विप्रकीर्य वाष्पेण कण्ठगतेन गद्गदं विशीर्णाक्षरं यथा तथा ध्वनिमात्रानुकारिगद्गदशब्दैर्विललाप परिदेवितवान्। 'विलापः परिदेवनम्' इत्यमरः। अभितप्तमग्निना संतप्तमयो लोहमचेतनमपि मार्दवं मृदुत्वमवैरत्वं च भजते प्राप्नोति। शरीरिषु देहिषु। अभिसंतप्तेष्विति शेषः। विषये कैव कथा वार्ता? अनुक्तसिद्धमित्यर्थः ॥ ४३ ॥

कुसुमान्यपि गात्रसंगमात्प्रभवन्त्यायुरपोहितुं यदि।
न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ॥ ४४ ॥

कुसुमानीति ॥ कुसुमानि पुष्पाण्यपि। 'अपि'शब्दो नितान्तमार्दवद्योतनार्थः। गात्रसंगमाद्देहसंसर्गादायुरपोहितुमपहर्तुं प्रभवन्ति यदि। हन्त विषादे। 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इत्यमरः। प्रहरिष्यतो

पाठा०—१ 'विभ्रमाविलाम्'.

हन्तुमिच्छतो विधेर्दैवस्यान्यत् कुसुमातिरिक्तं किमिव वस्तु । 'इव' शब्दो वाक्यालंकारे । कीदृशमित्यर्थः । साधनं प्रहरणं न भविष्यति न भवेत्? सर्वमपि साधनं भविष्यत्येवेत्यर्थः ॥ ४४ ॥

अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः ।
हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता ॥ ४५ ॥

अथवेति ॥ अथवा पक्षान्तरे । प्रजान्तकः कालो मृत्युः मृदु कोमलं वस्तु मृदुनैव वस्तुना हिंसितुं हन्तुमारभत उपक्रमते । अत्रार्थे हिमसेकेन तुषारनिष्यन्देन विपत्तिर्मृत्युर्यस्याः सा तथा नलिनी पद्मिनी मे पूर्वं प्रथमं निदर्शनमुदाहरणं मता, द्वितीयं निदर्शनं पुष्पमृत्युरिन्दुमतीति भावः ॥ ४५ ॥

स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥ ४६ ॥

स्रगिति ॥ इयं स्रक् जीवितमपहन्तीति जीवितापहा यदि । हृदये वक्षसि । 'हृदयं वक्षसि स्वान्ते' इत्यमरः । निहिता सती मां किं न हन्ति? ईश्वरेच्छया क्वचित् प्रदेशे विषमप्यमृतं भवेत् क्वचिदमृतं वा विषं भवेत् । दैवमेवात्र कारणमित्यर्थः ॥ ४६ ॥

अथवा मम भाग्यविप्लवादशनिः कल्पित एष वेधसा ।
यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रिता लता ॥ ४७ ॥

अथवेति ॥ अथवा मम भाग्यस्य विप्लवाद्विपर्ययात् एषः । स्रगित्यर्थः । विधेयप्राधान्यात्पुंलिङ्गनिर्देशः । वेधसा विधात्राऽशनिर्वैद्युतोऽग्निः कल्पितः ।

पाठा०–१ 'गता'. २ 'संनिहिता'. ३ 'सुरमाल्यरूपभाक्'. ४ 'निर्मित.'. ५ 'कर्मणा'. ६ 'न पातितस्तरु'. ७ 'तद्विटपाश्रया'.

टिप्प०—1 प्रथमो दृष्टान्तः—नलिनी हिमवृष्ट्यैव विनष्टा—इति वल्लभः ।

2 जीवितापहेत्याशिषोऽत्राभावाद् 'आशिषि हनः' इत्यस्याप्राप्तेर्डप्रत्ययश्चिन्त्यः । अन्ये तु 'अपे क्लेशतमसोः' इति नियमाज्जीविते उपपदे हन्तेर्यद्यपि डप्रत्ययाभावस्तथापि 'अन्येभ्योऽपि दृश्यते' इति प्रयोगानुसारार्थाद्दर्शिग्रहणात्साधुत्वमाचक्षते—इति दिनकर० ।

3 अत्र वल्लभ आह—उक्तं च—'प्राप्यते मरणं यत्र बन्धनं श्रीः सुखं वधूः । स तत्र नीयते तेन कर्मणा गलहस्तितः ॥' इति ॥ अत्रेन्दुमतिनाशादशनिरूपाया मालाया निष्पत्त्व, सिद्धविषत्वायाश्च तस्या नृपाहननादमृतत्वम्—इति हेमाद्रिः ।

'दम्भोलिरशनिर्द्वयोः' इत्यमरः । अपूर्वत्वमेव स्पष्टयति—यद्यस्मात्कारणात् । अनेनाप्यशनिना प्रसिद्धाशनिना तरुस्तरुस्थानीयः स्वयमेव न पातितः । किंतु तस्य तरोर्विटपाश्रिता लता वल्ली क्षपिता नाशिता ॥ ४७ ॥

कृतवत्यसि नावधीरणामपराद्धेऽपि यदा चिरं मयि ।
कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे ? ॥ ४८ ॥

कृतवतीति ॥ मयि चिरं भूरिशोऽपराद्धेऽप्यपराधं कृतवत्यपि । राधेः कर्तरि क्तः । यदा यस्माद्धेतोः । यदेति हेत्वर्थः । 'स्वरादौ पठ्यते यदेति हेतौ' इति गणव्याख्यानात् । अवधीरणामवज्ञां न कृतवत्यसि नाकार्षीः । तत्कथमेकपदे तत्क्षणे । 'स्यात्तत्क्षण एकपदम्' इति विश्वः । निरागसं नितरामनपराधमिमं जनम् । 'इमम्' इति स्वात्मनिर्देशः । मामित्यर्थः । आभाष्यं संभाष्यं न मन्यसे न चिन्तयसि? ॥ ४८ ॥

ध्रुवमसि शठः शुचिस्मिते ! विदितः कैतववत्सलस्तव ।
परलोकमसंनिवृत्तये यदनापृच्छ्य गतासि मामितः ॥ ४९ ॥

ध्रुवमिति ॥ हे शुचिस्मिते धवलहसिते ! शठो गूढविप्रियकारी कैतवेन कपटेन वत्सलः कैतवस्निग्ध इति ध्रुवं सत्यं तव विदितस्त्वया विज्ञातोऽस्मि । 'मतिबुद्धि–' (पा. ३।२।१८८) इत्यादिना कर्तरि क्तः । 'क्तस्य च वर्तमाने' (पा. २।३।६७) इति कर्तरि षष्ठी । कुतः ? यद्यस्मात्, मामनापृच्छ्यानामन्त्र्य इतोऽस्माल्लोकात् । परलोकमसंनिवृत्तयेऽपुनरावृत्तये गतासि ॥ ४९ ॥

दयितां यदि तावदन्वगाद्विनिवृत्तं किमिदं तया विना ।
सहतां हतजीवितं मम प्रबलामात्मकृतेन वेदनाम् ॥ ५० ॥

दयितामिति ॥ इदं मम हतजीवितं कुत्सितं जीवितं तावदादौ दयितामिन्दुमतीमन्वगादन्वगच्छद्यदि अन्वगादेव । 'यदि' अत्रावधारणे । पूर्वं मूर्च्छित-

पाठा०–१ 'अपराधे'. २ 'अनामन्त्र्य'. ३ 'आत्मकृतां तु वेदनाम्'; 'आत्मकृतान्तवेदनाम्'.

टिप्प०—1 अनेनाशनिना तरुर्न पातितः तरुतुल्योऽहं न पातितः । तद्विटपाश्रिता या लता क्षपिता पातिता मदाश्रया इन्दुमती पातिता । अशनेर्हि प्रायेणैवं स्वभावोऽयम्-परिचारार्थं तरोर्नाशयति, न लताम् । अशनेस्तरुशोषणं प्रसिद्धम् । न पुनरयमन्य एवाशनिः करकाद्दृष्टिरसौ तरुं विहाय लतां जघान-इति वल्लभः ।

2 एवं विलपन्तं मां किमिति न संभावयसीत्यर्थः-इति दिनकर० ।

त्वादिति भावः। तर्हि **तया** दयितया **विना किं** किमर्थं **विनिवृत्तं** प्रत्यागतम्? प्रत्यागमनं न युक्तमित्यर्थः। अत एवात्मकृतेन स्वदुश्चेष्टितेन निवृत्तिरूपेण **प्रचला**मधिकां **वेदनां** दुःखं **सहतां** क्षमताम्। स्वयंकृतापराधेषु सहिष्णुतैव शरणमिति भावः॥ ५०॥

**सुरतश्रमसंभृतो मुखे ध्रियते स्वेदलवोद्गमोऽपि ते।**
**अथ चास्तमिता त्वमात्मना धिगिमां देहभृतामसारताम्॥५१॥**

**सुरतेति॥ सुरतश्रमेण संभृतो** जनितः **स्वेदलवोद्गमोऽपि ते** तव **मुखे ध्रियते** वर्तते। **अथ च त्वमात्मना** स्वरूपेणास्तं प्राप्ताः। अतः कारण**द्देह**भृतां प्राणिना**मिमां** प्रत्यक्षा**मसारता**मस्थिरतां **धिक्**॥ ५१॥

**मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि माम्?।**
**ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः॥ ५२॥**[1]

**मनसेति॥ मया मनसापि तव विप्रियं न कृतपूर्वम्।** पूर्वं न कृतमित्यर्थः। सुप्सुपेति समासः। **किं** केन निमित्तेन **मां जहासि** त्यजसि? **नन्वहं क्षितेः**[2] **शब्दपतिः** शब्दत एव पतिः। न त्वर्थत इत्यर्थः। **भावनिबन्धना**ऽभिप्रायनिबन्धना स्वभावहेतुका **मे रतिः**, प्रेम तु **त्वय्येव**। अस्तीति शेषः॥ ५२॥

**कुसुमोत्खचितान्वलीभृतश्चलयन्भृङ्गरुचस्तवालकान्।**
**करभोरु! करोति मारुतस्त्वदुपावर्तनशङ्कि मे मनः॥ ५३॥**

**कुसुमेति॥ कुसुमै**रुत्खचितानुत्कर्षेण रचितान् **वलीभृतो** भङ्गीयुक्तान्। कुटिलानित्यर्थः। **भृङ्गरुचो** नीलांस्तवालकांश्चलयन्कम्पयन् **मारुतः** हे **करभोरु** करभसदृशोरु। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः। **मे मनस्त्वदुपावर्तनशङ्कि** तव पुनरागमने शङ्कावत्**करोति**। त्वदुज्जीवने शङ्कां चारयतीत्यर्थः॥ ५३॥

**तदपोहितुमर्हसि प्रिये! प्रतिबोधेन विषादमाशु मे।**
**ज्वलितेन गुहागतं तमस्तुहिनाद्रेरिव नक्तमोषधिः॥ ५४॥**

---

पाठा०—१ 'मयका'. २ 'कुसुमोत्कचितान्'; 'कुसुमोद्ग्रथितान्'. ३ 'वलीमतः'.

---

टिप्प०—1 अस्यामे-'सुरतश्रमसंभृतो मुख' इति (५१) श्लोकं पठति वल्लभः।

2 कथं नदीं सपत्नीमिवैव त्यजसि? नूनं निश्चितं, अहं क्षितेः पृथिव्याः शब्दपतिः शब्दमात्रेणानुरागरहितो नृपतिः, मे मम भावनिबन्धना रतिश्चित्तग्राहिणी प्रीतिस्त्वयि वर्तते—इति वल्लभः।

तदिति ॥ हे प्रिये ! तत्तस्मात्कारणादाशु मे विषादं दुःखम् । नक्तं रात्रावोषधिस्तृणज्योतिराख्या लता ज्वलितेन प्रकाशेन तुहिनाद्रेर्हिमाचलस्य गुहागतं तमोऽन्धकारमिव । प्रतिबोधेन ज्ञानेनापोहितुं निरसितुमर्हसि ॥ ५४ ॥

इदमुच्छ्वसितालकं मुखं तव विश्रान्तकथं दुनोति माम् ।
निशि सुप्तमिवैकपङ्कजं विरताभ्यन्तरषट्पदस्वनम् ॥ ५५ ॥

इदमिति ॥ इदमुच्छ्वसितालकं चलितचूर्णकुन्तलं विश्रान्तकथं निवृत्तसंलापं तव मुखम् । निशि रात्रौ सुप्तं निमीलितं विरतोऽभ्यन्तराणामन्तर्वर्तिनां षट्पदानां स्वनो यत्र तत् । निःशब्दभृङ्गमित्यर्थः । एकपङ्कजमद्वितीयं पद्ममिव । मां दुनोति परितापयति ॥ ५५ ॥

शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम् ।
इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहेः ॥ ५६ ॥

शशिनमिति ॥ शर्वरी रात्रिः शशिनं चन्द्रं पुनरेति प्राप्नोति । द्वन्द्वीभूय चरतीति द्वन्द्वचरः तं पतत्रिणं चक्रवाकं दयिता चक्रवाकी पुनरेति । इति हेतोस्तौ चन्द्र-चक्रवाकौ विरहान्तरक्षमौ विरहावधिसहौ । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः । अत्यन्तगता पुनरावृत्तिरहिता त्वं कथं न मां दहेर्न संतापयेः ? अपि तु दहेरेवेत्यर्थः ॥ ५६ ॥

नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम् ।
तदिदं विषहिष्यते कथं वद वामोरु ! चिताधिरोहणम् ॥ ५७ ॥

नवेति ॥ नवपल्लवसंस्तरे नूतनप्रवालास्तरणेऽप्यर्पितं स्थापितं मृदु ते

---

टिप्प०—1 हिमाद्रावोषधयो नक्तं प्रकाशन्त इति प्रसिद्धिः-इति दिनकर० । तथा च कुमारसंभवे ( १।४३ ) हिमाद्रिवर्णनम्—'वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः', 'यत्रौषधिप्रकाशेन नक्तं दर्शितसंचराः' इति च । यथौषधिर्ज्वलितेन नक्तं रात्रौ तुहिनाद्रेर्हिमवतो गुहागतं तमोऽपोहति दीप्त्याऽपवादयति तद्वत्प्रतिबोधेन मे दुःखमपोहितुमर्हसि—इति वल्लभः ।

2 ननु जगति शरीरिणां संयोग-वियोगौ दृश्येते, तत्त्वया किमर्थमेवं संतप्यत इत्याशंक्याह—कौमुदी निशा शशिनं चन्द्रं पुनरेति लभते, दयिता चक्रवाकी द्वन्द्वेन चरतीति तं द्वन्द्वचरं पतत्रिणं चक्रिणं च प्राप्नोति, इत्यतो हेतोस्तौ निशाचन्द्रौ चक्रवाकौ च विरहस्य वियोगस्यान्तरमवधिं क्षमेते इति तादृशौ; चक्रवाकादयस्तु संयोगो भविष्यतीत्याशानन्धेन वियोगेऽपि धैर्यमवलम्बन्ते इति भावः । मां त्वपुनरागमायास्तमिता भवती कथं न देहं संतापयेत् ? संतापयेदेवेत्यर्थः—इति दिनकर० ।

तव यदङ्गं शरीरं दूयेत परितप्तं भवेत्। वामा सुन्दरी ऊरू यस्याः सा हे वामोरु। 'वामं स्यात्सुन्दरे सव्ये' इति केशवः। 'संहितशफलक्षण-' इत्यादिनोङ्प्रत्ययः। तदिदमङ्गं चितायाः काष्ठसंचयस्याधिरोहणं कथं विषहिष्यते वद ॥ ५७ ॥

**इयमप्रतिबोधशायिनीं रशना त्वां प्रथमा रहःसखी।**
**गतिविभ्रमसादनीरवा न शुचा नानु मृतेव लक्ष्यते ॥ ५८ ॥**

**इयमिति** ॥ इयं प्रथमाऽऽद्या रहःसखी। सुरतसमयेऽप्यनुयानादिति भावः। **गतिविभ्रमसादेन नीरवा** विलासोपरमेण निःशब्दा **रशना** मेखलाऽप्रतिबोधमपुनरुद्बोधं यथा तथा **शायिनीम्**। मृतामित्यर्थः। त्वामनु त्वया सह। 'तृतीयार्थे' (पा. १।४।८५) इत्यनुशब्दस्य कर्मप्रवचनीयत्वात् द्वितीया। **शुचा** शोकेन **मृतेव न लक्ष्यत इति न**। लक्ष्यत एवेत्यर्थः। संभाव्यनिषेधनिवर्तनाय द्वौ प्रतिषेधौ ॥ ५८ ॥

**कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम्।**
**पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमाः ॥ ५९ ॥**
**त्रिदिवोत्सुकयाप्यवेक्ष्य मां निहिताः सत्यममी गुणास्त्वया।**
**विरहे तव मे गुरुव्यथं हृदयं न त्ववलम्बितुं क्षमाः ॥ ६० ॥**

**कलमिति। त्रिदिवेति** ॥ युग्मम्। उभयोरेकान्वयः। **अन्यभृतासु** कोकिलासु **कलं** मधुरं **भाषितं** भाषणम्। **कलहंसीषु** विशिष्टहंसीषु **मदालसं** मन्थरं **गतं** गमनम्। **पृषतीषु** हरिणीषु **विलोलमीक्षितं** चपला दृष्टिः। **पवनेन** वायुना **धूतलतासु**कम्पितलतासु **विभ्रमा** विलासाः। इत्यमी पूर्वोक्ताः कलभाषणादयो गुणाः। एषु कोकिलादिस्थानेष्विति शेषः। **त्रिदिवोत्सुकयापी**द जीवन्त्येव स्वर्गं प्रति प्रस्थितयापि **त्वया मामवेक्ष्य** विरहासहं विचार्य **सत्यं निहिताः**। मत्प्राणधारणोपायतया स्थापिता इत्यर्थः। **तव विरहे गुरुव्यथम**तिदुःखं **मे हृदयं** मनोऽ**वलम्बितुं** स्थापयितुं **न क्षमा** न शक्ताः। ते तु तत्संगम एव सुखकारिणः, नान्यथा। प्रत्युत प्राणानपहरन्तीति भावः ॥ ५९-६० ॥

**मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमौ।**
**अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसांप्रतम् ॥ ६१ ॥**

**मिथुनमिति** ॥ **ननु** हे प्रिये! **सहकार**स्तरुविशेषः **फलिनी** प्रियंगुलता

पाठा०—१ 'गतं मदालसम्'. २ 'हरिणीषु'. ३ 'विभ्रमः'; 'विभ्रमा'.

टिप्प०—1 श्लोकोऽयं 'संकल्पितं प्रथममेव मया तवार्थे भर्तारमात्मसदृशं स्वगुणैर्गतासि।' इति शाकुन्तलपद्यं भावसाम्येन स्मारयति।

चेमौ त्वया मिथुनं परिकल्पितं मिथुनत्वेनाभ्यमानि । अनयोः फलिनी-सहकारयोर्विवाहसत्क्रियां विवाहमङ्गलमविधायाकृत्वा गम्यत इत्यसांप्रतमयुक्तम् । मातृहीनानां न किंचित्सुखमस्तीति भावः ॥ ६१ ॥

कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति ।
अलकाभरणं कथं नु तत्तव नेष्यामि निवापमाल्यताम् ? ॥ ६२॥

कुसुममिति ॥ वृक्षादिपोषकं दोहदम् । त्वया कृतं दोहदं पादताडनरूपं यस्य सोऽयमशोको यत्कुसुममुदीरयिष्यति प्रसविष्यते । तवालकानामाभरणमाभरणभूतं तत्कुसुमं कथं नु केन प्रकारेण निवापमाल्यतां दाहाञ्जलेरर्ध्यतां नेष्यामि ? 'निवापः पितृदानं स्यात्' इत्यमरः ॥ ६२ ॥

स्मरतेव सशब्दनूपुरं चरणानुग्रहमन्यदुर्लभम् ।
अमुना कुसुमाश्रुवर्षिणा त्वमशोकेन सुगात्रि ! शोच्यसे ॥ ६३ ॥

स्मरतेति ॥ अन्यदुर्लभम् । किंतु स्मर्तव्यमेवेत्यर्थः । सशब्दं ध्वनियुक्तं नूपुरं मञ्जीरं यस्य तं चरणेनानुग्रहं पादेन ताडनरूपं स्मरतेव चिन्तयतेव कुसुमान्येवाश्रूणि तद्वर्षिणाऽमुना पुरोवर्तिनाऽशोकेन । हे सुगात्रि ! 'अङ्गगात्रकण्ठेभ्यश्च' इति वक्तव्यान्ङीप् । त्वं शोच्यसे ॥ ६३ ॥

तव निःश्वसितानुकारिभिर्बकुलैरर्धचितां समं मया ।
असमाप्य विलासमेखलां किमिदं किन्नरकण्ठि ! सुप्यते ? ॥६४॥

तवेति ॥ तव निःश्वसितानुकारिभिर्बकुलैर्बकुलकुसुमैर्मया समं सार्धमर्धचितामर्धं यथा तथा रचितां विलासमेखलामसमाप्यापूरयित्वा । किंनरस्य देवयोनिविशेषस्य कण्ठ इव कण्ठो यस्यास्तत्संबुद्धिर्हे किन्नरकण्ठि ! 'अङ्गगात्रकण्ठेभ्यश्च' इति ङीप् । किमिदं सुप्यते निद्रा क्रियते ? 'वचिस्वपि-' ( पा. ६।१।१५) इत्यादिना संप्रसारणम् । अनुचितमिदं स्वपनमित्यर्थः ॥ ६४ ॥

---

पाठा०-१ 'दौहृदः'. २ 'अनुवादिभिः'.

---

टिप्प०—1. सुन्दरीचरणघातेनाशोकः पुष्पतीति प्रसिद्धिः, 'असूत सद्यः कुसुमान्यशोकः' 'पादेन नापैक्षत सुन्दरीणां संपर्कमाशिञ्जितनूपुरेण' (कुमार. ३।२६) इति । अतः पादघात एवाशोकस्य दोहदः-इति दिनकर० । तथा चोक्तम् 'पादाघातादशोकस्तिलककुरबकौ वीक्षणालिङ्गनाभ्यां स्त्रीणां स्पर्शात्प्रियंगुर्विकसति बकुलः सीधुगंडूषसेकात् । मंदारो नर्मवाक्यात् पटुमृदुहसनाच्चंपको वक्त्रवातात् चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात्कर्णिकारः ॥' इति ।

2 हे सुगात्रि ! त्वममुनाऽशोकेन शोच्यसे इव जातशोकेन स्मर्यसे इव । किं कुर्वता ? अमुना सशब्दनूपुरं चरणानुग्रहं स्मरता । किंभूतं चरणानुग्रहम् ? अन्यदुर्लभम् । भवद्रूपाया अन्यस्य सकाशाद्दुष्प्रापम् । अत्र सर्वनाम्नो विरतिमात्रपूर्वपदस्य पुंवद्भावः-इति वल्लभः ।

विलपन्निति ॥ कोसलानामधिपोऽज इति करुणः शोकरसः स एवार्थस्तेन, ग्रथितं संबद्धं यथा तथा प्रियां प्रतीन्दुमतीमुद्दिश्य **विलपन्**, पृथिवीरुहान् वृक्षानपि स्रुताः शाखारसा मकरन्दा एव बाष्पास्तैर्दूषितानकरोत्। अचेतनानप्यरोदयदित्यर्थः ॥ ७० ॥

**अथ तस्य कथंचिदङ्कतः स्वजनस्तामपनीय सुन्दरीम् ।**
**विससर्ज तदन्त्यमण्डनामनलायागुरुचन्दनैधसे ॥ ७१ ॥**

अथेति ॥ **अथ स्वजनो** बन्धुवर्गः । **तस्या**जस्याङ्कत उत्सङ्गात् **कथंचिदपनीय** । तद्दिव्यकुसुममेवान्त्यं **मण्डन**मलंकारो यस्यास्ताम् । **तां** सुन्दरी**मगुरूणि चन्दनान्येधांसी**न्धनानि यस्य तस्मा **अनलाया**ग्नये **विससर्ज** विसृष्टवान् । 'क्रियाग्रहणमपि कर्तव्यम्' इति क्रियामात्रप्रयोगे संप्रदानत्वाच्चतुर्थी ॥ ७१ ॥

**प्रमदामनु संस्थितः शुचा नृपतिः सन्निति वाच्यदर्शनात् ।**
**न चकार शरीरमग्निसात्सह देव्या न तु जीविताशया ॥ ७२ ॥**

**प्रमदामिति** ॥ **नृपति**रजः **सन्नपि** विद्वानपि **शुचा** शोकेन **प्रमदामनु** प्रमदया सह **संस्थितो** मृत **इति वाच्यदर्शना**न्निन्दादर्शनाद्देव्येन्दुमत्या **सह शरीरमग्निसा**दग्न्यधीनं **न चकार** । 'तदधीनवचने' (पा. ५।४।५४) इति सातिप्रत्ययः । **जीविताशया** प्राणेच्छया **तु** नेति ॥ ७२ ॥

**अथ तेन दशाहतः परे गुणशेषामपदिश्य भामिनीम् ।**
**विदुषा विधयो महर्द्धयः पुर एवोपवने समापिताः ॥ ७३ ॥**

अथेति ॥ **अथ विदुषा** शास्त्रज्ञेन **तेना**जेन । गुणा एव शेषा रूपादयो यस्यास्तां **गुणशेषां भामिनी**मिन्दुमती**मपदिश्यो**द्दिश्य । दशानामह्नां समाहारो

पाठा०—१ 'स निनाय नितान्तवत्सलः परिवृत्तप्रथमच्छवि क्षणात् । सलिलोद्धृतपद्मिनीनिभां दयितामङ्कमुदश्रुलोचनः'. २ 'अवतार्य'. ३ 'कृतान्त्यमण्डनाम्'. ४ 'अगरु'. ५ 'परम्'; 'परा'. ६ '°मुपदिश्य'. ७ 'गेहिनीम्'. ८ 'वितेनिरे'.

टिप्प०—1 शृङ्गारो द्विधा-संयोगो विप्रलम्भश्च, तत्र विप्रलम्भशृङ्गारभेदः करुण, तेनार्थो ग्रथितो यस्मिन्कर्मणि तत्करुणार्थग्रथितं यथा भवति तथा प्रियां प्रति विलापं कुर्वन् तरूनप्यरोदयदिति भावः । अपिशब्देनाचेतनं च द्योतयते-इति दिनकर० ।

2 तदा क्रियमाणमन्त्यं प्रेतोचितं मण्डनं यस्याः सा तदन्त्यमण्डना । यद्वा,-सैव देवस्रक् अन्त्यं मण्डनमिति ताम्-इति वल्लभः । दिनकरमिश्रास्तु-'कृतान्त्यमण्डनाम्' इति पाठमादृत्य-तदेव कृतमन्त्यं मण्डनं यस्याः सा ताम्-इति व्याचख्युः ।

दशाहः । 'तद्धितार्थ–'( पा. २।१।५१ ) इत्यादिना समासः । समाहारस्यैकत्वादेकवचनम् । 'राजाहःसखिभ्यष्टच्' (पा. ५।४।५१) इति टच् । 'रात्राह्नाहाः पुंसि' (पा. २।४।२९) इति पुंवत् । ततस्तसिल् । तस्माद्दशाहतः परः ऊर्ध्वं कर्तव्या महर्द्धयो महासमृद्धयो विधयः क्रियाः पुरः पुर्या उपवन उद्यान एव समापिताः संपूर्णमनुष्ठिताः । 'दशाहतः' इत्यत्र 'विप्रः शुद्ध्येद्दशाहेन द्वादशाहेन भूमिपः' (५।८३) इति मनुवचनविरोधो नाशङ्कनीयः; तस्य निर्गुणक्षत्रियविषयत्वात् । गुणवत्क्षत्रियस्य तु दशाहेन शुद्धिमाह पराशरः—'क्षत्रियस्तु दशाहेन स्वधर्मनिरतः शुचिः' इति । सूच्यतेऽस्यापि गुणवत्त्वं 'विदुषा' इत्यनेन ॥ ७३ ॥

**स विवेश पुरीं तया विना क्षणदापायशशाङ्कदर्शनः ।**
**परिवाहमिवावलोकयन्स्वशुचः पौरवधूमुखाश्रुषु ॥ ७४ ॥**

स इति ॥ तयेन्दुमत्या विना । क्षणदाया रात्रेरपायेऽपगमे यः शशाङ्कश्चन्द्रः स इव दृश्यत इति क्षणदापायशशाङ्कदर्शनः । प्रातःकालिकचन्द्र इव दृश्यमान इत्यर्थः । दृश्यत इति कर्मार्थे ल्युट् । सोऽजः पौरवधूमुखाश्रुषु स्वशुचः स्वशोकस्य परिवाहं जलोच्छ्वासमिवावलोकयन् । 'जलोच्छ्वासाः परीवाहाः' इत्यमरः । स्वदुःखपूरातिशयमिव पश्यन् पुरीं विवेश । 'वधू'ग्रहणात्तस्यामिन्दुमत्यां सख्याभिमानादजसमानदुःखसूचकपरीवाहोक्तिर्निर्वहति ॥ ७४ ॥

**अथ तं सवनाय दीक्षितः प्रणिधानाद्गुरुराश्रमस्थितः ।**
**अभिषङ्गजडं विजज्ञिवानिति शिष्येण किलान्वबोधयत् ॥ ७५ ॥**

अथेति ॥ अथ सवनाय यागाय दीक्षितो गुरुर्वसिष्ठ आश्रमे स्वकीयाश्रमे स्थितः सन् । तमजमभिषङ्गजडं दुःखमोहितं प्रणिधानाच्चित्तैकाग्र्याद्विजज्ञिवाञ्ज्ञातवान् । 'क्वसुश्च' (पा. ३।२।१०७) इति क्वसुप्रत्ययः । इति वक्ष्यमाणप्रकारेण शिष्येणान्वबोधयत्किल । बुधेर्ण्यन्तािण्णचि लङ् ॥ ७५ ॥

वसिष्ठशिष्य आह—

**असमाप्तविधिर्यतो मुनिस्तव विद्वानपि तापकारणम् ।**
**न भवन्तमुपस्थितः स्वयं प्रकृतौ स्थापयितुं पथश्च्युतम् ॥ ७६ ॥**

पाठा०—१ 'तमवेक्ष्य मखाय'. २ 'आश्रमाश्रितः'; 'आश्रमाश्रयः'. ३ 'अतिपंग'; 'अभिषङ्गिणमीश्वरं विदाम्'. ४ 'ततश्च्युतम्'; 'स्वतश्च्युतम्', 'कुलस्थितिः'.

टिप्प०—1 'अतिपंगजडं' इति पाठमाहृत्य अथानंतरं समाधिनाऽतिपंगेनाक्रोशेन जडमजं ज्ञातवानिति–दिनकर० ।

**असमाप्तेति** ॥ **यतो** हेतोर्**मुनिरसमाप्तविधिर**समाप्तक्रतुस्ततस्तव **ताप-कारणं** दुःखहेतु कलत्रनाशरूपं **विद्वाजानन्नपि**। 'विदेः शतुर्वसु.' (पा. ७।१।३६)— इति वस्वादेशः। 'न लोक–' (पा.२।३।६९) इत्यादिना षष्ठीप्रतिषेधः। **पथश्च्युतं** स्वभावाद्भ्रष्टं **भवन्तं प्रकृतौ** स्वभावे **स्थापयितुम्**। समाश्वासयितुमित्यर्थः। **स्वयं नोपस्थितो** नागतः ॥ ७६ ॥

**मयि तस्य सुवृत्त! वर्तते लघुसंदेशपदा सरस्वती।**
**शृणु विश्रुतसत्त्वसार! तां हृदि चैनामुपधातुमर्हसि ॥ ७७ ॥**

**मयीति** ॥ हे **सुवृत्त** सदाचार! संदिश्यत इति संदेशः संदेष्टव्यार्थः। तस्य पदानि वाचकानि **लघूनि** संक्षिप्तानि **संदेशपदानि** यस्याः सा लघुसंदेशपदा **तस्य मुनेः सरस्वती** वाक् **मयि वर्तते**। हे **विश्रुतसत्त्वसार** प्रख्यातधैर्यातिशय! **तां** सरस्वतीं **शृणु**। **एनां** वाचं **हृद्युपधातुं** धर्तुं **चार्हसि** ॥ ७७ ॥

वक्ष्यमाणार्थानुगुणं मुनेः सर्वज्ञत्वं तावदाह—

**पुरुषस्य पदेष्वजन्मनः समतीतं च भवच्च भावि च।**
**स हि निष्प्रतिघेन चक्षुषा त्रितयं ज्ञानमयेन पश्यति ॥ ७८ ॥**

**पुरुषस्येति** ॥ **अजन्मनः** पुराणपुरुषस्य भगवतस्त्रिविक्रमस्य **पदेषु** विक्रमेषु। त्रिभुवनेष्वपीत्यर्थः। **समतीतं** भूतं **च भवद्**वर्तमानं **च भावि** भविष्यच्चेति **त्रितयं स मुनिर्निष्प्रतिघेना**प्रतिबन्धेन **ज्ञानमयेन चक्षुषा** ज्ञानदृष्ट्या **पश्यति हि**। अतस्तदुक्तिषु न संशयितव्यमित्यर्थः ॥ ७८ ॥

**चरतः किल दुश्चरं तपस्तृणबिन्दोः परिशङ्कितः पुरा।**
**प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम् ॥ ७९ ॥**

**चरत इति** ॥ **पुरा किल दुश्चरं** तीव्रं **तपश्चरतस्तृणबिन्दो**स्तृणबिन्दु-नामकात्कस्माच्चिदृषेः **परिशङ्कितो** भीतः। कर्तरि क्तः। 'भीत्रार्थानां भयहेतुः' (पा. १।४।२५) इत्यपादानात्पञ्चमी। **हरि**रिन्द्रः **समाधिभेदिनीं** तपोविघा-तिनीं **हरिणीं** नाम **सुराङ्गनामस्मै** तृणबिन्दवे **प्रजिघाय** प्रेरितवान् ॥ ७९ ॥

---

**पाठा०–१ 'स्फुटसंदेशपदा', 'लघुसंदेशवहा'. २ 'अवधातुम्'. ३ 'अवितथम्'.**

---

**टिप्प०—1** अजन्मन पुरुषस्य विष्णोस्त्रिषु पदेषु भूर्भुवःस्वर्लक्षणेषु समतीतं व्यतीतं भवच्च वर्तमानं भावि च भविष्यत्सर्वमसौ निष्प्रतिघेन निरावरणेन ज्ञानमयेन चक्षुषा त्रितयं पश्यति–इति वल्लभः।

...म्' इत्येव
...तेजस्विनी-

स तपःप्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्रमाम्।
अशपद्भव मानुषीति तां शमवेलाप्रलयोर्मिणा भुवि ॥ ८० ॥

**स इति** ॥ स मुनिः। **शमः** शान्तिरेव **वेला** मर्यादा यस्याः। **प्रलयोर्मिणा** प्रलयकालतरङ्गेण। शमविघातकेनेत्यर्थः। 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि' इत्यमरः। **तपसः प्रतिबन्धेन** विघ्नेन यो **मन्युः** क्रोधस्तेन हेतुना। **प्रमुखे**ऽग्रे **आविष्कृतचारुविभ्रमां** प्रकाशितमनोहरविलासां **तां** हरिणीं **भुवि** भूलोके **मानुषी** मनुष्यस्त्री **भवे**त्य**शप**च्छशाप ॥ ८० ॥

भगवन्! परवानयं जनः प्रतिकूलाचरितं क्षमस्व मे।
इति चोपनतां क्षितिस्पृशं कृतवाना सुरपुष्पदर्शनात् ॥ ८१ ॥

**भगवन्निति** ॥ हे **भगवन्**महर्षे! **अयं जनः**। परोऽस्यास्तीति स्वामित्वेन **परवान्** पराधीनः। 'अयम्' इत्यात्मनिर्देशः। अहं पराधीनेत्यर्थः। **मे** मम **प्रतिकूलाचरित**मपराधं **क्षमस्वे**त्यनेन प्रकारेणो**पनतां** शरणागतां च हरिणी**मा सुरपुष्पदर्शनात्** पुष्पदर्शनपर्यन्तम्। क्षितिं स्पृशतीति क्षितिस्पृक्, तां **क्षितिस्पृशं** मानुषीं **कृतवान**करोत्। दिव्यपुष्पदर्शनं शापावधिरित्यनुगृहीतवानित्यर्थः ॥ ८१ ॥

क्रथकैशिकवंशसंभवा तव भूत्वा महिषी चिराय सा।
उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम् ॥ ८२ ॥

**क्रथेति** ॥ **क्रथकैशिका**नां राज्ञां **वंशे संभवो** यस्याः सा हरिणी **तव महिष्य**भिषिक्ता स्त्री। 'कृताभिषेका महिषी' इत्यमरः। **भूत्वा चिराय दिवः** स्वर्गाच्च्युतं पतितं **शापनिवृत्तिकारणं** सुरपुष्परूप**मुपलब्धवती विवशा**। अभूदिति शेषः। मृतेत्यर्थः ॥ ८२ ॥

तदलं तदपायचिन्तया विपदुत्पत्तिमतामुपस्थिता।
वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः ॥ ८३ ॥

**तदिति** ॥ **तत्**तस्मात्त**स्या अपायचिन्तयाऽलम्**। तस्या मरणं न चिन्त्यमित्यर्थः। निषेधक्रियां प्रति करणत्वाच्चिन्तयेति तृतीया। कुतो न चिन्त्यमत आह— **उत्पत्तिमतां** जन्मवतां **विपद्**विपत्ति**रुपस्थिता** सिद्धा। जातस्य हि ध्रुवो मृत्युरित्यर्थः। तथापि कलत्ररहितस्य किं जीवितेन तत्राह—**त्वयेयं वसुधा** भूमिरवे-

पाठा०–१ 'तपसा प्रतिघातमन्युना'. २ 'शमवेलाप्रलयोर्मिवान्'. ३ 'मुनिः'. ४ 'सहस्व'. ५ 'तनुं जहौ सुव्रतः शाप°'.

क्ष्यतां पाल्यताम् । हि यस्मान्नृपा वसुमत्यां पृथिव्या कलत्रिणः कलत्रवन्तः । अतो न शोचितव्यमित्यर्थः ॥ ८३ ॥

उदये मदवाच्यमुज्झता श्रुतमाविष्कृतमात्मवत्त्वया ।
मनसस्तदुपस्थिते ज्वरे पुनरक्लीवतया प्रकाश्यताम् ॥ ८४ ॥

उदय इति ॥ उदयेऽभ्युदये सति मदेन यद्वाच्यं निन्दादुःखं तदुज्झता परिहरता सत्यपि मदहेतावप्रमाद्यता त्वया यदात्मवदध्यात्मप्रचुरं श्रुतं शास्त्रम् । तज्जनितं ज्ञानमिति यावत् । आविष्कृतं प्रकाशितम् । तच्छ्रुतं मनसो ज्वरे संताप उपस्थित प्राप्तेऽक्लीवतया धैर्येण लिङ्गेन पुनः प्रकाश्यताम् । विदुषा सर्वास्ववस्थास्वपि धीरेण भवितव्यमित्यर्थः ॥ ८४ ॥

इतोऽपि न रोदितव्यमित्याह—

रुदता कुत एव सा पुनर्भवता नानुमृतापि लभ्यते ।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ॥ ८५ ॥

रुदतेति ॥ रुदता भवता सा कुत एव लभ्यते ? न लभ्यत एव । अनु-म्रियत इत्यनुमृत् । क्विप् । तेनानुमृतानुमृतवताऽपि भवता पुनर्न लभ्यते । कथं न लभ्यत इत्याह—परलोकजुषां लोकान्तरभाजां देहिनाम् । गम्यत इति गतयो गम्यस्थानानि स्वकर्मभिः पूर्वाचरितपुण्यपापैर्भिन्नपथाः पृथक्कृतमार्गा हि । परनापि स्वस्वधर्मानुरूपफलभोगाय भिन्नदेहगमनान्न मृतेनापि लभ्यत इत्यर्थः ॥ ८५ ॥

अपशोकमनाः कुटुम्बिनीमनुगृह्णीष्व निवापदत्तिभिः ।
स्वजनाश्रु किलातिसंततं दहति प्रेतमिति प्रचक्षते ॥ ८६ ॥

पाठा०–१ 'यदवाच्यम्'. २ 'आत्मवत्तया' (=अविकृतचित्ततयालिङ्गने); 'आत्मनस्त्वया'. ३ 'समुपस्थिते'. ४ 'नानुमृतेन लभ्यते'; 'नानुमृता च'.

टिप्प०—1 धीरस्य लक्षण चोक्तमन्यत्र–'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः' इति ।

2 वल्लभस्त्वत्र—'रुदितेन न सा निवर्तते नृप ! तावत्तदनर्थकं तव ।
न भवाननुसंस्थितोऽपि तां लभते कर्मवशा हि देहिनः ॥'

इति पाठमादृत्य–
हे नृप ! सेन्दुमती रुदितेन न निवर्तते, तावत्प्रथमं तव रुदितमनर्थकं निरर्गलवत् । अनुसंस्थितोऽप्यनुमृतोऽपि न लभते, हि निश्चितम्, यत प्राणिनः कर्मानुगामिनः, उक्तं च–'प्राप्यते मरण यत्र बन्धनं श्रीः सुखं वधूः । स तत्र नीयते स्वेन कर्मणा गलहस्तितः' इति व्याचष्टे ।

3 अनु मृतं यस्याः सेति प्रथमान्तो वा–इति हेमाद्रिः ।

अपेति ॥ किंतु, अपशोकमना निर्दुःखचित्तः सन् कुटुम्बिनीं पत्नीं निवापदत्तिभिः पिण्डोदकादिदानैरनुगृह्णीष्व । तर्पयेत्यर्थः । अन्यथा दोषमाह— अतिसंततमविच्छिन्नं स्वजनानां बन्धूनाम् । 'बन्धुस्वस्वजनाः समाः' इत्यमरः । अश्रु कर्तृ प्रेतं मृतं दहतीति प्रचक्षते मन्वादयः किल । अत्र याज्ञवल्क्यः (याज्ञ. प्राय. १।११)—'श्लेष्माश्रु बन्धुभिर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः । अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥' इति ॥ ८६ ॥

मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ ॥ ८७ ॥

मरणमिति ॥ शरीरिणां मरणं प्रकृतिः स्वभावः । ध्रुवमित्यर्थः । जीवितं विकृतिर्यादृच्छिकं बुधैरुच्यते । एवं स्थिते जन्तुः प्राणी क्षणमपि । अत्यन्तसंयोगे द्वितीया । श्वसञ्जीवन्नवतिष्ठते । यद्यसौ क्षणजीवी लाभवान्ननु । जीवने यथालाभं संतोष्टव्यम्; अलभ्यलाभात्, मरणे तु न शोचितव्यम्; अस्य स्वाभाव्यादिति भावः ॥ ८७ ॥

अवगच्छति[1] मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम् ।
स्थिरधीस्तु[2] तदेव मन्यते कुशलद्वारतया समुद्धृतम् ॥ ८८ ॥

अवेति ॥ मूढचेतनो भ्रान्तबुद्धिः प्रियनाशमिष्टनाशं हृदयार्पितं निखातं शल्यं शङ्कुमवगच्छति मन्यते । स्थिरधीर्विद्वांस्तु तदेव शल्यं समुद्धृतमुत्खातं मन्यते । प्रियनाशे सतीति शेषः । कुतः? कुशलद्वारतया । प्रियनाशस्य मोक्षोपायतयेत्यर्थः । विषयलाभविनाशयोर्यथाक्रमं हिताहितसाधनत्वाभिमानः पामराणाम् । विपरीतं तु विपश्चितामिति भावः ॥ ८८ ॥

स्वशरीरशरीरिणावपि श्रुत[3]संयोगविपर्ययौ यदा ।
विरहः किमिवानुतापयेद्वद बाह्यैर्विषयैर्विपश्चितम्[4] ॥ ८९ ॥

पाठा०—१ 'अथ गच्छति'. २ 'स्थिरधीश्च'. ३ 'स्तुत'; 'स्मृति'; 'श्रित'. ४ 'कम्'.

टिप्प०—1 यथोक्तं गीतासु-'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च । तस्मादपरिहार्येऽर्थे नानुशोचितुमर्हसि'-इति हेमाद्रिः ।

2 प्रियस्य नाशः प्रियनाशस्तं प्रियनाशं कुशलद्वारं मोक्षोपायं जानीते । बहुभगननाशे संसारादिरक्तता, विरक्ते जातेऽष्टकर्मगमने ततो मुक्तिरिति भावः-इति सुमति० ।

स्वेति ॥ स्वस्य शरीरस्य शरीरिणो देहात्मनोश्चापि यदा यतः श्रुतौ श्रुत्यवगतौ संयोगविपर्ययौ संयोगवियोगौ ययोस्तौ तयोक्तौ। तदा बाह्यैर्विषयैः पुत्रमित्रकलत्रादिभिर्विरहो विपश्चितं विद्वांसं किमिवानुतापयेत्कथं वद। न किंचिदित्यर्थः। अथवा,–'स्व'शब्दस्य शरीरेणैव संबन्धः ॥ ८९ ॥

न पृथग्जनवच्छुचो वशं वशिनामुत्तम! गन्तुमर्हसि।
द्रुमसानुमतां किमन्तरं यदि वायौ द्वितयेऽपि ते चलाः ॥९०॥

नेति ॥ वशिनामुत्तम जितेन्द्रियवर्य! पृथग्जनवत् पामरजनवत् शुचः शोकस्य वशं गन्तुं नार्हसि। तथा हि द्रुमसानुमतां तरुशिखरिणां किमन्तरं को विशेषः[1] वायौ सति द्वितयेऽपि द्विप्रकारा अपि। 'प्रथमचरम–' (पा. १।१।३३) इत्यादिना जसि विभाषया सर्वनामसंज्ञा। ते द्रुमसानुमन्तश्चला-श्चला यदि। सानुमतामपि चलने द्रुमवत्तेषामप्यचलसंज्ञा न स्यादित्यर्थः ॥९०॥

स तथेति विनेतुरुदारमतेः प्रतिगृह्य वचो विससर्ज मुनिम्।
तदलब्धपदं हृदि शोकघने प्रतियातमिवान्तिकमस्य गुरोः ॥९१॥

स इति ॥ सोऽज उदारमतेर्विनेतुर्गुरोर्वसिष्ठस्य वचस्तच्छिष्यमुखेरितं तथेति प्रतिगृह्याङ्गीकृत्य मुनिं वसिष्ठशिष्यं विससर्ज प्रेषयामास। किंतु तद्वचः शोकघने दुःखसान्द्रेऽस्याजस्य हृद्यलब्धपदमप्राप्तावकाशं सद्गुरोर्वसिष्ठस्यान्तिकं प्रतियातमिव प्रतिनिवृत्तं किमु–इत्युत्प्रेक्षा। तोटकवृत्तमेतत्– 'इह तोटकमम्बुधिसैः प्रथितम्' इति तल्लक्षणात् ॥ ९१ ॥

तेनाष्टौ परिगमिताः समाः कथंचिद्बालत्वादवितथसूनृतेन सूनोः।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥९२॥

तेनेति ॥ अवितथं यथार्थं सूनृतं प्रियवचनं यस्य तेनाजेन। सूनोः पुत्रस्य बालत्वात्। राज्याक्षमत्वादित्यर्थः। प्रियाया इन्दुमत्याः सादृश्यं वस्त्वन्तरगताकारसाम्यं प्रतिकृतिश्चित्रं तयोर्दर्शनैः।[3] स्वप्नेषु क्षणिकाः क्षणभङ्गुरा ये

---

टिप्प०—1 सदा संयुक्तयोर्देहात्मनोरपि वियोगोऽवश्यभावी, किं पुनर्बाह्यानामन्येषामिति। सद्जीवितयोर्नास्ति संबधः, कायजीवयोः। सुतमित्रकलत्रेषु संबधः केन हेतुना?–इति हेमा।

2 पवनेन वृक्षाश्चल्यन्ते, न गिरयः, तथा नीचाः शोकेनाभिभूयन्ते, न त्वादृशाः, ततः शोकं दूरीकुर्विति भावः–इति सुमति०।

3 स्वप्नस्वरूपं तु नाम्नदशायामदृष्टवशादात्मा सुखदुःखभोगं भुङ्क्ते, तथा स्वप्नावस्थायामपि पूर्वकर्मवशादात्मा नाडीतो निर्गत्य तत्र देशे नवं देहं निर्माय पूर्वं शरीरं तत्रैव देशे प्राणवायुना रक्षन् वा स्वप्नभोगान्भुक्त्वा पुनरपि पूर्वशरीरे प्रविशति। तत्रार्थे शातातपीश्रुतिः– 'प्रायेण रक्षन्नपरं कुलायं बहिः कुलायादमृतश्चरित्वा। स ईयतेऽमृतो यत्र कामं हिरण्मयः पौरुष एकहंसः' इति।

समागमोत्सवास्तैश्च । कथंचित् कृच्छ्रेण । अष्टौ समा वत्सराः । 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' इत्यमरः । परिगमिता अतिवाहिताः । उक्तं च—'वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म स्वपनसमये दर्शनमपि । तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितमनसां कोऽपि कथितः ॥' इति । प्रकृते सादृश्यादित्रितयाभिधानं तदङ्गस्पृष्टपदार्थस्पृष्टेरप्युपलक्षणम् । प्रहर्षिणीवृत्तमेतत् ॥ ९२ ॥

तस्य प्रसह्य हृदयं किल शोकशङ्कुः
प्लक्षप्ररोह इव सौधतलं बिभेद ।
प्राणान्तहेतुमपि तं भिषजामसाध्यं
लाभं प्रियानुगमने त्वरया स मेने ॥ ९३ ॥

तस्येति ॥ शोक एव शङ्कुः कीलः । 'शङ्कुः कीले शिवेऽस्त्रे च' इति विश्वः । तस्याजस्य हृदयम् । प्लक्षप्ररोहः सौधतलमिव । प्रसह्य बलात्किल बिभेद । सोऽजः प्राणान्तहेतुं मरणकारणमपि भिषजामसाध्यमप्रतिसमाधेयं तं शोकशङ्कुं रोगपर्यवसितं प्रियाया अनुगमने त्वरयोत्कण्ठया लाभं मेने । तद्विरहस्यातिदुःसहत्वात्तत्प्राप्तिकारणं मरणमेव वरमित्यमन्यतेत्यर्थः ॥ ९३ ॥

सम्यग्विनीतमथ वर्महरं कुमार-
मादिश्य रक्षणविधौ विधिवत्प्रजानाम् ।
रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः
प्रायोपवेशनमतिर्नृपतिर्बभूव ॥ ९४ ॥

सम्यगिति ॥ अथ नृपतिरजः सम्यग्विनीतं निसर्गसंस्काराभ्यां विनयवन्तं वर्म हरतीति वर्महरः कवचधारणार्हवयस्कः । 'वयसि च' (पा. ३।२।१०) इत्यच्प्रत्ययः । तं कुमारं दशरथं प्रजानां रक्षणविधौ राज्ये विधिवद्विध्यर्हम् । यथाशास्त्रमित्यर्थः । 'तदर्हम्' (पा. ५।१।११७) इति वतिप्रत्ययः । आदिश्य नियुज्य रोगेणोपसृष्टाया व्याप्तायास्तनोः शरीरस्य दुर्वसतिं दुःखावस्थितिं मुमुक्षुर्जिहासुः सन् । प्रायोपवेशनेऽनशनावस्थाने मतिर्यस्य स बभूव । 'प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि' इति विश्वः । अत्र पुराणवचनम्—'सनाथश्चो भवेद्यस्तु पातकैर्महदादिभिः । दुश्चिकित्स्यैर्महारोगैः पीडितो वा भवेत्तु यः । स्वयं देहविनाशस्य काले प्राप्ते महामतिः । आब्रह्माणं वा स्वर्गादिमहाफलजिगीषया । प्रवि-

पाठा०—१ 'प्रियानुगमनत्वरया'. २ 'वर्मधरम्'.

शेऽग्निज्वलनं दीप्तं कुर्यादनशनं तथा। एतेषामधिकारोऽस्ति नान्येषां सर्वजन्तुषु। नराणामथ नारीणां सर्ववर्णेषु सर्वदा॥' इति। अनयोर्वसन्ततिलकाच्छन्दः। तल्लक्षणम्—'उक्ता वसन्ततिलका तभजा जगौ गः' इति॥ ९४॥

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
देहत्यागादमरगणनालेख्यमासाद्य सद्यः।
पूर्वाकाराधिकतररुचा संगतः कान्तयासौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु॥ ९५॥

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृतावजविलापो नामाष्टमः सर्गः।

---

**तीर्थ इति**॥ असावजो जह्नुकन्यासरय्वोस्तोयानां जलानां **व्यतिकरेण** संभेदेन **भवे** तीर्थे गङ्गासरयूसंगमे **देहत्यागात्सद्य** एवा**मरगणनायां लेख्यं** लेखनम्। 'तयोरेव कृत्यक्तखलर्थाः' (पा. ३।४।७०) इति भावार्थे ण्यत्प्रत्ययः। **आसाद्य** प्राप्य। पूर्वस्मादाकाराद**धिकतरा रुग्यस्यास्तया कान्तया** रमण्या **संगतः** सन्। **नन्दन**स्येन्द्रोद्यानस्या**भ्यन्तरे**ष्वन्तर्वर्तिषु **लीलागारेषु** क्रीडाभवनेषु **पुनररमत**। 'यथाकथंचित्तीर्थेऽस्मिन्देहत्यागं करोति यः। तस्यात्मघातदोषो न प्राप्नुयादीप्सितान्यपि॥' इति स्कान्दे। मन्दाक्रान्ताच्छन्दः। तल्लक्षणम्—'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्' इति॥ ९५॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां संजीविनीसमाख्यायां रघुवंशव्याख्यायामष्टमः सर्गः।

---

## नवमः सर्गः।

एकलोचनमेकार्धं सार्धलोचनमन्यतः।
नीलार्धं नीलकण्ठार्धं महः किमपि मन्महे॥

पितुरनन्तरमुत्तरकोसलान्समधिगम्य समाधिजितेन्द्रियः।
दशरथः प्रशशास महारथो यमवतामवतां च धुरि स्थितः॥१॥

---

पाठा०-१ 'तोये तीर्थव्यतिकरभवे'. २ 'पूर्वाकाराधिकचतुरया' (=पूर्वस्मादाकारादधिकं चतुरया सुभगया).

**पितुरिति** ॥ समाधिना संयमेन **जितेन्द्रियः** । 'समाधिर्नियमे ध्याने' इति कोशः । **यमवतां** संयमिनामवतां रक्षतां राज्ञां च **धुर्यमे स्थितो महारथः** । 'एको दश सहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते ॥' इति । **दशरथः पितुरनन्तरमुत्तरकोसलाजनपदान्समधिगम्य प्रशशास** । अत्र मनुः ( ७।१४४ )—'क्षत्रियस्य परो धर्मः प्रजानां परिपालनम्' इति । द्रुतविलम्बितमेतद्वृत्तम् । तल्लक्षणम्—'द्रुतविलम्बितमाह नभौ भरौ' इति ॥ १ ॥

अधिगतं विधिवद्यदपालयत्प्रकृतिमण्डलमात्मकुलोचितम् ।
अभवदस्य ततो गुणवत्तरं सनगरं नगरन्ध्रकरौजसः ॥ २ ॥

**अधिगतमिति** ॥ **अधिगतं** प्राप्तम् **आत्मकुलोचितं** स्वकुलागतं **सनगरं** नगरजनसहितं **प्रकृतिमण्डलं** जानपदमण्डलम् । अत्र 'प्रकृति'शब्देन प्रजामात्रवाचिना नगरशब्दयोगाद्गोबलीवर्दन्यायेन जानपदमात्रमुच्यते । यद्यस्माद्विधिवद्यथाशास्त्रम**पालयत्** । **ततो** हेतोः । रन्ध्रं करोतीति रन्ध्रहेतुरित्यर्थः । 'कृञो हेतुताच्छील्यानुलोम्येषु' (पा. ३।२।२० ) इति टप्रत्ययः । नगस्य रन्ध्रकरो **नगरन्ध्रकरः** कुमारः । 'कुमारः क्रौञ्चदारणः' इत्यमरः । **तदोजस**स्तत्तुल्यबलस्य**अस्य** दशरथस्य **गुणवत्तरमभवत्** । तत्पौरजानपदमण्डलं तस्मिन्नतीवासक्तमभूदित्यर्थः ॥ २ ॥

उभयमेव वदन्ति मनीषिणः समयवर्पितया कृतकर्मणाम् ।
बलनिषूदनमर्थपतिं च तं श्रमनुदं मनुदण्डधरान्वयम् ॥ ३ ॥

**उभयमिति** ॥ मनस ईषिणो **मनीषिणो** विद्वांसः । पृषोदरादित्वात्साधुः । **बलनिषूदनम्**इन्द्रम् । दण्डस्य धरो राजा **मनुरिति** यो **दण्डधरः** स एवान्वयः

पाठा०—१ 'गुणतरपरम्'.

टिप्प०—1 अस्मिन्सर्गे प्रायः सर्वत्र यमकम् ; उक्तं च वाग्भटालंकारे—'स्वात्सरस्वरवर्णानामावृत्तिः संयुता युता । यमकं भिन्नवाच्यानामादिमध्यान्तगोचरम् ।' इति दिनकर० ।

2 बलं नामासुरं निषूदयतीति बलनिषूदनः; बवयोरभेदः; इन्द्रो हि बलदैत्यनिषूदन इति ऋग्वेदे पठ्यते; यथा—'इन्द्रो यद्वज्री धृष्यमाणो अन्धसा भिनद्वलस्य परिधीन्' (ऋ.१।५२।५) 'यो हत्वा अहिमरिणात्सप्तसिन्धून्यो गा उदाजदपधा बलस्य' (ऋ. २।१२।३), 'इन्द्रो वलं रक्षितारं दुघानां करेणेव विचकर्ता रवेण' (ऋ. १०।६७।७) इत्यादौ ।

3 मनोर्दण्डधरस्यान्वयो वंशोऽन्वयो यस्य नृपस्य तम् । यद्वा, दण्डधरो राजा, मनुनामा दण्डधरस्तस्यान्वयो यस्य तम् ।

अजयदेकरथेन स मेदिनीमुदधिनेमिमधिज्यशरासनः ।
जयमघोषयदस्य तु केवलं गजवती जवतीव्रहया चमूः ॥ १० ॥[1]

अजयदिति ॥ अधिज्यशरासनः स दशरथ उदधिनेमिं समुद्रवेष्टनां मेदिनीमेकरथेनाजयत् । स्वयमेकरथेनाजैषीदित्यर्थः । गजवती गजयुक्ता । जवेन तीव्रा जवाधिका हया यस्यां सा चमूस्तस्य नृपस्य केवलं जयमघोषयत् प्रथयत् । स्वयमेकवीरस्य चमूरुपकरणमात्रमिति भावः ॥ १० ॥

अवनिमेकरथेन वरूथिना जितवतः किल तस्य धनुर्भृतः ।
विजयदुन्दुभितां ययुरर्णवा घनरवा नरवाहनसंपदः ॥ ११ ॥[2]

अवनिमिति ॥ वरूथिना गुप्तिमता । 'वरूथो रथगुप्तिर्या तिरोधत्ते रथस्थितिम्' इति सज्जनः । एकरथेनाद्वितीयरथेन । अवनिं जितवतो धनुर्भृतो नरवाहनसंपदः कुबेरतुल्यश्रीकस्य तस्य दशरथस्य घनरवा मेघसमघोषा अर्णवा विजयदुन्दुभितां किल ययुः । अर्णवान्तविजयीत्यर्थः ॥ ११ ॥

शमितपक्षबलः शतकोटिना शिखरिणां कुलिशेन पुरंदरः ।
स शरवृष्टिमुचा धनुषा द्विषां स्वनवता नवतामरसाननः ॥ १२ ॥[3]

शमितेति ॥ पुरंदर इन्द्रः शतकोटिना शताश्रिणा कुलिशेन वज्रेण शिखरिणां पर्वतानां शमितपक्षबलो विनाशितपक्षसारः । नवतामरसाननो नवपङ्कजाननः । 'पङ्केरुहं तामरसम्' इत्यमरः । स दशरथः शरवृष्टिमुचा स्वनवता धनुषा द्विषां शमितो नाशितः पक्षः सहायो बलं च येन स तथोक्तः । 'पक्षः सहायेऽपि' इत्यमरः ॥ १२ ॥

---

पाठा०—१ 'हि'. २ 'जघननिर्विषयीकृतमेखलाननुचिताश्रुविलुप्तविशेषकान् । स रिपुदारगणानकरोद्बलादलकानलकाधिपविक्रमः ॥'. ३ स्फुरितकोटिसहस्रमरीचिना समचिनोत्कुलिशेन हरिर्यशः । स धनुषा बहुसायकवर्षिणा स्वनवता नवतामरसाननः'. ४ 'शित'.

---

टिप्प०—1 स दशरथ एकरथेन मेदिनीं पृथ्वीमजयत् जयति स्म । कथंभूतां मेदिनीं ? उदधिनेमिं समुद्रसीमान् । कथंभूतो दशरथः ? अधिज्यशरासन आरोपितचापः । हि यतोऽस्य दशरथस्य चमूः सेनाः केवलं जयमेवाघोषयत् । कथंभूता चमूः ? गजवतीः हस्तियुक्ताः । पुनः कथंभूता चमूः ? जवतीव्रहया इत्यन्वयः—इति सुमति० ।

2 यथा हरिरिन्द्रः कुलिशेन वज्रेण यशः समचिनोद्वर्धयति स्म तथा स दशरथः धनुषा चापेन युधि संग्रामे यशः समचिनोत्—इति सुमति० ।

3 'जघन—' इति श्लोकः सुमतिविजयेन पठितो व्याख्यातश्च ।

चरणयोर्नखरागसमृद्धिभिर्मुकुटरत्नमरीचिभिरस्पृशन् ।
नृपतयः शतशो मरुतो यथा शतमखं तमखण्डितपौरुषम् ॥ १३ ॥

चरणयोरिति ॥ शतशो नृपतयोऽखण्डितपौरुषं तं दशरथम् । मरुतो देवाः शतमखं यथा शतक्रतुमिव । नखरागेण चरणनखकान्त्या समृद्धिभिः संपादितर्द्धिभिर्मुकुटरत्नमरीचिभिश्चरणयोरस्पृशन् । तं प्रणेमुरित्यर्थः ॥ १३ ॥

निववृते स महार्णवरोधसः सचिवकारितबालसुताञ्जलीन् ।
समनुकम्प्य सपत्नपरिग्रहाननलकानलकानवमां पुरीम् ॥ १४ ॥

निववृत इति ॥ स दशरथः सचिवैः संप्रयोजितैः कारिता बालसुतानामञ्जलयो यैस्तान् । स्वयमसंमुखागतानित्यर्थः । अनलकान्हतभर्तृकत्वयालकसंस्कारशून्यान् । सपत्नपरिग्रहाञ्छत्रुपत्नीः । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः । समनुकम्प्यानुगृह्य । अलकानवमामलकानगरादन्यूनां पुरीमयोध्यां प्रति महार्णवानां रोधसः पर्यन्तान्निववृते । शरणागतवत्सल इति भावः ॥ १४ ॥

उपगतोऽपि च मण्डलनाभितामनुदितान्यसितातपवारणः ।
श्रियमवेक्ष्य स रन्ध्रचलामभूदनलसोऽनलसोमसमद्युतिः ॥ १५ ॥

उपगत इति ॥ अनुदितमनुच्छ्रितमन्यत्स्वच्छत्रातिरिक्तं सितातपवारणं श्वेतच्छत्रं यस्य सः । अनलसोमयोरग्निचन्द्रयोः समे द्युती तेजःकान्ती यस्य स तथोक्तः । श्रियं लक्ष्मीं रन्ध्रेऽन्यायालस्यादिरूपे छले चलां चञ्चलामवेक्ष्यालोक्य । श्रीर्हि केनचिन्मिषेण पुमांसं परिहरति । स दशरथो मण्डलस्य नाभितां द्वादशराजमण्डलस्य प्रधानमहीपतित्वमुपगतोऽपि । चक्रवर्ती सन्नपीत्यर्थः । 'अथ नाभिस्तु जन्त्वङ्गे यस्य संज्ञा प्रतारिका । रथचक्रस्य मध्यस्थपिण्डिकायां च ना पुनः ॥ आद्यक्षत्रियभेदे तु मतो मुख्यमहीपतौ ।' इति केशवः । अनलसोऽप्रमत्तोऽभूत् । 'अजितमस्ति नृपास्पदम्' इति पाठान्तरेऽजितं दृढास्पदमस्तीति बुद्ध्यानलसोऽप्रमत्तोऽभूत् । विजितनिखिलजेतव्योऽपि पुनर्जेतव्यान्तरवानिव जागरूक एवावतिष्ठतेत्यर्थः । द्वादशराजमण्डलं तु कामन्दकेनोक्तम्—'अरेर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । तथारिमित्रमित्रं च विजिगीषोः पुरःसराः ॥ पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः' ॥ 'अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे ॥ मण्डलाद्बहिरेतेषामुदासीनो

**अजिनेति** ॥ **ईश्वरो** भगवानष्टमूर्तिरजिनं कृष्णाजिनं दण्डमौदुम्बरं बिभर्तीति **तमजिनदण्डभृतम्** । 'कृष्णाजिनं दीक्षयति । औदुम्बरं दीक्षितदण्डं यजमानाय प्रयच्छति' इति वचनात् । कुशमयी मेखला यस्यास्तां **कुशमेखलाम्** । 'शरमयी मौञ्जी वा मेखला । तया यजमानं दीक्षयती'ति विधानात् । प्रकृते कुशग्रहणं कचित्प्रतिनिधिदर्शनात्कृतम् । **यतगिरं** वाचंयमम् । 'वाचं यच्छति' इति श्रुतेः । **मृगशृङ्गं परिग्रहः** कण्डूयनसाधनं यस्यास्ताम् । 'कृष्णविषाणया कण्डूयते' इति श्रुतेः । **अध्वरदीक्षितां** संस्कारविशेषयुक्तां **तनुं** दाशरथीमधिवसन्नधितिष्ठन्सन् । **असमा भासो** दीप्तयो यस्मिन्कर्मणि तद्यथा तथा **अभासयद्भासयति स** ॥ २१ ॥

**अवभृथप्रयतो नियतेन्द्रियः सुरसमाजसमाक्रमणोचितः ।**
**नमयति स स केवलमुन्नतं वनमुचे नमुचेररये शिरः ॥ २२ ॥**

**अवभृथेति** ॥ **अवभृथेन प्रयतो नियतेन्द्रियः सुरसमाजसमाक्रमणोचितो** देवसभाधिष्ठानार्हः **स** दशरथ **उन्नतं शिरो वनमुचे** जलवर्षिणे । 'जलं नीरं वनं सत्त्वम्' इति शाश्वतः । **नमुचेररये केवल**मिन्द्रायैव **नमयति स** । न कस्मैचिदन्यस्मै मानुषायेत्यर्थः ॥ २२ ॥

**असकृदेकरथेन तरस्विना हरिहयाग्रसरेण धनुर्भृता ।**
**दिनकराभिमुखा रणरेणवो रुरुधिरे रुधिरेण सुरद्विषाम् ॥ २३ ॥**

**असकृदिति** ॥ **एकरथेना**द्वितीयरथेन **तरस्विना** बलवता **हरिहय**स्येन्द्रस्या**ग्रसरेण धनुर्भृता** दशरथेनासकृद्बहुशो **दिनकरस्याभिमुखाः** । अभिमुखस्थिता इत्यर्थः । **रणरेणवः सुरद्विषां** दैत्यानां **रुधिरेण रुरुधिरे** निवारिताः ॥ २३ ॥

**अथ समावबृते कुसुमैर्नवैस्तमिव सेवितुमेकनराधिपम् ।**
**यमकुबेरजलेश्वरवज्रिणां समधुरं मधुरञ्चितविक्रमम् ॥ २४ ॥**

**अथेति** ॥ **अथ यमकुबेरजलेश्वरवज्रिणां** धर्मराजधनदवरुणामरेन्द्राणां समा धूर्भारो यस्य स **समधुरः** । माध्यस्थ्यवितरणसंनियमनैश्वर्यैस्तुल्यकक्ष इत्यर्थः । 'ऋक्पूरब्धूः—' ( पा.५।४।७४ ) इत्यादिना समासान्तोऽप्रत्ययः । तं **समधुरम्** । **अञ्चितविक्रमं** पूजितपराक्रममे**कनराधिपं तं** दशरथं **सेवितुमिव** । **मधु**र्वसन्तः । 'अथ पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च मधुः' इति विश्वः । **नवैः कुसु-**

पाठा०—१ 'विजितेन्द्रियः'; 'अपि जितेन्द्रियः'. २ 'एव हितेन'. ३ 'वज्रिणम्'.

मैरुपलक्षितः सन्, समाववृते समागतः । 'रिक्तहस्तेन नोपेयाद्राजानं देवतां गुरुम्' इति वचनात्पुष्पसमेतो राजानं सेवितुमागत इत्यर्थः ॥ २४ ॥

जिगमिषुर्धनदाध्युषितां दिशं रथयुजा परिवर्तितवाहनः ।
दिनमुखानि रविर्हिमनिग्रहैर्विमलयन्मलयं नगमत्यजत् ॥ २५ ॥[2]

जिगमिषुरिति ॥ धनदाध्युषितां कुबेराधिष्ठितां दिशं जिगमिषुर्गन्तुमिच्छुः । रथयुजा सारथिनारुणेन परिवर्तितवाहनो निवर्तिताश्वो रविः । हिमस्य निग्रहैर्निराकरणैर्दिनमुखानि प्रभातानि विमलयन्विशदयन्, मलयं नगं मलयाचलमत्यजत् । दक्षिणां दिशमत्याक्षीदित्यर्थः ॥ २५ ॥

कुसुमजन्म ततो नवपल्लवास्तदनु षट्पदकोकिलकूजितम् ।
इति यथाक्रममाविरभून्मधुर्द्रुमवतीमवतीर्य वनस्थलीम् ॥ २६ ॥

कुसुमेति ॥ आदौ कुसुमजन्म । ततो नवपल्लवाः । तदनु । 'अनुर्लक्षणे' (पा. १।४।८४) इति कर्मप्रवचनीयत्वाद्द्वितीया । यथासंख्यं तदुभयानन्तरं षट्पदानां कोकिलानां च कूजितम् । इत्येवंप्रकारेण यथाक्रमं क्रममनतिक्रम्य द्रुमवतीं द्रुमभूयिष्ठां वनस्थलीमवतीर्य मधुर्वसन्त आविरभूत् । केषांचिद्द्रुमाणां पल्लवप्राधान्यात्केषांचित्कुसुमप्राधान्याल्लोकक्रमस्य दृष्टविरोधः ॥ २६ ॥

नयगुणोपचितामिव भूपतेः सदुपकारफलां श्रियमर्थिनः ।
अभिययुः सरसो मधुसंभृतां कमलिनीमलिनीरपतत्रिणः ॥ २७ ॥

नयेति ॥ नयो नीतिरेव गुणः । तेन । अथवा,—नयेन गुणैः शौर्यादिभिश्चोपचिताम् । सतामुपकारः फलं यस्यास्तां सदुपकारफलां भूपतेर्दशरथस्य श्रियमर्थिन इव । मधुना वसन्तेन संभृतां सम्यक्पुष्टां सरसः संबन्धिनीं कमलिनीं पद्मिनीमलिनीरपतत्रिणः । अलयो भृङ्गाः । नीरपतत्रिणो जलपतत्रिणो हंसादयश्च । अभिययुः ॥ २७ ॥

---

पाठा०—१ 'निर्महैः'. २ 'हिमविवर्णितचन्दनपल्लवं विहरयन्मलयाद्रिमुदङ्मुखः । विहगयोः कृपयेव शनैर्ययौ रविरहर्विरहध्रुवभेदयोः ॥'.

---

टिप्प०—1 तरूणां पुष्पोत्पत्तेरनन्तरं पल्लवसामग्री दृश्यते । अथ अन्यथा व्याख्यानम्—नवपल्लवा बभूवुः । किंभूता नवपल्लवाः ? कुसुमजन्म सन्त्वतीति कुसुमजन्मतत:—इति वल्लभः । यतः कुसुमप्रिया भृगाः किसलयलोलुपाः कोकिलाश्चात एव पुष्पाणि पल्लवांश्चाधिगम्य गुञ्जन्तीति भावः—इति दिनकर० ।

2 'सरो' ग्रहणं सकलनिदर्शनार्थम्—इति वल्लभः ।

3 अत्र 'हिमविवर्णित—' इत्ययं श्लोको दिनकरमिश्रैः पठितो व्याख्यातश्च ।

कुसुममेव न केवलमार्तवं नवमशोकतरोः स्मरदीपनम्।
किसलयप्रसवोऽपि विलासिनां मदयिता दयिताश्रवणार्पितः॥२८॥

कुसुममिति॥ ऋतुरस्य प्राप्त आर्तवम्। 'ऋतोरण्' (पा. ५।१।१०५) इत्यण्। नवं प्रथममशोकतरोः केवलं कुसुममेव स्मरदीपनमुद्दीपनं न। किंतु विलासिनां मदयिता मदजनको दयिताश्रवणार्पितः किसलयप्रसवोऽपि पल्लवसंतानोऽपि स्मरदीपनोऽभवत्॥ २८॥

विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः।
मधुलिहां मधुदानविशारदाः कुरवका रवकारणतां ययुः॥ २९॥

विरचिता इति॥ मधुना वसन्तेन विरचिता उपवनश्रियामभिनवाः पत्रविशेषकाः पत्ररचना इव स्थिता मधूनां मकरन्दानां दाने विशारदाश्चतुराः कुरवकाख्यवो मधुलिहां मधुपानां रवकारणतां ययुः। भृङ्गाः कुरवकाणां मधूनि पीत्वा जगुरित्यर्थः। दानशौण्डानर्थिजनाः स्तुवन्तीति भावः॥२९॥

सुवदनावदनासवसंभृतस्तदनुवादिगुणः कुसुमोद्गमः।
मधुकरैरकरोन्मधुलोलुपैर्बकुलमाकुलमायतपङ्क्तिभिः॥ ३०॥

सुवदनेति॥ सुवदनावदनासवेन कान्तामुखमद्येन संभृतो जनितः। तत्तस्य दोहदमिति प्रसिद्धिः। तस्यासवस्यानुवादी सदृशो गुणो यस्य तदनुवादिगुणः कुसुमोद्गमः कर्ता मधुलोलुपैरायतपङ्क्तिभिर्दीर्घपङ्क्तिभिर्मधुकरैर्मधुपैः करणैः बकुलं बकुलवृक्षमाकुलमकरोत्॥ ३०॥

उपहितं शिशिरापगमश्रिया मुकुलजालमशोभत किंशुके।
प्रणयिनीव नखक्षतमण्डनं प्रमदया मदयापितलज्जया॥ ३१॥

उपहितमिति॥ शिशिरापगमश्रिया वसन्तलक्ष्म्या किंशुके पलाशवृक्षे। 'पलाशः किंशुकः पर्णः' इत्यमरः। उपहितं दत्तं मुकुलजालं कुड्मलसहतिः। मदेन यापितलज्जयाऽपसारितत्रपया प्रमदया प्रणयिनी प्रियतम उपहितं नखक्षतमेव मण्डनं तदिव। अशोभत॥ ३१॥

पाठा०—१ 'दशनचन्द्रिकया व्यवभासितं हसितमासवगन्धि मधोरिव। तिलककुसुममसेव्यत षट्प ' चिरसंचितमीप्सु ॥' २ 'गमयितुं ' न मह । इति द न ' मधौ ' ' न

व्रणगुरुप्रमदाधरदुःसहं जघननिर्विषयीकृतमेखलम्।
न खलु तावदशेषमपोहितुं रविरलं विरलं कृतवान्हिमम् ॥ ३२ ॥[1]

व्रणेति ॥ व्रणैर्दन्तक्षतैर्गुरुभिर्दुर्भरैः प्रमदानामधरैरधरोष्ठैर्दुःसहं हिमस्य व्यथाकरत्वादसह्यम्। जघनेषु निर्विषयीकृता निरवकाशीकृता मेखला येन तत्। शैत्यात्त्याजितमेखलमित्यर्थः। एवंभूतं हिमं रविस्तावदा वसन्तादशेषं निःशेषं यथा तथाऽपोहितुं निरसितुं नालं खलु न शक्तो हि। किंतु विरलं कृतवांस्तनूचकार ॥ ३२ ॥

अभिनयान्परिचेतुमिवोद्यता मलयमारुतकम्पितपल्लवा।
अमदयत्सहकारलता मनः सकलिका कलिकामजितामपि ॥ ३३ ॥

अभिनयानिति ॥ अत्र चूतलताया नर्तकीसमाधिरभिधीयते। अभिनया[2]नर्थव्यञ्जकान्व्यापारान्। 'व्यञ्जकाभिनयौ समौ' इत्यमरः। परिचेतुमभ्यसितुमुद्यतेव स्थिता। कुतः? मलयमारुतेन कम्पितपल्लवा। 'पल्लव'शब्देन हस्तो गम्यते। सकलिका सकोरका। 'कलिका कोरकः पुमान्' इत्यमरः। सहकारलता। कलिः कलहो द्वेष उच्यते। 'कलिः स्यात्कलहे शूरे कलिरन्त्ययुगे युधि' इति विश्वः। कामो रागः। तज्जितामपि। जितरागद्वेषाणामपीत्यर्थः। मनोऽमदयत् ॥ ३३ ॥

प्रथममन्यभृताभिरुदीरिताः प्रविरला इव मुग्धवधूकथाः।
सुरभिगन्धिषु शुश्रुविरे गिरः कुसुमितासु मिता वनराजिषु ॥ ३४ ॥

प्रथममिति ॥ सुरभिर्गन्धो यासां तासु सुरभिगन्धिषु। 'गन्धस्य—' (पा. ५।४।१३५) इत्यादिनेत्वम्। कुसुमान्यासां संजातानि कुसुमिताः। तासु वनराजिषु वनपङ्क्तिषु। अन्यभृताभिः कोकिलाभिः प्रथमं प्रारम्भेषूदीरिता उक्ता

पाठा०—१ 'परभृतां मदनक्षतचेतसां प्रियसखी लघुवागिव योषिताम्। प्रियतमानकरोत्कलहान्तरे मृदुरवा दुरवापसमागमान् ॥'.

टिप्प०—1 हिमर्तौ शैत्यदूषणानां भूषणानां परित्यागाज्जघननिर्विषयता कृतेत्याशुकन्—इति दिनकर०।

2 अन्यानि नारीव द्रष्टाभिनयान्विभ्रम्यती यथा मुनिमानसान्युन्मादयतीति छायार्थः—इति दिनकर०॥ कलिः कलहः कामः कन्दर्पस्तौ जयन्तीति कलिकामजितो मुनीस्तासामपि मनोऽमदयत् अथवा—कलौ कलियुगे कामं जयन्तीति कलिकामजितः, कलिना कष्टेन कामं जयन्तीति वा—इति शिशु०। कलिर्वैरं कामोऽभिलाषो मदनो वा ये जयन्ति तेषामपि मनोऽमदयत्। हस्तपल्लवो भावारोपोऽभिनयः—इति हेमाद्रिः।

अत एव **मिताः** परिमिता **गिर** आलापाः । **प्रविरला** मौग्ध्यात्स्तोकोक्ता **मुग्धवधूनां कथा** वाच **इव । शुश्रुविरे** श्रुताः ॥ ३४ ॥

**श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः ।**
**उपवनान्तलताः पवनाहतैः किसलयैः सलयैरिव पाणिभिः ॥ ३५ ॥**[1]

**श्रुतीति** ॥ **श्रुतिसुखाः** कर्णमधुरा **भ्रमरस्वना** एव **गीतयो** यासां ताः । **कुसुमान्येव कोमला दन्तरुचो** दन्तकान्तयो यासां ताः । अनेन सस्मितत्वं विवक्षितम् । **उपवनान्तलताः पवनेनाहतैः** कम्पितैः **किसलयैः सलयैः** साभिनयैः । 'लय'शब्देन लयानुगतोऽभिनयो लक्ष्यते । उपवनान्ते पवनाहतैरिति सक्रियत्वाभिधानात् । **पाणिभिरिव बभुः** । अनेन लतानां नर्तकीसाम्यं गम्यते ॥

**ललितविभ्रमबन्धविचक्षणं सुरभिगन्धपराजितकेसरम् ।**
**पतिषु निर्विविशुर्मधुमङ्गनाः स्मरसखं रसखण्डनवर्जितम् ॥ ३६ ॥**[2]

**ललितेति** ॥ **अङ्गना ललितविभ्रमबन्धविचक्षणं** मधुरविलासघटनापटुतरम् । **सुरभिणा** मनोहरेण **गन्धेन पराजितकेसरं** निर्जितबकुलपुष्पम् । 'अथ केसरे । बकुलः' इत्यमरः । स्मरस्य सखायं **स्मरसखम्** । स्मरोद्दीपकमित्यर्थः । **मधुं** मद्यम् । 'अर्धर्चाः पुंसि च' (पा.२।४।३१) इति पुंलिङ्गता । उक्तं च—'मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधुः ॥' इति । **पतिषु** विषये **रसखण्डनवर्जितमनु**रागभङ्गरहितं यथा तथा **निर्विविशुः** । परस्परानुरागपूर्वकं पतिभिः सह पपुरित्यर्थः ॥ ३६ ॥

**शुशुभिरे स्मितचारुतराननाः स्त्रिय इव श्लथशिञ्जितमेखलाः ।**
**विकचतामरसा गृहदीर्घिका मदकलोदकलोलविहंगमाः ॥ ३७ ॥**

**पाठा०—१** 'अनलसान्यभृतानलसान्मनः कमलधूलिभृता मदनेरिता । कुसुमभारनताध्वगयोषितामसमशोकमशोकलताकरोत् ॥' २ 'लघयति स्म न पत्यपराधजं न सहकारतरुस्तरुणीभृताम् । कुसुमितो न मितोऽलिभिरुन्मदैः स्मरसमाधिऽधिकरोशताम् ॥'. ३ 'चारुविलोचनाः'.

**टिप्प०—1** 'गेये हि दन्तभासा साकाराभिनयेनेव भाव्यम्, नृत्यगीतवाद्यैः सम हस्तक्रिया लयः'-इति हेमाद्रिः ।

2 ललिते मनोहरे विभ्रमार्थे विचक्षणं चतुर ललितविभ्रमहासविचक्षणं । कुत्रापि 'ललितविभ्रमहासविचक्षणं', 'ललितविभ्रमबन्धविचक्षण' इति पाठौ । तत्र ललितो रम्यो यो विभ्रमो विलासस्तेन युक्तो यो बन्धः करणादिस्तेन विचक्षणादिस्तेन विचक्षणम् । उक्तं च माघे (१०।१२) 'हावहारि हसितं वचनानां' इति । मद्यपात्रे हि मद्यपैः सौगन्ध्यार्थं कमलादीनि क्षिप्यन्ते-इति शिशु० ।

झुझुभिर इति ॥ विकचतामरसा विकसितकमलाः । मदेन कलाव्यक्तमधुरं ध्वनन्त उदकलोलविहंगमा जलप्रियपक्षिणो हंसादयो यासु ता मदकलोदकलोलविहंगमा गृहेषु दीर्घिका वाप्यः । सितेन चारुतराण्याननानि यासां ताः श्लथाः शिञ्जिता मुखरा मेखला यासां ताः । शिञ्जितेति कर्तरि क्तः । स्त्रिय इव झुझुभिरे ॥ ३७ ॥

उपययौ तनुतां मधुखण्डिता हिमकरोदयपाण्डुमुखच्छविः ।
सदृशमिष्टसमागमनिर्वृतिं वनितयानितया रजनीवधूः ॥ ३८ ॥

उपययाविति ॥ मधुना मधुसमयेन खण्डिता ह्रासं गमिता । क्षीयन्ते खलूत्तरायणे रात्रयः; खण्डिताख्या च नायिका ध्वन्यते । हिमकरोदयेन चन्द्रोदयेन पाण्डुर्मुखस्य प्रदोषस्य वक्त्रस्य च छविर्यस्याः सा रजन्येव वधूः । इष्टसमागमनिर्वृतिं प्रियसंगमसुखम् । अनितयाऽप्राप्तया । 'इण् गतौ' इति धातोः कर्तरि क्तः । वनितया सदृशं तुल्यं तनुतां न्यूनतां कार्श्यं चोपययौ ॥ ३८ ॥

अपतुषारतया विशदप्रभैः सुरतसङ्गपरिश्रमनोदिभिः ।
कुसुमचापमतेजयदंशुभिर्हिमकरो मकरोर्जितकेतनम् ॥ ३९ ॥

अपेति ॥ हिमकरश्चन्द्रः । अपतुषारतयाऽपगतनीहारतया विशदप्रभैर्निर्मलकान्तिभिः सुरतसङ्गपरिश्रमनोदिभिः सुरतसङ्गखेदहारिभिरंशुभिः किरणैः । मकरोर्जितकेतनम् । मकरेणोर्जितं केतनं ध्वजो यस्य तम् । लब्धावसरत्वादुद्धूतध्वजमित्यर्थः । कुसुमचापं स्मरमतेजयदशातयत् । 'तिज निशाने' इति धातोर्ण्यन्ताल्लङ् । उद्दीपकलाभात्तनोऽपि तीक्ष्णोऽभूदित्यर्थः ॥ ३९ ॥

हुतहुताशनदीप्ति वनश्रियः प्रतिनिधिः कनकाभरणस्य यत् ।
युवतयः कुसुमं दधुराहितं तदलके दलकेसरपेशलम् ॥ ४० ॥

हुतेति ॥ हुतहुताशनदीप्त्याऽऽज्याहुतिप्रज्वलिताग्निप्रभं यत्कुसुमम् । स्वर्णवर्णमित्यर्थः । वनश्रिय उपवनलक्ष्म्याः कनकाभरणस्य प्रतिनिधिः । अभूदिति शेषः । दलेषु केसरेषु च पेशलम्, सुकुमारपत्रकिसलमित्यर्थः । आहितम् । प्रियैरिति शेषः । तत्कुसुमं युवतयोऽलके कुन्तले दधुः ॥ ४० ॥

---

पाठा०—१ 'तमयितुं प्रियसंगमितो सुखं न सहया सह यामवती स्त्रिया'. २ 'दश'.

---

टिप्प०—1 'सा खण्डिते [illegible] [illegible] कथिता कविभिः पुराणैः' [illegible] पद्यम् ।

**अलिभिरञ्जनविन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः ।**
**न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥४१॥**

**अलिभिरिति ॥ अञ्जनविन्दुमनोहरैः** कज्जलकणसुन्दरैः **कुसुमपङ्क्तिषु** निपतन्ति ये तैः । **अलिभिरङ्कितश्चिह्नितस्तिलकः** श्रीमान्नाम वृक्षः । 'तिलकः क्षुरकः श्रीमान्' इत्यमरः । **वनस्थलीम्** । तिलको विशेषकः । 'तमालपत्रतिलकचित्रकाणि विशेषकम् । द्वितीयं च तुरीयं च न स्त्रियाम्' इत्यमरः । **प्रमदामिव । न शोभयति स्मेति न खलु ।** अपि त्वशोभयदेवेत्यर्थः । 'लट् स्मे' (पा. ३।२।११८) इति 'स्म'शब्दयोगाद्भूतार्थे लट् ॥ ४१ ॥

**अमदयन्मधुगन्धसनाथया किसलयाधरसंगतया[1] मनः ।**
**कुसुमसंभृतया नवमल्लिका स्मितरुचा तरुचारुविलासिनी ॥ ४२ ॥**

**अमदयदिति ॥ तरुचारुविलासिनी** तरोः पुंसश्च चारुविलासिनी नवमल्लिका सप्तलाख्या लता । 'सप्तला नवमल्लिका' इत्यमरः । **मधुनो** मकरन्दस्य मद्यस्य च **गन्धेन सनाथया** । गन्धप्रधानयेत्यर्थः । **किसलयमेवाधरस्तत्र संगतया** । प्रसक्तरागयेत्यर्थः । **कुसुमैः संभृतया** संपादितया । कुसुमरूपयेत्यर्थः । **स्मितरुचा** हासकान्त्या **मनः** । पश्यतामिति शेषः । **अमदयत्** ॥ ४२ ॥

**अरुणरागनिषेधिभिरंशुकैः[2] श्रवणलब्धपदैश्च यवाङ्कुरैः ।**
**परभृताविरुतैश्च विलासिनः स्मरबलैरबलैकरसाः कृताः ॥ ४३ ॥**

**अरुणेति ॥ विलासिनो** विलसनशीलाः पुरुषाः । 'वौ कषलस-' (पा.३।२।१४३) इत्यादिना घिनुण्प्रत्ययः । अरुणस्यानूरो रागमारुण्यं निषेधन्ति तिरस्कुर्वन्तीत्यरुण**रागनिषेधिनः** । तैः । कुसुम्भादिरञ्जनात्तत्सदृशैरित्यर्थः । 'तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति । तस्येचानुकरोतीति शब्दाः सादृश्यवाचकाः ॥' इति दण्डी । **अंशुकैरम्बरैः । श्रवणेषु** कर्णेषु **लब्धपदैः** । निवेशितैरित्यर्थः । **यवाङ्कुरैश्च परभृताविरुतैः** कोकिलाकूजितैश्च । इत्येतैः **स्मरबलैः** । कामसैन्यैः । अबलास्वेक एव रसो रागो येषां **तेऽबलैकरसाः** स्त्रीपरतन्त्राः **कृताः** ॥ ४३ ॥

---

**पाठा०—१ 'संततया मनः'; 'संगतरागया'. २ 'निषेविभिः'.**

---

टिप्प०—1 तिलको विशेषकः स्त्रियमिव । तिलकेऽञ्जनबिन्दवः शोभार्थं क्रियन्ते । 'तिलक'-शब्दस्य द्विरुपादाने भिन्नार्थतया न दोषः । तिलकप्रमदयोरेकतरस्मिन्नरा यदुभयोर्वचनं तदवाच्यवचनं दोषः इति व्यक्तिविवेके-इति हेमाद्रिः ॥ यथाक्रमं मृगनाभिबिन्दुरम्यस्तिलको विशेषकः स्त्रियं शोभयति तथेत्यर्थः-इति दिनकर० ।

2 कामिनीस्मितमपि मद्यगन्धसनाथमधरसंगतरागं वा । यद्वा,-कुसुमैः संपादितया नवमल्लिकास्मितरुचा तरुचारुविलासिनः पुरुषा अमदयन्-इति हेमाद्रिः ।

उपचितावयवा शुचिभिः कणैरलिकदम्बकयोगमुपेयुषी ।
सदृशकान्तिरलक्ष्यत मञ्जरी तिलकजालकजालकमौक्तिकैः ॥ ४४ ॥

उपचितेति ॥ शुचिभिः शुभ्रैः कणै रजोभिरुपचितावयवा पुष्टावयवा । अलिकदम्बकयोगमुपेयुषी प्राप्ता । तिलकजा तिलकवृक्षोत्था मञ्जरी । अलकेषु यज्जालकमाभरणविशेषस्तस्मिन्मौक्तिकैः सदृशकान्तिः । अलक्ष्यत । भृङ्गसङ्गिनी शुभ्रा तिलकमञ्जरी नीलालकसक्तमुक्ताजालमिवालक्ष्यतेति वाक्यार्थः ॥ ४४ ॥

ध्वजपटं मदनस्य धनुर्भृतश्छविकरं मुखचूर्णमृतुश्रियः ।
कुसुमकेसररेणुमलिव्रजाः सपवनोपवनोत्थितमन्वयुः ॥ ४५ ॥

ध्वजेति ॥ अलिव्रजाः षट्पदनिवहा धनुर्भृतो धानुष्कस्य मदनस्य कामस्य ध्वजपटं पताकाभूतम् । ऋतुश्रियो वसन्तलक्ष्म्याश्छविकरं शोभाकरं मुखचूर्णं मुखालंकारचूर्णभूतं सपवनोपवनोत्थितं सपवनं पवनेन सहितं यदुपवनं तस्मिन्नुत्थितम् । कुसुमानां केसरेषु किञ्जल्केषु यो रेणुस्तम् । अन्वयुरन्वगच्छन् । यातेर्लङ् ॥ ४५ ॥

अनुभवन्नवदोलमृतूत्सवं पटुरपि प्रियकण्ठजिघृक्षया ।
अनयदासनरज्जुपरिग्रहे भुजलतां जलतामबलाजनः ॥ ४६ ॥

अनुभवन्निति ॥ नवा दोला प्रेङ्खा यस्मिंस्तं नवदोलमृतूत्सवं वसन्तोत्सवमनुभवन्नबलाजनः पटुरपि निपुणोऽपि प्रियकण्ठस्य जिघृक्षया ग्रहीतुमालिङ्गितुमिच्छया आसनरज्जुपरिग्रहे पीठरज्जुग्रहणे भुजलतां बाहुलतां जलतां शैथिल्यम् । डलयोरभेदः । अनयत् दोलाक्रीडासु, पतनभयनाटितकेन प्रियकण्ठमाश्लिषदित्यर्थः ॥ ४६ ॥

त्यजत मानमलं बत विग्रहैर्न पुनरेति[3] गतं चतुरं वयः ।
परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः ॥ ४७ ॥

---

पाठा०—१ 'विततपन्नगकरं सुथनाढ्यं कुसुमितद्रुममुन्नदकोकिलम् । ऋतुपभोगरसं हिमवर्षिणः परभृतोरमृतोपमं मधुः ॥' २ 'जडताम्'. ३ 'पैति'.

---

टिप्प०—१ शरस्य ध्वजपटं लोकवशीकरणाय, मुखचूर्णं मुखवासार्थं कर्पूरादिचूर्णम् इति दिनकर० ।

२ [illegible] दिनकर० ।

**त्यजतेति** ॥ 'बत'इत्यामन्त्रणे। 'खेदानुकम्पासंतोषविस्मयामन्त्रणे बत' इत्यमरः। **बत** अङ्गना **मानं** कोपं **त्यजत**। तदुक्तम्—'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' इति। **विग्रहैर्विरोधैरलम्**। विग्रहो न कार्य इत्यर्थः। **गतम**तीतं **चतुरमुपभोगक्षमं वयो** यौवनं **पुनर्नैति** नागच्छति। **इत्येवंरूपे स्मरमते** स्मराभिप्राये। नपुंसके भावे क्तः। **परभृताभिः** कोकिलाभिर्निवेदिते **सतीव वधूजनो रमते स्म** रेमे। कोकिलाकूजितोद्दीपितस्मरः स्त्रीजनः कामशासनभयादिवोच्छृङ्खलमखेलदित्यर्थः ॥ ४७ ॥

**अथ यथासुखमार्तवमुत्सवं समनुभूय विलासवतीसखः।**
**नरपतिश्चकमे मृगयारतिं स मधुमन्मधुमन्मथसंनिभः ॥ ४८ ॥**

**अथेति** ॥ अथानन्तरं मधुं मथ्नातीति **मधुमद्विष्णुः**[1]। संपदादित्वात्क्विप्। मधुर्वसन्तः। मथ्नातीति मथः। पचाद्यच्। मनसो मथो मन्मथः कामः। तेषां संनिभः सदृशो **मधुमन्मधुमन्मथसंनिभः स** नरपतिर्दशरथो **विलासवतीसखः** स्त्रीसहचरः सन्। ऋतुः प्राप्तोऽस्यार्तवः। तमुत्सवं वसन्तोत्सवं **यथासुखं समनुभूय मृगयारतिं** मृगयाविहारं **चकमे** आचकाङ्क्ष ॥ ४८ ॥

व्यसनासङ्गदोषं परिहरन्नाह—

**परिचयं चललक्ष्यनिपातने भयरुषोश्च तदिङ्गितबोधनम्।**
**श्रमजयात्प्रगुणां च करोत्यसौ तनुमतोऽनुमतः सचिवैर्ययौ ॥ ४९ ॥**

**परिचयमिति** ॥ **असौ** मृगया[2]। **चललक्ष्याणि** मृगगवयादीनि। तेषां **निपातने परिचयम**भ्यासं **करोति**। **भयरुषो**र्भयक्रोधयोस्तदिङ्गितबोधनं तेषां चललक्ष्याणामिङ्गितस्य चेष्टितस्य भयादिलिङ्गभूतस्य **बोधनं** ज्ञानं च **करोति**।

पाठा०—१ 'सा'.

टिप्प०—1 किंभूतो नरपतिः? मधुदैत्यं मथितवान् मधुमन्मथः मधुसूदनः; मधुश्चात्र तद्योगाद्वसन्तोऽपि मधुः मन्मथकामः तत्समानम्, 'मधु मद्यं मधु क्षौद्रं मधु पुष्परसस्तथा। मधुर्दैत्यो मधुश्चैत्रो मधूकोऽपि मधुर्द्रुः' इत्यनेकार्थमञ्जरी-इति वल्लभः॥ मधुश्च मन्मथश्च त एव संनिभातीति सः। विष्णुवसन्तस्मरसदृश इत्यर्थः। शौर्ये विष्णुना, सौरभे वसन्तेन, सौन्दर्ये अनङ्गेन सदृश इत्यर्थः-इति हेमाद्रिः।

2 असौ मृगया चलानां लक्ष्याणां मृगविहगादीनां निपातने वधे परिचयरूपं गुणं कुरुते। एतस्यां प्रवृत्तस्य नृपस्य परिचयो भवतीत्यर्थः। भयरुषोस्तेषां जन्तूनामिङ्गितस्याभिप्रायस्य बोधनं च करोति। भीतस्येत्थं चेष्टा, क्रुद्धस्येत्थमिति ज्ञानं भवतीत्यर्थः। श्रमजयात्प्रगुणां बलवृद्धिमुत्थानयोग्यां निरामयां वा तनुं शरीरं च करोति-इति दिनकर०।

तनुं शरीरं श्रमस्य जयान्निरासात्प्रगुणां प्रकृष्टलाघवादिगुणवतीं च करोति । अतो हेतोः सचिवैरनुमतोऽनुमोदितः सन् ययौ । सर्वं चैतद्युद्धोपयोगीलत्वदपेक्षया मृगयाप्रवृत्तिः । न तु व्यसनितयेति भावः ॥ ४९ ॥

मृगवनोपगमक्षमवेषभृद्विपुलकण्ठनिषक्तशरासनः ।
गगनमश्वखुरोद्धतरेणुभिर्नृसविता स वितानमिवाकरोत् ॥ ५० ॥

मृगेति ॥ मृगाणां वनं तस्योपगमः प्राप्तिः । तस्य क्षममर्हं वेषं बिभर्तीति स तथोक्तः । मृगयाविहारानुगुणवेषधारीत्यर्थः । विपुलकण्ठे निषक्तशरासनो लग्नधन्वा । ना सवितेव नृसविता पुरुषश्रेष्ठः । उपमितसमासः । स राजाऽश्वखुरोद्धतरेणुभिर्गगनं वितानं तुच्छमसदिवाकरोत् । गगनं नालक्ष्यतेत्यर्थः । 'वितानं तुच्छमन्दयोः' इति विश्वः । अथवा,—'सवितानम्' इत्येकं पदम् । सवितानमुल्लोचसहितमिवाकरोत् । 'अस्त्री वितानमुल्लोचः' इत्यमरः ॥ ५० ॥

ग्रथितमौलिरसौ वनमालया तरुपलाशसवर्णतनुच्छदः ।
तुरगवल्गनचञ्चलकुण्डलो विरुरुचे रुरुचेष्टितभूमिषु ॥ ५१ ॥

ग्रथितेति ॥ वनमालया वनपुष्पस्रजा ग्रथितमौलिर्बद्धधम्मिल्लः । तरूणां पलाशैः पत्रैः सवर्णः समानस्तनुच्छदो वर्म यस्य स तथोक्तः । इदं च वर्मणः पलाशसावर्ण्याभिधानं मृगादीनां विश्वासार्थम् । तुरगस्य वल्गनेन गतिविशेषेण चञ्चलकुण्डलोऽसौ दशरथो रुरुभिर्मृगविशेषैश्चेष्टिताश्चरिता या भूमयस्तासु विरुरुचे दिदिपे ॥ ५१ ॥

तनुलताविनिवेशितविग्रहा भ्रमरसंक्रमितेक्षणवृत्तयः ।
ददृशुरध्वनि तं वनदेवताः सुनयनं नयनन्दितकोसलम् ॥ ५२ ॥

तन्विति ॥ तनुषु लतासु विनिवेशितविग्रहाः संक्रमितदेहाः । भ्रमरेषु संक्रमिता ईक्षणवृत्तयो दृग्व्यापारा यासां ता वनदेवताः सुनयनं

पाठा०—१ 'गुरोद्गुव'.

टिप्प०—1 मृगवनं वनं मृगवनं मृगयाभूमिः तदुपयोगी यो वेषो लघुकृष्णकञ्चुकादिस्तं बिभर्तीति स तथा । गुरुवेषधारणे न भवति, शुक्लवस्त्रावलोकनेन मृगा दूरत एव पलायन्त इत्यतस्तथा वेषमधारयदिति भावः—इति दिनकर० ।

2 'वनमाला स्त्रियामन्या पत्रैः पुष्पैः फलैः' इति विष्णुरहस्ये—इति हेमाद्रिः ॥ पुष्पैः पत्रैश्च ग्रथिता माला वनमाला, 'आपदप्रपदीना माला वनमाला प्रकीर्तिता'—इति विश्व० ।

3 हरा इव वनदेवता अपि लतादेहैः हृत्वा रघुवंशे ददृशुरिति भावः—इति सुमति० ।

सुलोचनं **नयेन** नीत्या **नन्दितास्तोषिताः कोसला** येन **तं** दशरथम**ध्वनि** **ददृशुः** । प्रसन्नपावनतया तं देवता अपि गूढवृत्त्या ददृशुरित्यर्थः ॥ ५२ ॥

**[1]श्वगणिवागुरिकैः [2]प्रथमास्थितं व्यपगतानलदस्यु विवेश सः ।**
**स्थिरतुरंगमभूमि निपानवन्मृगवयोगवयोपचितं वनम् ॥ ५३ ॥**

**श्वगणीति** ॥ **स** दशरथः । शुनां गणः स एषामस्तीति **श्वगणिनः** श्वग्राहिणः । तैः । वागुरा मृगबन्धनरज्जुः । 'वागुरा मृगबन्धनी' इत्यमरः । तया चरन्तीति **वागुरिका** जालिकाः । 'चरति' (पा. ४।४।८) 'इति ठक्प्रत्ययः । 'द्वौ वागुरिकजालिकौ' इत्यमरः । तैश्च **प्रथमम् आस्थितम्** अधिष्ठितम् । **व्यपगता अनला** दावाग्नयो **दस्यवः** तस्कराश्च । यस्मात्तथोक्तम् । 'दस्युतस्करमोषकाः' इत्यमरः । 'कारयेद्वनविशोधनमादौ मातुरन्तिकमपि प्रविविक्षुः । आप्तशब्दयनुगतः प्रविशेद्वा संकटे च गहने च न तिष्ठेत् ॥' इति कामन्दकः । **स्थिरा** दृढा पङ्कादिरहिता **तुरंगमयोग्या भूमिर्यस्य** तत् । निपानवदाहावयुक्तम् । 'आहावस्तु निपानं स्यादुपकूपजलाशये' इत्यमरः । **मृगैर्** हरिणादिभि**र्वयोभिः** पक्षिभि**र्गवयैर्**गोसदृशैररण्यपशुविशेषैश्चो**पचितं** समृद्धं **वनं विवेश** प्रविष्टवान् ॥ ५३ ॥

**अथ नभस्य इव त्रिदशायुधं कनकपिङ्गतडिद्गुण[3]संयुतम् ।**
**धनुरधिज्यमनाधिरुपाददे नरवरो रवरोपितकेसरी ॥ ५४ ॥**

**अथेति** ॥ **अथानाधि**र्मनोव्यथारहितो **नरवरो** नरश्रेष्ठः । **रवेण** धनुष्टङ्कारेण **रोपिताः केसरिणः** सिंहा येन स राजा । **कनक**मिव **पिङ्गः** पिशङ्गो यस्त**डि**देव **गुणो** मौर्वी तेन **संयुतं त्रिदशायुधम्** इन्द्रचापं **नभस्यो** भाद्रपदमास **इव** । 'स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः' इत्यमरः । **अधिज्यम्** अधिगतमौर्वीकं **धनुरुपाददे** जग्राह ॥ ५४ ॥

**तस्य स्तनप्रणयिभिर्मुहुरेणशावैर्व्याहन्यमानहरिणीगमनं पुरस्तात् ।**
**आविर्बभूव कुशगर्भमुखं मृगाणां यूथं तदग्रसरगर्वितकृष्णसारम् ॥५५॥**

---

**पाठा०—१ 'श्वगुणि'; 'श्वगण'. २ 'प्रथमाश्रितम्'. ३ 'संगतम्'.**

---

टिप्प०—1 वल्लभस्तु 'श्वगणवागुरिकैः प्रथमाश्रित' इति पाठमादृत्य—श्वानां गणाः श्वगणाः वागुरिका व्याधास्तैः शुनकसघैश्च प्रथमप्राप्त—इत्याह ।

2 रवेण न सिंहनादेन रोपिताः सिंहा येन स तथा नरवरः नृपोऽधिज्यं प्रत्यचायुक्तं धनुर्जग्राह । यथा नभस्यो भाद्रमासः स्वर्णवत् पिंगला तडिदिव गुणो ज्या तेन संयुतं शक्रधनुर्गृह्णातीति—दिनकर० ।

तस्येति ॥ स्तनप्रणयिभिः स्तनपायिभिरेणशावैर्हरिणशिशुभिः । 'पृथुकः शावकः शिशुः' इत्यमरः । व्याहन्यमानं तद्वत्सलतया तद्गमनानुसारेण मुहुर्मुहुः प्रतिषिध्यमानं हरिणीनां गमनं गतिर्यस्य तत् । कुशा गर्भे येषां तानि मुखानि यस्य तत् कुशगर्भमुखम् । तस्य यूथस्याग्रेसरः पुरःसरो गर्वितो दृप्तश्च कृष्णसारो यस्य तत् । मृगाणां यूथं कुलम् । 'सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम्' इत्यमरः । तस्य दशरथस्य पुरस्तादग्र आविर्बभूव । वसन्ततिलका वृत्तम् ॥५५॥

तत्प्रार्थितं जवनवाजिगतेन राज्ञा
तूणीमुखोद्धृतशरेण विशीर्णपङ्क्ति ।
श्यामीचकार वनमाकुलदृष्टिपातै-
र्वातेरितोत्पलदलप्रकरैरिवार्द्रैः ॥ ५६ ॥

तदिति ॥ जवनो जवशीलः । 'जुचंक्रम्य'-( पा. ३।२।१५० ) इत्यादिना युच्प्रत्ययः । 'तरस्वी त्वरितो वेगी प्रजवी जवनो जवः' इत्यमरः । तं वाजिनमश्वं गतेनारूढेन । तूणीशुभिः । 'बह्वादिभ्यश्च' ( पा. ४।१।४५ ) इति विकल्पे ङीष् । तस्या मुखाद्विवरादुद्धृतशरेण राज्ञा प्रार्थितमभियाचितम् । 'याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः' इति केशवः । अत एव विशीर्णा पङ्क्तिः संघीभावो यस्य तत् । मृगयूथं कर्तृ आर्द्रैर्भयादश्रुक्लिन्नैराकुला भयचकिता ये दृष्टिपातास्तैः । वातेरितोत्पलदलप्रकरैः पवनकम्पितेन्दीवरदलवृन्दैरिव । वनं श्यामीचकार ॥ ५६ ॥

लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः
प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम् ।
आकर्णकृष्टमपि कामितया स धन्वी
बाणं कृपामृदुमनाः प्रतिसंजहार ॥ ५७ ॥

लक्ष्यीकृतेति ॥ हरिरिन्द्रो विष्णुर्वा तस्येव प्रभावः सामर्थ्यं यस्य स तथोक्तः । धन्वी धनुष्मान् स नृपः । लक्ष्यीकृतस्य वेद्धुमिष्टस्य हरिणस्य स्वप्रेयसो देहं

पाठा०-१ 'प्रभः'. २ 'कायम्'.

टिप्प०—1 यथाम्भः कर्तृ वातकम्पितानां नीलोत्पलानां पत्रसमूहैः किमपि श्यामं करोति तथेत्यर्थः-इति दिनकर० ।

2 स्नेहाधिक्यशरीरेणाच्छाद्य स्थितां सहचरीं मृगीं प्रेक्ष्य कर्णान्तमाकृष्टमपि बाणं संहृतवान् । यतः कामितया स्वाभिभावेन कोमलचित्तत्वात् इत्यर्थः-इति दिनकर० ।

व्यवधायानुरागादन्तर्धाय **स्थिताम्**। सह चरतीति सहचरी। पचादिषु चरटे-ष्टित्करणान्ङीप्। यथाह वामनः—'अनुचरीति चरेष्टित्वात्' इति। तां **सहचरीं हरिणीं प्रेक्ष्य** कामितया स्वयं कामुकत्वात्। **कृपामृदुमनाः** करुणार्द्रचित्तः सन्। **आकर्णकृष्टमपि**। दुष्प्रतिसंहरमपीत्यर्थः। **बाणं प्रतिसंजहार**। नैपुण्यादि-त्यर्थः। नैपुण्यं तु 'धन्वी' इत्यनेन गम्यते ॥ ५७ ॥

**तस्यापरेष्वपि मृगेषु शरान्मुमुक्षोः**
**कर्णान्तमेत्य बिभिदे निबिडोऽपि मुष्टिः।**
**त्रासातिमात्रचटुलैः स्मरतः सुनेत्रैः**[1]
**प्रौढप्रियानयनविभ्रमचेष्टितानि ॥ ५८ ॥**

**तस्येति** ॥ **त्रासाद्**भयाद**तिमात्रचटुलै**रत्यन्तचञ्चलैः **सुनेत्रैः प्रौढप्रिया-नयनविभ्रमचेष्टितानि** प्रगल्भकान्ताविलोचनविलासव्यापारान्बाहुल्यात्**स्मरतः**। **अपरेष्वपि मृगेषु शरान्मुमुक्षो**र्मोक्तुमिच्छोस्तस्य नृपस्य **निबिडो** दृढो**ऽपि मुष्टिः कर्णान्तमेत्य** प्राप्य **बिभिदे**। स्वयमेव भिद्यते स्म। भिदेः कर्मकर्तरि लिट्। कामिनस्तस्य प्रियाविभ्रमस्मृतिजनितकृपातिरेकान्मुष्टिभेदः। न त्वनैपुण्या-दिति तात्पर्यार्थः ॥ ५८ ॥

**उत्तस्थुषः सपदि पल्वलपङ्कमध्या-**[2]
**न्मुस्ताप्ररोहकवलावयवानुकीर्णम्।**[3]
**जग्राह स द्रुतवराहकुलस्य मार्गं**
**सुव्यक्तमार्द्रपदपङ्क्तिभिरायताभिः ॥ ॥ ५९ ॥**

**उत्तस्थुष इति** ॥ स नृपः **मुस्ताप्ररोहाणां** मुस्ताङ्कुराणां **कवला** ग्रासाः तेषाम**वयवैः** श्रमविवृतमुखभ्रंशिभिः शकलै**रनुकीर्णं** व्याप्तम्। **आयता-भिर्दीर्घाभिरार्द्रपदपङ्क्तिभिः सुव्यक्तम्**। **सपदि पल्वलपङ्कमध्यादुत्त-स्थुष** उत्थितस्य **द्रुतवराहकुलस्य** पलायितवराहयूथस्य **मार्गं जग्राह**ानुस-सार ॥ ५९ ॥

---

पाठा०–१ 'स्मारयत्सु नेत्रैः'. २ 'शिशिर'. ३ 'गुञ्जा'.

---

टिप्प०—1 शरपातभयादतिमात्र चञ्चलैर्मृगाणां नेत्रैः प्रौढाङ्गनानां नेत्रविलासिनीनां चेष्टितानि स्मरतः। धनुष्केण कर्णान्तकृष्टो मुष्टिः शिथिलीकर्तुमशक्यः; अन्यत्र तु नृपो मृगेषु स्त्रियानेत्रविलासव्यापारसादृश्यं पश्यन् मुष्टिं न चिक्षेपेत्यर्थ.–इति दिनकर०।

'तं वाहनादवनतोत्तरकायमीष-
द्विध्यन्तमुद्धृतसटाः प्रतिहन्तुमीषुः ।
नात्मानमस्य विविदुः सहसा वराहा
वृक्षेषु विद्धमिषुभिर्जघनाश्रयेषु ॥ ६० ॥

तमिति ॥ वराहाः । वाहनादश्वादीषद्वनतोत्तरकायं किंचिदानतपूर्वकायं विध्यन्तं प्रहरन्तं तं नृपम् । उद्धृतसटा ऊर्ध्वकेसराः सन्तः । 'सटा जटाकेसरयोः' इति केशवः । प्रतिहन्तुमीषुः प्रतिहर्तुमैच्छन् । अस्य नृपस्येषुभिः सहसा जघनानामाश्रयेष्ववष्टम्भेषु वृक्षेषु विद्धमात्मानं न विविदुः । एतेन वराहाणां मनस्वित्वं नृपस्य हस्तलाघवं चोक्तम् ॥ ६० ॥

तेनाभिघातरभसस्य विकृष्य पत्री
वन्यस्य नेत्रविवरे महिषस्य मुक्तः ।
निर्भिद्य विग्रहमशोणितलिप्तपुङ्ख-
स्तं पातयां प्रथममास पपात पश्चात् ॥ ६१ ॥

तेनेति ॥ अभिघाते रभस औत्सुक्यं यस्य तस्य । अभिहन्तुमुद्यतस्येत्यर्थः । वन्यस्य वने भवस्य महिषस्य नेत्रविवरे नेत्रमध्ये तेन नृपेण विकृष्याकृष्य मुक्तः पत्री शरो विग्रहं महिषदेहं निर्भिद्य विदार्य । शोणितलिप्तो न भवतीत्यशोणितलिप्तः पुङ्खो यस्य स तथोक्तः सन् । तं महिषं प्रथमं पातयामास । स्वयं पश्चात्पपात । 'कृञ्चानुप्रयुज्यते लिटि' (पा. ३।१।४०) इत्यत्रानुशब्दस्य व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थत्वात् 'पातयां प्रथममास' इत्यप्रयोग इति पाणिनीयाः । यथाह वार्तिककारः—'विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं च' इति ॥ ६१ ॥

प्रायो विषाणपरिमोक्षलघूत्तमाङ्गा-
न्खड्गांश्चकार नृपतिर्निशितैः क्षुरप्रैः ।
शृङ्गं स दृप्तविनयाधिकृतः परेषा-
मत्युच्छ्रितं न ममृषे न तु दीर्घमायुः ॥ ६२ ॥

---

पाठा०—१ 'से'. २ 'उद्धतमदाः'. ३ 'सरयः'. ४ 'परिमोष'. ५ 'मभ्युच्छ्रितम्'. ६ 'प'.

**प्राय** इति ॥ **नृपतिर्निशितैः क्षुरप्रैः** शरविशेषैः **खड्गान्** खड्गाख्यान्मृगान्। 'गण्डके खड्गखड्गिनौ' इत्यमरः। **प्रायो** बाहुल्येन. **विषाणपरिमोक्षेण** शृङ्गभङ्गेन **लघूनि गुरूण्युत्तमाङ्गानि** शिरांसि येषां तांश्चकार। न त्ववधीदित्यर्थः। कुतः? **दृप्तविनयाधिकृतो** दुष्टनिग्रहनियुक्तः **स** राजा **परेषां** प्रतिकूलानामत्युच्छ्रितमुन्नतं शृङ्गं विषाणं प्राधान्यं च। 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः। **न ममृषे** न सेहे। **दीर्घमायुर्जीवितकालम्**। 'आयुर्जीवितकालो ना' इत्यमरः। **न ममृषे** इति न। किंतु ममृष एवेत्यर्थः ॥ ६२ ॥

> व्याघ्रानभीरभिमुखोत्पतितान्गुहाभ्यः
> फुल्लासनाग्रविटपानिव वायुरुग्णान्।
> शिक्षाविशेषलघुहस्ततया निमेषा-
> त्तूणीचकार शरपूरितवक्त्ररन्ध्रान् ॥ ६३ ॥

**व्याघ्रानिति** ॥ **अभीर्**निर्भीकः स धन्वी **गुहाभ्योऽभिमुखमुत्पतितान्। वायुना रुग्णान्**भग्नान्। **फुल्ला** विकसिताः। 'अनुपसर्गात्फुल्लक्षीवकृशोल्लाघाः' (पा. ३।२।५५) इति निष्ठातकारस्य लत्वनिपातः। **येऽसनस्य** सर्जवृक्षस्य। 'सर्ज-कासनबन्धूकपुष्पप्रियकजीवकाः' इत्यमरः। **अग्रविटपास्तानिव** स्थितान्। इषुधिभूतानित्यर्थः। व्याघ्राणां चित्ररूपत्वादुपमाने 'फुल्ल'विशेषणम्। **शरैः पूरितानि वक्त्ररन्ध्राणि येषां** तान्व्याघ्रान्। **शिक्षाविशेषेणा**भ्यासातिशयेन **लघुहस्ततया** क्षिप्रहस्ततया **निमेषात्तूणीचकार**। तूणं शरैः पूरितवानित्यर्थः ॥६३॥

> निर्घातोग्रैः कुञ्जलीनाञ्जिघांसुर्ज्यानिर्घोषैः क्षोभयामास सिंहान्।
> नूनं तेषामभ्यसूयापरोऽभूद्वीर्योदग्रे राजशब्दो मृगेषु ॥ ६४ ॥

**निर्घातेति** ॥ **कुञ्जेषु लीनान्**। 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः। **सिंहाञ्जिघांसुर्**हन्तुमिच्छुः। **निर्घातो** व्योमोत्थित औत्पातिकः शब्दविशेषः। तद्वदुग्रै रौद्रैर्**ज्यानिर्घोषैर्**मौर्वीशब्दैः **क्षोभयामास**। अत्रोत्प्रेक्षते—**तेषां** सिंहानां सबन्धिनि **वीर्येणोदग्र** उन्नते मृगेषु विषये यो **राजशब्द**स्तस्मिन्न**भ्यसूयापरोऽभून्नूनम्**। अन्यथा कथमेतानन्विष्य हन्यादित्यर्थः। **'मृगाणाम्'** इति पाठे समासे गुणभूतत्वात् 'राज'शब्देन संबन्धो दुर्घटः। शालिनीवृत्तम्—'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणात् ॥ ६४ ॥

पाठा०-१ 'भग्नान्'.

तान्हत्वा गजकुलबद्धतीव्रवैरान्काकुत्स्थः कुटिलनखाग्रलग्नमुक्तान् ।
आत्मानं रणकृतकर्मणां गजानामानृण्यं गतमिव मार्गणैरमंस्त ॥६५॥

तानिति ॥ काकुत्स्थो दशरथः । गजकुलेषु बद्धं तीव्रं वैरं यैस्तान् । कुटिलेषु नखाग्रेषु लग्ना मुक्ता गजकुम्भमौक्तिकानि येषां तान्सिंहान्हत्वा आत्मानं रणेषु कृतकर्मणां कृतोपकाराणां गजानामानृण्यमऋणत्वं मार्गणैः शरैः । 'मार्गणो याचके शरे' इति विश्वः । गतं प्राप्तवन्तमिवामंस्त मेने ॥ ६५ ॥

चमरान्परितः प्रवर्तिताश्वः क्वचिदाकर्णविकृष्टभल्लवर्षी ।
नृपतीनिव तान्वियोज्य सद्यः सितवालव्यजनैर्जगाम शान्तिम् ॥६६॥

चमरानिति ॥ क्वचिच्चमरान्परितः । 'अभितःपरितः समया–' (वा. १४४२) इत्यादिना द्वितीया । प्रवर्तिताश्वः प्रधाविताश्वः । आकर्णविकृष्टभल्लानिषुविशेषान्वर्षतीति तथोक्तः स नृपः । नृपतीनिव तांश्चमरान्सितवालव्यजनैः शुभ्रचामरैर्वियोज्य विरहय्य सद्यः शान्तिं जगाम । शूराणां परकीयमैश्वर्यमेवासह्यम्, न तु जीवितमिति भावः । औपच्छन्दसिकं वृत्तम् ॥ ६६ ॥

अपि तुरगसमीपादुत्पतन्तं मयूरं
　　न स रुचिरकलापं बाणलक्ष्यीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
　　रतिविगलितबन्धे केशपाशे प्रियायाः ॥ ६७ ॥

अपीति ॥ स नृपस्तुरगसमीपादुत्पतन्तमपि । सुप्रहारमपीत्यर्थः । रुचिरकलापं भासुरबर्हम् । मह्यामतिशयेन रौतीति मयूरो बर्ही । पृषोदरादित्वात्साधुः । तं चित्रेण माल्येनानुकीर्णे रतौ विगलितबन्धे प्रियायाः केशपाशे सपदि गतमनस्कः प्रवृत्तचित्तः । 'उरःप्रभृतिभ्यः कप्' (पा. ५।४।१५१) इति कप्प्रत्ययः । न बाणलक्ष्यीचकार । न प्रजहारेत्यर्थः ॥ ६७ ॥

तस्य कर्कशविहारसंभवं स्वेदमाननविलग्नजालकम् ।
आचचाम सतुषारशीकरो भिन्नपल्लवपुटो वनानिलः ॥ ६८ ॥

---

पाठा०–१ 'निर्वर्तिताश्वः'. २ 'निकृष्टभल्ल'; 'नियतभल्ल'. ३ 'नृपतीनिव शात्रिनाथ शान्तिं सितवालव्यजनैर्वियोज्य सद्यः'. ४ 'सतुषारशीतलः'; 'सुतुषारशीकरः'.

**वसेति** ॥ कर्कशविहारादतिव्यायामात्संभवो यस्य तम् । आनने विलग्नजालकं बद्धकदम्बकं तस्य नृपस्य खेदम् । सतुषारशीकरः शिशिराम्बुकणसहितः । भिन्ना निर्दलिताः पल्लवानां पुटाः कोशा येन सः । वनानिल आचचाम । जहारेत्यर्थः । रथोद्धतावृत्तमेतत् ॥ ६८ ॥

**इति विस्मृतान्यकरणीयमात्मनः सचिवावलम्बिधुरं धराधिपम् ।**
**परिवृद्धरागमनुबन्धसेवया मृगया जहार चतुरेव कामिनी ॥ ६९ ॥**

**इतीति** ॥ इति पूर्वोक्तप्रकारेण । आत्मनो विस्मृतमन्यत्करणीयं कार्यं येन तम् । विस्मृतात्मकार्यान्तरमित्यर्थः । सचिवैरवलम्बिता धृता धूर्यस्य तम् । 'ऋक्पूरब्धूःपथामानक्षे' ( पा. ५।४।७४ ) इति समासान्तोऽच्प्रत्ययः । अनुबन्धसेवया संततसेवया परिवृद्धो रागो यस्य तं धराधिपम् । मृग्यन्ते यस्यां मृगा इति मृगया । 'परिचर्यापरिसर्यामृगयाटाट्यादीनामुपसंख्यानम्' ( वा. २२१५ ) इति शप्रत्ययान्तो निपातः । चतुरा विदग्धा कामिनीव । जहाराचकर्ष । 'न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥' इति भावः ॥ ६९ ॥

**स ललितकुसुमप्रवालशय्यां ज्वलितमहौषधिदीपिकासनाथाम् ।**
**नरपतिरतिवाहयांबभूव क्वचिदसमेतपरिच्छदस्त्रियामाम् ॥ ७० ॥**

**स इति** ॥ स नरपतिः ललितानि कुसुमानि प्रवालानि पल्लवानि शय्या यस्यां ताम् । ज्वलिताभिर्महौषधिभिरेव दीपिकाभिः सनाथाम् । तत्प्रधानामित्यर्थः । त्रियामां रात्रिं क्वचिदसमेतपरिच्छदः । परिहृतपरिजनः सन्नित्यर्थः । अतिवाहयांबभूव गमयामास । पुष्पिताग्रावृत्तम् ॥ ७० ॥

**उपसि स गजयूथकर्णतालैः पटुपटहध्वनिभिर्विनीतनिद्रः ।**
**अरमत मधुराणि तत्र शृण्वन्विहगविकूजितबन्दिमङ्गलानि ॥ ७१ ॥**

**उपसीति** ॥ उपसि प्रातः पटूनां पटहानामिव ध्वनिर्येषां तैर्गजयूथानां कर्णैरेव तालैर्वाद्यप्रभेदैर्विनीतनिद्रः स उपस्तत्र वने मधुराणि विहगानां विहंगानां विकूजितान्येव बन्दिनां मङ्गलानि मङ्गलगीतानि शृण्वन्नरमत ॥ ७१ ॥

**अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैरलक्ष्यमाणः ।**
**श्रमफेनमुचा तपस्विगाढां तमसां प्राप नदीं तुरंगमेण ॥ ७२ ॥**

पाठा०—१ 'सचिवावलम्बितधुरम्'. २ 'नराधिपम्'. ३ 'सुललित'. ४ 'मधुरस्वराणि'.

अथेति ॥ अथ जातु कदाचिद्रुरोर्मृगस्य गृहीतवर्त्मा स्वीकृतरुरुमार्गो विपिने वने पार्श्वचरैरलक्ष्यमाणः । तुरगवेगादित्यर्थः । श्रमेण फेनमुचा । सफेनं स्विद्यतेत्यर्थः । तुरंगमेण तपस्विभिर्गाढामवगाढां सेवितां तमसां नाम नदीं सरितं प्राप ॥ ७२ ॥

कुम्भपूरणभवः पटुरुच्चैरुच्चचार निनदोऽम्भसि तस्याः ।
तत्र स द्विरदबृंहितशङ्की शब्दपातिनमिषुं विससर्ज ॥ ७३ ॥

कुम्भेति ॥ तस्यास्तमसाया अम्भसि कुम्भपूरणेन भव उत्पन्नः । पचाद्यच् । पटुर्मधुरः । उच्चैर्गम्भीरो निनदो ध्वनिरुच्चचारोदियाय । तत्र निनदे स नृपः । द्विरदबृंहितं शङ्कत इति द्विरदबृंहितशङ्की सन्, शब्देन शब्दानुसारेण पततीति शब्दपातिनमिषुं विससर्ज । स्वागतावृत्तम् ॥ ७३ ॥

नृपतेः प्रतिषिद्धमेव तत्कृतवान्पङ्क्तिरथो विलङ्घ्य यत्[1] ।
अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ७४ ॥

नृपतेरिति ॥ तत्कर्म नृपतेः क्षत्रियस्य प्रतिषिद्धमेव निषिद्धमेव यद्वेतत्कर्म गजवधरूपं पङ्क्तिरथो[I] दशरथो विलङ्घ्य 'लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात्' इति शास्त्रमुल्लङ्घ्य कृतवान् । ननु विदुषस्तस्य कथमीदृग्विचेष्टितमत आह—अपथ इति । श्रुतवन्तोऽपि विद्वांसोऽपि रजोनिमीलिता रजोगुणावृताः सन्तः । न पन्था इत्यपथम् । 'पथो विभाषा' (पा. ५।४।७२) इति वा समासान्तः । 'अपथं नपुंसकम्' (पा. २।४।३०) इति नपुंसकम् । 'अपन्थास्त्वपथं तुल्ये' इत्यमरः । तस्मिन्नपथेऽमार्गे पदमर्पयन्ति हि निक्षिपन्ति हि । प्रवर्तन्त इत्यर्थः । वैतालीयं वृत्तम् ॥ ७४ ॥

हा तातेति क्रन्दितमाकर्ण्य विषण्ण-
　　स्तस्यान्विष्यन्वेतसगूढं प्रभवं सः[3] ।
शल्यप्रोतं प्रेक्ष्य[4] सकुम्भं मुनिपुत्रं
　　तापादन्तःशल्य इवासीत्क्षितिपोऽपि ॥ ७५ ॥

हा तातेति ॥ हेत्यार्तौ । तातो जनकः । 'हा विषादशुगर्तिषु' इति, 'तातस्तु जनकः पिता' इति चामरः । हा तातेति क्रन्दितं क्रोशनमाकर्ण्य । विषण्णो

पाठा०—१ 'यद्'. २ 'तत्'. ३ 'वेतसगूढप्रभवम्'. ४ 'वीक्ष्य'.

टिप्प०—I 'पङ्क्तिविंशति-'(पा. ५।१।५९) इत्यादिना पङ्क्तिशब्दो दशसंख्यायां निपातितः. वैतालिकं वृत्तम्—इति दिनकर० ।

भक्तोत्साहः सन्। **तस्य** क्रन्दितस्य **वेतसैर्गूढं** छन्नम्। प्रभवत्यस्मादिति **प्रभवः** कारणम्। **तमन्विष्यञ्छल्येन** शरेण प्रोतं **स्यूतम्**। 'शल्यं शङ्कौ शरे वंशे' इति विश्वः। **सकुम्भं मुनिपुत्रं प्रेक्ष्य स क्षितिपोऽपि** तापाद्दुःखादन्तःशल्यं यस्य सोऽन्तःशल्य **इवासीत्**। मत्तमयूरं वृत्तम् ॥ ७५ ॥

**तेनावतीर्य तुरगात्प्रथितान्वयेन**
**पृष्टान्वयः स जलकुम्भनिषण्णदेहः।**
**तस्मै द्विजेतरतपस्विसुतं स्खलद्भि-**
**रात्मानमक्षरपदैः कथयांबभूव ॥ ७६ ॥**

**तेनेति** ॥ **प्रथितान्वयेन** प्रख्यातवंशेन। एतेन पापभीरुत्वं सूचितम्। **तेन** राज्ञा **तुरगादवतीर्य पृष्टान्वयो** ब्रह्महत्याशङ्कया पृष्टकुलः। **जलकुम्भनिषण्णदेहः स** मुनिपुत्रस्तस्मै राज्ञे **स्खलद्भिः**। अशक्तिवशादर्धोच्चारितैरित्यर्थः। अक्षरप्रायैः पदैरक्षरपदै**रात्मानं** द्विजेतरश्चासौ तपस्विसुतश्च तं **द्विजेतरतपस्विसुतं कथयांबभूव**। न तावत्त्रैवर्णिक एवाहमस्मि, किंतु करणः। 'वैश्यात्तु करणः शूद्रायां' (आचार. ४।९२) इति याज्ञवल्क्यः। कुतो ब्रह्महत्येत्यर्थः। तथा च रामायणे—(अयोध्या. ६३।५०) 'ब्रह्महत्याकृतं पापं हृदयादपनीयताम्। न द्विजातिरहं राजन्। मा भूत्ते मनसो व्यथा ॥ शूद्रायामस्मि वैश्येन जातो जनपदाधिप!।' इति ॥ ७६ ॥

**तच्चोदितः[2] स[3] तमनुद्धृतशल्यमेव पित्रोः सकाशमवसन्नदृशोर्निनाय।**
**ताभ्यां तथागतमुपेत्य तमेकपुत्रमज्ञानतः स्वचरितं नृपतिः शशंस ७७**

**तदिति** ॥ **तच्चोदित**स्तेन पुत्रेण चोदितः 'पितृसमीपं प्रापय' इत्युक्तः **स नृप**तिर**नुद्धृतशल्य**मनुत्पाटितशर**मेव तं** मुनिपुत्रम्। **अवसन्नदृशो**र्नष्टचक्षुषोः। अन्धयोरित्यर्थः। **पित्रो**र्मातापित्रोः। 'पिता मात्रा' (पा. १।२।७०) इत्येकशेषः। **सकाशं** समीपं **निनाय**। इदं च रामायणविरुद्धम्। तत्र—'अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ। अस्पर्शयमहं पुत्रं तं मुनिं सह भार्यया ॥' (अयोध्या. ६४।२८) इति नदीतीर एव मृतं पुत्रं प्रति पित्रोरानयनाभिधानात्। **तथागतं** वेतसगूढम्। एकश्चासौ पुत्रश्च **तमेकपुत्रम्**। 'एक'ग्रहणं पित्रोरनन्यगतिकत्वसूचनार्थम्। तं

**पाठा०**—१ 'तपस्विसुवः'. २ 'नोदितः'. ३ '°तश्च'.

**टिप्प०**—1 हा तात! हा तात! हा पितः! इत्येवरूपं क्रन्दितं रुदितं श्रुत्वा विषण्णो विलक्षः स नृपो वेतसैर्वृक्षविशेषैर्गूढं गोपितं तस्य क्रन्दितस्य प्रभवमुत्पत्तिस्थानमन्विष्यन् 'कोऽयं रोदिति?' इति जिज्ञासुः सन् शल्यप्रोतं स्यूतं कुम्भसहितं मुनिपुत्रं वीक्ष्य नृपोऽपि अन्तर्मध्ये शल्यमिवासीत्—इति दिनकर०।

मुनिपुत्रमुपेत्य संनिकृष्टं गत्वाऽज्ञानतः करिभ्रान्त्या स्वचरितं स्वकृतं ताभ्यां मातापितृभ्याम्। क्रियाग्रहणाच्चतुर्थी। शशंस कथितवान्॥ ७७॥

तौ दंपती बहु विलप्य शिशोः प्रहर्त्रा
शल्यं निखातमुदहारयतामुरस्तः।
सोऽभूत्परासुरथ भूमिपतिं शशाप
हस्तार्पितैर्नयनवारिभिरेव वृद्धः॥ ७८॥

ताविति॥ तौ जाया च पतिश्च दंपती। राजदन्तादिषु 'जाया'शब्दस्य दम्भावो जम्भावश्च विकल्पेन निपातितः। 'दंपती जंपती जायापती भार्यापती च तौ' इत्यमरः। बहु विलप्य भूयिष्ठं परिदेव्य। 'विलापः परिदेवनम्' इत्यमरः। शिशोरुरस्तो वक्षसः। 'पञ्चम्यास्तसिल्' (पा. ५।३।७)। निखातं शल्यं शरं प्रहर्त्रा राज्ञोदहारयतामुद्धारयामासतुः। स शिशुः परासुर्गतप्राणोऽभूत्। अथ वृद्धो हस्तार्पितैर्नयनवारिभिरेव शापदानस्य जलपूर्वकत्वात्तैरेव भूमिपतिं शशाप॥७८॥

दिष्टान्तमाप्स्यति भवानपि पुत्रशोका-
दन्त्ये वयस्यहमिवेति तमुक्तवन्तम्।
आक्रान्तपूर्वमिव मुक्तविषं भुजंगं
प्रोवाच कोसलपतिः प्रथमापराद्धः॥ ७९॥

दिष्टान्तमिति॥ हे राजन्। भवानप्यन्त्ये वयस्यहमिव पुत्रशोकाद्दिष्टान्तं कालवसानम्। मरणमित्यर्थः। 'दिष्टः काले च दैवे स्याद्दिष्टम्' इति विश्वः। आप्स्यति प्राप्स्यति। इत्युक्तवन्तम्। आक्रान्तः पादाहतः पूर्वमाक्रान्तपूर्वः। सुप्सुपेति समासः। तम्। प्रथमापकृतमित्यर्थः। मुक्तविषमपकारात्पश्चादुत्सृष्टविषं भुजंगमिव स्थितं तं वृद्धं प्रति प्रथमापराद्धः प्रथमापराधी। कर्तरि क्तः। इदं च सहने कारणमुक्तम्। शापदानात्पश्चादपराधी कोसलपतिर्दशरथः प्रोवाच॥ ७९॥

पाठा०-१ 'दिष्ट्या'. २ 'अन्ते'. ३ 'प्रथमापराधः'.

टिप्प०—1 अथ वृद्धस्तापसः करपतितैरश्रुभिरेव नृपमशपत्। जलेनैव हि शापो दीयते, तमेवाह-दिष्टान्तमिति-इति दिनकर०।

2 कृतापकारो नृपः पूर्वमाक्रान्तं पूर्वं चरणताडितं पश्चान्मुक्तं उद्गीर्णं विषं येन तत्तादृशं सर्पमिवाभ्यधात्। न दृष्टा पुत्रवक्त्रशोभा येन तथाभूते मय्ययं शापोऽपि त्वया सानुग्रहो वररूपः पातितः; पुत्रोत्पत्तिसूचकत्वात्। शापस्य कथं वररूपत्वेत्याह-काष्ठैरिद्धो दीप्तोऽग्निः कर्षणीयां क्षितिं दहन्नपि बीजांकुरोत्पादिनीं करोति-इति दिनकर०।

शापोऽप्यदृष्टतनयाननपद्मशोभे
सानुग्रहो भगवता मयि पातितोऽयम्।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो
बीजप्ररोहजननीं ज्वलनः करोति ॥ ८० ॥

**शाप इति** ॥ अदृष्टा तनयाननपद्मशोभा येन तस्मिन्नपुत्रके **मयि भगवता पातितः** वज्रप्रायत्वात् 'पातित' इत्युक्तम्। अयं 'पुत्रशोकान्म्रियस्व' इत्येवंरूपः **शापोऽपि सानुग्रहः** दग्धकुमारीवरन्यायेनेष्टावाप्तेरन्तरीयकत्वात्सोपकार एव। निग्राहकस्याप्यनुग्राहकत्वमर्थान्तरन्यासेनाह—कृष्यामिति। **इन्धनैः** काष्ठै**रिद्धः** प्रज्वलितो **ज्वलनो**ऽग्निः **कृष्यां** कर्षणार्हाम्। 'ऋदुपधाच्चाक्लृपि चृतेः' (पा.३।१।११०) इति क्यप्। **क्षितिं दहन्नपि बीजप्ररोहा**णां बीजाङ्कुराणां **जननी**मुत्पादनक्षमां **करोति** ॥ ८० ॥

**इत्थं गते गतघृणः किमयं विधत्तां वध्यस्तवेत्यभिहितो वसुधाधिपेन।
एधान्हुताशनवतः स मुनिर्ययाचे पुत्रं परासुमनुगन्तुमनाः सदारः ८१**

**इत्थमिति** ॥ **इत्थं गते** प्रवृत्ते सति। **वसुधाधिपेन** राज्ञा। **गतघृणो** निष्करुणः, हन्तृत्वान्निष्कृप इत्यर्थः। अत एव **तव वध्यो** वधार्होऽयं जनः। 'अयम्' इति राज्ञो निर्वेदादनादरेण स्वात्मनिर्देशः। **किं विधत्तामित्यभिहित** उक्तः, 'मया किं विधेयम्?' इति विज्ञापित इत्यर्थः। **स मुनिः सदारः** सभार्यः **परासुं** गतासुं **पुत्रमनुगन्तुं** मनो यस्य सो**ऽनुगन्तुमनाः** सन्। 'तु काममनसोरपि' इति मकारलोपः। **हुताशनवतः** साग्नी**नेधान्** काष्ठानि **ययाचे**। न चानात्मघातदोषः—'अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्यतः। भृग्वग्निजलसंपातैर्मरणं प्रविधीयते ॥' इत्युक्तेः ॥ ८१ ॥

प्राप्तानुगः सपदि शासनमस्य राजा
संपाद्य पातकविलुप्तधृतिर्निवृत्तः।
अन्तर्निविष्टपदमात्मविनाशहेतुं
शापं दधज्ज्वलनमौर्वमिवाम्बुराशिः ॥ ८२ ॥

इति श्रीरघुवंशे महाकाव्ये कविकालिदासकृतौ मृगयावर्णनो नाम नवमः सर्गः।

---

पाठा०—१ 'अथ'. २ 'हि भवता'. ३ 'कक्षाम्'. ४ 'दहन.'. ५ 'अभिहिते'.

**प्राप्तेति** ॥ प्राप्तानुगः प्राप्तानुचरो राजा **सपद्यस्य** मुनेः **शासनं** वाङ्संभारणरूपं प्रागेकोऽपि संप्रति प्राप्तानुचरत्वात्संपाद्य **पातकेन** मुनिवधरूपेण **विलुप्तधृतिर्नष्टोत्साहः सन्** । **अन्तर्निविष्टपदम**न्तर्लब्धस्थानमात्मविनाशहेतुं **शापम्**। **अम्बुराशिरौर्वं ज्वलनं** वडवानल**मिव**। 'और्वस्तु वाडवो वडवानलः' इत्यमरः । **दधद्धृतवान्सन् । निवृत्तः** । वनादिति शेषः ॥ ८२ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां संजीविनीसमाख्यायां रघुवंशटीकायां नवमः सर्गः ।

---

## दशमः सर्गः ।

आशंसे नित्यमानन्दं रामनामकथामृतम् ।
सद्भिः स्वश्रवणैर्नित्यं पेयं पापं प्रणोदितुम् ॥

**पृथिवीं शासतस्तस्य पाकशासनतेजसः ।**
**किंचिदूनमनूनर्द्धेः शरदामयुतं ययौ ॥ १ ॥**

**पृथिवीमिति** ॥ **पृथिवीं शासतः** पालयतः **पाकशासनतेजस** इन्द्रवर्चसः । **अनूनर्द्धेः**महासमृद्धेस्**तस्य** दशरथस्य **किंचिदून**मीषन्न्यूनं **शरदां** वत्सराणाम् । 'स्याद्दतौ वत्सरे शरत्' इत्यमरः । **अयुतं** दशसहस्रं **ययौ** । 'एकदशशतसहस्राण्ययुतं लक्षं तथा प्रयुतम् । कोट्यर्बुदं च पद्मं स्थानात्स्थानं दशगुणं स्यात् ॥' इत्यार्यभट्टः । इदं च मुनिशापात्परं वेदितव्यं, न तु जननात् । 'षष्टिर्वर्षसहस्राणि जातस्य मम कौशिक ! । दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि ॥' (बाल. २०।१०) इतिरामायणविरोधात् । नाप्यभिषेकात्परम्, तस्यापि 'सम्यग्विनीतमथ वर्महरं कुमारमादिश्य रक्षणविधौ विधिवत्प्रजानाम्' (८।९४) इति कौमारानुष्ठितत्वाभिधानात्स एव विरोध इति ॥ १ ॥

**न चोपलेभे पूर्वेषामृणनिर्मोक्षसाधनम् ।**
**सुताभिधानं स ज्योतिः सद्यः शोकतमोपहम् ॥ २ ॥**

**न चेति** ॥ **स** दशरथः **पूर्वेषां** पितॄणा**मृणनिर्मोक्षसाधनम्** । 'एष वा अनृणो यः पुत्री' इति श्रुतेः । पितॄणामृणनिर्मुक्तिकारणम् । **सद्यः** शोक एव तमस्तदपहन्तीति **शोकतमोपहम्** । अत्र 'अभयंकर' इतिवदुपपदेऽपि तदन्तविधिमाश्रित्य 'अपे क्लेशतमसोः' (पा. ३।२।५०) इति डप्रत्ययः । **सुताभिधानं** सुताख्यं **ज्योतिर्नोपलेभे** न प्राप **च** ॥ २ ॥

---

पाठा०-१ 'सज्ज्योतिः'.

अतिष्ठत्प्रत्ययापेक्षसंततिः स चिरं नृपः ।
प्राङ्मन्थादनभिव्यक्तरत्नोत्पत्तिरिवार्णवः ॥ ३ ॥

**अतिष्ठदिति** ॥ प्रत्ययं हेतुमपेक्षत इति **प्रत्ययापेक्षा** संततिर्यस्य स तथोक्तः । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । **स नृपः** । **मन्थात्प्राङ्**मन्थनात्पूर्व**मनभिव्यक्ताऽद्यापि रत्नोत्पत्तिर्यस्य सोऽर्णव इव** । **चिरमतिष्ठत्** । सामग्र्यभावाद्विलम्बो न तु वन्ध्यत्वादिति भावः ॥ ३ ॥

ऋष्यशृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः ।
आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः ॥ ४ ॥

**ऋष्यशृङ्गेति** ॥ **ऋष्यशृङ्गादयः** । ऋष्यशृङ्गो नाम कश्चिदृषिः । तदादयः । ऋतुमृतौ वा यजन्तीत्यृत्विजो याज्ञिकाः । 'ऋत्विग्दधृक्–' ( पा. ३।२।५९ ) इत्यादिना किवन्तो निपातः । **जितात्मानो** जितान्तःकरणाः **सन्तः संतानकाङ्क्षिणः** पुत्रार्थिनस्त**स्य** दशरथस्य **पुत्रीयां** पुत्रनिमित्ताम् । 'पुत्राच्छ च' ( पा. ५।१।४० ) इति छप्रत्ययः । **इष्टिं** यागमा**रेभिरे** प्रचक्रमिरे ॥ ४ ॥

तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम् ।
अभिजग्मुर्निदाघार्ताश्छायावृक्षमिवाध्वगाः ॥ ५ ॥

**तस्मिन्निति** ॥ **तस्मिन्नवसरे** पुत्रकामेष्टिप्रवृत्तिसमये **देवाः** । पुलस्त्यस्य गोत्रापत्यं पुमान् **पौलस्त्यो** रावणः । तेनोप**प्लुताः** पीडिताः सन्तः **निदाघार्ता** घर्मातुराः । अध्वानं गच्छन्तीत्य**ध्वगाः** पान्थाः । 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः' ( पा. ३।२।४८ ) इति डप्रत्ययः । छायाप्रधानं वृक्षं **छायावृक्षमिव** । शाकपार्थिवादित्वात्समासः । **हरिं** विष्णुमभिजग्मुः ॥ ५ ॥

ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः ।
अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥ ६ ॥

**त इति** ॥ **ते** देवाश्चो**दन्वन्तं** समुद्रम् । 'उदन्वानुदधौ च' ( पा. ८।२।१३ ) इति निपातः । **प्रापुः** । **आदिपूरुषो** विष्णुश्च **बुबुधे** । योगनिद्रां जहावित्यर्थः । गमनप्रतिबोधयोरविलम्बार्थौ चकारौ । तथा हि—**अव्याक्षेपो** गम्यस्याव्यासङ्गः ।

---

टिप्प०–1 यथाऽर्णवः समुद्रो मंथात्प्राक् पूर्वमनभिव्यक्तरत्नोत्पत्तिरतिष्ठत रत्नोत्पत्तौ मथ एव प्रत्ययः, अथ ऋष्यशृङ्गादिभिर्विहितायाः पुत्रेष्टेः प्रत्ययमवेक्षमाणा संततिर्यस्य–इति वल्लभः।

2 यथा निदाघार्ता घर्मखिन्ना अध्वगाः पान्थाश्छायावृक्षमभिगच्छन्ति–इति वल्लभः ।

3 द्वौ चकारौ तुल्यकालापेक्षां गमयतः । यावता समुद्रं प्राप्ताः आदिपूरुषश्च भगवान् प्रावृडपगमाद् बुबुधे तावता तावता भगवान् प्रबुद्धः–इति वल्लभः ।

अविलम्ब इति यावत्। भविष्यन्त्याः कार्यसिद्धेर्लक्षणं लिङ्गं हि॥ उक्तं च-'अनन्यपरता चास्य कार्यसिद्धेस्तु लक्षणम्' इति॥ ६॥

**भोगिभोगासनासीनं ददृशुस्तं दिवौकसः।**
**तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहम्॥ ७॥**

भोगीति॥ द्यौरोको येषां ते **दिवौकसो** देवाः। पृषोदरादित्वात्साधुः। यद्वा,-'दिव'शब्दोऽदन्तोऽप्यस्ति। तथा च बुद्धचरिते-'न शोभते तेन हि नो विना पुरं मरुत्वता वृत्रवधे यथा दिवम्' इति। तत्र 'दिवु क्रीडादौ' इति धातोः 'इगुपध-' (पा. ३।१।१३५) इति कः। दिवमोक एषामिति विग्रहः। **भोगिनः** शेषस्य **भोगः** शरीरम्। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः।' इत्यमरः। स एवासनं सिंहासनम्। तत्रासीनमुपविष्टम्। आसेः शानच्। 'ईदासः' (पा. ७।२।८३) इतीकारादेशः। तस्य भोगिनः फणामण्डले य उदर्चिष उद्गमयो मणयस्तैर्द्योतितविग्रहं तं विष्णुं ददृशुः॥ ७॥

**श्रियः पद्मनिषण्णायाः क्षौमान्तरितमेखले।**
**अङ्के निक्षिप्तचरणमास्तीर्णकरपल्लवे॥ ८॥**

श्रिय इति॥ कीदृशं विष्णुम्? पद्मे **निषण्णाया** उपविष्टायाः **श्रियः** **क्षौमान्तरिता** दुकूलव्यवहिता **मेखला** यस्य तस्मिन्। **आस्तीर्णौ करपल्लवौ** पाणिपल्लवौ यस्मिन्। विशेषणद्वयेनापि चरणयोः सौकुमार्यात्कटिमेखलास्पर्शासहत्वं सूच्यते। तस्मिन्नङ्के **निक्षिप्तौ चरणौ** येन तम्॥ ८॥

**प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम्।**
**दिवसं शारदमिव प्रारम्भसुखदर्शनम्॥ ९॥**

प्रबुद्धेति॥ पुनः कीदृशम्? **प्रबुद्धे** विकसिते **पुण्डरीके** इवाक्षिणी यस्य तम्। दिवसे तु पुण्डरीकमेवाक्षि यस्येति विग्रहः। **बालातपनिभमंशुकं** यस्य तम्। पीताम्बरधरमित्यर्थः। अन्यत्र,-बालातपस्याप्यंशुकमित्यर्थः। 'निभो व्याजसदृक्षयोः' इति विश्वः। प्रकृष्ट आरम्भो योगो येषां ते **प्रारम्भा** प्रकृष्टयोगा योगिनः। तेषां **सुखदर्शनम्**। अन्यत्र,-प्रारम्भ आदौ सुखदर्शनं **शारदं** शरत्संबन्धिनं दिवसमिव स्थितम्॥ ९॥

**प्रभानुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणम्।**
**कौस्तुभाख्यमपां सारं बिभ्राणं बृहतोरसा॥ १०॥**

पाठा०-१ 'ते'. २ 'प्रफुल्ल'. ३ 'विभ्रान्तम्'; 'विभ्रतम्'.

टिप्प०-१ शारददिवसोऽपि तथाभावात्प्रारम्भसुखदर्शनो भवति-इति वल्लभः।

**प्रभेति** ॥ पुनः किंविधम् ? **प्रभयाऽनुलिप्तमनुरञ्जितं श्रीवत्सं** नाम लाञ्छनं येन तम् । **लक्ष्म्या विभ्रमदर्पणं** कौस्तुभ इत्याख्या यस्य तम् । **अपां** समुद्राणां **सारं** स्थिरांशम् । अम्मयमणिमित्यर्थः । **बृहतोरसा बिभ्राणम्** ॥ १० ॥

बाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः ।
आविर्भूतमपां मध्ये पारिजातमिवापरम् ॥ ११ ॥

**बाहुभिरिति** ॥ **विटपाकारैः** शाखाकारैर्**दिव्याभरणभूषितैर्बाहुभिरुप**लक्षितम् । अत एव **अपां** सैन्धवानां **मध्य आविर्भूतमपरं** द्वितीयं **पारिजात**मिव स्थितम् ॥ ११ ॥

दैत्यस्त्रीगण्डलेखानां मदरागविलोपिभिः ।
हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम् ॥ १२ ॥

**दैत्येति** ॥ **दैत्यस्त्रीगण्डलेखानाम**सुराङ्गनागण्डस्थलीनां यो **मदराग**स्तं विलुम्पन्ति हरन्तीति **मदरागविलोपिनः** । तैश्**चेतनावद्भिः** सजीवैर्**हेतिभिः** सुदर्शनादिभिः शस्त्रैः । 'रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः ।' इत्यमरः । **उदीरितजयस्वनम्** । जयशब्दमुद्घोषयन्तीभिर्मूर्तिमतीभिरस्त्रदेवताभिरुपास्यमानमित्यर्थः ॥ १२

मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा ।
उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता ॥ १३ ॥

**मुक्तेति** ॥ **मुक्तो** भगवत्सन्निधानात्त्यक्तः **शेषे**णाहीश्वरेण सह **विरोधः** सहजमपि वैरं येन तेन । **कुलिशव्रणा** अमृताहरणकाल इन्द्रयुद्धे ये वज्रप्रहारास्त एव **लक्ष्माणि** यस्य स तेन । प्रबद्धोऽञ्जलिर्येन तेन **प्राञ्जलिना** । कृताञ्जलिनेत्यर्थः । **विनीतेनानुद्धतेन गरुत्मतोपस्थितम्**उपासितम् ।[1] पुरा किल मातलिप्रार्थितेन भगवता तद्दुहितुर्गुणकेश्याः पत्युः कस्यचित्सर्पस्य गरुडादभयदाने कृते स्वविपक्षरक्षणक्षुभितं पक्षिराजं 'त्वद्वोढाऽहं त्वत्तो बलाढ्यः' इति गर्वितं स्ववामतर्जनीभारेणैव भङ्क्त्वा भगवान्विनिनायेति महाभारतीया कथा सूचयति 'विनीतेन' इत्यनेन ॥१३॥

योगनिद्रान्तविशदैः पावनैरवलोकनैः ।
भृग्वादीननुगृह्णन्तं सौखशायनिकानृषीन् ॥ १४ ॥

**योगेति** ॥ **योगो** मनसो विषयान्तरव्यावृत्तिः, तद्रूपा या **निद्रा** तस्या **अन्ते**ऽवसाने **विशदैः** प्रसन्नैः **पावनैः** शोधनैर्**अवलोकनैः** । सुखशयनं पृच्छन्तीति **सौखशायनिका**स्तान् । 'पृच्छतौ सुस्नातादिभ्यः' (वा.२९५३) इत्युपसंख्यानाट्ठक्प्रत्ययः । **भृग्वादीनृषीननुगृह्णन्तम्** ॥ १४ ॥

---

पाठा०—१ 'अपां मध्यात्', 'पयोमध्यात्'.

---

टिप्प०—1 कथानकमिदमुद्योगपर्वतो(अ० ९७।१०५)ऽवसेयम् ।

प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ।
अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् ॥ १५ ॥

प्रणिपत्येति ॥ अथ दर्शनानन्तरं सुराः सुरद्विषामसुराणां शमयित्रे विनाशकाय तस्मै विष्णवे प्रणिपत्य स्तुत्यं स्तोत्रार्हम् । 'एतिस्तुशास्वृदृजुषः क्यप्' (पा. ३।१।१०९) इति क्यप्प्रत्ययः । वाक्च मनश्च वाङ्मनसे । 'अचतुर-' (पा.५।४।७७) इत्यच्प्रत्ययान्तो निपातः । तयोर्गोचरो विषयो न भवतीत्यवाङ्मनसगोचरः । तमेनं विष्णुं तुष्टुवुरस्तुवन् ॥ १५ ॥

नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ १६ ॥[1]

नम इति ॥ पूर्वमादौ विश्वसृजे विश्वस्रष्ट्रे तदनु सर्गानन्तरं विश्वं बिभ्रते पुष्णते । अथ विश्वस्य संहर्त्रे । एवं त्रेधा सृष्टि-स्थिति-संहारकर्तृत्वेन स्थित आत्मा स्वरूपं यस्य तस्मै ब्रह्म-विष्णु-हरात्मने तुभ्यं नमः ॥ १६ ॥

ननु कूटस्थस्य कथं त्रैरूप्यमित्याशङ्क्यौपाधिकमित्याह—

रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ १७ ॥

रसान्तराणीति ॥ एकरसं मधुरैकरसं दिवि भवं दिव्यं पयो वर्षोदकं देशे देशे ऊषरादिदेशेऽन्यान्रसान्रसान्तराणि लवणादीनि यथाऽश्नुते प्राप्नोति । एवमविक्रियो निर्विकारः । एकरूप इत्यर्थः । त्वं गुणेषु सत्त्वादिष्ववस्थाः स्रष्टृत्वादिरूपा अश्नुषे ॥ १७ ॥

अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः ।
अजितो जिष्णुरत्यन्तमव्यक्तो व्यक्तकारणम् ॥ १८ ॥

अमेय इति ॥ हे देव । त्वममेयो लोकैरियत्तया न परिच्छेद्यः । मितलोकः परिच्छिन्नलोकः । अनर्थी निःस्पृहः । आवहतीत्यावहः । पचाद्यच् । प्रार्थनानामावहः कामदः । अजितोऽन्यैर्न जितः । जिष्णुर्जयशीलः । अत्यन्तमव्यक्तोऽतिसूक्ष्मरूपः । व्यक्तस्य स्थूलरूपस्य कारणम् ॥ १८ ॥

हृदयस्थमनासन्नमकामं त्वां तपस्विनम् ।
दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥ १९ ॥

पाठा०—१ 'एकः कारणतस्त्वां वामवस्थां प्रतिपद्यसे। नानात्वं रागसंयोगात्स्फटिकस्येव ते स्मृतम् ॥'.

**हृदयेति** ॥ हे देव ! **त्वां हृदयस्थं** सर्वान्तर्यामितया नित्यसंनिहितं तथाप्यवाङ्मनसगम्यरूपत्वाद्विप्रकृष्टं **च** **विदुः** । संनिकृष्टस्यापि विप्रकृष्टत्वमिति विरोधः । तथाऽ**कामम्** । न कामोऽभिलाषोऽस्य तं परिपूर्णत्वान्निःस्पृहत्वाच्च निष्कामम् । तथापि **तपस्विनं** तापसं **विदुः** । यो निष्कामः स कथं तपः कुरुत इति विरोधः । परिहारस्तु—कृपिरूपेण दुस्तरं तपस्तप्यते । **दयालुं** परदुःखप्रहाणपरं तथा**प्यनघस्पृष्टं** नित्यानन्दस्वरूपत्वाददुःखिनं विदुः । 'अघं दुरितदुःखयोः' इति विश्वः । दयालुरदुःखी चेति विरोधः । 'ईर्ष्यी घृणी त्वसंतुष्टः क्रोधनो नित्यशङ्कितः । परभाग्योपजीवी च षडेते नित्यदुःखिताः' ॥ इति महाभारते । **पुराणमनादिमजरं** निर्विकारत्वादक्षरं **विदुः** । चिरंतनं न जीर्यत इति विरोधालंकारः । उक्तं च—'आभासत्वे विरोधस्य विरोधालंकृतिर्मता' इति । विरोधेन चालौकिकमहिमत्वं व्यज्यते ॥ १९ ॥

**[1]सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।**
**सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥ २० ॥**

**सर्वज्ञ इति** ॥ त्वं सर्वं जानातीति **सर्वज्ञः** । 'इगुपध–' (पा.३।१।१३५) इति कप्रत्ययः । **अविज्ञातः** । न केनापि विज्ञात इत्यर्थः । त्वं **सर्वस्य योनिः** कारणम् । त्वमात्मन एव भवतीत्यात्मभूः । न ते किंचित्कारणमस्तीत्यर्थः । त्वं **सर्वस्य प्रभुः** । त्वम**नीशः** । त्वमेकः **सर्वरूपभाक्** । त्वमेक एव सर्वात्मना वर्तस इत्यर्थः ॥ २० ॥

**सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् ।**
**सप्तार्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम् ॥ २१ ॥**

**सप्तेति** ॥ हे देव ! **त्वां** [2]सप्तभिः **सामभी** रथंतरादिभि**रुपगीतम्** । 'तद्धितार्थ–' (पा. २।१।५१) इत्युत्तरपदसमासः । [3]सप्तानामर्णवानां जलं सप्तार्णवजलम् ।

पाठा०–१ '°मदयास्पृष्टम्'.

टिप्प०—1 त्वं सर्ववेदी; सर्वेश्वरत्वात् । त्वं अविज्ञातः; कश्चिन्न वेद, अरूपत्वात् । किंभूतस्त्व ? सर्वयोनिः; सृष्टिकर्तृत्वात् । किंभूतः ? आत्मभूः; अजत्वात् । हे भगवन् ! त्वं सर्वप्रभुः; सर्वेश्वरत्वात् । किंभूतः ? अनीशः; सर्वोत्कर्षत्वात् न कश्चिदीशः । त्वमेको निर्विकारोऽपि सर्वरूपभाक् विश्वव्यापकत्वात् सर्वगतः—इति वल्लभः ।

2 सप्तभिः सामभी रथंतरबृहत्सामवामदेव्यवैरूपपावमानवैराजचान्द्रमसाभिधानि तैः 'इदं विष्णुः' इत्यादि 'विष्णोरराटम्' इत्यन्तैर्वोपगीतम्—इति दिनकर० ।

3 सप्तार्णवाश्चोक्ता वायुपुराणे—'क्षीरोदो लवणोदश्च दध्योदश्च घृतोदकः । स्वादूदकः सुरोदश्च तथैवेक्षुरसोदधिः' इत्यादिना ।

पूर्ववत्समासः । तत्र शेते यः स सप्तार्णवजलेशयः । तम् । 'शयवासवासिष्वकालात्' (पा. ६।३।१८) इत्यलुक् । सप्तार्चिर्मुखं यस्य तम् । 'अग्निमुखा वै देवाः' इति श्रुतेः । सप्तानां लोकानां भूर्भुवःस्वरादीनामेकसंश्रयम् । एवंभूतमाचख्युः ॥ २१ ॥

चतुर्वर्गफलं ज्ञानं कालावस्था¹श्चतुर्युगाः² ।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥ २२ ॥

चतुरिति ॥ चतुर्णां धर्मार्थकाममोक्षाणां वर्गश्चतुर्वर्गः । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः' इत्यमरः । तत्फलकं यज्ज्ञानम् । चत्वारि युगानि कृतत्रेतादीनि यासु ताश्चतुर्युगाः कालावस्थाः कालपरिमाणम् । चत्वारो वर्णाः प्रकृता उच्यन्ते यस्मिन्निति चतुर्वर्णमयः । चातुर्वर्ण्यप्रचुर इत्यर्थः । 'तत्प्रकृतवचने मयट्' (पा. ५।४।२१) । 'तद्धितार्थ—' (पा. २।१।५१) इत्यादिना तद्धितार्थे विषये तत्पुरुषसमासः । स लोकः । इत्येवंरूपं सर्वं चतुर्मुखाच्चतुर्मुखरूपिणस्त्वत्तः । जातमिति शेषः । 'इदं सर्वमसृजत यदिदं किंच' (तैत्ति॰ २।६) इति श्रुतेः ॥२२॥

अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ।
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये ॥ २३ ॥

अभ्यासेति ॥ अभ्यासेन निगृहीतं विषयान्तरेभ्यो निवर्तितम् । तेन मनसा योगिनो हृदयाश्रयं⁴ हृत्पद्मस्थं ज्योतिर्मयं त्वां विमुक्तये मोक्षार्थं विचिन्वन्त्यन्विष्यन्ति । ध्यायन्तीत्यर्थः ॥ २३ ॥

अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं³ वेद कस्तव ? ॥ २४ ॥

---

पाठा०—१ 'कालावस्था'. २ 'चतुर्युगा'. ३ 'याथात्म्यम्'.

---

टिप्प०—1 सप्तार्चिषोऽप्युक्ता हलायुधे—'हिरण्या कनका रक्ता कृष्णा च सुप्रभा धान्या । अतिरिक्ता बहुरूपेति सप्त सप्तार्चिषो जिह्वाः ॥' इति ।

2 कृत-त्रेता-द्वापर-कलिलक्षणा याः कालावस्थाः, यश्चतुर्वर्णमयो ब्राह्मण-क्षत्रिय-वैश्य-शूद्ररूपो यश्चैव लोकः, एतदशेषं त्वत्तश्चतुर्मुखात् प्रभवति-इति वल्लभः ।

3 मनोनिग्रहश्चोक्तो भगवता—'यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् । ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्' इत्यादिना ।

4 हृदयनिरूपणमन्यत्र—'यतो निर्यान्ति विषयो यस्मिंश्चैव प्रलीयते । हृदयं तद्विजानीयान्मनसः स्थितिकारणम् ॥ तस्मिन्हृदयेऽनाहताख्यं द्वादशदलं पद्ममस्ति । तत्र स्थितमोङ्कारकलामीश्वरं योगिनो ध्यायन्ति' इत्यादिना ।

**अजस्येति** ॥ न जायत इत्यजे । 'अन्येष्वपि दृश्यते' (पा. ३।२।१०१) इति डप्रत्यय । तस्याजस्य जन्मशून्यस्यापि **जन्म गृह्णतः** मत्स्यादिरूपेण जायमानस्य । **निरीहस्य** चेष्टारहितस्यापि **हतद्विषः** शत्रुघातिनो **जागरूकस्य** सर्वसाक्षितया नित्यप्रबुद्धस्यापि **स्वपतो** योगनिद्रामनुभवत । इत्थ विरुद्धचेष्टस्य **तव याथार्थ्यं को वेद** वेत्ति [1] 'विदो लटो वा' (पा ३।४।८३) इति णलादेश ॥२४॥

**शब्दादीन्विषयान्भोक्तुं चरितु दुश्चर तप. ।**
**पर्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्तितुम् ॥ २५ ॥**

**शब्देति** ॥ किंच, कृष्णादिरूपेण **शब्दादीन्विषयान्भोक्तुम्** । नरनारायणादिरूपेण **दुश्चरं तपश्चरितुम्** । तथा दैत्यमर्दनेन **प्रजा. पातुम्** । **औदासीन्येन** ताटस्थ्येन **वर्तितुं** च **पर्याप्त.** समर्थोऽसि । भोग तपसो पालनौदासीन्ययोश्च परस्परविरुद्धयोराचरणे त्वदन्य क समर्थ इत्यर्थ ॥ २५ ॥

**बहुधाप्यागमैर्भिन्ना. पन्थान. सिद्धिहेतवः ।**
**त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥ २६ ॥**

**बहुधेति** ॥ **आगमैस्त्रयीसांख्यादिभिर्दर्शनैर्बहुधा भिन्ना अपि सिद्धिहेतव.** पुरुषार्थसाधका **पन्थान** उपाया । जाह्नव्या इमे **जाह्नवीया** गाङ्गा । 'वृद्धाच्छ' (पा ४।२।११४) इति छप्रत्यय । **ओघा.** प्रवाहा । तेऽप्यागमैरागतिभिर्बहुधा भिन्ना सिद्धिहेतवश्च । **अर्णव इव त्वय्येव निपतन्ति** प्रविशन्ति । येन केनापि रूपेण त्वामेवोपयान्तीत्यर्थ । यथाहुराचार्या —'किं बहुना कारवोऽपि विश्वकर्मेत्युपासते' इति ॥ २६ ॥

**त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।**
**गतिस्त्वं वीतरागाणामभूय.सन्निवृत्तये ॥ २७ ॥**

**त्वयीति** ॥ **त्वय्यावेशितं** निवेशित **चित्तं** यैस्तेषाम् । **तुभ्य समर्पितानि कर्माणि** यैस्तेषाम् । 'मन्मना भव मद्भक्तो मद्याजी मा नमस्कुरु । मामेवैष्यसि

पाठा०–१ 'त्वदावेशित'.

टिप्प०—1 इदमपि कण्ठत प्रोक्त भगवता–'न हि जातो न जायेऽहं न जनिष्ये कदाचन । क्षेत्रज्ञ सर्वभूतानां तस्मादहमज स्मृत ॥' इति ।

2 इदमेव सम्यग्विवृत भगवन्महिमावर्णने–'त्रयी सांख्य योग पशुपतिमत वैष्णवमिति प्रभिन्ने प्रस्थाने परमिदमद पथ्यमिति च । रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणा मेको गम्यस्त्वमसि पयसामर्णव इव' इति ।

कौन्तेय ! प्रतिजाने प्रियोऽसि मे ॥' (गी. ९।३४) इति भगवद्वचनात्। **वीतरागाणां** विरक्तानाम**भूयःसंनिवृत्तये**ऽपुनरावृत्तये । मोक्षायेत्यर्थः । **त्वमेव गतिः** साधनम् । 'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वेता. ६।१५) इति श्रुतेरित्यर्थः ॥ २७ ॥

> प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ।
> आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ॥ २८ ॥

**प्रत्यक्ष इति** ॥ **प्रत्यक्षः** प्रत्यक्षप्रमाणगम्योऽपि **तव मह्यादिः** पृथिव्यादि**र्महिमै**श्वर्यम**परिच्छेद्यः** । इयत्तया नावधार्यः । **आप्तवाग्**वेदः । 'यतो वा इमानि भूतानि जायन्ते' (तैत्तिरीय.३।१) इत्यादिश्रुतेः । **अनुमानं** 'क्षित्यादिकं सकर्तृकं कार्यत्वात्, घटवत्' इत्यादिकम्। ताभ्यां **साध्यं** गम्यं **त्वां प्रति का कथा?** प्रत्यक्षमपि त्वत्कृतं जगदपरिच्छेद्यम्, तत्कारणमप्रत्यक्षस्त्वमपरिच्छेद्य इति किमु वक्तव्यमित्यर्थः ॥ २८ ॥

> केवलं स्मरणेनैवं पुनासि पुरुषं यतः ।
> अनेन वृत्तयः शेषा निवेदितफलास्त्वयि ॥ २९ ॥

**केवलमिति** ॥ **स्मरणेन केवलं** कृत्स्नम् । 'केवलः कृत्स्न एकश्च' इति शाश्वतः। **पुरुषं** स्मर्तारं जनं **पुनासि । यतः** यदित्यर्थः । **अनेन** स्मृतिकार्येणैव त्वयि सद्विषये याः **शेषा** अवशिष्टा **वृत्तयो** दर्शनस्पर्शनादयो व्यापारास्ता **निवेदितफला** विज्ञापितकार्याः । तव स्मरणस्यैवैतत्फलं, दर्शनादीनां तु कियदिति नावधारयाम इति भावः ॥ २९ ॥

> उदधेरिव रत्नानि तेजांसीव विवस्वतः ।
> स्तुतिभ्यो व्यतिरिच्यन्ते दूराणि चरितानि ते ॥ ३० ॥

**उदधेरिति** ॥ **उदधे रत्नानी**व । **विवस्वतस्तेजांसीव** । **दूरा**ण्यवाङ्मनसगोचराणि **ते चरितानि स्तुतिभ्यो व्यतिरिच्यन्ते** । निःशेषं स्तोतुं न शक्यन्त इत्यर्थः ॥ ३० ॥

> अनवाप्तमवाप्तव्यं न ते किंचन विद्यते ।
> लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोः ॥ ३१ ॥

---

पाठा०-१ ''नापि'. २ 'यत्र'. ३ 'वोयानि'. ४ 'दूरेण'; 'रूपेण'.

अनवाप्तमिति ॥ अनवाप्तमप्राप्तम् । अवाप्तव्यं प्राप्तव्यं ते तव किंचन किंचिदपि न विद्यते । नित्यपरिपूर्णत्वादिति भावः । तर्हि किंनिबन्धने जन्मकर्मणी तत्राह— लोकेति । एको लोकानुग्रह एव ते तव जन्मकर्मणोर्हेतुः । परमकारुणिकस्य ते परार्थैव प्रवृत्तिः, न स्वार्थेत्यर्थः ॥ ३१ ॥

महिमानं यदुत्कीर्त्य तव संह्रियते वचः ।
श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥ ३२ ॥

महिमानमिति ॥ तव महिमानमुत्कीर्त्य वचः संह्रियत इति यत्। तद्वचनसंहरणं श्रमेण वाग्व्यापारश्रान्त्या । अशक्तया कार्त्स्न्येन वक्तुमशक्यत्वाद्वा । गुणानामियत्तयैतावन्मात्रतया न । तेषामानन्त्यादिति भावः ॥ ३२ ॥

इति प्रसादयामासुस्ते सुरास्तमधोक्षजम् ।
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ॥ ३३ ॥

इतीति ॥ इति ते सुरास्तमधोभूतमक्षजमिन्द्रियजं ज्ञानं यस्मिंस्तमधोक्षजं विष्णुम् । प्रसादयामासुः प्रसन्नं चक्रुः । हि यस्मात् परमेष्ठिनः सर्वोत्तमस्य तस्य देवस्य सा देवैः कृता भूतार्थव्याहृतिर्भूतस्य सत्यस्यार्थस्य व्याहृतिरुक्तिः । 'युक्ते क्ष्मादावृते भूतम्' इत्यमरः । न स्तुतिर्न प्रशंसामात्रम् । महान्तो हि यथाकथंचिन्न सुलभा इति भावः । परमे स्थाने तिष्ठतीति परमेष्ठी । 'परमे कित्' (उणा. ४५० ) इत्युणादिसूत्रेण तिष्ठतेरिनिः । 'तत्पुरुषे कृति बहुलम्' (पा. ६।३।१४) इति सप्तम्या अलुक् । 'स्थास्थिन्स्थृणाम्' इति वक्तव्यात्षत्वम् ॥ ३३ ॥

तस्मै कुशलसंप्रश्नव्यञ्जितप्रीतये सुराः ।
भयमप्रलयोद्वेलादाचख्युर्नैर्ऋतोदधेः ॥ ३४ ॥

तस्मा इति ॥ सुरा देवाः कुशलस्य संप्रश्नेन व्यञ्जिता प्रकटीकृता प्रीतिर्यस्य तस्मै । लक्षितप्रसादायेत्यर्थः । अन्यथा अनवसरविज्ञप्तिमुखराणामिव

[टि०—] [illegible] (१६०) '[illegible]

[illegible]

राक्षसी वै वनौकसः । बके. सुतां महाघोरां भीषणां विकृताननाम् ॥ पुनर्जातोऽयमित्याहुरुक्तस्तस्मादधोक्षजः ॥' इति । भागवते तु (१० पू. अ. ७) विष्णोस्त्वधोक्षजत्वे हेत्वन्तरतो निरूपितम् । महाभारते च-'अधो न क्षीयते जातु यस्मात्तस्मादधोक्षज' इत्युक्तम् ।

निष्फलः स्यादिति भावः । तस्मै विष्णवेऽप्रलये प्रलयाभावेऽप्युद्वेलादुन्मर्यादात् । नैर्ऋतो राक्षसः । स एवोदधिः । तस्माद्भयमाचख्युः कथितवन्तः ॥ ३४ ॥

अथ वेलासमासन्नशैलरन्ध्रानुनादिना ।
स्वरेणोवाच भगवान् परिभूतार्णवध्वनिः ॥ ३५ ॥

अथेति ॥ अथ वेलायामब्धिकूले समासन्नानां संनिकृष्टानां शैलानां रन्ध्रेषु गह्वरेष्वनुनादिना प्रतिध्वनिमता स्वरेण परिभूतार्णवध्वनिस्तिरस्कृतसमुद्रघोषो भगवानुवाच ॥ ३५ ॥

पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता ।
बभूव कृतसंस्कारा चरितार्थैव भारती ॥ ३६ ॥

पुराणस्येति ॥ पुराणस्य चिरंतनस्य कवेस्तस्य भगवतो वर्णस्थानेषूरःकण्ठादिषु समीरिता सम्यगुच्चारिता । अत एव कृतः संपादितः संस्कारः साधुत्वस्पष्टतादिप्रयत्नो यस्याः सा भारती वाणी चरितार्था कृतार्था बभूवैव । 'एव'-कारस्त्वसंभावनाविपरीतभावनाव्युदासार्थः ॥ ३६ ॥

बभौ सदशनज्योत्स्ना सा विभोर्वदनोद्गता ।
निर्यातशेषा चरणाद्गङ्गेवोर्ध्वप्रवर्तिनी ॥ ३७ ॥

बभाविति ॥ विभोर्विष्णोर्वदनादुद्गता निःसृता । सदशनज्योत्स्ना दन्तकान्तिसहिता । इदं च विशेषणं धावल्यातिशयार्थम् । अत एव सा भारती । चरणादङ्घ्रेर्निर्याता चासौ शेषा च निर्यातशेषा । निःसृतावशिष्टेत्यर्थः । 'स्त्रियाः पुंवत्–' (पा. ६।३।३४) इत्यनुवर्त्य 'पुंवत्कर्मधारय—' (पा. ६।३।४२) इति पुंवद्भावः । 'निर्यात'शब्दस्य या निर्याता सावशेषा सा गङ्गेवेति सामानाधिकरण्यनिर्वाहः । निर्यातायाः शेषेति विग्रहे पुंवद्भावो दुर्घट एव । ऊर्ध्वप्रवर्तिन्यूर्ध्ववाहिनी गङ्गेव । बभौ । इत्युत्प्रेक्षा ॥ ३७ ॥

---

पाठा०—1 'अनुवादिना'; 'अनुकारिणा'. २ 'पद'. ३ 'इव'.

---

टिप्प०—1 अब्धिर्हि प्रलयकाले मर्यादां लुम्पति—इति वल्लभः ।

2 पुराणस्य कवेस्तस्य विष्णोर्वर्णानामकारादीनां स्थानेषु ताल्वादिषु समीरितोच्चारितपरंपरया विहितव्याकरणसंस्कारादिसंस्कारो यस्याः सा भारती चरितार्थेव कृतार्थेव बभूव—इति दिशु० ।

3 तानि चोक्तानि पाणिनिना—'अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥' इत्यादिना ।

यदाह भगवांस्तदाह—

जाने वो रक्षसाक्रान्तावनुभावपराक्रमौ ।
अङ्गिनां तमसेवोभौ गुणौ प्रथममध्यमौ ॥ ३८ ॥

जान इति ॥ हे देवाः ! वो युष्माकमनुभाव-पराक्रमौ महिम-पुरुषकारौ रक्षसा रावणेन । अङ्गिनां शरीरिणां प्रथम-मध्यमावुभौ गुणौ सत्त्व-रजसी तमसेव तमोगुणेनेव । आक्रान्तौ जाने । वाक्यार्थः कर्म ॥ ३८ ॥

विदितं तप्यमानं च तेन मे भुवनत्रयम् ।
अकामोपनतेनेव साधोर्हृदयमेनसा ॥ ३९ ॥

विदितमिति ॥ किंच, अकामेनानिच्छयोपनतेन प्रमादादागतेनैनसा पापेन साधोः सज्जनस्य हृदयमिव । तेन रक्षसा तप्यमानं संतप्यमानम् । तपेर्मौवादिकात्कर्मणि शानच् । भुवनत्रयं च मे विदितम् । मया ज्ञायत इत्यर्थः । 'मतिबुद्धि–' (पा. ३।२।१८८) इत्यादिना वर्तमाने क्तः । 'क्तस्य च वर्तमाने' (पा. २।३।६७) इति षष्ठी ॥ ३९ ॥

कार्येषु चैककार्यत्वादभ्यर्थ्योऽस्मि न वज्रिणा ।
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते ॥ ४० ॥

कार्येष्विति ॥ किंच, एकैककार्यत्वादावयोरेककार्यत्वाद्धेतोः । कार्येषु कर्तव्येषु विषयेषु वज्रिणेन्द्रेण । अभ्यर्थ्यः 'इदं कुरु' इति[3] प्रार्थनीयो नास्मि । तथा हि–वातः स्वयमेवाग्नेः सारथ्यं साहाय्यं प्रतिपद्यते प्राप्नोति । न तु वह्निप्रार्थनया । इत्येवकारार्थः । प्रेक्षावतां हि स्वार्थे स्वत एव प्रवृत्तिः, न तु परप्रार्थनया । स्वार्थश्चायं ममापीत्यर्थः ॥ ४० ॥

---

टिप्प०—1 किमिव ? अकामोपनतेन प्रमादप्राप्तेनैवैनसा पापेन साधोः पुंसः हृदयं चित्तमिव–इति शिशु० ॥ यथाऽकामकृतेन पापेन साधोः सज्जनस्य हृदयं तप्यते–इति वल्लभः ।

2 एककार्यत्वात् स्वार्थसाधनत्वात्, स्वार्थे हि स्वयमेव प्रवृत्तिर्निश्चितं–इति वल्लभः ।

3 दैत्यादिविषयरूपेषु कार्येषु तुल्यप्रयोजनत्वाद्वज्रिणा शक्रेण न प्रार्थनीयोऽस्मि । कथमप्रार्थितस्य प्रवृत्तिरित्याह–वातोऽग्नेः सारथ्यं साहाय्यं स्वयमेव प्राप्नोति–इति दिनकर० । कथमप्रार्थितस्य प्रवृत्तिरित्याह–वातो वायुरग्नेः सारथ्यं स्वयमेव प्रतिपद्यते प्राप्नोति–इति शिशु० ।

पुरा किल त्रिपुरारिप्रीणनाय स्वशिरांसि छिन्दता दशकंधरेण यद्दशमं शिरोऽवशेपितं तन्मच्चक्रार्थमित्याह—

स्वासिधारापरिहृतः कामं चक्रस्य तेन मे ।
स्थापितो दशमो मूर्धा लभ्यांश इव रक्षसा ॥ ४१ ॥

स्वेति ॥ स्वासिधारया स्वखङ्गधारया परिहृतः । अच्छिन्न इत्यर्थः । दशमो मूर्धा मे मम चक्रस्य कामं पर्याप्तो लभ्यांशः प्राप्तव्यभाग इव तेन रक्षसा स्थापितः । तत्सर्वथा तमहं हनिष्यामीत्यर्थः ॥ ४१ ॥

तर्हि किं प्रागुपेक्षितमत आह—

स्रष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः ।
अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः ॥ ४२ ॥

स्रष्टुरिति ॥ किंतु स्रष्टुर्ब्रह्मणो वरातिसर्गाद्वरदानाद्धेतोः । मया तस्य दुरात्मनो रिपो रावणस्यात्यारूढमत्यारोहणम् । अतिवृद्धिरित्यर्थः । नपुंसके भावे क्तः । भोगिनः सर्पस्यात्यारूढं चन्दनेनेव सोढम् । चन्दनद्रुमस्यापि तथा सहनं स्रष्टुर्नियतेरिति द्रष्टव्यम् ॥ ४२ ॥

संप्रति वरस्वरूपमाह—

धातारं तपसा प्रीतं ययाचे स हि राक्षसः ।
दैवात्सर्गादवध्यत्वं मर्त्येष्वास्थापराङ्मुखः ॥ ४३ ॥

धातारमिति ॥ स राक्षसस्तपसा प्रीतं संतुष्टं धातारं ब्रह्माणम् । मर्त्येषु विषय आस्थापराङ्मुखः आदरविमुखः सन् । मर्त्याननादृत्येत्यर्थः । दैवादष्टविधात् सर्गाद्देवसृष्टेरवध्यत्वं ययाचे हि ॥ ४३ ॥

तर्हि का गतिरित्याशङ्क्य मनुष्यावतारेण हनिष्यामीत्याह—

सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम् ।
करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम् ॥ ४४ ॥

सोऽहमिति ॥ सोऽहम् । दशरथस्यापत्यं पुमान् दाशरथिः । 'अत इञ्' (पा. ४।१।९५) इतीञ्प्रत्ययः । रामो भूत्वा तीक्ष्णैः शरैस्तस्य रावणस्य शिरः-

पाठा०—१ 'परिवृतः'. २ 'च'. ३ 'सह्यम्'.

टिप्प०—1 दशमो मूर्धा मे चक्रस्य लभ्यो छेद्योऽशो भाग इव नूनं स्थापितः । चन्द्रहासेन (?) नव शिरांसि छिन्दन् दशमं यशान्छैत्सीत् तन्नूनं मे चक्रभागित्युत्प्रेक्षा—इति शिशु० ॥ पूर्वं हि तेन रावणेनेश्वराराधनपरेण तपस्यता निजखङ्गधारया नवशिरांसि दत्तानि; दशमो मूर्धा मम चक्रस्य लभ्यो भाग इव स्थापितः—इति वल्लभः ।

2 केनेव ? यथा चन्दनेन भोगिनः सर्पस्यात्यारूढमाक्रमणोत्कर्षः सह्यते—इति वल्लभः ।

स्येव कमलानि तेषामुच्चयं राशिं रणभूमेर्बलिक्षमं पूजार्हं करिष्यामि। पुष्पविशदा हि पूजेति भाव ॥ ४४ ॥

अचिराद्यज्वभिर्भागं कल्पितं विधिवत्पुनः ।
मायाविभिरनालीढमादास्यध्वे निशाचरैः ॥ ४५ ॥

**अचिरादिति॥** हे देवा ! यज्वभिर्याज्ञिकैर्विधिवत् कल्पितमुपहृत भागं हविर्भाग मायाविभिर्मायावद्भि । 'अस्मायामेधास्रजो विनि' (पा ५।२।१२१) इति विनिप्रत्यय । निशाचरै रक्षोभिरनालीढमनास्वादित यथा तथाऽचिरात् पुनरादास्यध्वे ग्रहीष्यध्वे ॥ ४५ ॥

वैमानिकाः पुण्यकृतस्त्यजन्तु मरुतां पथि ।
पुष्पकालोकसंक्षोभं मेघावरणतत्पराः ॥ ४६ ॥

**वैमानिका इति॥** मरुतां देवाना पथि व्योम्नि वैमानिका विमानैश्चरन्त । 'चरति' (पा ४।४।८) इति ठक्प्रत्यय । मेघावरणतत्परा रावणभयान्मेघेष्वन्तर्धानतत्पराः । पुण्यकृतः सुकृतिन पुष्पकालोकेन यदृच्छया रावणविमानदर्शनेन य संक्षोभो भयचकित त त्यजन्तु। 'सक्षोभो भयचकितम्'-इति शब्दार्णव ॥ ४६ ॥

मोक्ष्यध्वे स्वर्गबन्दीनां वेणीबन्धानदूषितान् ।
शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः ॥ ४७ ॥

**मोक्ष्यध्व इति॥** हे देवा ! यूयं शापेन नलकूबरशापेन यन्त्रिताः प्रतिबद्धाः पौलस्त्यस्य रावणस्य बलात्कारेण ये कचग्रहाः केशाकर्षास्तैरदूषितानुपहतान् स्वर्गबन्दीनां हृतस्वर्गाङ्गनाना वेणीबन्धान् मोक्ष्यध्वे। पुरा किल नलकूबरेणात्मानमभिसरन्त्या रम्भाया बलात्कारेण सभोगात्क्रुद्धेन दुरात्मा रावण शप्त – 'स्त्रीणां बलाद्ग्रहणे मूर्धा ते शतधा भविष्यति'–इति भारतीया कथानुसधेया ॥ ४७ ॥

रावणावग्रहक्लान्तमिति वागमृतेन सः ।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ॥ ४८ ॥

---

पाठा०—१ 'सुरबन्दीनाम्' २ 'अभिषिच्य'.

---

टिप्प०—1 मेघेष्वावरणमात्मनो निलयन तत्र तत्परा, मरुतां देवाना पथि नभोमण्डले विमानेन संचरन्तीति वैमानिका पुण्यकृत स्वर्गगामिन पुष्पकस्यालोके क्षोभ त्यजन्तु। कुबेरं विजित्य तत्पुष्पकारूढो रावणो देवजनानिग्रहीतु दिवि भ्रमतीति प्रसिद्धि । 'मरुतां देवानां पथि' इति व्याख्यायां मेघावरण न संभवति-इति दिनकर० ।

**रावणेति** ॥ स **कृष्णो** विष्णुः स एव **मेघो** नीलमेघश्च । विश्रवसोऽपत्यं पुमानिति विग्रहे रावणः । 'विश्रवः'शब्दाच्छिवादित्वादणि 'विश्रवसो विश्रवणरवणौ' इत्यन्तर्गणसूत्रेण 'विश्रवः'शब्दस्य वृत्तिविषये रवणादेशे **रावण** इति सिद्धम् । स एवावग्रहो वर्षप्रतिबन्धः, तेन **क्लान्तं** म्लानं **मरुतो** देवा एव **सस्यं** तत् । इत्येवंरूपेण **वागमृतेन** वाक्सलिलेन । 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिलेऽमृतम्' इति विश्वः । **अभिवृष्या**भिषिच्य **तिरोदधे**ऽन्तर्दधे ॥ ४८ ॥

**पुरुहूतप्रभृतयः सुरकार्योद्यतं सुराः ।**
**अंशैरनुययुर्विष्णुं पुष्पैर्वायुमिव द्रुमाः ॥ ४९ ॥**

**पुरुहूतेति** ॥ **पुरुहूतप्रभृतय** इन्द्राद्याः **सुराः सुरकार्ये** रावणवधरूप **उद्यतं** विष्णुमंशैर्मात्राभिः । **द्रुमाः पुष्पैः** स्वांशै**र्वायुमिव** । **अनुययुः**[3] । सुग्रीवादिरूपेण वानरयोनिषु जाता इत्यभिप्रायः ॥ ४९ ॥

**अथ तस्य विशांपत्युरन्ते काम्यस्य कर्मणः ।**
**पुरुषः प्रबभूवाग्नेर्विस्मयेन सहर्त्विजाम् ॥ ५० ॥**

**अथेति** ॥ अथ **तस्य विशांपत्यु**र्दशरथस्य संबन्धिनः **काम्यस्य कर्मणः** पुत्रकामेष्टे**रन्ते**ऽवसाने**ऽग्नेः** पावकात् **पुरुषः** कश्चिद्दिव्यः पुमान् । **ऋत्विजां विस्मयेन सह प्रबभूव** प्रादुर्बभूव । तदाविर्भावात्तेषामपि विस्मयोऽभूदित्यर्थः ॥ ५० ॥

तमेव पुरुषं विशिनष्टि—

**हेमपात्रगतं दोर्भ्यामादधानः पयश्चरुम् ॥**
**अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम् ॥ ५१ ॥**

**हेमपात्रेति** ॥ **आद्यस्य पुंसो** विष्णो**रनुप्रवेशा**दधिष्ठानाद्धेतो**स्तेन** दिव्यपुरुषेणापि **दुर्वहम्** । चतुर्दशभुवनोदरस्य भगवतो हरेरतिगरीयस्त्वाद्वोढुमशक्यम् । **हेमपात्रगतं** पयसि पक्वं चरुं **पयश्चरुं** पायसान्नं **दोर्भ्यामादधानो** वहन् । 'अनत्याग्निभिरूष्मपक्व ओदनश्चरुः' इति याज्ञिकाः ॥ ५१ ॥

---

पाठा०—१ 'हेमपात्रीकृतम्'. २ 'आददानः'.

---

टिप्प०—1 अन्योऽपि कृष्णवर्णो मेघोऽवग्रहक्रान्तं धान्यमभिवृद्धये तिरोधत्ते—इति शिशु० ।
2 हनूमत्प्रभृतयो वसुधायामवतरितुमैच्छन्निति भावः—इति शिशु० । यच्चोक्तं महाभारते—'पितामहस्ततस्तेषां संनिधौ शक्रमब्रवीत् । सर्वैर्देवगणैः सार्धं संभव त्वं महीतले ॥ विष्णोः सहायानृक्षीषु वानरीषु च सर्वशः । जनयध्वं सुतान्वीरान् कामरूपबलान्वितान् । शक्रप्रभृतयश्चैव सर्वे वै सुरसत्तमाः । वानर्यृक्षवरस्त्रीषु जनयामासुरात्मजान्' इति ।
3 'दोर्भ्याम्' इति द्विवचनेनातिगुरुत्वा प्रोक्ते—इति दिनकर० ।

**प्राजापत्योपनीतं तदन्नं प्रत्यग्रहीन्नृपः ।**
**वृषेव पयसां सारमाविष्कृतमुदन्वता ॥ ५२ ॥**

**प्राजापत्येति** ॥ **नृपो** दशरथः **प्राजापत्येन** प्रजापतिसंबन्धिना पुरुषेणो**पनीतं**, न तु वैसिष्ठेन। 'प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप !' (बाल. १६।१६) इति रामायणात्। **तदन्नं** पायसान्नम् । **उदन्वतो**दधिनाऽऽ**विष्कृतं** प्रकाशितं **पयसां सारम**मृतं **वृषा** वासव इव । 'वासवो वृत्रहा वृषा' इत्यमरः । **प्रत्यग्रहीत्** स्वीचकार ॥ ५२ ॥

**अनेन कथिता राज्ञो गुणास्तस्यान्यदुर्लभाः ।**
**प्रसूतिं चकमे तस्मिंस्त्रैलोक्यप्रभवोऽपि यत् ॥ ५३ ॥**

**अनेनेति** ॥ **तस्य राज्ञो** दशरथस्या**न्यैर्दुर्लभा** असाधारणा **गुणा अनेन कथिता** व्याख्याताः । **यद्य**स्मात्त्रयो लोका**स्त्रैलोक्यम्** । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । तस्य **प्रभवः** कारणं विष्णुरपि **तस्मिन्** राज्ञि **प्रसूति**मुत्पत्तिं **चकमे** कामितवान् । त्रिभुवनकारणस्यापि कारणमिति परमावधिर्गुणसमाश्रय इत्यर्थः ॥ ५३ ॥

**स तेजो वैष्णवं पत्न्योर्विभेजे चरुसंज्ञितम् ।**
**द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् ॥ ५४ ॥**

**स इति** ॥ **स** नृपः चरुशब्दोऽस्य संजाता **चरुसंज्ञितम्** । **वैष्णवं तेजः पत्न्योः** कौसल्या-कैकेय्योः । द्यौश्च पृथिवी च द्यावा-पृथिव्यौ । 'दिवसश्च पृथिव्याम्' इति चकारात् 'दिव्'शब्दस्य द्यावादेशः । तयो**र्द्यावापृथिव्योः**। अह्नः पतिर**हर्पतिः**। 'अहरादीनां पत्यादिषु वा रेफः' (वा. ४८१५) इत्युपसंख्यानाद्वैकल्पिको रेफस्य रेफादेशो विसर्गापवादः । **प्रत्यग्रमातपं** बालातप**मिव** । **विभेजे** । विभज्य ददावित्यर्थः ॥ ५४ ॥

पत्नीत्रये सति द्वयोरेव विभागे कारणमाह—

**अर्चिता तस्य कौसल्या प्रिया केकयवंशजा ।**
**अतः संभाविता ताभ्यां सुमित्रामैच्छदीश्वरः ॥ ५५ ॥**

**अर्चितेति** ॥ **तस्य** राज्ञः । कौ पृथिव्यां सलति गच्छतीति कोसलः । 'सल

---

पाठा०—१ 'प्रवृत्तिम्'; 'निवृत्तिम्'. २ य.'.

---

टिप्प०—1 प्रजापतेरयं प्राजापत्यो दिव्यपुरुषस्तेनोपनीतमुपढौकितम्-इति वल्लभः ॥ प्रजापतिर्ब्रह्मा, तस्यापत्यं प्राजापत्यो वसिष्ठस्तेनोपनीतं तदन्नं स्वीचकार। समुद्रेण प्रकाशितं पयसां सारममृतं वृषा शक्र इव-इति दिनकर० ।

गतौ' पचाद्यच् । कुरुन्दस्य पृषोदरादित्वाद्गुणः । कोसलस्य राज्ञोऽपत्यं स्त्री **कौसल्या** । 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' (पा. ४।१।१७१) इति ञ्यङ्, 'यङश्चाप्' (पा. ४।१।७४) इति चाप्। अत एव सूत्रे निर्देशात् 'कोसल'शब्दो दन्त्यसकारमध्यमः। **अर्चिता** ज्येष्ठा मान्या। **केकयवंशजा** कैकेयी। **प्रियेष्ठ** । **अतो** हेतोः, **ईश्वरो** भर्ता नृपः **सुमित्रां ताभ्यां** कौसल्या-कैकेयीभ्यां **संभावितां** भागदानेन मानिताम् **ऐच्छदि**च्छति स्म। एवं च सामान्यं तिसृणां च भागप्रापणमिति राज्ञुचितज्ञता कौशलं च लभ्यते ॥ ५५ ॥

**ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः ।**
**चरोरर्धार्धभागाभ्यां तामयोजयतामुभे ॥ ५६ ॥**

**ते इति** ॥ **बहुज्ञस्य** सर्वज्ञस्य । उचितज्ञस्येत्यर्थः । **पत्युर्महीक्षितः** क्षितीश्वरस्य। विशेषणत्रयेण राज्ञोऽनुसरणीयतामाह—**चित्तज्ञे** अभिप्रायज्ञे **ते उभे पत्न्यौ** कौसल्या-कैकेय्यौ । **चरोर्**यावर्धभागौ समभागौ तयोर्यावर्धौ तौ च तौ भागौ चेत्यर्धभागावेकदेशौ । ताभ्याम**र्धार्धभागाभ्याम्** । 'पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः । **तां** सुमित्राम**योजयतां** युक्तां चक्रतुः । अयं च विभागो न रामायणसंवादी; तत्र चरोरर्धं कौसल्याया अवशिष्टार्धं कैकेय्यै शिष्टं पुनः सुमित्राया इत्यभिधानात् । किंतु पुराणान्तरसंवादो द्रष्टव्यः । उक्तं च नारसिंहे—'ते पिण्डप्राशने काले सुमित्रायै महीपतेः । पिण्डाभ्यामल्पमल्पं तु स्वभगिन्यै प्रयच्छतः ॥' इति । एवमन्यत्रापि विरोधे पुराणान्तरात्समाधातव्यम् ॥ ५६ ॥

न चैवं सत्यपीर्ष्या स्यादित्याह—

**सा हि[1] प्रणयवत्यासीत्सपत्न्योरुभयोरपि ।**
**भ्रमरी वारणस्येव मदनिस्यन्दरेखयोः[2] ॥ ५७ ॥**

**सेति** ॥ **सा** सुमित्रा । **उभयोरपि** । समान एकः पतिर्ययोस्तयोः **सपत्न्योः** । 'नित्यं सपत्न्यादिषु' (पा. ४।१।३५) इति ङीप् । नकारादेशश्च । **भ्रमरी** भृङ्गाङ्गना **वारणस्य** गजस्य **मदनिस्यन्दरेखयोरिव** गण्डद्वयगतयोरिति भावः। **प्रणयवती** प्रेमवत्यासीत्। 'सपत्न्योः' इत्यत्र समासान्तर्गतस्य पत्युरुपमाने 'वारणस्य' इति ॥५७॥

पाठा०—१ 'अपि'. २ 'निष्पन्दलेखयोः'.

टिप्प०—1 कौसल्या-कैकेय्यावेव सुमित्रायै प्रयच्छतामिति दशरथनृपतेरभिप्रायः-इति शिशु० ।

2 स्वस्वलब्धांशसंबन्ध्यर्धार्धभागाभ्यामित्यर्थः इति-तिलकः ।

ताभिर्गर्भः प्रजाभूत्यै दध्रे देवांशसंभवः ।
सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः ॥ ५८ ॥

**ताभिरिति** ॥ **ताभिः** कौसल्यादिभिः **प्रजानां भूत्या** अभ्युदयाय । **देवस्य** विष्णोरंशः **संभवः** कारणं यस्य स **गर्भः** । सूर्यस्येमाः सौर्यः, ताभिः **सौरीभिः** । 'सूर्यतिष्य-' ( ६।४।१४९ ) इत्युपधायकारस्य लोपः । **अमृता इत्याख्या** यासां ताभिः । जलवहनसाम्यान्नाडीभिरिव । **नाडीभिर्**वृष्टिविसर्जनीभिर्दीधितिभिः । अपां विकारो**ऽम्मयो** जलमयो **गर्भ इव** । **दध्रे** धृतः । जातावेकवचनम् । गर्भो दधिर इत्यर्थः । अत्र यादवः—'तासां शतानि चत्वारि रश्मीनां वृष्टिसर्जने । शतत्रयं हिमोत्सर्गे तावद्गर्भस्य सर्जने ॥ आनन्दाश्च हि मेध्याश्च नूतनाः पूतना' इति । चतुःशतं वृष्टिवाहास्ताः सर्वा अमृताः स्त्रियः ॥' इति ॥ ५८ ॥

सममापन्नसत्त्वास्ता रेजुरापाण्डुरत्विषः ।
अन्तर्गतफलारम्भाः सस्यानामिव संपदः ॥ ५९ ॥

**सममिति** ॥ **समं** युगपदापन्ना गृहीताः सत्त्वाः प्राणिनो याभिस्ता **आपन्नसत्त्वा** गर्भिण्यः । 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः । अत एव, **आपाण्डुरत्विषः** ईषत्पाण्डुरवर्णास्ताः राजपत्न्यः । **अन्तर्गता** गुप्ताः **फलारम्भाः** फलप्रादुर्भावा यासां ताः **सस्यानां संपद इव** । **रेजुर्**बभुः ॥ ५९ ॥

संप्रति तासां स्वप्नदर्शनान्याह—

गुप्तं ददृशुरात्मानं सर्वाः स्वप्नेषु वामनैः ।
जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्तिभिः ॥ ६० ॥

**गुप्तमिति** ॥ **सर्वा**स्ताः **स्वप्नेषु** । जलजः शङ्खः । **जलजासिगदाशार्ङ्गचक्रैर्लाञ्छिता मूर्तयो** येषां तैर्**वामनैर्**ह्रस्वैः पुरुषैर्**गुप्तं** रक्षितमात्मानं स्वरूपं **ददृशुः** ॥ ६० ॥

हेमपक्षप्रभाजालं गगने च वितन्वता ।
उह्यन्ते स्म सुपर्णेन वेगाकृष्टपयोमुचा ॥ ६१ ॥

**हेमेति** ॥ किंचेति चार्थः । **हेम्नः** सुवर्णस्य **पक्षाणां प्रभाजालं** कान्तिपुञ्जं

---

पाठा०—१ 'खड्गगदा'; 'शङ्खगदा'. २ 'हेमपत्रं'. ३ 'विचिन्वता'. ४ 'उह्यमानम्'. ५ 'वेगात्कृष्टपयोमुचा'.

वितन्वता विस्तारयता । वेगेनाकृष्टाः पयोमुचो मेघा येन तेन । सुपर्णेन गरुत्मता गरुडेन गगने ता उह्यन्ते स्मोढाः ॥ ६१ ॥

विभ्रत्या कौस्तुभन्यासं स्तनान्तरविलम्बिनम् ।
पर्युपास्यन्त लक्ष्म्या च पद्मव्यजनहस्तया ॥ ६२ ॥

विभ्रत्येति ॥ किंच, स्तनयोरन्तरे मध्ये विलम्बिनं लम्ब्यमानम् । न्यस्यत इति न्यासः । कौस्तुभ एव न्यासस्तम् । पत्या कौतुकान्न्यस्तम् । कौस्तुभमित्यर्थः । विभ्रत्या पद्ममेव व्यजनं हस्ते यस्यास्तया लक्ष्म्या पर्युपास्यन्तोपासिताः ॥६२॥

कृताभिषेकैर्दिव्यायां त्रिस्रोतसि च सप्तभिः ।
ब्रह्मर्षिभिः परं ब्रह्म गृणद्भिरुपतस्थिरे ॥ ६३ ॥

कृतेति ॥ किंच, दिवि भवायां दिव्यायां त्रिस्रोतस्याकाशगङ्गायां कृताभिषेकैः कृतावगाहैः । परं ब्रह्म वेदरहस्यं गृणद्भिः पठद्भिः सप्तभिर्ब्रह्मर्षिभिः कश्यपप्रभृतिभिरुपतस्थिरे उपासांचक्रिरे ॥ ६३ ॥

ताभ्यस्तथाविधान्स्वप्नाञ्छ्रुत्वा प्रीतो हि पार्थिवः ।
मेने परार्ध्यमात्मानं गुरुत्वेन जगद्गुरोः ॥ ६४ ॥

ताभ्य इति ॥ पार्थिवो दशरथस्ताभ्यः पत्नीभ्यः । 'आख्यातोपयोगे' (पा. १।४।२९) इत्यपादानत्वात्पञ्चमी । तथाविधानुक्तप्रकारान्स्वप्नाञ्छ्रुत्वा प्रीतः सन् । आत्मानं जगद्गुरोर्विष्णोरपि गुरुत्वेन पितृत्वेन हेतुना परार्ध्यं सर्वोत्कृष्टं मेने हि ॥ ६४ ॥

विभक्तात्मा विभुस्तासामेकः कुक्षिष्वनेकधा ।
उवास प्रतिमाचन्द्रः प्रसन्नानामपामिव ॥ ६५ ॥

विभक्तेति ॥ एक एकरूपो विभुर्विष्णुस्तासां राजपत्नीनां कुक्षिषु गर्भेषु । प्रसन्नानां निर्मलानामपां कुक्षिषु प्रतिमाचन्द्रः प्रतिबिम्बचन्द्र इव । अनेकधा विभक्तात्मा सन् । उवास ॥ ६५ ॥

अथाग्र्यमहिषी राज्ञः प्रसूतिसमये सती ।
पुत्रं तमोपहं लेभे नक्तं ज्योतिरिवौषधिः ॥ ६६ ॥

अथेति ॥ अथ राज्ञो दशरथस्य सती पतिव्रता । अग्र्या चासौ महिषी

---

पाठा०-१ 'कौस्तुभं न्यासम्'. २ 'उपास्यमानम्'. ३ 'महर्षिभिः'. ४ 'समुपस्थितम्'. ५ 'अथ'. ६ 'कृतार्थम्'. ७ 'प्रभुः'. ८ 'अग्रमहिषी'.

**चाग्यमहिषी** कौसल्या । **प्रसूतिसमये** प्रसूतिकाले । **ओषधिर्नक्तं** रात्रिसमये तमोऽपहन्तीति **तमोपहम्** । 'अपे क्लेशतमसो.' ( पा. ३।२।५० ) इति डप्रत्ययः । **ज्योतिरिव** । तमोपह तमोनाशकरं **पुत्रं लेभे** प्राप ॥ ६६ ॥

> **राम इत्यभिरामेण वपुषा तस्य चोदितः ।**
> **नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम् ॥ ६७ ॥**

**राम इति** ॥ अभिरमन्तेऽनेनेत्य**भिरामं** मनोहरम् । अधिकरणार्थे घञ्प्रत्यय । तेन **वपुषा चोदितः** प्रेरितो **गुरुः** पिता दशरथस्तस्य पुत्रस्य **जगतां प्रथमं मङ्गलं** सुलक्षण **राम इति नामधेयं चक्रे** । अभिरामत्वमेव रामशब्दप्रवृत्तिनिमित्तमित्यर्थं ॥ ६७ ॥

> **रघुवंशप्रदीपेन तेनाप्रतिमतेजसा ।**
> **रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन् ॥ ६८ ॥**

**रघ्विति** ॥ **रघुवंशस्य प्रदीपेन** प्रकाशकेन । **अप्रतिमतेजसा तेन** रामेण **रक्षागृहगताः** सूतिकागृहगता **दीपाः प्रत्यादिष्टाः** प्रतिषिद्धा **इवाभवन्** । महादीपसमीपे नाल्पा स्फुरन्तीति भाव ॥ ६८ ॥

> **शय्यागतेन रामेण माता शातोदरी बभौ ।**
> **सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ ६९ ॥**

---

पाठा०—१ 'नोदित.'. २ 'शय्याम्'.

---

टिप्प०—1 ओषो दाहो धीयतेऽनयेत्योषधिरिति जगद्धितत्व देव्या.-इति हेमाद्रि ॥ तथा चोक्तं श्रुतौ-'सौर तेन सायमग्निं सक्रमते,' 'आदित्यो वा अस्त यन्नग्निमनुप्रविशति, अग्निं वा आदित्य साय प्रविशति'-इति दिनकर० ।

2 प्रथमोक्त्या पश्चाद्रावणादिवधान्मङ्गलान्तरमपि । अन्वर्था चेय संज्ञा, तथा शृङ्गारप्रकाशे-'कर्मव्यवहारहेतु संज्ञा, सा चतुर्धा-आन्वर्थिकी, नैमित्तिकी, यादृच्छिकी चेति । अर्थमनुगताऽऽन्वर्थिकी, यथा-'परन्तपो नाम यथार्थनामा' इति । अनपेक्षितसज्ञा पारिभाषिकी, यथा-'प्रदीप इत्यागमवृद्धसेवी' इति । निमित्तापेक्षा नैमित्तिकी, यथा-'ता पार्वतीत्यभिजनेन नाम्ना' इति । आविमानव्युत्पत्तिर्यादृच्छिकी, यथा-'लाङ्गलोल्लिख्यमानाया यज्ञभूमे. समुद्गता । सीतेयमूर्मिलेय तु द्वितीया जनकात्मजा' ॥ इति हेमाद्रि । 'जगत्प्रथममङ्गलम्' इत्यत्र प्रथमोक्त्या पश्चाद्रावणादिवधेन मङ्गलान्तर द्योत्यते-इति दिनकर० ।

3 ते तु दीपा , अय तु प्रदीप इत्युत्कर्ष-इति हेमाद्रि. ।

शय्येति ॥ शातोदरी गर्भमोचनात्कृशोदरी माता शय्यागतेन रामेण। सैकते पुलिने योऽम्भोजबलिः पद्मोपहारस्तेन शरदि कृशा जाह्नवी गङ्गेव। बभौ ॥ ६९ ॥

कैकेय्यास्तनयो जज्ञे भरतो नाम शीलवान्।
जनयित्रीमलंचक्रे यः प्रश्रय इव श्रियम् ॥ ७० ॥

कैकेय्या इति ॥ केकयस्य राज्ञोऽपत्यं स्त्री कैकेयी। 'तस्यापत्यम्' (पा. ४।१।९२) इत्यणि कृते 'केकयमित्रयुप्रलयानां यादेरियः' (पा. ३।२।५०) इतीयादेशः। तस्या भरतो नाम शीलवांस्तनयो जज्ञे जातः। यस्तनयः। प्रश्रयो विनयः श्रियमिव। जनयित्रीं मातरमलंचक्रे ॥ ७० ॥

सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ।
सम्यगाराधिता विद्या प्रबोधविनयाविव ॥ ७१ ॥

सुताविति ॥ सुमित्रा लक्ष्मण-शत्रुघ्नौ नाम यमौ युग्मजातौ सुतौ पुत्रौ। सम्यगाराधिता सम्यस्ता विद्या प्रबोध-विनयौ तत्त्वज्ञानेन्द्रियजाताविव। सुषुवे ॥ ७१ ॥

निर्दोषमभवत्सर्वमाविष्कृतगुणं जगत्।
अन्वगादिव हि स्वर्गो गां गतं पुरुषोत्तमम् ॥ ७२ ॥

निर्दोषमिति ॥ सर्वं जगल्लोको निर्दोषं दुर्भिक्षादिदोषरहितम्। आविष्कृतगुणं प्रकटीकृतारोग्यादिगुणं चाभवत्। अत्रोत्प्रेक्षते—गां भुवं गतमवतीर्णं पुरुषोत्तमं विष्णुं स्वर्गोऽप्यन्वगादिव। स्वर्गे हि गुणनान्निर्दोषत्वेलागमः। स्वर्गतुल्यमभूदित्यर्थः ॥ ७२ ॥

पाठा०–१ 'आगमिता'.

टिप्प०—1 माता शय्यागतेन रामेण शुशुभे–यथा शरदि कृशा गङ्गा सिकतामये प्रदेशे च पद्मानां बलिरुपहारस्तेन शोभते—इति दिनकर०।

2 सैकतोपमया शय्याप्रच्छदस्य धवलत्वसौभाग्ये, अंभोजबल्युपमया शिशोः सौकुमार्यम्, गङ्गोपमया देव्याः स्वच्छता पवित्रता च-इति हेमाद्रिः॥ यथा जाह्नवी गङ्गा सैकतांभोजबलिना भाति पुलिनस्थपद्मपूजोपहारेण गङ्गा शोभते-इति वल्लभः।

3 विनयोपमया भरतस्य जनवशीकरणत्वम्, संपदुपमया भरतेन कैकेय्याः श्लाघ्यताम् मलंचक्रे इत्यसम्यम्-इति हेमाद्रिः।

4 'आगमिता' इति पाठमादृत्य 'आगमोऽस्या जात इत्यागमिता, मन्त्रैर्लब्धा कृताभ्यासा' इति व्याचष्टे-सुमति०।

**समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ ।**
**तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः ॥ ८१ ॥**

**समान इति** ॥ शोभनाः स्निग्धा भ्रातरो येषां ते सुभ्रातरः । 'नद्यृतश्च' (पा. ५।४।१५३) इति कप्न भवति । 'वन्दिते भ्रातुः' इति निषेधात् । तेषां भावः **सौभ्रात्रम्** । युवादित्वादण् । तस्मिन्**समाने** चतुर्णां तुल्येऽपि **यथोभौ रामलक्ष्मणौ प्रीत्या द्वन्द्वं बभूवतुः** । **तथा भरतशत्रुघ्नौ** प्रीत्या द्वन्द्वं द्वौ द्वौ साहचर्येणाभिव्यक्तौ **बभूवतुः** । 'द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु' (पा. ८।१।१५) इत्यभिव्यक्तार्थे निपातः । कश्चित्कस्यचित्स्नेहो नातिरिच्यत इति भावः ॥ ८१ ॥

**तेषां द्वयोर्द्वयोरैक्यं विभिदे न कदाचन ।**
**यथा वायुविभावस्वोर्यथा चन्द्रसमुद्रयोः ॥ ८२ ॥**

**तेषामिति** ॥ **तेषां** चतुर्णां मध्ये **द्वयोर्द्वयोः** । रामलक्ष्मणयोर्भरतशत्रुघ्नयोश्चेत्यर्थः । **यथा वायु-विभावस्वोर्**वात-वह्न्योरिव । **चन्द्र-समुद्रयोरिव च** । **ऐक्यमैकमत्यं कदाचन न विभिदे** । एककार्यत्वं समानसुखदुःखत्वं च क्रमादुपमाद्वयाल्लभ्यते । सहजः सहकारी हि वह्नेर्वायुः । चन्द्रवृद्धौ हि वर्धते सिन्धुः, तत्क्षये च क्षीयत इति ॥ ८२ ॥

**ते प्रजानां प्रजानाथास्तेजसा प्रश्रयेण च ।**
**मनो जह्रुर्निदाघान्ते श्यामाभ्रा दिवसा इव ॥ ८३ ॥**

**त इति** ॥ **प्रजानाथास्ते** कुमारा**स्तेजसा** प्रभावेण **प्रश्रयेण** विनयेन **च निदाघान्ते** ग्रीष्मान्ते श्यामान्यभ्राणि मेघा येषां ते **श्यामाभ्राः** । नातिशीतोष्णा । इत्यर्थः । **दिवसा इव** । **प्रजानां मनो जह्रुः** ॥ ८३ ॥

**स चतुर्धा बभौ व्यस्तः प्रसवः पृथिवीपतेः ।**
**धर्मार्थकाममोक्षाणामवतार इवाङ्गवान् ॥ ८४ ॥**

**स इति** ॥ **स चतुर्धा** । 'संख्याया विधार्थे धा' (पा. ५।३।४२) इत्यनेन धाप्रत्ययः । **व्यस्तो** विभक्तः **पृथिवीपते**र्दशरथस्य **प्रसवः** संतानः । **चतुर्धाऽङ्गवान्** मूर्तिमान् **धर्मार्थकाममोक्षाणामवतार इव बभौ** ॥ ८४ ॥

---

पाठा०—१ 'इवाङ्गभाक्'.

---

टिप्प०—1 अनेन तेषां चतुर्विधपुरुषार्थाकारत्वम्-इति हेमाद्रिः ।

गुणैराराधयामासुस्ते गुरुं गुरुवत्सलाः ।
तमेव चतुरन्तेशं रत्नैरिव महार्णवाः ॥ ८५ ॥

गुणैरिति ॥ गुरुवत्सलाः पितृभक्तास्ते कुमारा गुणैर्विनयादिभिर्गुरुं पितरम् । चतुर्णामन्तानां दिगन्तानामीशं चतुरन्तेशम् । 'तद्धितार्थ—' (पा. २।१।५१) इत्यादिनोत्तरपदसमासः । तं दशरथमेव महार्णवाश्चत्वारो रत्नैरिव । आराधयामासुरानन्दयामासुः ॥ ८५ ॥

सुरगज इव दन्तैर्भग्नदैत्यासिधारै-
र्नय इव पणवन्धव्यक्तयोगैरुपायैः ।
हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः
पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥ ८६ ॥

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृतौ रामावतारो नाम दशमः सर्गः ।

---

सुरगज इति ॥ भग्ना दैत्यानामसिधारा यैस्तैश्चतुर्भिर्दन्तैः सुरगज ऐरावत इव । पणवन्धेन फलसिद्ध्या व्यक्तयोगैरनुमितप्रयोगैरुपायैश्चतुर्भिः सामादिभिर्नयो नीतिरिव । युगपद्दीर्घैश्चतुर्भिर्दोर्भिर्भुजैर्हरिर्विष्णुरिव । तदीयैर्हरिसंबन्धिभिरंशैरंशभूतैश्चतुर्भिस्तैः पुत्रैरवनिपतीनां पती राजराजो दशरथः । चकाशे विदिद्युते ॥ ८६ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां संजीविनीसमाख्यायां दशमः सर्गः ।

---

टिप्प०—1 आदावुपयानाम्युक्तस्य पश्चाद्राज्ञां पतिरिति वक्तव्यम् । नो चेत्तच्छब्दस्य पूर्वपरामर्शित्वात्तदीयैरिति न घटते । ऐरावतोपमया राज्ञो बलत्वम्, दन्तोपमया तेषामभग्नत्वम्—इति हेमाद्रिः ।

2 पणस्य धनस्य बन्धस्तस्मै व्यक्तो योगो येषां तैः । यद्वा,—पणबन्धः सन्धिस्तत्र व्यक्तयोगैः—इति हेमाद्रिः ।

## एकादशः सर्गः।

रामचन्द्रचरणारविन्दयोरन्तरङ्गचरभृङ्गलीलया।
तत्र सन्ति हि रसाश्चतुर्विधाख्यान्यथारुचि सदैव निर्विश॥

**कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशान्तये।**
**काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते॥ १॥**

**कौशिकेनेति॥ कौशिकेन** कुशिकापत्येन विश्वामित्रेण। **एत्य**अभ्यागत्य। **स क्षितीश्वरो** दशरथः। **अध्वरविघातशान्तये** यज्ञविघ्नविध्वंसाय। **काकपक्षधरं** बालकोचितशिखाधरम्। 'बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः' इति हलायुधः। **रामं याचितः किल** प्रार्थितः खलु। याचेर्द्विकर्मकत्वादप्रधाने कर्मणि क्तः। 'अप्रधाने दुहादीनाम्' इति वचनात्। नायं बालाधिकार इत्याशङ्क्याह—**तेजसां** तेजस्विनां **वयो** बाल्यादि **न समीक्ष्यते हि**। अप्रयोजकमित्यर्थः। अत्र सर्गे **रथोद्धतावृत्तम्**। उक्तं च-'रान्नराविह रथोद्धता लगौ' इति॥ १॥

**कृच्छ्रलब्धमपि लब्धवर्णभाक्तं दिदेश मुनये सलक्ष्मणम्।**
**अप्यसुप्रणयिनां रघोः कुले न व्यहन्यत कदाचिदर्थिता॥ २॥**

**कृच्छ्रलब्धमिति॥** लब्धा वर्णाः प्रसिद्धयो यैस्ते लब्धवर्णा विचक्षणाः। 'लब्धवर्णो विचक्षण.' इत्यमरः। तान्भजत इति **लब्धवर्णभाक्**। विद्वत्सेवीत्यर्थः।

पाठा०—१ 'सोऽभिगम्य किल गाधिसूनुना राम॰'. २ 'चकासे'. ३ 'मेदिनीपतिः'.

टिप्प०—1 ननु 'क्षितीश्वर' इत्यत्र 'प्रतिपदविधाना च षष्ठी न समस्यते' इति वक्तव्यत्वात् षष्ठ्या न समासः, 'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च' इति विशेषलक्षणेन विहितत्वात्। नैष दोषः; अत्र हि शेषलक्षणैव षष्ठी। नहि 'स्वामि-' आदिसूत्रेण षष्ठी विधीयते। किं तर्हि? सप्तमी, सा तु षष्ठीं मा बाधिष्ट इति चकारेण षष्ठ्याः प्रतिप्रसवः क्रियते-इति न्यासकृत्। 'अप्रधाने दुहादीनाम्' इति अप्रधानकर्मणि दशरथे द्वितीयाभावः, प्रधानकर्मणस्त्वनभिहितत्वाद्राममिति भवत्येव-इति हेमाद्रिः।

2 पञ्चदशाब्दप्रायमपि, यत.-'अजातव्यञ्जनो यस्तु युद्धकर्मविशारदः। ऊनषोडशवर्षश्च काकपक्षधरः स्मृत.'-इति वल्लभः॥ काकपक्षाणां शिखण्डानां धरः। राजकुमाराणां हि पञ्च शिखा भवन्तीति बहुवचनम्, तदुक्तं रामायणे-'चूडापञ्चकमण्डनो क नु शिशुः खण्डः क चाय मुनिः' इति', तथाऽत्रैवाष्टादशे सर्गे 'कपोललोलोभयकाकपक्षात्-इति हेमाद्रिः।

स राजा कृच्छ्रलब्धमपि सलक्ष्मणं तं रामं मुनये दिदेशातिसृष्टवान् । [1]तथा हि-असुप्रणयिनां प्राणार्थिनामप्यर्थिता याञ्चा रघोः कुले कदाचिदपि न व्यहन्यत न विहता । न विफलीकृतेत्यर्थः । यैरर्थिभ्यः प्राणा अपि समर्प्यन्ते तेषां पुत्रादित्यागो न विस्मयावह इति भावः ॥ २ ॥

यावदादिशति पार्थिवस्तयोर्निर्गमाय पुरमार्गसंस्क्रियाम् [1] ।
तावदाशु विदधे [2] मरुत्सखैः सा सपुष्पजलवर्षिभिर्घनैः ॥ ३ ॥

यावदिति ॥ पार्थिवः पृथिवीश्वरः । तयो रामलक्ष्मणयोर्निर्गमाय निष्क्रमणाय पुरमार्गसंस्क्रियां धूलिसंमार्जनगन्धोदकसेचनपुष्पोपहाररूपसंस्कारं यावदादिशत्याज्ञापयति तावन्मरुत्सखैर्वायुसखैः । अनेन धूलिसंमार्जनं गम्यते । [3]सपुष्पजलवर्षिभिः पुष्पसहितजलवर्षिभिर्घनैः सा मार्गसंस्क्रियाऽऽशु विदधे विहिता । एतेन देवकार्यप्रवृत्तयोर्दैवानुकूल्यं सूचितम् ॥ ३ ॥

तौ निदेशकरणोद्यतौ पितुर्धन्विनौ चरणयोर्निपेततुः ।
भूपतेरपि तयोः प्रवत्स्यतोर्नम्रयोरुपरि बाष्पबिन्दवः ॥ ४ ॥

ताविति ॥ निदेशकरणोद्यतौ पित्राज्ञाकरणोद्युक्तौ धन्विनौ धनुष्मन्तौ तौ कुमारौ पितुश्चरणयोर्निपेततुः । प्रणतावित्यर्थः । भूपतेरपि बाष्पबिन्दवः प्रवत्स्यतोः प्रवासं करिष्यतोः । अत एव नम्रयोः प्रणतयोः । 'नमिकम्पि-' (पा. ३।२।१६७) इति रप्रत्ययः । तयोरुपरि निपेततुः पतिताः ॥ ४ ॥

तौ पितुर्नयनजेन वारिणा किंचिदुक्षितशिखण्डकावुभौ ।
धन्विनौ तमृषिमन्वगच्छतां पौरदृष्टिकृतमार्गतोरणौ ॥ ५ ॥

---

पाठा०-१ 'सत्क्रियाम्'. २ 'तावता'. ३ 'विहिता'. ४ 'सान्द्रपुष्प'. ५ 'प्रयास्यतोः'. ६ 'शिखण्डिकौ'.

---

टिप्प०-1 ननु पूर्वश्लोके रामस्यैव याचितत्वात् कथं लक्ष्मणस्यापि दानमुचितम् ? इत्यत्र दिनकरमिश्रैः शङ्कोपस्थापिता, परं तत्समाधानांशो लेखकानवधानतया लुप्त इत्यादर्शतोऽवसीयते ॥ वल्लभस्तु—रामप्रार्थनया लक्ष्मणमपि साहचर्यात्-इत्याह । वस्तुतस्तु—'लक्ष्मणानुचरमेव राघवं नेतुमैच्छदृषि-' (११।६) इत्यग्रेतनश्लोके कौशिकेच्छयैव प्रेषित इति चोक्त्यैव समाधानम् ।

2 यतो हेतोः रघोर्वंशेऽसुषु प्राणेषु प्रणयो येषां तादृशानामपि याचकानामर्थिता याचकभावो न व्यहन्यत न विघ्नितोऽभूत्; किमु पुत्रादावित्यर्थः-इति दिनकर० ।

3 कुसुमसहितजलधारावर्षिभिरित्युदयसुन्दरम्-इति वल्लभ० ।

**ताविति** ॥ पितुर्नयनजेन वारिणा किंचिदुक्षितशिखण्डकावीषत्सिक्त-चूडौ । 'शिखा चूडा शिखण्डः स्यात्' इत्यमरः । 'शेषाद्विभाषा' (पा. ५।४।१५४) इति कप्रत्ययः । **धन्विनौ तावुभौ । पौरदृष्टिभिः कृतानि मार्गतोरणानि** सपताकानि कुवलयानि ययोस्तौ तथोक्तौ । सतृष्णं निरीक्ष्यमाणावित्यर्थः । **तमृषिमन्वगच्छताम्** ॥ ५ ॥

> लक्ष्मणानुचरमेव राघवं नेतुमैच्छदृषिरित्यसौ नृपः ।
> आशिषं प्रयुयुजे न वाहिनीं सा हि रक्षणविधौ तयोः क्षमा ॥६॥

**लक्ष्मणेति** ॥ **ऋषिर्लक्ष्मणानुचरमेव** लक्ष्मणमात्रानुगं तं **राघवं नेतुमैच्छदिति** हेतोः, **असौ नृप आशिषं प्रयुयुजे** प्रयुक्तवान् । **वाहिनीं** सेनां **न प्रयुयुजे** न प्रेषितवान् । **हि** यस्मात् **साऽऽशीरेव तयोः** कुमारयोः **रक्षणविधौ क्षमा** शक्ता ॥ ६ ॥

> मातृवर्गचरणस्पृशौ मुनेस्तौ प्रपद्य पदवीं महौजसः ।
> रेचतुर्गतिवशात्प्रवर्तिनौ भास्करस्य मधुमाधवाविव ॥ ७ ॥

**मातृवर्गेति** ॥ मातृवर्गस्य चरणान्स्पृशत इति **मातृवर्गचरणस्पृशौ** । कृतमातृवर्गनमस्कारावित्यर्थः । 'स्पृशोऽनुदके क्विन्' (पा. ३।२।५८) इति क्विन्प्रत्ययः । **तौ** महौजसो **मुनेः पदवीं प्रपद्य । महौजसो** भास्करस्य **गतिवशान्मे**षादिराशिषकान्त्यनुसारात्**प्रवर्तिनौ मधुमाधवाविव** चैत्रवैशाखाविव **रेजतुः** । 'फणां च सप्तानाम्' (पा. ६।४।१२५) इति वैकल्पिकावेत्वाभ्यासलोपौ । 'स्याच्चैत्रे चैत्रिको मधुः' इति । 'वैशाखे माधवो राधः' इति चामरः ॥ ७ ॥

> वीचिलोलभुजयोस्तयोर्गतं शैशवाच्चपलमप्यशोभत ।
> तोयदागम इवोद्ध्यभिद्ययोर्नामधेयसदृशं विचेष्टितम् ॥ ८ ॥

**वीचीति** ॥ **विचिलोलभुजयोस्त**रङ्गचञ्चलबाह्वोः । इदं विशेषणं नदोपमानविवक्षयं वेदितव्यम् । **तयोश्चपलं** चञ्चलम**पि गतं** गतिः **शैशवा**द्धेतोर**शोभत** । किमिव ? **तोयदागमे** वर्षासमये । उज्झत्युदकमित्युद्ध्य- । भिनत्ति कूलमिति भिद्यः,

---

पाठा०—१ 'वशात्प्रवर्तिनौ'.

'भिद्योद्ध्यौ नदे' (पा. ३।१।११५) इति क्यबन्तौ निपातितौ । **उद्ध्यभिद्ययोर्नदविशेषयोर्नामधेयसदृशं** नामानुरूपं **विचेष्टितमिव** उदकोज्झन-कूलभेदनरूप-व्यापार इव । समयोस्त्वत्र चापलमपि शोभत इति भावः ॥ ८ ॥

**तौ बलातिबलयोः प्रभावतो विद्ययोः पथि मुनिप्रदिष्टयोः ।**
**मम्लतुर्न मणिकुट्टिमोचितौ मातृपार्श्वपरिवर्तिनाविव ॥ ९ ॥**

**ताविति** ॥ **मणिकुट्टिमोचितौ** मणिबद्धभूमिसंचारोचितौ **तौ मुनिप्रदिष्टयोः** कौशिकेनोपदिष्टयो**र्बलातिबलयोर्विद्ययो**र्बलातिबलाख्ययोर्मन्त्रयोः **प्रभावतः** सामर्थ्या**न्मातृपार्श्वपरिवर्तिनौ** मातृसमीपवर्तिना**विव पथि न मम्लतुः** न म्लानावित्यर्थः । अत्र रामायणश्लोकः (बाल. २३।१८)—'क्षुत्पिपासे न ते राम ! भविष्येते नरोत्तम ! । बलामतिबलां चैव पठतः पथि राघव ! ॥' इति ॥ ९ ॥

**पूर्ववृत्तकथितैः पुराविदः सानुजः पितृसखस्य राघवः ।**
**उह्यमान इव वाहनोचितः पादचारमपि न व्यभावयत् ॥ १० ॥**

**पूर्वेति** ॥ **वाहनोचितः** । **सानुजो राघवः** । **पुराविदः** पूर्ववृत्ताभिज्ञस्य **पितृसखस्य** मुनेः **पूर्ववृत्तकथितैः** पुरावृत्तकथाभि**रुह्यमान इव** वाहनेन प्राप्यमाण इव । वहेर्धातोः कर्मणि शानच् । 'उह्यमानः' इत्यत्र दीर्घादिरपपाठः; दीर्घप्राप्त्यभावात् । **पादचारमपि न व्यभावयन्न** ज्ञातवान् ॥ १० ॥

**तौ सरांसि रसवद्भिरम्बुभिः कूजितैः श्रुतिसुखैः पतत्रिणः ।**
**वायवः सुरभिपुष्परेणुभिश्छायया च जलदाः सिषेविरे ॥ ११ ॥**

**ताविति** ॥ **तौ** राघवौ कर्मभूतौ **सरांसि** कर्तॄणि **रसवद्भि**र्मधुरै**रम्बुभिः सिषेविरे** । **पतत्रिणः** पक्षिणः । सुखयन्तीति सुखानि । पचाद्यच् । श्रुतीनां **सुखानि** । तैः **कूजितैः** । **वायवः सुरभिपुष्परेणुभिः जलदाश्छायया च** । **सिषेविरे** इति सर्वत्र संबध्यते ॥ ११ ॥

**नाम्भसां कमलशोभिनां तथा शाखिनां च न परिश्रमच्छिदाम् ।**
**दर्शनेन लघुना यथा तयोः प्रीतिमापुरुभयोस्तपस्विनः ॥ १२ ॥**

**नेति** ॥ तप एषामस्तीति **तपस्विनः** । 'तपःसहस्राभ्यां विनीनी' (पा. ५।२।१०२) इति विनिप्रत्ययः । **लघुना** । 'क्षिप्रेऽल्पे लघुः' इत्यमरः । **तयोरुभयोः** कर्म-

पाठा०—१ 'विकचपद्मशोभिनाम्'. २ 'न च'.

टिप्प०—1 सुमतिविजयस्तु—'उद्ध्यभिद्ययोः' इति पाठमादृत्य 'उज्झति सर्वं तोयं जलं निक्षिपतीत्युद्ध्यः, भिनत्ति तटमिति भिद्यः, उद्ध्यश्च भिद्यश्च उद्ध्यभिद्यौ, तयोः'—इति व्याचष्टे ।

भूतयोः। दर्शनेन यथा प्रीतिमापुः। तथा कमलशोभिनामम्भसां दर्शनेन नापुः। परिश्रमच्छिदां शाखिनां दर्शनेन च नापुः॥ १२॥

**स्थाणुदग्धवपुषस्तपोवनं प्राप्य दाशरथिरात्तकार्मुकः।**
**विग्रहेण मदनस्य चारुणा सोऽभवत्प्रतिनिधिर्न कर्मणा॥ १३॥**

**स्थाण्विति॥ स आत्तकार्मुकः।** दशरथस्यापत्यं पुमान् **दाशरथी** रामः। 'अत इञ्' (पा. ४।१।९५) इतीञ्प्रत्ययः। **स्थाणुर्हरः।** 'स्थाणुः कीले हरे स्थिरे' इति विश्वः। तेन **दग्धवपुषो मदनस्य तपोवनं प्राप्य चारुणा विग्रहेण** कायेन। 'विग्रहः समरे काये' इति विश्वः। **प्रतिनिधिः** प्रतिकृतिः सदृशो**ऽभवत्, कर्मणा न** पुनः, देहेन मदनसुन्दर इति भावः॥ १३॥

**तौ सुकेतुसुतया खिलीकृते कौशिकाद्विदितशापया पथि।**
**निन्यतुः स्थलनिवेशिताटनी लीलयैव धनुषी अधिज्यताम्॥१४॥**

**तावि्ति॥** अत्र रामायणवचनम् (बाल. २५।१२-१३)—'अगस्त्यः परमक्रुद्धस्ताडकामभिशप्तवान्। पुरुषादी महायक्षी विकृता विकृतानना। इदं रूपमपाहाय दारुणं रूपमस्तु ते॥' इति। तदेतदाह—**विदितशापयेति। कौशिकादा-** ख्यातुः 'आख्यातोपयोगे' (पा. १।४।२९) इत्यपादानात्पञ्चमी। **विदितशापया सुकेतुसुतया** ताडकया **खिलीकृते** पथि। 'खिलमप्रहतं स्थानम्' इति हलायुधः। **तौ** रामलक्ष्मणौ। **स्थले निवेशिते अटनी** धनुःकोटी याभ्यां तौ तथोक्तौ। 'कोटिरस्याटनिः' इत्यमरः। **लीलयैव धनुषी।** अधिकृते ज्ये मौर्व्यौ ययोस्ते अधिज्ये। 'ज्या मौर्वीमातृभूमिषु' इति विश्वः। तयोर्भावस्तत्तामधि**ज्यतां निन्यतु**र्नीतवन्तौ। नयतिर्द्विकर्मकः॥ १४॥

**पाठा०-१** 'स्थलनिवेशवाटनी'. स्थलनिवेशिताटिनी'.

टिप्प०—1 शाखिनां परश्रमच्छिदां श्रमदूरहर्तॄणां इत्यन्वयः। जलवृक्षादपि रामलक्ष्मणयोस्तापसानामतिवल्लभत्वमित्यर्थः,-इति सुमति०।

2 सुकेतोः-सुकेतुर्नाम यक्षः तस्य सुता सुकेतुसुता तया। स्थले निवेशिता स्थापिता अटनिः धनुरग्रभागो याभ्यां तौ स्थलनिवेशितारण वनितावधस्तस्मिन्वनितावधे श्रोणी नितम्बे लम्बीनि लम्बमानानि पुरुषाणामन्त्राण्येव मेखला यस्याः-इति' सुमति०। सुकेतुनामा यक्षस्तस्य सुता ताडका सुन्दासुरभार्या मरीचेन पुत्रेण सहागस्त्यं बाधमाना तच्छापेन राक्षसत्वमवाप्यैनं सदोत्सादयति। तदाकर्ण्य-इति वल्लभः।

ज्यानिनादमथ गृह्णती तयोः प्रादुरास बहुलक्षपाछविः ।
ताडका चलकपालकुण्डला कालिकेव निबिडा बलाकिनी ॥ १५ ॥

**ज्येति** ॥ **अथ तयोर्ज्यानिनादं गृह्णती** जानती । शृण्वतीत्यर्थः । **बहुलक्षपाछविः** कृष्णपक्षरात्रिवर्णा । 'बहुलः कृष्णपक्षे च' इति विश्वः । **चले कपाले** एव **कुण्डले** यस्याः सा तथोक्ता **ताडका** । **निबिडा** सान्द्रा **बलाकिनी** बलाकावती । 'व्रीह्यादिभ्यश्च' (पा. ५।२।११६) इतीनिः । **कालिकेव** घनावलीव । 'कालिका योगिनीभेदे कार्ष्ण्ये गौर्यां घनावलौ' इति विश्वः । **प्रादुरास** प्रादुर्बभूव[1] ॥ १५ ॥

तीव्रवेगधुतमार्गवृक्षया प्रेतचीवरवसा स्वनोग्रया ।
अभ्यभावि भरताग्रजस्तया वात्ययेव पितृकाननोत्थया ॥ १६ ॥

**तीव्रेति** ॥ **तीव्रवेगेन धुताः** कम्पिता **मार्गवृक्षा** यया तथोक्तया । प्रेतचीवराणि वस्ते इति प्रेतचीवरवाः तया **प्रेतचीवरवसा** । वसतेराच्छादनार्थात्क्विप् । **स्वनेन** सिंहनादेनो**ग्रया तया** ताडकया । **पितृकानने** श्मशान **उत्थो**त्पन्ना । 'आतश्चोपसर्गे' (पा. ३।३।१०६) इत्युत्पूर्वात्तिष्ठतेः कर्तरि कप्रत्ययः । **तया वात्ययेव** वातसमूहेनेव । 'पाशादिभ्यो य.' (पा. ४।२।४९) इति यः । **भरताग्रजो** रामो**ऽभ्यभावि** अभिभूतः । कर्मणि लुङ् । तीव्रवेगेत्यादिविशेषणानि वात्यायामपि योज्यानि ॥ १६ ॥

उद्यतैकभुजयष्टिमायतीं श्रोणिलम्बिपुरुषान्त्रमेखलाम् ।
तां विलोक्य वनितावधे घृणां पत्रिणा सह मुमोच राघवः ॥ १७ ॥

**उद्यतेति** ॥ **उद्यत**उन्नमित**एको भुज एव यष्टि**र्यस्यास्ताम् । **आयतीम्** आयान्तीम् । इणो धातो. शतरि 'उगितश्च' (पा. ४।१।६) इति ङीप् । **श्रोणिलम्बिनी पुरुषाणामन्त्राण्येव मेखला** यस्यास्ताम् । इति विशेषणद्वयेनाप्याततायित्व सूचितम् । अत एव ता **विलोक्य राघवो वनितावधे** स्त्रीवधनिमित्ते[2] **घृणां** जुगुप्सां करुणां वा । 'जुगुप्साकरुणे घृणे' इत्यमरः । **पत्रिणे**षुणा **सह** । 'पत्री रोप इषुर्द्वयो.' इत्यमरः । **मुमोच** मुक्तवान् । आततायिवधे मनुः

पाठा०-१ 'अनुगृह्णती'. २ 'तातका'. ३ 'उग्रगन्धया'.

टिप्प०—1 आसेति तिङन्तप्रतिरूपको निपात', अन्यथाऽस्तेर्भूभावेन भाव्यम्; यद्वा,—अस गतिदीप्त्योरित्यस्यानेकार्थित्वात्प्रयोग –इति दिनकर० ।

2 'पुरुषघ्न- स्त्रियो वध्या' इत्युदाहरति-दिनकर० ।

( ८।३५० )—'आततायिनमायान्तं हन्यादेवाविचारयन् । जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ नाततायिवधे दोषो हन्तुर्भवति कश्चन ।' इति ॥ १७ ॥

**यच्चकार विवरं शिलाघने ताडकोरसि स रामसायकः ।**
**अप्रविष्टविषयस्य रक्षसां द्वारतामगमदन्तकस्य तत् ॥ १८ ॥**

**यदिति** ॥ **स रामसायकः शिलाघने** सान्द्रे **ताडकोरसि यद्विवरं** रन्ध्रं **चकार तद्विवरं रक्षसामप्रविष्टविषयस्य** । अप्रविष्टरक्षोदेशस्येत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । 'विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च' इति विश्वः । **अन्तकस्य** यमस्य **द्वारतामगमत्** । इयं प्रथमा रक्षोमृतिरिति भावः ॥ १८ ॥

**बाणभिन्नहृदया निपेतुषी सा स्वकाननभुवं न केवलाम् ।**
**विष्टपत्रयपराजयस्थिरां रावणश्रियमपि व्यकम्पयत् ॥ १९ ॥**

**बाणेति** ॥ **बाणभिन्नहृदया निपेतुषी** निपतिता सती । 'क्वसुश्च' (पा. ३।२।१०७) इति क्वसुप्रत्ययः । 'उगितश्च' (पा. ४।१।६) इति ङीप् । **सा केवलां** एकाम् । 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः' इत्यमरः । **स्वकाननभुवं न व्यकम्पयत्** । किंतु **विष्टपत्रयस्य** लोकत्रयस्य **पराजयेन स्थिरां रावणश्रियमपि** व्यकम्पयत् । ताडकावधश्रवणेन रावणस्यापि भयमुत्पन्नमिति भावः ॥ १९ ॥

अत्र ताडकाया अभिसारिकायाः समाधिरभिधीयते—

**राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।**
**गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ २० ॥**

**रामेति** ॥ **सा** । निशासु चरतीति **निशाचरी** राक्षसी, अभिसारिका च । **दुःसहेन** सोढुमशक्येन । **राम** एव **मन्मथः** । अन्यत्र,-अभिरामो मन्मथः । तस्य **शरेण हृदय** उरसि मनसि च । 'हृदयं मनउरसोः' इति विश्वः । **ताडिता** विद्धा **गन्धवद्**दुर्गन्धि यद्**रुधिरम**सृक् तदेव **चन्दनं** तेनो**क्षिता** छिप्ता । अपरत्र,-गन्धवती सुगन्धिनी ये रुधिरचन्दने कुङ्कुमचन्दने ताभ्यामुक्षिता, 'रुधिरे कुङ्कुमासृजोः' इत्युभयत्रापि विश्वः । **जीवितेश**स्यान्तकस्य, प्राणेश्वरस्य च । **वसतिं जगाम** ॥ २० ॥

**नैर्ऋतघ्नमथ मन्त्रवन्मुनेः प्रापदस्त्रमवदानतोषितात् ।**
**ज्योतिरिन्धननिपाति भास्करात्सूर्यकान्त इव ताडकान्तकः ॥ २१ ॥**

पाठा०–१ 'ताटकोरसि'. २ 'केवलम्'. ३ 'ताटकान्तकः'.

**नैर्ऋतेति** ॥ अथानन्तरं **ताडकान्तको** रामः । **अवदानं** पराक्रमः । 'पराक्रमोऽवदानं स्यात्' इति भागुरिः । **तेन तोषितात् मुनेः** । नैर्ऋतान्राक्षसान्हन्तीति **नैर्ऋतघ्नम्** । 'अमनुष्यकर्तृके च' (पा. ३।२।५३) इति टक् । मन्त्रवन्मन्त्रयुक्त-**मस्त्रम्** । **सूर्यकान्तो** मणिविशेषो **भास्करात्** दिन्धनानि निपातयतीतीन्धन**नि-पाति** काष्ठदाहकं **ज्योतिरिव** । **प्रापत्** प्राप्तवान् ॥ २१ ॥

**वामनाश्रमपदं ततः परं पावनं श्रुतमृषेरुपेयिवान् ।**
**उन्मनाः प्रथमजन्मचेष्टितान्यस्मरन्नपि बभूव राघवः ॥ २२ ॥**

**वामनेति** ॥ **ततः परं राघवः । ऋषेः** कौशिकाद्‌दाख्यातुः **श्रुतं पावनं** शोधनं **वामनस्य** स्वपूर्वावतारविशेषस्याश्रम**पदमुपेयिवान्** उपगतः सन् । 'उपे-यिवाननाश्वाननूचानश्च' (पा.३।२।१०९) इति निपातः । **प्रथमजन्मचेष्टितानि** राम-वामनयोरैक्यात्स्मृतियोग्यान्यपि रामस्याज्ञानावतारत्वेन संस्कारदौर्बल्याद**स्मर-न्नपि** । **उन्मना** उत्सुको **बभूव** ॥ २२ ॥

**आससाद मुनिरात्मनस्ततः शिष्यवर्गपरिकल्पितार्हणम् ।**
**बद्धपल्लवपुटाञ्जलिद्रुमं दर्शनोन्मुखमृगं तपोवनम् ॥ २३ ॥**

**आससादेति** ॥ **ततो मुनिः । शिष्यवर्गेण परिकल्पिता** सज्जिताऽ**र्हणा** पूजासामग्री यस्मिंस्तत्तथोक्तम् । **बद्धाः पल्लवपुटा एवाञ्जलयो** यैस्ते तथाभूता **द्रुमा** यस्मिंस्तत्तथोक्तम् । **दर्शनेन** मुनिदर्शनेनो**न्मुखा मृगा** यस्मिंस्तत्तत् । **आत्मनस्तपोवनमाससाद** । एतेन विशेषणत्रयेणातिथिसत्कारताच्छील्यविनय-शान्तयः सूचिताः ॥ २३ ॥

**तत्र दीक्षितमृषिं ररक्षतुर्विघ्नतो दशरथात्मजौ शरैः ।**
**लोकमन्धतमसात्क्रमोदितौ रश्मिभिः शशिदिवाकराविव ॥ २४ ॥**

**तत्रेति** ॥ **तत्र** तपोवने **दशरथात्मजौ दीक्षितं** दीक्षासंस्कृत**मृषिं शरै-र्विघ्नतो** विघ्नेभ्यः **क्रमेण** पर्यायेण रात्रि-दिवसयो**रुदितौ शशि-दिवाकरौ रश्मिभिरन्धतमसा**द्गाढध्वान्तात् । 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः । 'अवस-मन्धेभ्यस्तमसः' (पा. ५।४।७९) इति समासान्तोऽच्प्रत्ययः । **लोकमिव । ररक्षतुः** । रक्षणप्रवृत्तावभूतामित्यर्थः ॥ २४ ॥

पाठा०—१ 'दर्शनोत्सुकं'.

टिप्प०—1 चन्द्रसूर्यावन्धकारादिमभिः किरणैः कृत्वा जनं रक्षतः, तथा तौ दशरथसुतौ शशिदिवाकरक्रमोदितावनुक्रमेणोदितावित्यन्वयः—इति सुमतिः ।

वीक्ष्य वेदिमथ रक्तबिन्दुभिर्बन्धुजीवपृथुभिः प्रदूषिताम् ।
संभ्रमोऽभवदपोढकर्मणामृत्विजां च्युतविकङ्कतस्रुचाम् ॥ २५ ॥

वीक्ष्येति ॥ अथ बन्धुजीवपृथुभिर्बन्धुजीवककुसुमस्थूलैः । 'रक्तकस्तु बन्धूको बन्धुजीवकः' इत्यमरः । रक्तबिन्दुभिः प्रदूषितामुपहतां वेदिं वीक्ष्य । अपोढकर्मणां त्यक्तव्यापाराणां च्युता विकङ्कतस्रुचो येभ्यस्तेषामृत्विजां याजकानां संभ्रमोऽभवत् । 'विकङ्कत'ग्रहणं खदिराद्युपलक्षणम् । स्रुवादीनां खदिरादिप्रकृतिकत्वात् । स्रुगादिपात्रस्यैव विकङ्कतप्रकृतिकत्वात् । 'विकङ्कतः स्रुवा वृक्षः' इत्यमरः । यद्वा,–स्रुवाख्यस्य विकङ्कतप्रकृतिकत्वमस्तु; उभयत्रापि शास्त्रसंभवात् । यथाह भगवानापस्तम्बः–'खादिरः स्रुवः पर्णमयी जुहूराश्वत्थ्युपभृद्वैकङ्कतीः स्रुचो वा' इति ॥ २५ ॥

उन्मुखः सपदि लक्ष्मणाग्रजो बाणमाश्रयमुखात्समुद्धरन् ।
रक्षसां बलमपश्यदम्बरे गृध्रपक्षपवनेरितध्वजम् ॥ २६ ॥

उन्मुख इति ॥ सपदि लक्ष्मणाग्रजो रामो बाणमाश्रयमुखात्तूणीरमुखात् समुद्धरन् । उन्मुख ऊर्ध्वमुखोऽम्बरे । गृध्रपक्षपवनैरीरिताः कम्पिता ध्वजा यस्य तत्तथोक्तम् । रक्षसां दुर्निमित्तसूचनमेतत् । तदुक्तं शकुनार्णवे—'आसन्नमृत्योर्निकटे चरन्ति गृध्रादयो मूर्ध्नि गृहोर्ध्वभागे' इति । रक्षसां बलमपश्यत् ॥ २६ ॥

तत्र यावधिपती मखद्विषां तौ शरव्यमकरोत्स नेतरान् ।
किं महोरगविसर्पिविक्रमो राजिलेषु गरुडः प्रवर्तते ? ॥ २७ ॥

तत्रेति ॥ स रामः । तत्र रक्षसां बले यौ मखद्विषामधिपती तौ सुबाहुमारीचौ शरव्यं लक्ष्यमकरोत् । 'वेध्यं लक्ष्यं शरव्यं च' इति हलायुधः । इतरान्नाकरोत् । तथा हि-महोरगविसर्पिविक्रमो गरुडो गरुत्मान् राजिलेषु जलव्यालेषु प्रवर्तते किम् ? न प्रवर्तत इत्यर्थः । 'अलगर्दो जलव्यालः समौ राजिलडुण्डुभौ' इत्यमरः ॥ २७ ॥

सोऽस्त्रमुग्रजवमस्त्रकोविदः संदधे धनुषि वायुदैवतम् ।
तेन शैलगुरुमप्यपातयत्पाण्डुपत्रमिव ताडकासुतम् ॥ २८ ॥

पाठा०– १ 'ताटकासुतम्'.

टिप्प०—1 द्विमुखो निर्विषः सर्पो राजिलः । महोरगेषु तक्षकादिषु प्रसरणशीलो विक्रमो यस्य स गरुडो राजिलेषु डुण्डुभेषु किं प्रवर्तते ?—इति दिनकर० ।

स इति ॥ अस्त्रकोविदोऽस्त्रज्ञः स राम उग्रजवमुत्कटजवं वायुदैवतं वायुर्दैवता यस्य तद्वायव्यमस्त्रं धनुषि संदधे संहितवान् । कर्तरि लिट् । तेनास्त्रेण शैलवद्गुरुमपि ताडकासुतं मारीचम् । पाण्डुपत्रमिव । परिणतपर्णमिवेत्यर्थः । अपातयत् पातितवान् ॥ २८ ॥

यः सुबाहुरिति राक्षसोऽपरस्तत्र तत्र विससर्प मायया ।
तं क्षुरप्रशकलीकृतं कृती पत्रिणां व्यभजदाश्रमाद्बहिः ॥ २९ ॥

य इति ॥ सुबाहुरिति योऽपरो राक्षसस्तत्र तत्र मायया शाम्बरविद्यया विससर्प सञ्चचार । क्षुरप्रैः शकलीकृतं खण्डीकृतं तं सुबाहुं कृती कुशलो रामः । 'कृती च कुशलः समौ' इत्यमरः । आश्रमाद्बहिः पत्रिणां पक्षिणाम् । 'पत्रिणौ शरपक्षिणौ' इत्यमरः । व्यभजत् । विभज्य दत्तवानित्यर्थः ॥ २९ ॥

इत्यपास्तमखविघ्नयोस्तयोः सांयुगीनमभिनन्द्य विक्रमम् ।
ऋत्विजः कुलपतेर्यथाक्रमं वाग्यतस्य निरवर्तयन्क्रियाः ॥ ३० ॥

इतीति ॥ इत्यपास्तमखविघ्नयोस्तयो राघवयोः । संयुगे रणे साधुः सांयुगीनस्तम् । 'प्रतिजनादिभ्यः खञ्' ( पा. ४।४।९९ ) इति खञ्प्रत्ययः । 'सांयुगीनो रणे साधुः' इत्यमरः । विक्रममभिनन्द्य ऋत्विजो याजकाः । वाचि यतो वाग्यतो मौनी तस्य कुलपतेर्मुनिकुलेश्वरस्य क्रियाः क्रतुक्रिया यथाक्रमं निरवर्तयन् निष्पादितवन्तः ॥ ३० ॥

तौ प्रणामचलकाकपक्षकौ भ्रातरावभृथाप्लुतो मुनिः ।
आशिषामनुपदं समस्पृशद्दर्भपाटिततलेन पाणिना ॥ ३१ ॥

ताविति ॥ अवभृथे दीक्षान्त आप्लुतः स्नातो मुनिः । 'दीक्षान्तोऽवभृथो यज्ञे' इत्यमरः । प्रणामेन चलकाकपक्षकौ चञ्चलचूडौ तौ भ्रातरावाशिषामनुपदमन्वग्दर्भपाटिततलेन कुशक्षतान्तःप्रदेशेन । पवित्रेणेत्यर्थः । पाणिना समस्पृशत् संस्पृष्टवान् । स्नतोपादिति भावः ॥ ३१ ॥

तं न्यमन्त्रयत संभृतक्रतुर्मैथिलः स मिथिलां व्रजन्वशी ।
राघवावपि निनाय बिभ्रतौ तद्धनुःश्रवणजं कुतूहलम् ॥ ३२ ॥

तमिति ॥ संभृतक्रतुः संकल्पितसंभारो मिथिलायां भवो मैथिलो जनकस्तं विश्वामित्रं न्यमन्त्रयताहूतवान् । वशी स मुनिर्मिथिलां जनकनगरीं व्रजन्, तस्य जनकस्य यज्ञानुसारच्छ्रवणजं कुतूहलं बिभ्रतौ राघवावपि निनाय नीतवान् ॥ ३२ ॥

तैः शिवेषु वसतिर्गताध्वभिः सायमाश्रमतरुष्वगृह्यत ।
येषु दीर्घतपसः परिग्रहो वासवक्षणकलत्रतां ययौ ॥ ३३ ॥

तैरिति ॥ गताध्वभिस्तैस्त्रिभिः सायं शिवेषु रम्येष्वाश्रमतरुषु वसतिः स्थानमगृह्यत । येष्वाश्रमतरुषु दीर्घतपसो गौतमस्य परिग्रहः पत्नी । 'पत्नी-परिजनादानमूलशापाः परिग्रहाः' इत्यमरः । अहल्येति यावत् । वासवस्येन्द्रस्य क्षणकलत्रतां ययौ ॥ ३३ ॥

प्रत्यपद्यत चिराय यत्पुनश्चारु गौतमवधूः शिलामयी ।
स्वं वपुः स किल किल्बिषच्छिदां रामपादरजसामनुग्रहः ॥ ३४ ॥

प्रत्यपद्यतेति ॥ शिलामयी भर्तृशापाच्छिलात्वं प्राप्ता गौतमवधूरहल्या चारु स्वं वपुश्चिराय पुनः प्रत्यपद्यत प्राप्तवती । यत् स किल्बिषच्छिदां पापहारिणाम् । 'पापं किल्बिषकल्मषम्' इत्यमरः । रामपादरजसामनुग्रहः किल प्रसादः किलेति श्रूयते ॥ ३४ ॥

राघवान्वितमुपस्थितं मुनिं तं निशम्य जनको जनेश्वरः ।
अर्थकामसहितं सपर्यया देहवद्धमिव धर्ममभ्यगात् ॥ ३५ ॥

राघवेति ॥ राघवाभ्यामन्वितं युक्तमुपस्थितमागतं तं मुनिं जनको जनेश्वरो निशम्य । अर्थकामाभ्यां सहितं देहवद्धं बद्धदेहम् । मूर्तिमन्त-मित्यर्थः । वाहिताग्न्यादित्वात्साधुः । धर्ममिव । सपर्ययाऽभ्यगात् प्रत्युद्गत-वान् ॥ ३५ ॥

पाठा०—१ 'या'. २ 'सकलकल्मषच्छिदाम्'. ३ 'ऋषिम्'. ४ 'सहितः'. ५ 'स पर्ययात्'.

टिप्प०—1 कथेयं बालकाण्डतो( स० ४९ ) ऽनुसंधातव्या । पाद्मेऽपि—'शापदग्धा पुरा भर्त्रा राम! शक्रापराधतः । अहल्यास्या शिला जपे शतलिङ्गः कृतः स्मराद्' इति ।

2 यथा चोक्तं बालकाण्डे—'तथा शप्त्वा च वै शक्रं भार्यामपि च शप्तवान् । इह वर्षसह-स्राणि बहूनि निवसिष्यसि ॥ यदा त्वेतद्वनं घोरं रामो दशरथात्मजः ॥ आगमिष्यति दुर्धर्ष-स्तदा पूता भविष्यति ॥' इति ।

तौ विदेहनगरीनिवासिनां गां गताविव दिवः पुनर्वसू ।
मन्यते स पिबतां विलोचनैः पक्ष्मपातमपि वञ्चनां मनः ॥ ३६ ॥

ताविति ॥ दिवः सुरवर्त्मन आकाशात् । 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः । गां भुवं गतौ । 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्यमरः । पुनर्वसू इव तन्नामकनक्षत्राधिदेवते इव स्थितौ । तौ राघवौ विलोचनैः पिबताम् । अत्यास्थया पश्यतामित्यर्थः । विदेहनगरी मिथिला । तन्निवासिनां मनः कर्तृ पक्ष्मपातं निमेषमपि तद्दर्शनप्रतिबन्धकत्वाद्वञ्चनां विडम्बनां मन्यते स्म मेने । 'लट् स्मे' ( पा. ३।२।११८ ) इति भूतार्थे लट् ॥ ३६ ॥

यूपवत्यवसिते क्रियाविधौ कालवित्कुशिकवंशवर्धनः ।
राममिष्वसनदर्शनोत्सुकं मैथिलाय कथयांबभूव सः ॥ ३७ ॥

यूपेति ॥ यूपवति क्रियाविधौ कर्मानुष्ठाने । क्रतावित्यर्थः । अवसिते समाप्ते सति कालविदवसरज्ञः कुशिकवंशवर्धनः स मुनी रामम् । अस्यते-ऽनेनेत्यसनम्, इषूणामसनमिष्वसनं चापम् । तस्य दर्शने उत्सुकं मैथिलाय जनकाय कथयांबभूव कथितवान् ॥ ३७ ॥

तस्य वीक्ष्य ललितं वपुः शिशोः पार्थिवः प्रथितवंशजन्मनः ।
स्वं विचिन्त्य च धनुर्दुरानमं पीडितो दुहितृशुल्कसंस्थया ॥ ३८ ॥

तस्येति ॥ पार्थिवो जनकः । प्रथितवंशे जन्म यस्य तस्य तथोक्तस्य । एतेन वरसंपत्तिरुक्ता । शिशोस्तस्य रामस्य ललितं कोमलं वपुर्वीक्ष्य । स्वं स्वकीयं दुरानममानमयितुमशक्यम् । नमेर्ण्यन्तात्खल् । धनुर्विचिन्त्य च दुहितृशुल्कं कन्यामूल्यं जामातृदेयम् । 'शुल्कं घट्टादिदेये स्याज्जामातुर्धनपकेऽपि च' इति विश्वः । तस्य धनुर्भङ्गरूपस्य संस्थया स्थित्या । 'संस्था स्थितौ शरे नाशे' इति विश्वः । पीडितो बाधितः । शिशुना रामेण दुष्करमिति दुःखित इति भावः ॥ ३८ ॥

पाठा०-१ 'दुरासदम्'.

टिप्प०—1 तारादृष्यापेक्षया 'पुनर्वसू' इति द्विवचननिर्देशः-इति दिनकर० । यथा सर्वनक्षत्रेषु पुनर्वसु-पुष्यौ शोभमानौ तथैवैतौ रामलक्ष्मणावपि-इति सुमति० ।

3 नृपः स्यातवंशे जातस्य शिशोस्तस्य रामस्य ललितं मनोज्ञं वपुर्दृष्ट्वा, दुःखेनानम्यते दुरानमं स्वं धनुर्ज्ञात्वा च दुहितुः सीतायाः शुल्को धनुर्नमनरूपं विवाहार्थं वरमाद्यं वस्तु तस्य या संस्था व्यवस्था तया खिन्नोऽभूत् । जनकेन किल प्रागेवं प्रख्यापित-यः शङ्करेश्वरं धनुर्भङ्क्ष्यति स एव सीतां परिणेष्यतीति इत्येवंरूपः शुल्कः-इति दिनकर० ।

3 भग्नो रामेण धनुर्भंमनं नाङ्गीकरोतीति भावः-इति दिनकर० ।

**तमिति** ॥ संभृतक्रतुः संकल्पितसंभारो मिथिलायां भवो **मैथिलो** जनकस्तं विश्वामित्रं **न्यमन्त्रयताहूतवान्** । **वशी स मुनिर्मिथिलां** जनकनगरीं **व्रजन्**, **तस्य** जनकस्य यद्धनुस्तच्छ्रवणजं **कुतूहलं बिभ्रतौ राघवावपि निनाय** नीतवान् ॥ ३२ ॥

> **तैः शिवेषु वसतिर्गताध्वभिः सायमाश्रमतरुष्वगृह्यत ।**
> **येषु दीर्घतपसः परिग्रहो वासवक्षणकलत्रतां ययौ ॥ ३३ ॥**

**तैरिति** ॥ गताध्वभिस्तैस्त्रिभिः **सायं शिवेषु** रम्येष्वाश्रम**तरुषु वसतिः** स्थानम**गृह्यत** । **येष्वाश्रमतरुषु दीर्घतपसो** गौतमस्य **परिग्रहः** पत्नी । 'पत्नी-परिजनादानमूलशापाः परिग्रहाः' इत्यमरः । अहल्येति यावत् । **वासव**स्येन्द्रस्य **क्षणकलत्रतां ययौ** ॥ ३३ ॥

> **प्रत्यपद्यत चिराय यत्पुनश्चारु गौतमवधूः शिलामयी ।**
> **स्वं वपुः स किल किल्बिषच्छिदां रामपादरजसामनुग्रहः ॥ ३४ ॥**

**प्रत्यपद्यतेति** ॥ **शिलामयी** भर्तृशापाच्छिलात्वं प्राप्ता **गौतमवधू**रहल्या **चारु स्वं वपुश्चिराय पुनः प्रत्यपद्यत** प्राप्तवती । **यत् स किल्बिषच्छिदां** पापहारिणाम् । 'पापं किल्बिषकल्मषम्' इत्यमरः । **रामपादरजसामनुग्रहः किल** प्रसादः किलेति श्रूयते ॥ ३४ ॥

> **राघवान्वितमुपस्थितं मुनिं तं निशम्य जनको जनेश्वरः ।**
> **अर्थकामसहितं सपर्यया देहवद्धमिव धर्ममभ्यगात् ॥ ३५ ॥**

**राघवेति** ॥ **राघवा**भ्याम**न्वितं** युक्त**मुपस्थित**मागतं **तं मुनिं जनको जनेश्वरो निशम्य** । **अर्थकामा**भ्यां **सहितं देहवद्धं** बद्धदेहम् । मूर्तिमन्तमित्यर्थः । वाहिताग्न्यादित्वात्साधुः । **धर्ममिव** । **सपर्ययाऽभ्यगात्** प्रत्युद्गतवान् ॥ ३५ ॥

---

**पाठा०**—१ 'या'. २ 'सकलकल्मषच्छिदाम्'. ३ 'ऋषिम्'. ४ 'सहितः'. ५ 'स पर्ययाव'.

---

**टिप्प०**—1 कथेयं बालकाण्डतो( स० ४९ ) ऽनुसंधातव्या । पाद्मेऽपि—'शापदग्धा पुरा भर्त्रा राम ! शक्रापराधतः । अहल्याख्या शिला जज्ञे शतलिङ्गः कृतः स्वराट्' इति ।

2 यथा चोक्तं बालकाण्डे—'तथा शप्त्वा च वै शक्रं भार्यामपि च शप्तवान् । इह वर्षसहस्राणि बहूनि निवसिष्यसि ॥ यदा त्वेतद्वनं घोरं रामो दशरथात्मजः ॥ आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि ॥' इति ।

तौ विदेहनगरीनिवासिनां गां गताविव दिवः पुनर्वसू ।
मन्यते स्म पिवतां विलोचनैः पक्ष्मपातमपि वञ्चनां मनः ॥ ३६ ॥

ताविति ॥ दिवः सुरवर्त्मन आकाशात् । 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः । गां भुवं गतौ । 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्यमरः । पुनर्वसू इव तन्नामकनक्षत्राधिदेवते इव स्थितौ । तौ राघवौ विलोचनैः पिवताम् । अत्यास्थया पश्यतामित्यर्थः । विदेहनगरी मिथिला । तन्निवासिनां मनः कर्तृ पक्ष्मपातं निमेषमपि तद्दर्शनप्रतिबन्धकत्वाद्वञ्चनां विडम्बनां मन्यते स्म मेने । 'लट् स्मे' ( पा. ३।२।११८ ) इति भूतार्थे लट् ॥ ३६ ॥

यूपवत्यवसिते क्रियाविधौ कालवित्कुशिकवंशवर्धनः ।
राममिष्वसनदर्शनोत्सुकं मैथिलाय कथयांबभूव सः ॥ ३७ ॥

यूपेति ॥ यूपवति क्रियाविधौ कर्मानुष्ठाने । क्रतावित्यर्थः । अवसिते समाप्ते सति कालविदवसरज्ञः कुशिकवंशवर्धनः स मुनी रामम् । अस्यतेऽनेनेत्यसनम्, इषूणामसनमिष्वसनं चापम् । तस्य दर्शने उत्सुकं मैथिलाय जनकाय कथयांबभूव कथितवान् ॥ ३७ ॥

तस्य वीक्ष्य ललितं वपुः शिशोः पार्थिवः प्रथितवंशजन्मनः ।
स्वं विचिन्त्य च धनुर्दुरानमं पीडितो दुहितृशुल्कसंस्थया ॥ ३८ ॥

तस्येति ॥ पार्थिवो जनकः । प्रथितवंशे जन्म यस्य तस्य तथोक्तस्य । एतेन वरसंपत्तिरुक्ता । शिशोस्तस्य रामस्य ललितं कोमलं वपुर्वीक्ष्य । स्वं स्वकीयं दुरानममानमयितुमशक्यम् । नमेर्ण्यन्तात्खल् । धनुर्विचिन्त्य च दुहितृशुल्कं कन्यामूल्यं जामातृदेयम् । 'शुल्कं घट्टादिदेये स्याज्जामातुर्वन्धकेऽपि च' इति विश्वः । तस्य धनुर्भङ्गरूपस्य संस्थया स्थित्या । 'संस्था स्थितौ शरे नाशे' इति विश्वः । पीडितो बाधितः । शिशुना रामेण दुष्करमिति दुःखित इति भावः ॥ ३८ ॥

---

पाठा०-१ 'दुरासदम्'.

---

टिप्प०—1 तारादयापेक्षया 'पुनर्वसू' इति द्विवचननिर्देशः-इति दिनकर० । यथा सर्वनक्षत्रेषु पुनर्वसु-पुष्यौ शोभमानौ तथैवैतौ रामलक्ष्मणावपि-इति सुमति० ।

2 नृपः ख्यातवंशे जातस्य शिशोस्तस्य रामस्य ललितं मनोज्ञं वपुर्दृष्ट्वा, दुःखेनानन्यते दुरानमं स्वं धनुश्चिन्त्या च दुहितुः सीतायाः शुल्को धनुर्नमनरूपं विवाहार्थं वरग्राह्यं वस्तु तस्य या संस्था व्यवस्था तया खिन्नोऽभूत् । जनकेन किल प्रागेवं प्रत्यश्रावि-यः शम्भुवं धनुर्भङ्क्ष्यति स एव सीतां परिणेष्यतीति इत्थंरूपः शुल्कः-इति दिनकर० ।

3 अतो रामेण धनुर्नमनं नाङ्गीकरिष्यतीति भावः-इति दिनकर० ।

विद्रुतं पलायितं क्रतुमृगमनुसरति । ताच्छील्ये णिनिः । तं विद्रुतक्रतुमृगानुसारिणं बाणमसृजन्मुमोच ॥ ४४ ॥

आततज्यमकरोत्स संसदा विस्मयस्तिमितनेत्रमीक्षितः ।
शैलसारमपि नातियत्नतः पुष्पचापमिव पेशलं स्मरः ॥ ४५ ॥

आततेति ॥ स रामः संसदा सभया विस्मयेन स्तिमिते नेत्रे यस्मिन्कर्मणि तद्यथा स्यात्तथेक्षितः सन् । शैलस्येव सारो यस्य तच्छैलसारमपि धनुः । स्मरः पेशलं कोमलं पुष्पचापमिव । नातियत्नतो नातियत्नात् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । आततज्यमधिज्यम् । अकरोत् ॥ ४५ ॥

भज्यमानमतिमात्रकर्षणात्तेन वज्रपरुषस्वनं धनुः ।
भार्गवाय दृढमन्यवे पुनः क्षत्रमुद्यतमिव न्यवेदयत् ॥ ४६ ॥

भज्यमानमिति ॥ तेन रामेण । अतिमात्रकर्षणाद्भज्यमानम्, अत एव वज्रपरुषस्वनं । वज्रमिव परुषः स्वनो यस्य तत् । धनुः कर्तृ । दृढमन्यवे दृढक्रोधाय । 'मन्युः क्रोधे क्रतौ दैन्ये' इति विश्वः । भार्गवाय क्षत्रं क्षत्रकुलं पुनरुद्यतमिति न्यवेदयदिव ज्ञापयामासेव ॥ ४६ ॥

दृष्टसारमथ रुद्रकार्मुके वीर्यशुल्कमभिनन्द्य मैथिलः ।
राघवाय तनयामयोनिजां रूपिणीं श्रियमिव न्यवेदयत् ॥ ४७ ॥

दृष्टेति ॥ अथ मैथिलो जनको रुद्रकार्मुके दृष्टः सारः स्थिरांशो यस्य तद्दृष्टसारम् । 'सारो बले स्थिरांशे च' इत्यमरः । वीर्यमेव शुल्कम् । धनुर्भङ्गरूपमित्यर्थः । अभिनन्द्य । राघवाय रामाय । अयोनिजां देवयजनसंभवां तनयां सीतां रूपिणीं श्रियमिव साक्षाल्लक्ष्मीमिव न्यवेदयदर्पितवान् । वाचेति शेषः ॥ ४७ ॥

पाठा०–१ 'आत्तसज्जम्'. २ 'च'. ३ 'कोमलम्'. ४ 'पार्थिवः', 'स्वां ददौ'. ५ 'इति'. ६ 'अमरद्युतिः'.

तं तु यज्ञं तथारूपं गच्छन्तमुपलभ्य सः । धनुरादाय बाणेन तदान्वसरत प्रभुः' इति ।

2 यथा स्मरः कन्दर्पः पेशलं पुष्पचापं कुसुमकार्मुकमाततज्यं करोति–इति वल्लभः ।

3 प्राक् निःशेषीकृताः क्षत्रियाः पुनरप्युदिक्रमा इति चापेन निवेदितमिति भावः–इति शिशु० ।

उक्तमेवार्थं सोपस्कारमाह—

मैथिलः सपदि सत्यसंगरो राघवाय तनयामयोनिजाम् ।
संनिधौ द्युतिमतस्तपोनिधेरग्निसाक्षिक इवातिसृष्टवान् ॥ ४८ ॥

मैथिल इति ॥ सत्यसंगरः सत्यप्रतिज्ञः । 'अथ प्रतिज्ञाजिसंविदापत्सु संगरः' इत्यमरः । मैथिलो राघवाय । अयोनिजां तनयां द्युतिमतस्तेजस्विनस्तपोनिधेः कौशिकस्य संनिधौ । अग्निः साक्षी यस्य सोऽग्निसाक्षिकः । 'शेषाद्विभाषा' (पा. ५।४।१५४) इति कप्प्रत्ययः । स इव । सपद्यतिसृष्टवान् दत्तवान् ॥ ४८ ॥

प्राहिणोच्च महितं महाद्युतिः कोसलाधिपतये पुरोधसम् ।
भृत्यभावि दुहितुः परिग्रहाद्दिश्यतां कुलमिदं निमेरिति ॥ ४९ ॥

प्राहिणोदिति ॥ महाद्युतिर्जनको महितं पूजितं पुरोधसं पुरोहितं कोसलाधिपतये दशरथाय प्राहिणोत् प्रहितवांश्च । किमिति ? निमिर्नाम जनकानां पूर्वजः कश्चित् । इदं निमेः कुलं दुहितुः सीतायाः परिग्रहात् स्नुषात्वेन स्वीकाराद्धेतोः । भृत्यस्य भावो भृत्यत्वम् । सोऽस्यास्तीति भृत्यभावि दिश्यतामनुमन्यतामिति ॥ ४९ ॥

---

पाठा०— १ 'अग्निसाक्षिकम्'. २ 'महाद्युतिम्'. ३ 'दृश्यताम्'.

विद्रुतं पलायितं क्रतुमृगमनुसरति । ताच्छील्ये णिनिः । तं विद्रुतक्रतुमृगानुसारिणं बाणमसृजन्मुमोच ॥ ४४ ॥

आततज्यमकरोत्स संसदा विस्मयस्तिमितनेत्रमीक्षितः ।
शैलसारमपि नातियत्नतः पुष्पचापमिव पेशलं स्मरः ॥ ४५ ॥

आततेति ॥ स राम संसदा सभया विस्मयेन स्तिमिते नेत्रे यस्मिन्कर्मणि तद्यथा स्यात्तथेक्षितः सन् । शैलस्येव सारो यस्य तच्छैलसारमपि धनुः । स्मरः पेशलं कोमलं पुष्पचापमिव । नातियत्नतो नातियत्नात् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । आततज्यमधिज्यम् । अकरोत् ॥ ४५ ॥

भज्यमानमतिमात्रकर्षणात्तेन वज्रपरुषस्वनं धनुः ।
भार्गवाय दृढमन्यवे पुनः क्षत्रमुद्यतमिव न्यवेदयत् ॥ ४६ ॥

भज्यमानमिति ॥ तेन रामेण । अतिमात्रकर्षणाद्भज्यमानम्, अत एव वज्रपरुषस्वनं । वज्रमिव परुष स्वनो यस्य तत् । धनु कर्तृ । दृढमन्यवे दृढक्रोधाय । 'मन्यु क्रोधे क्रतौ दैन्ये' इति विश्व । भार्गवाय क्षत्रं क्षत्रकुलं पुनरुद्यतमिति न्यवेदयदिव ज्ञापयामासेव ॥ ४६ ॥

दृष्टसारमथ रुद्रकार्मुके वीर्यशुल्कमभिनन्द्य मैथिलः ।
राघवाय तनयामयोनिजां रूपिणीं श्रियमिव न्यवेदयत् ॥ ४७ ॥

दृष्टेति ॥ अथ मैथिलो जनको रुद्रकार्मुके दृष्ट सार स्थिरांशो यस्य तद्दृष्टसारम् । 'सारो बले स्थिरांशे च' इत्यमर । वीर्यमेव शुल्कम् । धनुर्भङ्गरूपमित्यर्थ । अभिनन्द्य । राघवाय रामाय । अयोनिजां देवयजनसंभवां तनयां सीता रूपिणीं श्रियमिव साक्षाल्लक्ष्मीमिव न्यवेदयदर्पितवान् । वाचेति शेष ॥ ४७ ॥

पाठा०–१ 'आत्तसज्यम्'. २ 'च'. ३ 'कोमलम्'. ४ 'पार्थिव.', 'स्वा ददौ'. ५ 'इति'. ६ 'अमरद्युति '.

2 यथा स्मर कन्दर्प पेशल पुष्पचाप कुसुमकार्मुकमाततज्यं करोति–इति वल्लभ ।
3 प्राक् नि शेषीकृता क्षत्रिया पुनरुद्यदिक्रमा इति चापेन निवेदितमिति भाव–इति शिशु० ।

उक्तमेवार्थं सोपस्कारमाह—

मैथिलः सपदि सत्यसंगरो राघवाय तनयामयोनिजाम् ।
संनिधौ द्युतिमतस्तपोनिधेरग्निसाक्षिक इवातिसृष्टवान् ॥ ४८ ॥

मैथिल इति ॥ सत्यसंगरः सत्यप्रतिज्ञः । 'अथ प्रतिज्ञाजिसंविदापत्सु संगरः' इत्यमरः । मैथिलो राघवाय । अयोनिजां तनयां द्युतिमतस्तेजस्विनस्तपोनिधेः कौशिकस्य संनिधौ । अग्निः साक्षी यस्य सोऽग्निसाक्षिकः । 'शेषाद्विभाषा' (पा. ५।४।१५४) इति कप्प्रत्ययः । स इव । सपद्यतिसृष्टवान् दत्तवान् ॥ ४८ ॥

प्राहिणोच्च महितं महाद्युतिः कोसलाधिपतये पुरोधसम् ।
भृत्यभावि दुहितुः परिग्रहाद्दिश्यतां कुलमिदं निमेरिति ॥ ४९ ॥

प्राहिणोदिति ॥ महाद्युतिर्जनको महितं पूजितं पुरोधसं पुरोहितं कोसलाधिपतये दशरथाय प्राहिणोत् प्रहितवांश्च । किमिति ? निमिर्नाम जनकानां पूर्वजः कश्चित् । इदं [1]निमेः कुलं,दुहितुः सीतायाः परिग्रहात् स्नुषात्वेन स्वीकाराद्धेतोः । भृत्यस्य भावो भृत्यत्वम् । सोऽस्यास्तीति भृत्यभावि दिश्यतामनुमन्यतामिति ॥ ४९ ॥

---

पाठा०— १ 'अग्निसाक्षिकम्'. २ 'महाद्युतिम्'. ३ 'दृश्यताम्'.

---

टिप्प०—1 यथोक्तं बालकाण्डे (स. ६०) 'तदेतद्देवदेवस्य धनूरत्नं महात्मनः । न्यासभूतं तदा न्यस्तमस्माकं पूर्वजे विभो ॥ अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता ततः । क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता ॥ भूतलादुत्थिता सा तु व्यवर्धत ममात्मजा । वीर्यशुल्केति मे कन्या स्थापितेयमयोनिजा ॥' इति ।

2 सुमतिविजयस्तु—'नमेः कुलम्' इति पाठमाश्रित्य महाराजः जनकः पुरोधसं पुरोहितमिति प्राहिणोत् उक्तवान् । इतीति किम् ? दशरथाय त्वं नमेः नमस्कारं कुर्याः, च पुनः इदं कुलं भृत्यभावि दृश्यतामङ्गीक्रियताम् । कस्मात् ? दुहितुः स्वीकारात् । भृत्यं भविष्यतीति भृत्यभावि, सोऽस्यास्तीति भृत्यभावि । अन्योऽपि यः सुतामन्यस्मै दत्ते सोऽपि भृत्य इव भवेद् इत्यादि ।

**अन्वियेष सदृशीं स च स्नुषां प्राप चैनमनुकूलवाग्द्विजः ।**
**सद्य एव सुकृतां हि पच्यते कल्पवृक्षफलधर्मि[1] काङ्क्षितम् ॥ ५० ॥**

**अन्वियेषेति** ॥ स दशरथश्च **सदृशीमनुरूपां स्नुषामन्वियेष** । रामविवाहमाचकाङ्क्षेत्यर्थः । **अनुकूलवाक्** स्नुषासिद्धिरूपानुकूलार्थवादी **द्विजो** जनकपुरोधाश्च । **एनं** दशरथं **प्राप** । तथा हि—कल्पवृक्षफलस्य यो धर्मः सद्यःपाकरूपः सोऽस्यास्तीति **कल्पवृक्षफलधर्मि** अतः **सुकृतां** पुण्यकारिणां **काङ्क्षितं** मनोरथः **सद्य एव पच्यते हि** । कर्मकर्तरि लट् । स्वयमेव पक्वं भवतीत्यर्थः । 'कर्मवत्कर्मणा तुल्यक्रियः' ( पा. ३।१।८७ ) इति कर्मवद्भावात् 'भावकर्मणोः' ( पा. १।३।१३ ) इत्यात्मनेपदम् ॥ ५० ॥

**तस्य कल्पितपुरस्क्रियाविधेः शुश्रुवान्वचनमग्रजन्मनः ।**
**उच्चचाल वलभित्सखो वशी[3] सैन्यरेणुमुषितार्कदीधितिः ॥ ५१ ॥**

**तस्येति** ॥ **वलभित्सख** इन्द्रसहचरो **वशी** स्वाधीनतावान् । 'वश आयत्ततायां च' इति विश्वः । **कल्पितपुरस्क्रियाविधेः** कृतपूजाविधेस्त**स्याग्रजन्मनो** द्विजस्य **वचनं** जनकेन संदिष्टं **शुश्रुवान्** श्रुतवान् । शृणोतेः क्वसुः । **सैन्यरेणुमुषितार्कदीधितिः** सन्, **उच्चचाल** प्रतस्थे ॥ ५१ ॥

**आससाद मिथिलां स वेष्टयन्पीडितोपवनपादपां[4] वलैः ।**
**प्रीतिरोधमसहिष्ट सा पुरी स्त्रीव कान्तपरिभोगमायतम् ॥५२ ॥**

**आससादेति** ॥ स दशरथो **वलैः** सैन्यैः **पीडितोपवनपादपां मिथिलां वेष्टयन्** परिधीकुर्वन् । **आससाद** । **सा पुरी** । **स्त्री**[1] युवतिः । **आयतमतिप्रसक्तं कान्तपरिभोगं** प्रियसंभोगमिव प्रीत्या[2] रोधं **प्रीतिरोधम्** । **असहिष्ट** सोढवती, द्वेषरोधं तु न सहत इति भावः ॥ ५२ ॥

---

**पाठा०**– १ 'सत्यम्'. २ 'कल्पवृक्षसमधर्मकाङ्क्षितम्'. ३ 'वली'. ४ 'पापैः'.

---

टिप्प०—1 कल्पपूरणो वृक्षः कल्पवृक्षः, कल्पवृक्षस्येव धर्मः स्वभावो यस्यास्तीति कल्पवृक्षफलधर्मिः कालानपेक्षित्वम् । तथा कर्णामृते–'कल्पद्रुमोऽपि कालेन भवेद्यदि फलप्रदः । को विशेषस्तदा तस्य वन्यैर्महीरुहैः ?–' इति हेमाद्रिः । यथा कल्पवृक्षफलं तत्कालमेव भवति तथा सुकृतामपि मनोरथस्तत्कालमेव–इति सुमति० ।

2 प्रीत्या रोधः आलिङ्गनादि यत्र तम् । यथा स्त्री निस्त्रीर्णे भर्तुः परिभोगं गाढालिंगननखक्षतादिप्रचुरं संभोगं सहते तथेयं सैन्यगजादिभिरुद्यानतरुभङ्गादिरूपमुपरोधं प्रेमवशात् सहते स–इति दिनकर० ।

तौ समेत्य समये स्थितावुभौ भूपती वरुणवासवोपमौ ।
कन्यकातनयकौतुकक्रियां स्वप्रभावसदृशीं वितेनतुः ॥ ५३ ॥

तावितिं ॥ समये स्थितावाचारनिष्ठौ । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । वरुणवासवावुपमोपमानं ययोस्तौ तथोक्तौ । तावुभौ भूपती जनकदशरथौ समेत्य । स्वप्रभावसदृशीमात्ममहिमानुरूपां कन्यकानां सीतादीनां तनयानां रामादीनां च कौतुकक्रियां विवाहोत्सवं वितेनतुर्विस्तृतवन्तौ । तनोतेर्लिट् ॥ ५३ ॥

पार्थिवीमुदवहद्रघूद्वहो लक्ष्मणस्तदनुजामथोर्मिलाम् ।
यौ तयोरवरजौ वरौजसौ तौ कुशध्वजसुते सुमध्यमे ॥ ५४ ॥

पार्थिवीमिति ॥ उद्वहतीत्युद्वहः । पचाद्यच् । रघूणामुद्वहो रघूद्वहो रामः । पृथिव्या अपत्यं स्त्री पार्थिवी । 'तस्यापत्यम्' (पा. ४।१।९२) इति 'टिड्ढाणञ्' (पा. ४।१।१५) इति ङीप् । तां सीतामुदवहत् परिणीतवान् । अथ लक्ष्मणस्तस्याः सीताया अनुजां जनकस्यौरसीमूर्मिलामुदवहत् । यौ वरौजसौ तयो रामलक्ष्मणयोरवरजावनुजातौ भरत-शत्रुघ्नौ तौ सुमध्यमे कुशध्वजस्य जनकानुजस्य सुते कन्यके माण्डवीं श्रुतकीर्तिं चोदवहताम् । नात्र व्युत्क्रमविवाहदोषः; भिन्नोदरत्वात् । तदुक्तम्—'पितृव्यपुत्रे सापत्न्ये परनारीसुतेषु च । विवाहाधानयज्ञादौ परिवेत्ताद्यदूषणम् ॥' इति ॥ ५४ ॥

ते चतुर्थसहितास्त्रयो बभुः सूनवो नववधूपरिग्रहाः ।
सामदानविधिभेदनिग्रहाः सिद्धिमन्त इव तस्य भूपतेः ॥ ५५ ॥

त इति ॥ ते चतुर्थसहितास्त्रयः । चत्वार इत्यर्थः । वृत्तानुरोधादेवमुक्तम् । सूनवो नववधूपरिग्रहाः सिद्धिमन्तः फलसिद्धियुक्तास्तस्य भूपतेर्दशरथस्य

---

पाठा०—१ 'समयस्थितौ'. २ 'मैथिलीम्'. ३ 'परिग्रहात्'.

---

टिप्प०—1 मया कन्या देया, त्वया ग्राह्येति लोकाचारमल्लवतो—इति वल्लभः ॥ विवाहे दशिवृद्ध्यादौ कन्यायाः प्रथमं गण्यत्वेन प्राधान्यात्पूर्वनिपातः । वरुण-वासवयोरुपमा ययोस्तौ । 'प्रत्यङ्मुखा वरयन्ति, प्रतिगृह्णन्ति प्राङ्मुखाः' इत्युक्तत्वात्—इति हेमाद्रिः ।

2 ननु भरतात् प्रथमं कथं लक्ष्मणकरग्रहणोक्तिः ? रामसहचरत्वेन, क्रमापेक्षया तत्रान्वे तु परिवेत्तृत्वदोषो न तु कथने । अथवा—कथयिष्यति मयोरग्रे सर्गे (श्लो. ७२) 'व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे' इति व्युत्क्रमस्य प्रतीयमानत्वान्न दोषः—इति दिनु० ।

3 चतुर्णां संख्यापूरकश्चतुर्थस्तेन सहिताः—इति हेमाद्रिः ।

सामदानविधिभेदनिग्रहाश्चत्वार उपाया इव बभुः । विधीयत इति विधिः । दानमेव विधिः । निग्रहो दण्डः । सूनूनामुपायैर्वधूनां सिद्धिभिश्चौपम्यमित्यनुसंधेयम् ॥ ५५ ॥

ता नराधिपसुता नृपात्मजैस्ते च ताभिरगमन्कृतार्थताम् ।
सोऽभवद्वरवधूसमागमः प्रत्ययप्रकृतियोगसंनिभः ॥ ५६ ॥

ता इति ॥ ता नराधिपसुता जनककन्यका नृपात्मजैर्दशरथपुत्रैः कृतार्थतां कुलशीलवयोरूपादिसाफल्यमगमन् । ते च ताभिस्तथा । किंच, स वराणां वधूनां च समागमः । प्रत्ययानां प्रकृतीनां च योग इव संनिभातीति संनिभः । अभवत् । पचाद्यच् । प्रत्ययाः सनादयो येभ्यो विधीयन्ते ताः प्रकृतयः । यथा प्रकृति-प्रत्यययोः सहैकार्थसाधनत्वं तद्वदत्रापीति भावः ॥ ५६ ॥

एवमात्तरतिरात्मसंभवांस्तान्निवेश्य चतुरोऽपि तत्र सः ।
अध्वसु त्रिषु विसृष्टमैथिलः स्वां पुरीं दशरथो न्यवर्तत ॥ ५७ ॥

एवमिति ॥ एवमात्तरतिरुद्यागवान् स दशरथस्तांश्चतुरोऽप्यात्मसंभवान् पुत्रांस्तत्र मिथिलायां निवेश्य विवाह्य । 'निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्तितः' इति विश्वः । त्रिष्वध्वसु प्रयाणेषु सत्सु विसृष्टमैथिलः सन् । स्वां पुरीं न्यवर्तत । उद्देशक्रियापेक्षया कर्मत्वं पुर्याः ॥ ५७ ॥

तस्य जातु मरुतः प्रतीपगा वर्त्मसु ध्वजतरुप्रमाथिनः ।
चिक्लिशुर्भृशतया वरूथिनीमुत्तटा इव नदीरयाः स्थलीम् ॥ ५८ ॥

तस्येति ॥ जातु कदाचिद्वर्त्मसु ध्वजा एव तरवस्तान्प्रमथ्नन्ति ये ते ध्वजतरुप्रमाथिनः प्रतीपगाः प्रतिकूलगामिनो मरुतः । उत्तटा नदीरयाः स्थलीमकृत्रिमभूमिमिव । 'जानपदकुण्ड–' (पा. ४।१।४२) इत्यादिना ङीप् । तस्य वरूथिनीं सेनां भृशतया भृशं चिक्लिशुः क्लिश्यन्ति स्म ॥ ५८ ॥

पाठा०–१ 'च पार्थिवसुताः'. २ 'वर्त्मनि'.

टिप्प०—1 प्रक्रियते आदौ क्रियते इति प्रकृतिः, प्रतीयतेऽर्थोऽनेनेति प्रत्ययः, प्रकृतियुताः प्रत्यया इव सार्थकत्वमीयुः–इति वाक्यार्थः । 'इयान्' इत्यत्र प्रकृतिलोपे प्रत्यय एवार्थमाह । वेत्तीति विद् इत्यत्र प्रत्ययलोपे प्रकृतिरेवार्थमाह । उभयत्रापि प्रयोगसद्भाव एव–इति हेमाद्रिः ॥ प्रत्ययाः सामादयः प्रकृतयोऽमात्यादयस्तेषां योगस्तत्सदृशोऽभूत् । अथ वा–प्रतीयतेऽर्थो येन स प्रत्ययः सुबादिः । प्रकृतिः प्रातिपदिकादिस्तयोर्योगस्तत्तुल्योऽभूत् । प्रकृतिप्रत्ययमिलनेनैव विशिष्टार्थप्रतिपादनात्–इति शिशु० ।

लक्ष्यते स्म तदनन्तरं रविर्बद्धभीमपरिवेषमण्डलः।
वैनतेयशमितस्य भोगिनो भोगवेष्टित इव च्युतो मणिः॥ ५९॥

लक्ष्यत इति॥ तदनन्तरं प्रतीपपवनानन्तरं बद्धं भीमं परिवेषस्य परिवेषमण्डलं यस्य सः। 'परिवेषस्तु परिधिरुपसूर्यकमण्डले' इत्यमरः। रविः। वैनतेयशमितस्य गरुडहतस्य भोगिनः सर्पस्य भोगेन कायेन। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः। वेष्टितश्च्युतः शिरोभ्रष्टो मणिरिव लक्ष्यते स्म॥ ५९॥

श्येनपक्षपरिधूसरालकाः सांध्यमेघरुधिरार्द्रवाससः।
अङ्गना इव रजस्वला दिशो नो बभूवुरवलोकनक्षमाः॥ ६०॥

श्येनेति॥ श्येनपक्षा एव परिधूसरा अलका यासां तास्तथोक्ताः। सांध्यमेघा एव रुधिरार्द्राणि वासांसि यासां तास्तथोक्ताः। रजो धूलिरासामस्तीति रजस्वलाः। 'रजःकृष्यासुतिपरिषदो वलच्' (पा. ५।२।११२) इति वलच्प्रत्ययः। दिशः। रजस्वला ऋतुमत्योऽङ्गना इव। 'स्याद्रजः पुष्पमार्तवम्' इत्यमरः। अवलोकनक्षमा दर्शनार्हा नो बभूवुः। एकत्र,-दृष्टिदोषात्, परत्र,-शास्त्रदोषादिति विशेषः। अत्र रजोवृष्टिरुत्पात उक्तः॥ ६०॥

भास्करश्च दिशमध्युवास यां तां श्रिताः प्रतिभयं ववासिरे।
क्षत्रशोणितपितृक्रियोचितं चोदयन्त्य इव भार्गवं शिवाः॥ ६१॥

भास्कर इति॥ भास्करो यां दिशमध्युवास च यस्यां दिश्युषितः। 'उपान्वध्याङ्वसः' (पा. १।४।४८) इति कर्मत्वम्। तां दिशं श्रिताः शिवा गोमायवः, 'स्त्रियां शिवा भूरिमायुगोमायुमृगधूर्तकाः' इत्यमरः। क्षत्रशोणितेन या पितृक्रिया पितृतर्पणं तत्रोचितं परिचितं भार्गवं चोदयन्त्य इव प्रतिभयं भयंकरं ववासिरे रुरुवुः। 'वाशृ शब्दे' इति धातोर्लिट्। 'विरुतं वाशितं रुतम्' इत्यमरः॥ ६१॥

तत्प्रतीपपवनादि[1] वैकृतं प्रेक्ष्य[2] शान्तिमधिकृत्य कृत्यवित्।
अन्वयुङ्क्त गुरुमीश्वरः क्षितेः स्वन्तमित्यलघयत्स तद्व्यथाम् ॥ ६२ ॥

तदिति ॥ तत्प्रतीपपवनादि वैकृतं दुर्निमित्तं प्रेक्ष्य कृत्यवित् कार्यज्ञः क्षितेरीश्वरः शान्तिमनर्थनिवृत्तिमधिकृत्योद्दिश्य गुरुं वसिष्ठमन्वयुङ्क्तापृच्छत्। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः। स गुरुः स्वन्तं शुभोदर्कं भावीति तस्य राज्ञो व्यथामलघयल्लघूकृतवान् ॥ ६२ ॥

तेजसः सपदि राशिरु[3]त्थितः प्रादुरास किल वाहिनीमुखे।
यः प्रमृज्य नयनानि सैनिकैर्लक्षणीयपुरुषाकृतिश्चिरात् ॥ ६३ ॥

तेजस इति ॥ सपद्युत्थितस्तेजसो राशिर्वाहिनीमुखे सेनाग्रे प्रादुरास किल खलु। यः सैनिकैर्नयनानि प्रमृज्य चिराल्लक्षणीया भावनीया पुरुषाकृतिर्यस्य स तथोक्तः। अभूदिति शेषः ॥ ६३ ॥

पित्र्य[4]मंशमुपवीतलक्षणं मातृकं च धनुरूर्जितं दधत्।
यः ससोम इव घर्मदीधितिः सद्विजिह्व इव चन्दनद्रुमः ॥ ६४ ॥

पित्र्यमिति ॥ उपवीतं लक्षणं चिह्नं यस्य तम्। पितुरयं पित्र्यः। 'वाय्वृतुपित्रुषसो यत्' (पा. ४।२।३१) इति यत्प्रत्ययः। तमंशम्। धनुषोर्जितं धनुरूर्जितम्। मातुरयं मातृकः। 'ऋतष्ठञ्' (पा. ४।३।७८) इति ठञ्प्रत्ययः। तमंशं च दधत्। यो भार्गवः। ससोमश्चन्द्रयुक्तो घर्मदीधितिः सूर्य इव। सद्विजिह्वः ससर्पश्चन्दनद्रुम इव। स्थितः ॥ ६४ ॥

येन रोषपरुषात्मनः पितुः शासने स्थितिभिदोऽपि तस्थुषा।
वेपमानजननीशिरश्छिदा प्रागजीयत घृणा ततो मही[5] ॥ ६५ ॥

येनेति ॥ रोषपरुष आत्मा बुद्धिर्यस्य सः। 'आत्मा जीवो धृतिर्बुद्धिः' इत्यमरः।

पाठा०—१ 'मरुत्वादि'. २ 'क्षिप्रशान्त्वम्'; 'क्षिप्रशान्त्यम्'. ३ 'उच्छ्रित'. ४ 'पित्र्यवंशम्'. ५ 'क्षितिः'.

टिप्प०—1 पित्र्यमुपवीत ब्रह्मसूत्रलक्षण चिह्नं यस्य स तम्, पितुर्जमदग्नेरयं पित्र्यस्तमंशं भागं बिभ्रत्, तथा मातृसंबन्धि क्षत्रियबाहूर्जितं कार्मुकं च दधानो यः सचन्द्रो रविरिव ससर्पो मलयजद्रुम इवाभूत्-इति दिनकर०।

2 सूर्योपमया तेजस्विता, सोमोपमयोपवीतेन च प्रसन्नत्वं, सर्पोपमया धनुषो भीषणत्वं, चन्दनोपमया द्विजस्य तत्त्वच्छान्तिः-इति हेमाद्रिः।

तस्य रोषपरुषात्मनः स्थितिभिदोऽपि[2] मर्यादालङ्घिनोऽपि पितुः शासने तस्थुषा स्थितेन वेपमानजननीशिरश्छिदा[3] येन प्राग्घृणाऽजीयत। ततोऽनन्तरं मह्यजीयत[4] । मातृहन्तुः क्षत्रवधात्कुतो जुगुप्सेति भावः ॥ ६५ ॥

अक्षबीजवलयेन निर्बभौ दक्षिणश्रवणसंस्थितेन यः[1] ।
क्षत्रियान्तकरणैकविंशतेर्व्याजपूर्वगणनामिवोद्वहन् ॥ ६६ ॥

अक्षेति ॥ यो भार्गवो दक्षिणश्रवणे संस्थितेनाऽक्षबीजवलयेनाक्षमाल्या क्षत्रियान्तकरणानां क्षत्रियवधानामेक[5]विंशतेरेकविंशतिसंख्याया व्याजोऽक्षमालारूपः पूर्वो यस्यास्तां गणनामुद्वहन्निव निर्बभौ ॥ ६६ ॥

तं पितुर्वधभवेन मन्युना राजवंशनिधनाय दीक्षितम् ।
बालसूनुरवलोक्य भार्गवं स्वां दशां च विषसाद पार्थिवः ॥ ६७ ॥

तमिति ॥ पितुर्जमदग्नेर्वधभवेन क्षत्रियकर्तृकवधोद्भवेन मन्युना क्रोधेन राजवंशानां निधनाय नाशार्थम् । 'निधनं स्यात्कुले नाशे' इति विश्वः । दीक्षितम् । प्रवृत्तमित्यर्थः । तं भार्गवं स्वां दशां चावलोक्य बालाः सूनवो यस्य स पार्थिवो विषसाद । स्वस्यातिदौर्बल्याच्छत्रोश्चातिक्रोधात् कांदिशीकोऽभवदित्यर्थः[6] ॥ ६७ ॥

नाम राम[2] इति तुल्यमात्मजे वर्तमानमहिते च दारुणे ।
हृद्यमस्य भयदायि चाभवद्रत्नजातमिव हारसर्पयोः ॥ ६८ ॥

नामेति ॥ आत्मजे पुत्रे दारुणे घोरेऽहिते शत्रौ च तुल्यमविशेषेण वर्त-

पाठा०-१ 'सः'. २ 'रामनाम'.

टिप्प०—1 रोषेण परुष आत्मा क्रूरो यस्य तादृशस्य तथा स्थितिभेदो मर्यादोल्लङ्घिना पितुर्जमदग्नेः शासनेनाज्ञया तस्थुषा स्थितेनात एव वेपमानायाः कम्पमानाया मातुः शिरश्छिदा येन जामदग्न्येन घृणा कृपा विजिता, ततः पश्चात्क्षत्रियाणां हननेन का भूमिर्निर्जिता। यद्यसौ कृपैवाभविष्यत् कथं मातुर्मूर्धानमच्छेत्स्यत्? अतः पितुरादेशात्कृपानाशादित्यर्थः-इति दिनकर० ।

2 'अपि'शब्दस्तादात्म्ये मत्त्वार्थं दर्शयति-इति हेमाद्रिः ।

3 मरणभयकम्पमानमातृशिरश्छेदकेन-इति वल्लभः ।

4 कथानकमिदं महाभारतात् (वन. अ. ११६) अवसेयम् ।

5 एकविंशति वारान् क्षत्रियवधस्य तत्संख्याया अक्षमालामिषेण गणनां कुर्वन्निव-इति दिनकर०

6 दृष्टिमात्रेणैव, अनन्तरं मर्दितवान् भयेनेत्यर्थः-इति हेमाद्रिः ।

मानं राम इति नाम । हार-सर्पयोर्वर्तमानं रत्नजातं रत्नजातिरिव । अस्य दशरथस्य हृद्यं हृदयंगमं भयदायि भयंकरं चाभवत् ॥ ६८ ॥

अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः संदधे दृशमुदग्रतारकाम् ॥ ६९ ॥

अर्घ्यमिति ॥ स भार्गवः । अर्घ्यमर्घ्यमिति वादिनं नृपमनवेक्ष्य । यतो यत्र भरताग्रजस्ततस्तत्र । 'इतराभ्योऽपि दृश्यन्ते' (पा. ५।३।१४) इति सार्वविभक्तिकस्तसिः । क्षत्रे क्षत्रकुले विषये यः कोपदहनो रोषाग्निस्तस्यार्चिषं ज्वालामिव स्थिताम् । 'ज्वालाभासोर्नपुंस्यर्चिः' इत्यमरः । उदग्रा तारका कनीनिका यस्यास्ताम् । 'तारकाऽक्ष्णः कनीनिका' इत्यमरः । दृशं संदधे ॥ ६९ ॥

तेन कार्मुकनिषक्तमुष्टिना राघवो विगतभीः पुरोगतः ।
अङ्गुलीविवरचारिणं शरं कुर्वता निजगदे युयुत्सुना ॥ ७० ॥

तेनेति ॥ कार्मुकनिषक्तमुष्टिना शरमङ्गुलीविवरचारिणं कुर्वता । योद्धुमिच्छता युयुत्सुना । तेन भार्गवेण कर्त्रा विगतभीर्निर्भीकः सन् । पुरोगतोऽग्रगतो राघवो निजगद उक्तः । कर्मणि लिट् ॥ ७० ॥

क्षत्रजातमपकारवैरि मे तन्निहत्य बहुशः शर्म गतः ।
सुप्तसर्प इव दण्डघट्टनाद्रोषितोऽस्मि तव विक्रमश्रवात् ॥ ७१ ॥

क्षत्रेति ॥ क्षत्रजातं क्षत्रजातिर्मेऽपकारेण पितृवधरूपेण वैरि द्वेषि । तत् क्षत्रजातं बहुशः एकविंशतिवारान्निहत्य शर्म गतोऽस्मि । तथापि सुप्तसर्पो दण्डघट्टनादिव तव विक्रमस्य श्रवादाकर्णनाद्रोषितो रोषं प्रापितोऽस्मि ॥ ७१ ॥

मैथिलस्य धनुरन्यपार्थिवैस्त्वं किलानमितपूर्वमक्षणोः ।
तन्निशम्य भवता समर्थये वीर्यश्रृङ्गमिव भग्नमात्मनः ॥ ७२ ॥

---

पाठा०—१ 'विवरवर्तिनम्'. २ 'अपकारि वैरि'. ३ 'उद्यतः'; 'उत्थितः'.

---

टिप्प०—1 अत्र 'जात'शब्देनोत्कृष्टत्वं द्योत्यते-वल्लभः । हारे रत्नं सुखदायि, सर्पे रत्नं भयदायि भवति-इति सुमति० ॥ यथा हारे सर्पे च वर्तमानं रत्नजातं मणिश्रेष्ठं च हर्षभीतिदं भवति-इति दिनकर० ।

2 संभ्रमेण प्रवृत्तौ द्वे वाच्यम्-इति हेमाद्रिः ।

3 क्षत्रियेषु कोपदहनस्य कोपाग्नेरर्चिषं ज्वालां भस्महेतुत्वाद्-इति हेमाद्रिः ।

4 अनेनालम्तदुःसहत्वं द्योत्यते ।

मैथिलस्येति ॥ अन्यैः पार्थिवैः । अनमितपूर्वं पूर्वमनमितम् । सुप्सुपेति समासः । अस्य मैथिलस्य धनुस्त्वमक्षणोः क्षतवान् । 'किल' इति वार्तायाम् । 'वार्तासंभाव्ययोः किल' इत्यमरः । तद्धनुर्भङ्गं निशम्याकर्ण्य भवतात्मनो मम वीर्यमेव शृङ्गं भग्नमिव समर्थये मन्ये ॥ ७२ ॥

अन्यदा जगति राम इत्ययं शब्द उच्चरित एव मामगात् ।
व्रीडमावहति मे स संप्रति व्यस्तवृत्तिरुदयोन्मुखे त्वयि ॥ ७३ ॥

अन्यदेति ॥ अन्यदाऽन्यस्मिन्काले जगति राम इत्ययं शब्द उच्चरितः सन् मामेवागात् । संप्रति त्वय्युदयोन्मुखे सति व्यस्तवृत्तिर्विपरीतवृत्तिः । अन्यगामीति यावत् । स शब्दो मे व्रीडमावहति लज्जां करोति ॥ ७३ ॥

बिभ्रतोऽस्त्रमचलेऽप्यकुण्ठितं द्वौ रिपू मम मतौ समागसौ ।
धेनुवत्सहरणाच्च हैहयस्त्वं च कीर्तिमपहर्तुमुद्यतः ॥ ७४ ॥

बिभ्रत इति ॥ अचले क्रौञ्चादावप्यकुण्ठितमस्त्रं बिभ्रतो मम द्वौ समागसौ तुल्यापराधौ रिपू मतौ । धेनोः पितृहोमधेनोर्वत्सस्य हरणाद्धेतोर्हैहयः कार्तवीर्यश्च । कीर्तिमपहर्तुमुद्यत उद्युक्तस्त्वं च । वत्सहरणे भारतश्लोकः—'प्रमत्तश्चाश्रमात्तस्य होमधेन्वास्ततो बलात् । जहार वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान् ॥' इति ॥ ७४ ॥

क्षत्रियान्तकरणोऽपि विक्रमस्तेन मामवति नाजिते त्वयि ।
पावकस्य महिमा स गण्यते कक्षवज्ज्वलति सागरेऽपि यः ॥ ७५ ॥

---

पाठा०—१ 'जयति'. २ 'वावधेनुहरणात्'.

---

टिप्प०— 1 आत्मनो मम वीर्येण शृङ्गं प्राधान्यं भवता त्वया भग्नमिवाहं समर्थये मन्ये । वीर्यशृङ्गमिति वा । भग्नशृङ्गो महिषोऽहमित्यर्थः—इति हेमाद्रिः ।

2 क्षत्रियान्तकः परशुरामः कार्तवीर्यं जघान, तेन च क्रुद्धास्तत्पुत्राः परशुरामं बहिर्गतमनेत्य तत्पितरं जमदग्निं जघ्नुरितीतिवृत्तं वनपर्वं(अ. ११६)तोऽवसेयम् ।

3 'व्रीड' शब्दोऽप्यकारान्तोऽस्ति । 'व्रीडायां च मनेभ्रीडो लज्जायामेऽप्यपत्रपा' इति नान्यभेदप्रकाशे । 'सानुक्रमव्रीड' इति श्रीतरङ्गिण्याम् । वामनोऽपि—'अविघो गुरोः स्त्रियां बहुलं विभाषा । अकारविधौ 'गुरोश्च हलः' (पा. ३।३।१०३) इति स्त्रियां ननेत्रीड इति बहुलं विभाषा । तथा माघकाव्ये—'व्रीडमेति न वश स्त्रियं वदन्' इति हेमाद्रिः ॥ 'व्रीडा पुंसि' इति महाभाष्यम्—इति दिनकर० ।

4 धेनुहरणवत्सहरणाभ्याम् । व्रीडाभानः हि वत्सं हियमाणो धेनुं मनुं च दुःखी करोति—इति हेमाद्रिः ।

क्षत्रियेति ॥ तेन कारणेन । क्रियते येनासौ करणः । क्षत्रियान्तस्य कारणोऽपि विक्रमः । त्वय्यजिते मां नावति न प्रीणाति । तथा हि-पावकस्याग्नेर्महिमा स गण्यते यः कक्षवत् कक्ष इव । 'तत्र तस्येव' (पा. ५।१।११६) इति सप्तम्यर्थे वतिः । सागरेऽपि । ज्वलति ॥ ७५ ॥

विद्धि चात्तबलमोजसा हरेरैश्वरं धनुरभाजि यत्त्वया ।
खातमूलमनिलो नदीरयैः पातयत्यपि मृदुस्तटद्रुमम् ॥ ७६ ॥

विद्धीति ॥ किंच ऐश्वरं धनुर्हरेर्विष्णोरोजसा बलेनात्तबलं हृतसारं च, विद्धि । यद्धनुस्त्वयाऽभाज्यभञ्जि । 'भञ्जेश्च चिणि' (पा. ६।४।३३) इति विभाषया नलोपः । तथा हि-नदीरयैः खातमूलमवदारितपादं तटद्रुमं मृदुरप्यनिलः पातयति । ततः शिशुरपि रौद्रं धनुरभाङ्क्षमिति मा गर्वीरिति भावः ॥ ७६ ॥

तन्मदीयमिदमायुधं ज्यया संगमय्य सशरं विकृष्यताम् ।
तिष्ठतु प्रधनमेवमप्यहं तुल्यबाहुतरसा जितस्त्वया ॥ ७७ ॥

तदिति ॥ तत्तस्मात्, मदीयमिदमायुधं कार्मुकं ज्यया संगमय्य संयोज्य । 'ल्यपि लघुपूर्वात्' (पा. ६।४।५६) इति णेरयादेशः । सशरं यथा तथा त्वया विकृष्यताम् । प्रधनं रणस्तिष्ठतु । प्रधनं तावदास्तामित्यर्थः । 'प्रधनं मारणे रणे' इति विश्वः । एवमपि मद्धनुःकर्षणेऽप्यहं तुल्यबाहुतरसा समबाहुबलेन । 'तरसी बलरंहसी' इत्यमरः । त्वया जितः ॥ ७७ ॥

पाठा०—१ 'आत्तरसम्'.

टिप्प०—1 नन्वेकस्याजये कथं न प्रीणयतीत्याह-अग्नेर्महिमा स उच्यते यः कक्षवत्तृणवृन्द इवाब्धावपि ज्वलति-इति दिनकर० ।

2 त्वया यच्छंभोर्धनुरभज्यत, तद्विष्णुनात्तसारं विद्धि, न तु त्वत्सामर्थ्यादित्यर्थः-इति दिनकर० । कथानकमिदं रामायणतो( बाल. ७५।२०-२१ )ऽनुसन्धेयम् ।

3 कथानकमिदं रामायण( बालकाण्ड-७६ तमसर्ग )तोऽवसेयम् । पूर्वं किल विश्वकर्मणा दैत्यवधाय द्वे धनुषी कृत्वा हरि-हरयोर्दत्ते, तयोः स्वबलजिज्ञासयाऽन्योन्यं युध्यमानयोर्विष्णुना हुङ्कारेण शाम्भवं धनुर्निर्वीर्यं कृतमित्यागमः-इति हेमाद्रिः ।

4 युद्धं विनापि धनुराकर्षणेन मे भङ्ग इत्यर्थः-इति हेमाद्रिः ।

5 शत्रुपराभवो धात्वभ्यासफलम् । ऊर्जस्व्यलंकारः । तथा काव्यादर्शे-'ऊर्जस्वि रूढाहङ्कारम्' इति-हेमाद्रिः ।

कातरोऽसि यदि वोद्गतार्चिषा तर्जितः परशुधारया मम ।
ज्यानिघातकठिनाङ्गुलिर्वृथा बध्यतामभययाचनाञ्जलिः ॥ ७८ ॥

कातर इति ॥ यदि वोद्गतार्चिषोद्गतत्विषा मम परशुधारया तर्जितः कातरोऽसि भीतोऽसि । वृथा ज्यानिघातेन कठिना अङ्गुलयो यस्य स तथोक्तोऽभययाचनाञ्जलिरभयप्रार्थनाञ्जलिर्बध्यताम् । 'तौ युतावञ्जलिः पुमान्' इत्यमरः ॥ ७८ ॥

एवमुक्तवति भीमदर्शने भार्गवे स्मितविकम्पिताधरः ।
तद्धनुर्ग्रहणमेव राघवः प्रत्यपद्यत समर्थमुत्तरम् ॥ ७९ ॥

एवमिति ॥ भीमदर्शने भार्गव एवमुक्तवति सति । राघवः स्मितेन हासेन विकम्पिताधरः सन् । तद्धनुर्ग्रहणमेव समर्थमुचितमुत्तरं प्रत्यपद्यताङ्गीचकार ॥ ७९ ॥

पूर्वजन्मधनुषा समागतः सोऽतिमात्रलघुदर्शनोऽभवत् ।
केवलोऽपि सुभगो नवाम्बुदः किं पुनस्त्रिदशचापलाञ्छितः ॥ ८० ॥

पूर्वेति ॥ पूर्वजन्मनि नारायणावतारे यद्धनुस्तेन समागतः संगतः स रामोऽतिमात्रमत्यन्तं लघुदर्शनः प्रियदर्शनोऽभवत् । तथा हि—नवाम्बुदः केवलो रिक्तोऽपि सुभगः । त्रिदशचापेनेन्द्रधनुषा लाञ्छितश्चिह्नितः किं पुनः ? सुभग एवेति भावः ॥ ८० ॥

तेन भूमिनिहितैककोटि तत्कार्मुकं च बलिनाधिरोपितम् ।
निष्प्रभश्च रिपुरास भूभृतां धूमशेष इव धूमकेतनः ॥ ८१ ॥

तेनेति ॥ बलिना तेन रामेण भूमिनिहितैका कोटिर्यस्य तत् । कर्मणे प्रभवतीति कार्मुकं धनुश्च । 'कर्मण उकञ्' (पा. ५।१।१०३) इत्युकञ्प्रत्ययः । अधिरोपितम् । भूभृतां रिपुर्भार्गवश्च । धूमशेषो धूमकेतनोऽग्निरिव । निष्प्रभो निस्तेजस्क आस बभूव । 'आस' इति तिङन्तप्रतिरूपकमव्ययं दीप्त्यर्थकस्यासे रूपं वा ॥ ८१ ॥

---

पाठा०—१ 'इ'. २ 'शुभदर्शनः'. ३ 'लाञ्छनः'. ४ 'भूमिनिहितैककोटि यत्'; 'भूमिनिहितैककोटिना'. ५ 'प्राप वर्णविकृतिं च भार्गवो दृष्टिपीत इव पावकध्वजः'.

---

टिप्प०—1 मात्रा मर्यादामतिक्रान्तमतिमात्रमतिवेलम्—इति हेमाद्रिः ।
2 चकारः पूर्वेण समुच्चयार्थः, तेन च महत्कार्ययोर्युगपदेव घोत्यते इति—दिनकरः ।

तावुभावपि परस्परस्थितौ वर्धमानपरिहीनतेजसौ ।
पश्यति स जनता दिनात्यये पार्वणौ शशिदिवाकराविव ॥ ८२ ॥

तावुभाविति ॥ परस्परस्थितावन्योन्याभिमुखौ । वर्धमानं च परिहीनं चेति द्वन्द्वः । वर्धमानपरिहीने तेजसी ययोस्तावुभौ राघव-भार्गवावपि । दिनात्यये सायंकाले । पर्वणि भवौ पार्वणौ शशि-दिवाकराविव । जनता जनसमूहः । 'ग्रामजनबन्धुसहायेभ्यस्तल्' ( पा. ४।२।४३ ) इति तल्प्रत्ययः । पश्यति स्मापश्यत् । अत्र राघवस्य शशिना भार्गवस्य भानुनौपम्यं द्रष्टव्यम् ॥ ८२ ॥

तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्यमात्मनि ।
स्वं च संहितममोघमाशुगं व्याजहार हरसूनुसंनिभः ॥ ८३ ॥

तमिति ॥ हरसूनुसंनिभः स्कन्दसमः कृपामृदू राघवः । आत्मनि विषये स्खलितवीर्यं कुण्ठितशक्तिं तं भार्गवं स्वं स्वकीयं संहितममोघमाशुगं बाणं चावेक्ष्य । व्याजहार बभाषे ॥ ८३ ॥

न प्रहर्तुमलमस्मि निर्दयं विप्र इत्यभिभवत्यपि त्वयि ।
शंस किं गतिमनेन पत्रिणा हन्मि लोकमुत ते मखार्जितम् ॥ ८४ ॥

नेति ॥ अभिभवत्यपि त्वयि । विप्र इति हेतोः । निर्दयं प्रहर्तुमलं शक्तो नास्मि । किं त्वनेन पत्रिणा शरेण ते गतिं गमनं हन्मि, उत मखार्जितं लोकं स्वर्गं हन्मि शंस ब्रूहि ॥ ८४ ॥

प्रत्युवाच तमृषिर्न तत्त्वतस्त्वां न वेद्मि पुरुषं पुरातनम् ।
गां गतस्य तव धाम वैष्णवं कोपितो ह्यसि मया दिदृक्षुणा ॥ ८५ ॥

प्रतीति ॥ ऋषिर्भार्गवस्तं रामं प्रत्युवाच । किमिति ? तत्त्वतः स्वरूपतस्त्वां पुरातनं पुरुषं न वेद्मीति न । किंतु वेद्म्येवेत्यर्थः । किंतु गां गतस्य भुवमवतीर्णस्य तव वैष्णवं धाम तेजो दिदृक्षुणा द्रष्टुमिच्छुना मया कोपितो ह्यसि ॥ ८५ ॥

भस्मसात्कृतवतः पितृद्विषः पात्रसाच्च वसुधां ससागराम् ।
आहितो जयविपर्ययोऽपि मे श्लाघ्य एव परमेष्ठिना त्वया ॥ ८६ ॥

भस्मसादिति ॥ पितृद्विषः पितृवैरिणो भस्मसात्कृतवतः कोपेन भस्मीकुर्वतः । 'विभाषा साति कार्त्स्न्ये' ( पा. ५।४।५२ ) इति सातिप्रत्ययः । ससागरां

पाठा०—१ 'अवन्ध्यम्'. २ 'अथ'. ३ 'विप्रसात्'.

टिप्प०—1 अथ शरस्त्ववन्ध्य इत्यतोऽनेन शरेण ते गतिं हन्मि । यद्वा,—यागार्जितं लोकं स्वर्गं हन्मि—इति दिनकर० ।

**वसुधां च पात्रसात्** पात्राधीनं देयं कृतवतः । 'देये त्रा च' (पा. ५।४।५५) इति चकारात्सातिः । कृतकृत्यस्य मे परमेष्ठिना परमपुरुषेण त्वयाऽऽहितः कृतो **जयविपर्ययः** पराजयोऽपि **श्लाघ्य** आशास्य एव ॥ ८६ ॥

**तद्गतिं मतिमतां वरेप्सितां पुण्यतीर्थगमनाय रक्ष मे ।**

**पीडयिष्यति न मां खिलीकृता स्वर्गपद्धतिरभोगलोलुपम् ॥ ८७ ॥**

**तदिति ॥ तत्** तस्मात्कारणात्, **हे मतिमतां वर ! पुण्यतीर्थगमनाय** पुण्यतीर्थगमनायाभिष्टामीप्सितां **मे गतिं रक्ष** पालय । किंतु **खिलीकृता** दुर्गमीकृतापि **स्वर्गपद्धतिरभोगलोलुपं** भोगनिःस्पृहं **मां न पीडयिष्यति** । अतस्तामेव जहीत्यर्थः ॥ ८७ ॥

**प्रत्यपद्यत तथेति राघवः प्राङ्मुखश्च विससर्ज सायकम् ।**

**भार्गवस्य सुकृतोऽपि सोऽभवत्स्वर्गमार्गपरिघो दुरत्ययः ॥ ८८ ॥**

**प्रत्यपद्यतेति ॥ राघवस्तथेति प्रत्यपद्यत**ाङ्गीकृतवान् । **प्राङ्मुख** ऐन्द्र[2]दिङ्मुखः **सायकं विससर्ज च । स** सायकः **सुकृतोऽपि** साधुकारिणोऽपि । करोतेः क्विप् । **भार्गवस्य दुरत्ययो** दुरतिक्रमः **स्वर्गमार्गस्य परिघः** प्रतिबन्धोऽभवत् ॥ ८८ ॥

**राघवोऽपि चरणौ तपोनिधेः क्षम्यतामिति वदन्समस्पृशत् ।**

**निर्जितेषु तरसा तरस्विनां शत्रुषु प्रणतिरेव कीर्तये ॥ ८९ ॥**

**राघव इति ॥ राघवोऽपि क्षम्यतामिति वदंस्तपोनिधेर्भार्गवस्य चरणौ समस्पृशत्** प्रणनाम । तथा हि—**तरस्विनां** बलवतां **तरसा** बलेन **निर्जितेषु शत्रुषु प्रणतिरेव कीर्तये** । भवतीति शेषः ॥ ८९ ॥

**राजसत्वमवधूय मातृकं पित्र्यमस्मि गमितः शमं यदा ।**

**नन्वनिन्दितफलो मम त्वया निग्रहोऽप्ययमनुग्रहीकृतः ॥ ९० ॥**

**राजसत्वमिति ॥** मातुरागतं **मातृकं राजसत्वं** रजोगुणप्रधानत्वम**वधूय** पितुरागतं **पित्र्यं शमं यदा गमितोऽस्मि** । तदा **त्वया** ममापेक्षितत्वादनि-

---

पाठा०—१ 'प्राङ्मुखम्'. २ 'अथ'. ३ 'यतः'. ४ 'फले'. ५ 'मयि'. ६ 'अनुग्रहः कृतः'.

---

टिप्प०—1 तथा चोक्तम् (बाल. ७६।१३-१६) 'काश्यपाय मया दत्ता यदा पूर्वं वसुंधरा। विषये मे न वस्तव्यमिति मां काश्यपोऽब्रवीत् ॥ मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमम्। लोकास्त्वप्रतिमा राम। निर्जितास्तपसा मया। जहि तान्शरमुख्येन मा भूत्कालस्य पर्ययः ॥' इति।

2 इन्द्रलोकस्य पूर्वदिग्भागवर्तित्वाद्बाणस्य प्राङ्मुखविक्षेपः—इति दिनकर०।

न्दितमगर्हितं फलं स्वर्गहानिलक्षणं यस्य सोऽयं निग्रहोऽपकारोऽप्यनुग्रहीकृतो ननूपकारीकृतः खलु ॥ ९० ॥

साधयाम्यहमविघ्नमस्तु ते देवकार्यमुपपादयिष्यतः।
ऊचिवानिति वचः सलक्ष्मणं लक्ष्मणाग्रजमृषिस्तिरोदधे ॥ ९१ ॥

साधयामीति ॥ अहं साधयामि गच्छामि। देवकार्यमुपपादयिष्यतः संपादयिष्यतस्तेऽविघ्नमस्तु विघ्नाभावोऽस्तु। 'अव्ययं विभक्ति-' (पा. २।१।६) इत्यादिनार्थाभावेऽव्ययीभावः। सह लक्ष्मणेन सलक्ष्मणः। तम्। 'तेन सहेति तुल्ययोगे' (पा. २।२।२८) इति बहुव्रीहिः। लक्ष्मणाग्रजं राममिति वच ऊचिवानुक्तवान्। ब्रूञः क्वसुः। ऋषिस्तिरोदधेऽन्तर्दधे ॥ ९१ ॥

तस्मिन्गते विजयिनं परिरभ्य रामं
स्नेहादमन्यत पिता पुनरेव जातम्।
तस्याभवत्क्षणशुचः परितोपलाभः
कक्षाग्निलङ्घिततरोरिव वृष्टिपातः ॥ ९२ ॥

तस्मिन्निति ॥ तस्मिन् भार्गवे गते सति विजयिनं रामं पिता स्नेहात् परिरभ्यालिङ्ग्य पुनर्जातमेवामन्यत। क्षणं शुग्यस्येति विग्रहः। क्षणशुचस्तस्य दशरथस्य परितोपलाभः संतोषप्राप्तिः। कक्षाग्निना दावानलेन। 'कक्षः शुष्कवनवीरुधोः' इति विश्वः। लङ्घितस्याभिहतस्य तरोर्वृष्टिपात इव। अभवत् ॥ ९२ ॥

अथ पथि गमयित्वा क्लृप्तरम्योपकार्ये
कतिचिदवनिपालः शर्वरीः शर्वकल्पः।
पुरमविशदयोध्यां मैथिलीदर्शनीनां
कुवलयितगवाक्षां लोचनैरङ्गनानाम् ॥ ९३ ॥

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृतौ सीताविवाहवर्णनो नामैकादशः सर्गः।

---

पाठा०–१ 'साधु यामि'.

**अथेति** ॥ अथ । ईषदसमाप्तः शर्वः शर्वकल्पः । 'ईषदसमाप्तौ-' (पा. ५।३।६७) इति कल्पप्प्रत्ययः । **अवनिपालः क्लृप्ता रम्या** नवा **उपकार्या** यस्मिन्स तस्मिन्पथि **कतिचिच्छर्वरी** रात्रिर्गमयित्वा **मैथिलीदर्शनीनामङ्गनानां लोचनैः** कुवलयानि येषां संजातानि कुवलयिताः । 'तदस्य संजातं तारकादिभ्य इतच्' ( पा. ५।२।३६ ) इतीतच्प्रत्ययः । **कुवलयिता गवाक्षा** यस्यास्तां **पुरमयोध्यामविशत्** प्रविष्टवान् ॥ ९३ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां संजीविनीसमाख्यायामेकादशः सर्गः ।

---

## द्वादशः सर्गः ।

वन्दामहे महोद्दण्डदोर्दण्डौ रघुनन्दनौ ।
तेजोनिर्जितमार्तण्डमण्डलौ लोकनन्दनौ ॥

**निर्विष्टविषयस्नेहः स दशान्तमुपेयिवान् ।**
**आसीदासन्ननिर्वाणः प्रदीपार्चिरिवोषसि ॥ १ ॥**

**निर्विष्टेति** ॥ स्नेहयन्ति प्रीणयन्ति पुरुषमिति स्नेहाः । पचाद्यच् । स्निह्यन्ति पुरुषा येष्विति वा स्नेहाः । अधिकरणार्थे घञ् । विषयाः शब्दादयस्त एव स्नेहाः **निर्विष्टा** भुक्ता **विषयस्नेहा** येन स तथोक्तः । 'निर्वेशो भृतिभोगयोः' इति विश्वः । **दशा** जीवनावस्था तस्या **अन्तं** वार्धक**मुपेयिवान्** । स दशरथः । **उषसि प्रदीपार्चिरिव** दीपज्वालेव । **आसन्नं निर्वाणं** मोक्षो यस्य स तथोक्त **आसीत्** । अर्चिःपक्षे तु-**विषयो** देश आश्रयः । भाजनमिति यावत् । 'विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च' इति विश्वः । **स्नेह**स्तैलादिः । 'स्नेहस्तैलादिकरसे द्रवे स्यात्सौहृदेऽपि च' इति विश्वः । **दशा** वर्तिका । 'दशा वर्ताववस्थायाम्' इति विश्वः । **निर्वाणं** विनाशः । 'निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने' इति यादवः ॥ १ ॥

**तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति ।**
**कैकेयीशङ्कयेवाह पलितच्छद्मना जरा ॥ २ ॥**

---

टिप्प०—1 तथा प्रदीपपक्षे,—यथा निविष्टः पीतः विषयस्नेहो दीपभाजनतैलं येन स तादृशो दशांतं वर्तेः प्रान्तं शिरोभागं वा । प्रातः प्रदीप आसन्ननिर्वाणो मोक्षोन्मुखो भवति, तथा सोऽपि जात इति योजनीयम्-इति सुमति० ।

तमिति ॥ जरा कैकेयीशङ्कयेव पलितस्य केशादिशौक्ल्यस्य छद्मना मिषेण । 'पलितं जरसा शौक्ल्यं केशादौ' इत्यमरः । कर्णमूलं कर्णोपकण्ठमागत्य रामे श्रीराज्यलक्ष्मीर्यस्यतां निधीयतामिति तमाह । दशरथो 'वृद्धोऽहम्' इति विचार्य रामस्य यौवराज्याभिषेकं चकाङ्क्षेत्यर्थः ॥ २ ॥

सा पौरान्पौरकान्तस्य रामस्याभ्युदयश्रुतिः ।
प्रत्येकं ह्लादयांचक्रे कुल्येवोद्यानपादपान् ॥ ३ ॥

सेति ॥ सा पौरकान्तस्य रामस्याभ्युदयश्रुतिरभिषेकवार्ता । कुल्या कृत्रिमा सरित् । 'कुल्याऽल्पा कृत्रिमा सरित्' इत्यमरः । उद्यानपादपानिव । पौरान्प्रत्येकं ह्लादयांचक्रे ॥ ३ ॥

तस्याभिषेकसंभारं कल्पितं क्रूरनिश्चया ।
दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः ॥ ४ ॥

तस्येति ॥ क्रूरनिश्चया कैकेयी तस्य रामस्य कल्पितं संभृतमभिषेकस्य संभारमुपकरणं शोकोष्णैः पार्थिवाश्रुभिर्दूषयामास । स्वदु समूलेन राजशोकेन प्रतिबबन्धेत्यर्थः ॥ ४ ॥

सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ ।
उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ॥ ५ ॥

सेति ॥ चण्ड्यतिकोपना । 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः । सा किल भर्त्राऽऽश्वासिताऽनुनीता सती तेन भर्त्रा संश्रुतौ प्रतिज्ञातौ वरौ । इन्द्रेण सिक्ताऽभिवृष्टा भूर्बिले वल्मीकादौ मग्नावुरगाविव । उद्ववामोज्जगार ॥ ५ ॥

तयोश्चतुर्दशैकेन रामं प्राव्राजयत्समाः ।
द्वितीयेन सुतस्येच्छद्वैधव्यैकफलां श्रियम् ॥ ६ ॥

पाठा०—१ 'छवि'. २ 'ह्लादयामास'. ३ 'नयनाश्रुभिः'; ४ 'प्राक्संश्रुतौ'.

टिप्प०—1 'कर्णमूलम्' इति रोगवाचकत्वेनाश्लीलत्वाद् पाठ—इति दिनकर० ।

2 सा कैकेयी संपादितं तस्य रामस्याभिषेकस्य संभारं सिंहासनादिकं रामाभ्युदयजनितेन शोकेन नृपबाष्पैर्दूषयति स्म । अन्यदपि च सुबाष्पसंगमं दूषितं भवति किं पुनर्माङ्गलिकसिंहासनादिकमित्यर्थः—इति दिनकर० ।

3 तिमिध्वजयुद्धे देवेन्द्रसाहाय्यार्थं गतो दशरथः शत्रुशरविद्धो मूर्च्छां प्राप । तदा तत्संगता कैकेयी रथमन्यत्र नीत्वा नृपप्राणानरक्ष । तेन च कर्मणा संतुष्टो राजा तां वरद्वयं प्रतिज्ञातवान् इति रामायणे (अयोध्या. स ९) कथानकम् ।

4 अत्र वरयोः सर्पोपमा रामराज्यभ्रंश-वनवासनिरूपकत्वादिति भावः ।

तयोरिति ॥ सा तयोर्वरयोर्मध्य एकेन वरेण रामं चतुर्दश समाः संवत्सरान् । अत्यन्तसंयोगे द्वितीया । प्राव्राजयत् प्रवासयत् । द्वितीयेन वरेण सुतस्य भरतस्य वैधव्यैकफलां स्ववैधव्यमात्रफलाम् । न तूपभोगफलामिति भावः । श्रियमैच्छदियेष ॥ ६ ॥

पित्रा दत्तां रुदन्रामः प्राङ्महीं प्रत्यपद्यत ।
पश्चाद्वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत् ॥ ७ ॥

पित्रेति ॥ रामः । प्राक् पित्रा दत्तां महीं रुदन्प्रत्यपद्यताङ्गीचकार । स्वत्यागदुःखादिति भावः । पश्चाद्वनाय गच्छेत्येवंरूपां तदाज्ञां पित्राज्ञां मुदितोऽग्रहीत् । पित्राज्ञाकरणलाभादिति भावः ॥ ७ ॥

दधतो मङ्गलक्षौमे वसानस्य च वल्कले ।
ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ॥ ८ ॥

दधत इति ॥ मङ्गलक्षौमे दधतो वल्कले वसानस्याच्छादयतश्च तस्य रामस्य सममेकविधं मुखरागं मुखवर्णं जना विस्मिता ददृशुः । सुखदुःखयोरविकृत इति भावः ॥ ८ ॥

स सीतालक्ष्मणसखः सत्याद्गुरुमलोपयन् ।
विवेश दण्डकारण्यं प्रत्येकं च सतां मनः ॥ ९ ॥

स इति ॥ स रामो गुरुं पितरं सत्याद्वरदानरूपात् । अलोपयन्नभ्रंशयन् । सीतालक्ष्मणयोः सखेति विग्रहः । ताभ्यां सहितः सन् दण्डकारण्यं विवेश । सतां मनः प्रत्येकं विवेश । पितृभक्त्या सर्वे सन्तः संतुष्टा इति भावः ॥ ९ ॥

राजापि तद्वियोगार्तः स्मृत्वा शापं स्वकर्मजम् ।
शरीरत्यागमात्रेण शुद्धिलाभममन्यत ॥ १० ॥

राजेति ॥ तद्वियोगार्तः पुत्रवियोगदुःखितो राजापि स्वकर्मणा मुनिपुत्रवधरूपेण जातः स्वकर्मजस्तं शापं पुत्रशोकजं मरणात्मकं स्मृत्वा शरीरत्यागमात्रेण देहत्यागेनैव शुद्धिलाभं प्रायश्चित्तम् । अमन्यत । मृत इत्यर्थः ॥ १० ॥

विप्रोषितकुमारं तद्राज्यमस्तमितेश्वरम् ।
रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां ययौ ॥ ११ ॥

पाठा०—१ 'मुखरागसमञ्जसम्'. २ 'अलोकयन्'.

टिप्प०—1 'वैधव्यैकफलाम्' इत्यनेन रामवियोगे भर्तृमरणं ध्वन्यते—इति दिनकर० ।
2 मयि वनं गते पिता राज्यं न स्थास्यतीति रोषः—इति दिनकर० ॥ रामः प्राक्पूर्वं पित्रा दत्तां महीं रुदन्प्रत्यपद्यत प्रत्यग्रहीत्, पश्चाद्वनाय गच्छति तदाज्ञां मुदितः सन्नगृहीत् जग्राह—इति वल्लभः ।

विप्रोषितेति ॥ विप्रोषिता गताः कुमारा यस्मिंस्तत्तथोक्तम् । अस्तमितो मृत ईश्वरो राजा यस्य तत्तथोक्तं तद्राज्यं रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां भोग्यवस्तुतां ययौ । 'आमिषं भोग्यवस्तुनि' इति केशवः ॥ ११ ॥

अथानाथाः प्रकृतयो मातृबन्धुनिवासिनम् ।
मौलैरानाययामासुर्भरतं स्तम्भिताश्रुभिः ॥ १२ ॥

अथेति ॥ अथानाथाः प्रकृतयोऽमात्याः । 'प्रकृतिः सहजे योनावमात्ये परमात्मनि' इति विश्वः । मातृबन्धुषु निवासिनं भरतं स्तम्भिताश्रुभिः । पितृमरणगुप्त्यर्थमिति भावः । मौलैराप्तैः सचिवैः । आनाययामासुरागमयांचक्रुः ॥ १२ ॥

श्रुत्वा तथाविधं मृत्युं कैकेयीतनयः पितुः ।
मातुर्न केवलं स्वस्याः श्रियोऽप्यासीत्पराङ्मुखः ॥ १३ ॥

श्रुत्वेति ॥ कैकेयीतनयो भरतः पितुस्तथाविधं स्वमातृमूलं मृत्युं मरणं श्रुत्वा स्वस्या मातुः केवलं मातुरेव पराङ्मुखो न । किंतु श्रियोऽपि पराङ्मुख आसीत् ॥ १३ ॥

ससैन्यश्चान्वगाद्रामं दर्शितानाश्रमालयैः ।
तस्य पश्यन्ससौमित्रेरुदश्रुर्वसतिद्रुमान् ॥ १४ ॥

ससैन्य इति ॥ ससैन्यो भरतो राममन्वगाच्च । किं कुर्वन्? आश्रमालयैर्वनवासिभिर्दर्शितान् 'एते रामनिवासाः' इति कथितान् ससौमित्रेर्लक्ष्मणसहितस्य तस्य रामस्य वसतिद्रुमान्निवासवृक्षान्पश्यन्नुदश्रू रुदन् ॥ १४ ॥

चित्रकूटवनस्थं च कथितस्वर्गतिर्गुरोः ।
लक्ष्म्या निमन्त्रयांचक्रे तमनुच्छिष्टसंपदा ॥ १५ ॥

चित्रेति ॥ चित्रकूटवनस्थं तं रामं च गुरोः पितुः कथितस्वर्गतिः । कथितपितृमरणः सन्नित्यर्थः । अनुच्छिष्टाऽननुभूतशिष्टा संपद्गुणोत्कर्षो यस्याः सा । 'संपद्भूतौ गुणोत्कर्षे' इति केशवः । तया लक्ष्म्या करणेन निमन्त्रयांचक्रे आहूतवान् ॥ १५ ॥

पाठा०—१ 'मातृवर्गे'. २ 'कथितान्'. ३ 'अनुत्सृष्ट'.

टिप्प०—1 'नी-वाह्योः प्रतिषेधो वक्तव्य' इति 'मौल'शब्दान्न द्वितीया, किं तु तृतीया—इति दिनकर० ।

2 पिता तु स्वर्गतः, राज्यं मया नोपभुज्यत इत्यदो राज्यं भुंक्ष्वेति भरतो राममाकारयांमास—इति दिनकर० ।

स हि प्रथमजे तस्मिन्नकृतश्रीपरिग्रहे ।
परिवेत्तारमात्मानं मेने स्वीकरणाद्भुवः ॥ १६ ॥

स हीति ॥ स हि भरतः प्रथमजेऽग्रजे तस्मिन् रामेऽकृतश्रीपरिग्रहे सति स्वयं भुवः स्वीकरणादात्मानं परिवेत्तारं मेने । 'परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात्' इत्यमरः । भूपरिग्रहोऽपि दारपरिग्रहसम इति भाव. ॥ १६ ॥

तमशक्यमपाक्रष्टुं निदेशात्स्वर्गिणः पितुः ।
यद्याचे पादुके पश्चात्कर्तुं राज्याधिदेवते ॥ १७ ॥

तमिति ॥ स्वर्गिणः पितुर्निदेशादपाक्रष्टुं निवर्तयितुमशक्यं तं रामं पश्चाद्राज्याधिदेवते स्वामिन्यौ कर्तुं पादुके ययाचे याचितवान् ॥ १७ ॥

स विसृष्टस्तथेत्युक्त्वा भ्रात्रा नैवाविशत्पुरीम् ।
नन्दिग्रामगतस्तस्य राज्यं न्यासमिवाभुनक् ॥ १८ ॥

स इति ॥ स भरतो भ्रात्रा रामेण तथेत्युक्त्वा विसृष्टः सन् पुरीमयोध्यां नाविशदेव । किंतु नन्दिग्रामगतः सन् । तस्य रामस्य राज्यं न्यासमिव निक्षेपमिव । अभुनगपालयत् । न तूपभुक्तवानित्यर्थः । अन्यथा 'भुजोऽनवने' ( पा. १।३।६३ ) इत्यात्मनेपदप्रसङ्गात् । भुजेर्लङ् ॥ १८ ॥

दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् ॥ १९ ॥

दृढेति ॥ ज्येष्ठे दृढभक्ती राज्यतृष्णापराङ्मुखो भरत इति पूर्वोक्तानुष्ठानेन मातुः पापस्य प्रायश्चित्तं तदपनोदकं कर्म । अकरोदिव । इत्युत्प्रेक्षा । 'दृढभक्ति.' इत्यत्र 'दृढ'शब्दस्य 'स्त्रियाः पुंवत्-'( पा. ६।३।३४ ) इत्यादिना पुंवद्भावो दुर्घटः । 'अप्रियादिषु' इति निषेधात् । 'भक्ति'शब्दस्य प्रियादिषु पाठात् । अतो दृढं भक्तिरस्येति नपुंसकपूर्वपदो बहुव्रीहिरिति गणव्याख्याने दृढभक्तिरित्येवमादिषु पूर्वपदस्य नपुंसकस्य विवक्षितत्वात्सिद्धमिति समाधेयम् । वृत्तिकारश्च—दीर्घनि-

पाठा०-१ 'निदेशात्'. २ 'शुद्ध्यर्थम्'.

टिप्प०—1 'स्वर्गिण' इत्यनेन यावत्पितुः केवल दाक्षिण्याद्राज्यानभिलाषः, किन्त्वात्मनो महापराधत्वादिति घोत्यते-इति दिनकर० ।

2 अत्र केचित्तु-'कर्मसाधनेन 'भक्ति'शब्दे पुंवत्त्वनिषेधोऽयम् । 'भक्तौ तु कर्मसाधनायां' इति भोजव्याकरणदर्शनात् । प्रायश्चित्त-'प्रायः पापं विनिर्दिष्टं चित्तं तस्य विशोधनम्'-इति सुमति० ।

वृत्तिमानपरो 'दृढभक्ति'शब्दो लिङ्गविशेषस्यानुपकारत्वात्स्त्रीत्वमविवक्षितमेव । तस्मादस्त्रीलिङ्गत्वाद्दृढभक्तिशब्दस्यायं प्रयोग इत्यभिप्रायः । न्यासकारोऽप्येवम् । भोजराजस्तु—'कर्मसाधनस्यैव भक्तिशब्दस्य प्रियादिपाठाद्दृढभानीभक्तिरित्यादौ कर्मसाधनत्वात्पुंवद्भावप्रतिषेधः । दृढभक्तिरित्यादौ भावसाधनत्वात्पुंवद्भावसिद्धिः पूर्वपदस्य' इत्याह ॥ १९ ॥

> रामोऽपि सह वैदेह्या वने वन्येन वर्तयन्[1] ।
> चचार[3] सानुजः शान्तो[4] वृद्धेक्ष्वाकुव्रतं युवा ॥ २० ॥

**राम** इति ॥ **सानुजः शान्तो रामोऽपि वैदेह्या सह वने वन्येन** वनभवेन कन्दमूलादिना **वर्तयन्** वृत्तिं कुर्वञ्जीवन् **वृद्धेक्ष्वाकूणां व्रतं** वनवासात्मकं **युवा** यौवनस्थ एव **चचार** ॥ २० ॥

> प्रभावस्तम्भितच्छायमाश्रितः स वनस्पतिम् ।
> कदाचिदङ्के सीतायाः शिश्ये किंचिदिव श्रमात् ॥ २१ ॥[2]

**प्रभावेति** ॥ स रामः **कदाचित् प्रभावेण** स्वमहिम्ना **स्तम्भिता** स्थिरीकृता **छाया** यस्य तं **वनस्पतिमाश्रितः** सन् । **किंचिदिव** पच्छ्रमादिव **सीताया अङ्के शिश्ये** सुष्वाप ॥ २१ ॥

> ऐन्द्रिः किल नखैस्तस्या विददार स्तनौ द्विजः ।
> प्रियोपभोगचिह्नेषु पौरोभाग्यमिवाचरन्[1] ॥ २२ ॥

**ऐन्द्रिरिति** ॥ **ऐन्द्रि**रिन्द्रस्य पुत्रो **द्विजः** पक्षी काकस्**तस्याः** सीताया **स्तनौ** । **प्रियस्य** रामस्यो**पभोगचिह्नेषु** । तत्कृतनखक्षतेष्वित्यर्थः । पुरोभागिनो दोषैकदर्शिनः कर्म **पौरोभाग्यम्** । 'दोषैकदृक्पुरोभागी' इत्यमरः । दुःश्लिष्टदोषघातमा**चरन्**नुर्वन्निव । **नखैर्विददार** विलिलेख । 'किल' इत्यैतिह्ये ॥ २२ ॥

> तस्मिन्नास्थदिषीकास्त्रं रामो रामावबोधितः ।
> आत्मानं मुमुचे तस्मादेकनेत्रव्ययेन सः ॥ २३ ॥

---

**पाठा०**—१ 'वृत्तिम्'. २ 'मृगमांसं ततः सीतां रक्षन्तीमातपे शठः । पक्षतुण्डनखाघातैर्बबाधे वायसो बलात् ॥'. ३ 'आचरत्'. ४ 'श्रान्तश्च'; 'श्रान्तः स.'; 'श्रान्तस्तु'; 'श्रान्तः सन्'; 'भीतः सन्'.

---

टिप्प०—1 रामेण दत्तानि सीतायाः स्तनयोर्नखपदानि तथा न सन्तीति दोषैकदर्शित्वं प्रकटयन्निव स्तनौ विदारितवान्—इति दिनकर० ।

तस्मिन्निति ॥ रामया सीतयाऽवबोधितो रामस्तस्मिन् काक इषीकास्त्रं काशास्त्रम्। 'इषीका काशमुच्यते' इति हलायुधः । आस्यदसति स्म। 'असु क्षेपणे' इति धातोर्लुङ्। 'असतिवक्तिख्यातिभ्योऽङ्' (पा. ३।१।५२) इत्यङ्प्रत्ययः। 'अस्यतेस्थुक्' (पा. ७।४।१७) इति थुगागमः। स काकं एकनेत्रस्य व्ययेन दानेन तस्माद्वाणादात्मानं मुमुचे मुक्तवान्। मुचेः कर्तरि लिङ्। 'धेनुं मुमोच' (२।१) इतिवत्प्रयोगः ॥ २३ ॥

रामस्त्वासन्नदेशत्वाद्भरतागमनं पुनः ।
आशङ्क्योत्सुकसारङ्गां चित्रकूटस्थलीं जहौ ॥ २४ ॥

राम इति ॥ रामस्त्वासन्नदेशत्वाद्धेतोः पुनर्भरतागमनमाशङ्क्योत्सुकसारङ्गामुत्कण्ठितहरिणां चित्रकूटस्थलीं जहौ तत्याज । आसन्नश्चासौ देशश्चेति विग्रहः ॥ २४ ॥

प्रययावातिथेयेषु वसन्नृषिकुलेषु सः ।
दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः ॥ २५ ॥

प्रययाविति ॥ सः रामः । अतिथिषु साधूनि आतिथेयानि। 'पथ्यतिथिवसतिस्वपतेर्ढञ्' (पा. ४।४।१०४) इति ढञ्प्रत्ययः । तेषु । ऋषिकुलेष्वृष्याश्रमेषु । 'कुलं कुल्ये गणे देहे गेहे जनपदेऽन्वये' इति हैमः । वर्षासु भवानि वार्षिकाणि। 'वर्षाभ्यष्ठक्' (पा. ४।३।१८) इति ठक्प्रत्ययः। तेषु । ऋक्षेषु नक्षत्रेषु राशिषु वा भास्कर इव वसन् दक्षिणां दिशं प्रययौ ॥ २५ ॥

बभौ तमनुगच्छन्ती विदेहाधिपतेः सुता ।
प्रतिषिद्धापि कैकेय्या लक्ष्मीरिव गुणोन्मुखी ॥ २६ ॥

बभाविति ॥ तं राममनुगच्छन्ती विदेहाधिपतेः सुता सीता कैकेय्या प्रतिषिद्धा निवारिताऽपि गुणोन्मुखी गुणोत्सुका लक्ष्मी राजलक्ष्मीरिव बभौ ॥

---

पाठा०—१ 'कैकेयी'.

---

टिप्प०—1 काकोऽत्र सोढुमशक्यबाणपरिहारार्थं ज्ञात्वा सर्वनाशादरं नेत्रनाश इति तत्परित्यागेनात्मरक्षणमकरोदिति मल्लिनाथः—इति शिशु० ।

2 वर्षासु भवेषु पुष्यादिषु ऋक्षेषु नक्षत्रेषु वसन् । यद्वा,—ऋक्षेषु राशिषु कर्कादिषु । ऋक्षमिति राशिवाचकः । वर्षयोरिति स्मरणात् । ऋक्षेष्विति बहुत्वं सांवत्सरम् । द्विधा विभज्य तेन वर्षा इति पक्षाश्रयेण चत्वारो वार्षिका मासा गताः । 'वर्षशतोपमाः' इति रामायणोक्तेः—इति हेमाद्रिः ।

3 उक्तं भारविना—'व्रजन्ति हि विग्रहपक्षारिणं गुणलुब्धाः स्वयमेव संपदः' इति ।

पञ्चवट्यामिति ॥ ततो रामः कुम्भजन्मनोऽगस्त्यस्य शासनात् । पञ्चानां वटानां समाहारः पञ्चवटी । 'तद्धितार्थ-' (पा. २।१।५१) इति तत्पुरुषः । 'संख्यापूर्वो द्विगुः' (पा. २।१।२२) इति द्विगुसंज्ञायाम् 'द्विगोः' (पा. ४।१।२१) इति ङीप् । 'द्विगुरेकवचनम्' (पा. २।४।१) इत्येकवचनम् । तस्यां पञ्चवट्याम् । विन्ध्याद्रिः प्रकृतौ वृद्धेः पूर्वावस्थायामिव । अनपोढस्थितिरनतिक्रान्तमर्याद-स्तस्थौ ॥ ३१ ॥

रावणावरजा तत्र राघवं मदनातुरा ।
अभिपेदे निदाघार्ता व्यालीव मलयद्रुमम् ॥ ३२ ॥

रावणावरजेति ॥ तत्र पञ्चवट्यां मदनातुरा रावणावरजा शूर्पणखा । 'पूर्वपदात्संज्ञायामगः' (पा. ८।४।३) इति णत्वम् । राघवम् । निदाघार्ता घर्मतप्ता व्याकुला व्याली भुजंगी मलयद्रुमं चन्दनद्रुममिव । अभिपेदे प्राप ॥ ३२ ॥

सा सीतासंनिधावेव तं वव्रे कथितान्वया ।
अत्यारूढो हि नारीणामकालज्ञो मनोभवः ॥ ३३ ॥

सेति ॥ सा शूर्पणखा सीतासंनिधावेव कथितान्वया कथितस्ववंशा सती तं रामं वव्रे वृतवती । तथा हि-अत्यारूढोऽतिप्रवृद्धो नारीणां मनोभवः कामः कालज्ञोऽवसरज्ञो न भवतीत्यकालज्ञो हि ॥ ३३ ॥

कलत्रवानहं बाले ! कनीयांसं भजस्व मे ।
इति रामो वृषस्यन्तीं वृषस्कन्धः शशास ताम् ॥ ३४ ॥

कलत्रवानिति ॥ वृषः पुमान् । 'वृषः स्याद्वासवे धर्मे सौरभेये च शुक्ले । पुंराशिभेदयोः शृङ्ग्यां मूषकश्रेष्ठयोरपि ॥' इति विश्वः । वृषं पुरुषमात्मार्थमिच्छतीति वृषस्यन्ती कामुकी । 'वृषस्यन्ती तु कामुकी' इत्यमरः । 'सुप आत्मनः क्यच्'

पाठा०—१ 'प्रतिपेदे'.

टिप्प०—1 पञ्चानां वटानां समाहारः पञ्चवटी आयतनविशेषः-इति हेमाद्रिः । ते पञ्च वटाश्च-'अश्वत्थो बिल्ववृक्षश्च वटो धात्री तथैव च । अशोकवृक्षश्चेत्येते वटाः पञ्च सनीरिताः' इत्यादिनोक्ताः ।

2 पुरा हि स्पर्धितः मदक्षिणेच्छुना विन्ध्याचलेन स्ववृद्धया सूर्यचन्द्रयोर्गतिः समवरुद्धा-सीत् । तौ तन्निवृत्तिमीप्सू चागस्त्यं जग्मतुः । तत्रेरितमगस्त्यमागच्छन्तं दृष्ट्वा विन्ध्यो दण्ड-वत्प्रणनाम । तदा तमगस्त्यो हि 'मम पुनरागमनं यावदेवमेव तिष्ठ' इत्युक्त्वा दक्षिणां दिशं जगाम इति कथानकमिदं वनपर्व(१२-१०६)तोऽनुसंधेयम् ।

3 यथा निदाघे घर्मेण बाधिता व्याली सर्पिणी चन्दनवृक्षमाश्रयति-इति दिनकर० ।

(पा. ३।१।८) इति क्यच्प्रत्ययः । अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि' (पा. ७।१।५१) इत्यसुगागमः । ततो लटः शत्रादेशः । 'उगितश्च' (पा. ४।१।६) इति ङीप् । श्लोकार्थस्तु—वृषस्कन्धो रामो वृषस्यन्तीं तां राक्षसीम् 'हे बाले ! अहं कलत्रवान्, मे कनीयांसं कनिष्ठं भजस्व' इति शशास- ज्ञापितवान् ॥ ३४ ॥

ज्येष्ठाभिगमनात्पूर्वं तेनाप्यनभिनन्दिताम् ।
साऽभूद्रामाश्रया भूयो नदीवोभयकूलभाक् ॥ ३५ ॥

ज्येष्ठेति ॥ पूर्वं ज्येष्ठाभिगमनात्तेन लक्ष्मणेनाप्यनभिनन्दिता नाङ्गीकृता भूयो रामाश्रया सा राक्षसी । उभे कूले भजतीत्युभयकूलभाक् नदीवाभूत् सा हि यातायाताभ्यां पर्यायेण कूलद्वयगामिनी नदीसदृश्यभूदित्यर्थः ॥ ३५ ॥

संरम्भं मैथिलीहासः क्षणसौम्यां निनाय ताम् ।
निवातस्तिमितां वेलां चन्द्रोदय इवोदधेः ॥ ३६ ॥

संरम्भमिति ॥ मैथिलीहासः क्षणं सौम्यां सौम्याकारां तां राक्षसीम् । निवातेन स्तिमितां निश्चलामुदधेर्वेलामम्बुविकृतिम् । अम्बुपूरमित्यर्थः । 'अब्ध्यम्बुविकृतौ वेला' इत्यमरः । चन्द्रोदय इव । संरम्भं संक्षोभं निनाय ॥ ३६ ॥

फलमस्योपहासस्य सद्यः प्राप्स्यसि पश्य माम् ।
मृग्याः परिभवो व्याघ्र्यामित्यवेहि त्वया कृतम् ॥ ३७ ॥

फलमिति ॥ श्लोकद्वयेनान्वयः । अस्योपहासस्य फलं सद्यः संप्रत्येव प्राप्स्यसि । मां पश्य । त्वया कर्त्र्या कृतमुपहासरूपं करणं व्याघ्र्यां विषये मृग्याः कर्त्र्याः परिभव इत्यवेहि ॥ ३७ ॥

इत्युक्त्वा मैथिलीं भर्तुरङ्के निविशतीं भयात् ।
रूपं शूर्पणखा नाम्नः सदृशं प्रत्यपद्यत ॥ ३८ ॥

पाठा०–१ 'न तेनाप्यभिनन्दिता'. २ 'क्षणं सौम्याम्'. ३ 'मृगीपरिभवः'. ४ 'मृत्यवे हि'. ५ 'कृतः'. ६ 'अङ्कम्'. ७ 'निर्विशतीम्'. ८ 'नाम्ना'.

टिप्प०—1 ज्येष्ठाभिगमनात् तेनापि लक्ष्मणेनापि नाभिनन्दिता नाङ्गीकृता। 'ज्येष्ठः श्रेष्ठेऽतिवृद्धे च ज्येष्ठो मासान्तरेऽपि च' इति विश्वः । मासे तु चैत्र पौषवत् ज्येष्ठ इति भाव्यम्; ज्येष्ठया युक्ता पौर्णमासी ज्येष्ठी, 'नक्षत्रेण युक्तः कालः' (पा. ४।२।३) इत्यण् । सा विद्यते तस्मिन्सः-इति हेमाद्रिः ।

2 उभे कूले भजते इति, उभयकूले भजते इति वोभयकूलभाक् । तथा च 'उभौ पुत्रावस्याः स्युभयपुत्र'-इत्युदाहरणं महाभाष्ये ।

इतीति ॥ मयाद्धतुरङ्के निविशन्तीमालिङ्गन्तीं मैथिलीमित्युक्त्वा शूर्पणखा नाम्नः सदृशाम्। शूर्पाकारनखयुक्तामित्यर्थः। रूपमाकारं प्रत्यपद्यत स्वीचकार। अदर्शयदित्यर्थः ॥ ३८ ॥

लक्ष्मणः प्रथमं श्रुत्वा कोकिलामञ्जुवादिनीम्।
शिवाघोरस्वनां पश्चाद्बुबुधे विकृतेति ताम् ॥ ३९ ॥

लक्ष्मण इति ॥ लक्ष्मणः प्रथमं कोकिलावन्मञ्जुवादिनीं पश्चाच्छिवावद्घोरस्वनां तां शूर्पणखां श्रुत्वा। तस्याः स्वनं श्रुत्वेत्यर्थः। 'शुस्वनः शङ्खः श्रूयते' इतिवत्प्रयोगः। विकृता मायाविनीति बुबुधे बुद्धवान्। कर्तरि लिट् ॥ ३९ ॥

पर्णशालामथ क्षिप्रं विकृष्टासिः प्रविश्य सः।
वैरूप्यपौनरुक्त्येन भीषणां तामयोजयत् ॥ ४० ॥

पर्णशालामिति ॥ अथ स लक्ष्मणो विकृष्टासिः कोशोद्धृतखड्गः सन् क्षिप्रं पर्णशालां प्रविश्य। भीषयतीति भीषणाम्। नन्द्यादित्वाल्ल्युट् कर्तरि। तां राक्षसीं वैरूप्यस्य पौनरुक्त्यं द्वैगुण्यं लक्षणया। तेन। अयोजयद्योजितवान्, स्वभावत एव विकृतां तां कर्णादिच्छेदेन पुनरपि विकृतामकरोदित्यर्थः ॥ ४० ॥

सा वक्रनखधारिण्या वेणुकर्कशपर्वया।
अङ्कुशाकारयाङ्गुल्या तावतर्जयदम्बरे ॥ ४१ ॥

सेति ॥ सा वक्रनखं धारयतीति वक्रनखधारिणी तया वेणुवत्कर्कशपर्वया। अत एवाङ्कुशस्याकार इवाकारो यस्याः सा तया अङ्गुल्या तौ राघवावम्बरे व्योम्नि स्थिता। 'अम्बरं व्योम्नि वाससि' इत्यमरः। अतर्जयदभर्त्सयत्। 'तर्ज भर्त्सने' इति धातोश्चौरादिकादनुदात्तेत्त्वादात्मनेपदेन भाव्यम्। तथापि चक्षिङो ङित्करणा-

---

पाठा०—१ 'मञ्जुभाषिणीम्'. २ 'स्वराम्'. ३ 'विकृष्टासिः'. ४ 'वैरूप्यं पुनरुक्तेन'.

---

टिप्प०—1 'रामस्याङ्के निविशती सीताम्' इति पूर्वोक्तमुक्त्वा शूर्पाकारा नखा यस्याः सा शूर्पणखेति नाम्नस्तुल्यं रूपं प्राप, शूर्पाकारनखाऽभूदित्यर्थः 'नखमुखात्संज्ञायाम्' इति णत्वनिषेधः। ननु कथं 'निविशती'ति? निविश इत्यात्मनेपदेन भाव्यम्। उच्यते,-निविश इत्युपसर्गविशिष्टस्य नियतः। यद्वा,-परस्मैपदस्याभावपक्षे शतृप्रत्ययः, पश्चान्निना समासः-इति दिनकर०।

2 'विकृता' इत्यत्र 'मायाविनी' इति शब्देन कर्मणोऽनिर्दिष्टत्वात्... कर्मणि न विभक्तिः; परिगणनस्य प्रायिकत्वात्। यथा माघस्कन्धे (१।३) 'क्रमादमुं नारद इत्यबोधि सः'-इति हेमाद्रिः।

ज्ञापकादानुदात्तेत्त्वनिमित्तस्यानित्यत्वात्परस्मैपदमूह्यमित्युक्तमाख्यातचन्द्रिकायाम्—'तर्जयते भर्त्सयते तर्जयतीत्यपि च दृश्यते क्वचित्' इति ॥ ४१ ॥

प्राप्य चाशु जनस्थानं खरादिभ्यस्तथाविधम् ।
रामोपक्रममाचख्यौ रक्षःपरिभवं नवम् ॥ ४२ ॥

प्राप्येति ॥ साशु जनस्थानं प्राप्य खरादिभ्यो राक्षसेभ्यस्तथाविधं स्वाङ्गच्छेदात्मकम् । उपक्रम्यत इत्युपक्रमः । कर्मणि घञ्प्रत्ययः । रामस्य कर्तुरुपक्रमः रामोपक्रमम् । रामेणादावुपक्रान्तमित्यर्थः । 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' (पा. २।४।२१) इति क्लीबत्वम् । तन्नवं रक्षसां कर्मभूतानां परिभवमाचख्यौ च ॥ ४२ ॥

मुखावयवलूनां तां नैर्ऋता यत्पुरो दधुः ।
रामाभियायिनां तेषां तदेवाभूदमङ्गलम् ॥ ४३ ॥

मुखेति ॥ नैर्ऋता राक्षसाः । 'नैर्ऋतो यातुरक्षसी' इत्यमरः । मुखावयवेषु कर्णादिषु लूनां छिन्नां तां पुरो दधुरग्रे चक्रुरिति यत्तदेव रामाभियायिनां राममभिद्रवतां तेषाममङ्गलमभूत् ॥ ४३ ॥

उदायुधानापततस्तान्दृप्तान्प्रेक्ष्य राघवः ।
निदधे विजयाशंसां चापे सीतां च लक्ष्मणे ॥ ४४ ॥

उदिति ॥ उदायुधानुद्यतायुधानापतत आगच्छतो दृप्तांस्तान्खरादीन्प्रेक्ष्य राघवश्चापे विजयस्याशंसामाशां लक्ष्मणे सीतां च निदधे । सीतारक्षणे लक्ष्मणं नियुज्य स्वयं युद्धाय संनद्ध इति भावः ॥ ४४ ॥

एको दाशरथिः कामं यातुधानाः सहस्रशः ।
ते तु यावन्त एवाजौ तावांश्च ददृशे स तैः ॥ ४५ ॥

एक इति ॥ दाशरथी राम एकोऽद्वितीयः । यातुधानाः कामं सहस्रशः । सन्तीति शेषः । तैर्यातुधानैस्तु स राम आजौ ते यातुधाना यावन्तो यावत्संख्याका एव तावांस्तावत्संख्याकश्च ददृशे ॥ ४५ ॥

असज्जनेन काकुत्स्थः प्रयुक्तमथ दूषणम् ।
न चक्षमे शुभाचारः स दूषणमिवात्मनः ॥ ४६ ॥

पाठा०—१ 'तथाविधा'. २ 'आसीत'. ३ 'रामः'. ४ 'अपि'. ५ 'आत्मनि'.

टिप्प०—1 जनस्थानं रावणदेशसीमानं जनस्थानाख्यं नगरम्'-इति वल्लभः ।
2 सीतारक्षणे लक्ष्मणं नियुज्य स्वयं युद्धाय सन्नद्ध इति भावः'-इति हेमाद्रिः ।
3 अनेन शीघ्रगामित्वमुक्तम्'-इति हेमाद्रिः ।

असदिति ॥ अथ शुभाचारो रणे साधुचारी सद्वृत्तश्च स काकुत्स्थोऽसज्जनेन दुर्जनेन रक्षोजनेन च प्रयुक्तं प्रेषितमुच्चारितं च दूषणं दूषणाख्यं राक्षसमात्मनो दूषणं दोषमिव न चक्षमे न सेहे । प्रतिकर्तुं प्रवृत्त इत्यर्थः ॥ ४६ ॥

तं शरैः प्रतिजग्राह खरत्रिशिरसौ च सः ।
क्रमशस्ते पुनस्तस्य चापात्सममिवोद्ययुः ॥ ४७ ॥

तमिति ॥ स रामस्तं दूषणं खरत्रिशिरसौ च शरैः प्रतिजग्राह । प्रतिजहारेत्यर्थः । क्रमशो यथाक्रमम् । प्रयुक्ता अपीति शेषः । तस्य ते शराः पुनश्चापात्समं युगपदिवोद्ययुः । अतिलघुहस्त इति भावः ॥ ४७ ॥

तैस्त्रयाणां शितैर्बाणैर्यथापूर्वविशुद्धिभिः ।
आयुर्देहातिगैः पीतं रुधिरं तु पतत्रिभिः ॥ ४८ ॥

तैरिति ॥ देहमतीत्य भित्त्वा गच्छन्तीति देहातिगाः । तैर्यथास्थिता पूर्वशुद्धिर्येषां तैः । अतिवेगत्वेन देहनिर्गमात्प्रागिव रुधिरलेपरहितैरित्यर्थः । शितैस्तीक्ष्णैस्तैर्बाणैस्त्रयाणां खरादीनामायुः पीतम् । रुधिरं तु पतत्रिभिः पीतम् ॥ ४८ ॥

तस्मिन्रामशरोत्कृत्ते बले महति रक्षसाम् ।
उत्थितं ददृशेऽन्यच्च कबन्धेभ्यो न किंचन ॥ ४९ ॥

तस्मिन्निति ॥ तस्मिन्रामशरैरुत्कृत्ते छिन्ने महति रक्षसां बले उत्थितमुत्थानक्रियाविशिष्टं प्राणिनां कबन्धेभ्यः शिरोहीनशरीरेभ्यः । 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्' इत्यमरः । अन्यच्चान्यत्किंचन न ददृशे । 'कबन्धेभ्य' इत्यत्र 'अन्यारात्–' (पा. २।३।२९) इति पञ्चमी । निःशेषं हतमित्यर्थः ॥ ४९ ॥

सा बाणवर्षिणं रामं योधयित्वा सुरद्विषाम् ।
अप्रबोधाय सुष्वाप गृध्रच्छाये वरूथिनी ॥ ५० ॥

सेति ॥ सा सुरद्विषां वरूथिनी सेना बाणवर्षिणं रामं योधयित्वा युद्धं कारयित्वा गृध्राणां छाया गृध्रच्छायम् । 'छाया बाहुल्ये' (पा. २।४।२२) इति क्लीबत्वम् । तस्मिन् । अप्रबोधायापुनर्बोधाय सुष्वाप । ममारेत्यर्थः । मन्त्र[illegible] ॥ ५० ॥

राघवास्त्रविदीर्णानां रावणं प्रति रक्षसाम् ।
तेषां शूर्पणखैवैका दुष्प्रवृत्तिहराऽभवत् ॥ ५१ ॥

---

पाठा०—१ 'शरैः'. २ 'यथापूर्वं विशुद्धिभिः'. ३ 'उच्छ्रितम्'. ४ 'मन्यत्र', 'मन्यत्तु', 'मन्यच्च'.

राघवेति ॥ शूर्पाकाराणि नखानि यस्याः सा शूर्पणखा । 'पूर्वपदात्संज्ञायाम्-' ( पा. ८।४।३ ) इति णत्वम् । 'नखमुखात्संज्ञायाम्' इति ङीप्प्रतिषेधः । सैव रावणं प्रति राघवास्त्रैर्विदीर्णानां हतानां तेषां रक्षसां खरादीनां दुष्प्रवृत्तिं वार्तां हरति प्रापयतीति दुष्प्रवृत्तिहराऽभवत् । 'हरतेरनुद्यमनेऽच्' ( पा. ३।२।९ ) इत्यच्प्रत्ययः ॥ ५१ ॥

निग्रहात्स्वसुराप्तानां वधाच्च धनदानुजः ।
रामेण निहितं मेने पदं दशसु मूर्धसु ॥ ५२ ॥

निग्रहादिति ॥ स्वसुः शूर्पणखाया निग्रहादङ्गच्छेदादाप्तानां बन्धूनां खरादीनां वधाच्च कारणाद्धनदानुजो रावणो रामेण दशसु मूर्धसु पदं पादं निहितं मेने ॥ ५२ ॥

रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ ।
जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ॥ ५३ ॥

रक्षसेति ॥ स रावणो मृगरूपेण रक्षसा मारीचेन राघवौ वञ्चयित्वा प्रतार्य पक्षीन्द्रस्य जटायुषः प्रयासेन युद्धरूपेण क्षणं विघ्नितः[2] संजातविघ्नः सन् सीतां जहार ॥ ५३ ॥

तौ सीतान्वेषिणौ गृध्रं लूनपक्षमपश्यताम् ।
प्राणैर्दशरथप्रीतेरनृणं[1] कण्ठवर्तिभिः ॥ ५४ ॥

ताविति ॥ सीतान्वेषिणौ तौ राघवौ लूनपक्षं रावणेन छिन्नपक्षं कण्ठवर्तिभिः प्राणैर्दशरथप्रीतेर्दशरथसख्यस्यानृणमृणविमुक्तं गृध्रं जटायुषमपश्यतां दृष्टवन्तौ । दृशेर्लङि रूपम् ॥ ५४ ॥

स रावणहृतां ताभ्यां वचसाचष्ट[2] मैथिलीम् ।
आत्मनः सुमहत्कर्म व्रणैरावेद्य संस्थितः ॥ ५५ ॥

पाठा०—१ 'आनृण्यम्'. २ 'आख्याय'.

टिप्प०—1 अनेन महापरिभवमजीगणदित्यर्थः—इति हेमाद्रिः ।
2 विघ्नः संजातोऽस्य विघ्नितः, 'तदस्य संजातं तारकादिभ्य इतच्' ( पा. ५।२।३६ ) इति इतच्प्रत्ययः । चित्रमृगमवलोक्यैनमानयेति दयिताप्रेरितो रामो निरगमत् । ततो 'हा लक्ष्मण!' इति वाक्यमाकर्ण्य लक्ष्मणमपि सीता प्रैषीत् । तदन्तरे द्वयोरप्यसंनिधानाद्दशग्रीवस्तामग्रहीदिति प्रसिद्धम् । तन्मध्ये जटायुरागत्य—'रे रे दुराचार! निशाचरापसद! जीवति मयि रामप्रियां कथं हरिष्यसि?' इति युध्यते सति विघ्नितः—इति शिशु० ।

स इति ॥ स जटायू रावणहृतां मैथिलीं ताभ्यां रामलक्ष्मणाभ्याम्। 'क्रियाग्रहणमपि कर्तव्यम्' इति संप्रदानत्वाच्चतुर्थी। वचसा वाग्वृत्त्यावेद्य। आत्मनः सुमहत्कर्म युद्धरूपं व्रणैरावेद्य संस्थितो मृतः ॥ ५५ ॥

तयोस्तस्मिन्नवीभूतपितृव्यापत्तिशोकयोः ।
पितरीवाग्निसंस्कारात्परा ववृतिरे क्रियाः ॥ ५६ ॥

तयोरिति ॥ व्यापत्तिर्मरणम् । नवीभूतः पितृव्यापत्तिशोको ययोस्तौ तयो राघवयोस्तस्मिन्गृध्रे पितरीवाग्निसंस्कारादग्निसंस्कारमारभ्य परा उत्तराः क्रिया ववृतिरेऽवर्तन्त । तस्य पितृवदौर्ध्वदेहिकं चक्रतुरित्यर्थः ॥ ५६ ॥

वधनिर्धूतशापस्य कबन्धस्योपदेशतः ।
मुमूर्च्छ सख्यं रामस्य समानव्यसने हरौ ॥ ५७ ॥

वधेति ॥ वधेन रामकृतेन निर्धूतशापस्य देवभूयं गतस्य कबन्धस्य रक्षोविशेषस्योपदेशतो रामस्य समानव्यसने समानापदि । सख्यार्थिनीत्यर्थः । हरौ कपौ सुग्रीवे । 'शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः । सख्यं मुमूर्च्छ ववृधे ॥ ५७ ॥

स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥ ५८ ॥

स इति ॥ वीरः स रामो वालिनं सुग्रीवाग्रजं हत्वा चिरकाङ्क्षिते तत्पदे वालिस्थाने । धातोः स्थान आदेशमिव । आदेशभूतं धात्वन्तरमिवेत्यर्थः । सुग्रीवं संन्यवेशयत्स्थापितवान् । यथा 'अस्तेर्भूः' इत्यस्तिधातोः स्थान आदेशो भूधातुरस्तिकार्यमशेषं समभिधत्ते तद्वदिति भावः । आदेशो नाम शब्दान्तरस्य स्थाने विधीयमानं शब्दान्तरमभिधीयते ॥ ५८ ॥

इतस्ततश्च वैदेहीमन्वेष्टुं भर्तृचोदिताः ।
कपयश्चेरुरार्तस्य रामस्येव मनोरथाः ॥ ५९ ॥

---

पाठा०—१ 'दुःखयोः'. २ 'अग्निसंस्कारात्परा निवृतिरे क्रियाः'; 'अग्निसंस्कारात्परावृते क्रियाः'; 'अग्निसंस्कारनन्तरावृते क्रियाः'. ३ 'वीरम्'. ४ 'अथ'. ५ 'भर्तृनोदिताः'. ६ 'उत्कस्य'.

---

टिप्प०—1 मुनिशप्तो हि श्रीदतनयः कबन्धत्वमागतो रामलक्ष्मणाभ्यां बाहुच्छेदेन हतः स्वमूर्तिं प्राप्य प्रत्युपकाराय ऋष्यमूकनिवासिनं समानं सुग्रीवमकथयत्—इत्यागमः—इति दिक्षु०।

इतस्ततश्चेति ॥ वैदेहीमन्वेष्टुं मार्गितुं भर्त्रा सुग्रीवेण चोदिताः प्रयुक्ताः कपयो हनुमत्प्रमुखाः । आर्तस्य विरहातुरस्य रामस्य मनोरथाः कामा इव । इतस्ततश्चेरुर्नानादेशेषु बभ्रमुश्च ॥ ५९ ॥

प्रवृत्तावुपलब्धायां तस्याः संपातिदर्शनात् ।
मारुतिः सागरं तीर्णः संसारमिव निर्ममः ॥ ६० ॥

प्रवृत्ताविति ॥ संपातिर्नाम जटायुषो ज्यायान्भ्राता । तस्य दर्शनात् । तन्मुखादिति भावः । तस्याः सीतायाः प्रवृत्तौ वार्तायाम् । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । उपलब्धायां ज्ञातायां सत्याम् । मरुतस्यापत्यं पुमान् मारुतिर्हनुमान् । सागरम् । ममेत्येतदव्ययं ममतावाचि । तद्रहितो निर्ममो[2] निःस्पृहः संसारमविद्याबन्धनमिव । तीर्णस्ततार । तरतेः कर्तरि क्तः ॥ ६० ॥

दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता ।
जानकी विषवल्लीभिः परीतेव महौषधिः ॥ ६१ ॥

दृष्टेति ॥ लङ्कायां रावणराजधान्यां विचिन्वता मृगयमाणेन तेन मारुतिना राक्षसीभिर्वृता जानकी । विषवल्लीभिः परीता परिवृता महौषधिः सञ्जीविनीलतेव । दृष्टा ॥ ६१ ॥

तस्यै भर्तुरभिज्ञानमङ्गुलीयं ददौ कपिः ।
प्रत्युद्गतमिवानुष्णैस्तदानन्दाश्रुबिन्दुभिः ॥ ६२ ॥

तस्या इति ॥ कपिर्हनुमान् भर्तुः रामस्य संबन्ध्यभिज्ञानं प्रत्यभिज्ञानसाधकमङ्गुलीयमूर्मिकाम् । 'अङ्गुलीयकमूर्मिका' इत्यमरः । 'जिह्वामूलाङ्गुलेश्छः' (पा. ४।३।६२) इति छप्रत्ययः । तस्यै जानक्यै ददौ । किंविधमङ्गुलीयम्? अनुष्णैः शीतलैस्तस्या आनन्दाश्रुबिन्दुभिः प्रत्युद्गतमिव स्थितम् । भर्त्रभिज्ञानदर्शनादानन्दबाष्पो जात इत्यर्थः ॥ ६२ ॥

निर्वाप्य प्रियसंदेशैः सीतामक्षवधोद्धतः ।
स ददाह पुरीं लङ्कां क्षणसोढारिनिग्रहः ॥ ६३ ॥

---

पाठा०—1 'हरिः'. २ 'वारिभिः'. ३ 'रक्षोवधोद्धताम्'. ४ 'क्षणं सोढारिनिग्रहः'; 'क्षणसोढारिनिग्रहः'.

---

टिप्प०—1 अनेनास्खलितगतित्वं मनोरथानामगतिर्निवेद्यते-इति हेमाद्रिः ।
2 यथोक्तं महोपनिषदि-'द्वे पदे बन्धमोक्षाय निर्ममेति ममेति च । ममेति बध्यते जन्तुर्निर्ममेति विमुच्यते ॥' इति ।

निर्वाप्येति ॥ स कपिः । प्रियस्य रामस्य संदेशैर्वाचिकैः सीतां निर्वाप्य सुखयित्वा । अक्षस्य रावणकुमारस्य वधेनोद्धतो दृप्तः सन् । क्षणं सोढोऽरेरिन्द्रजितः कर्तुः निग्रहो बाधो ब्रह्मास्त्रबन्धनरूपो येन स तथोक्तः सन् । लङ्कां पुरीं ददाह भस्मीचकार ॥ ६३ ॥

प्रत्यभिज्ञानरत्नं च रामायादर्शयत्कृती ।
हृदयं स्वयमायातं वैदेह्या इव मूर्तिमत् ॥ ६४ ॥

प्रत्यभिज्ञेति ॥ कृती कृतकृत्यः कपिः स्वयमायातं मूर्तिमद्वैदेह्या हृदयमिव स्थितं तस्या एव प्रत्यभिज्ञानरत्नं च रामायादर्शयत् ॥ ६४ ॥

स प्राप हृदयन्यस्तमणिस्पर्शनिमीलितः ।
अपयोधरसंसर्गां प्रियालिङ्गननिर्वृतिम् ॥ ६५ ॥

स इति ॥ हृदये वक्षसि न्यस्तस्य धृतस्य मणेरभिज्ञानरत्नस्य । स्पर्शेन निमीलितो मोहितः स रामोऽविद्यमानः पयोधरसंसर्गः स्तनस्पर्शो यस्यास्तां तथाभूतां प्रियाया आलिङ्गनेन या निर्वृतिरानन्दस्तां प्राप ॥ ६५ ॥

श्रुत्वा रामः प्रियोदन्तं मेने तत्संगमोत्सुकः ।
महार्णवपरिक्षेपं लङ्कायाः परिखालघुम् ॥ ६६ ॥

श्रुत्वेति ॥ प्रियाया उदन्तं वार्ताम् । 'उदन्तः साधुवार्तयोः' इति विश्वः । श्रुत्वा तस्याः सीतायाः संगम उत्सुको रामो लङ्कायाः संबन्धी यो महार्णव एव परिक्षेपः परिवेषस्तं परिखालघुं दुर्गवेष्टनवत्सुतरं मेने ॥ ६६ ॥

स प्रतस्थेऽरिनाशाय हरिसैन्यैरनुद्रुतः ।
न केवलं भुवः पृष्ठे व्योम्नि संबाधवर्तिभिः ॥ ६७ ॥

स इति ॥ केवलमेकं भुवः पृष्ठे भूतले न किंतु व्योम्नि च संबाधवर्तिभिः संघट्टगामिभिर्हरिसैन्यैः कपिबलैरनुद्रुतोऽन्वितः सन् स रामोऽरिनाशाय प्रतस्थे चचाल ॥ ६७ ॥

निविष्टमुदधेः कूले तं प्रपेदे विभीषणः ।
स्नेहाद्राक्षसलक्ष्म्येव बुद्धिमाविश्य चोदितः ॥ ६८ ॥

---

पाठा०—१ 'संसर्गम्'. २ 'धरापृष्ठे'. ३ 'सोऽपि'. ४ 'वर्त्मभिः'. ५ 'निविष्टम्'. ६ 'माविश्य' (= उपविश्य). ७ 'नोदितः'.

---

टिप्प०—1 आलिङ्गनस्पर्शस्यैव प्राधान्यात् 'अपयोधरसंसर्गाम्' इत्युक्तम्—इति दिनकर०।

**निविष्टमिति** ॥ **उदधेः कूले निविष्टं तं** रामम् । विशेषेण भीषयते शत्रूनिति **विभीषणो** रावणानुजः । **राक्षसलक्ष्म्या स्नेहाद्बुद्धिं** कर्तव्यताज्ञान**माविश्य चोदितः** प्रेरित **इव** । **प्रपेदे** प्राप्तः ॥ ६८ ॥

तस्मै निशाचरैश्वर्यं प्रतिशुश्राव राघवः ।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः ॥ ६९ ॥

**तस्मा इति** ॥ **राघवस्तस्मै** विभीषणाय । 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' (पा. १।४।४०) इति संप्रदानत्वाच्चतुर्थी । **निशाचरैश्वर्यं** राक्षसाधिपत्यं **प्रतिशुश्राव** प्रतिज्ञातवान् । तथा हि—**काले**ऽवसरे **समारब्धाः** प्रक्रान्ता **नीतयः फलं बध्नन्ति** गृह्णन्ति । जनयन्तीत्यर्थः । **खलु** ॥ ६९ ॥

स सेतुं बन्धयामास प्लवगैर्लवणाम्भसि ।
रसातलादिवोन्मग्नं[2] शेषं[3] स्वप्नाय[4] शार्ङ्गिणः ॥ ७० ॥

**स इति** ॥ **स** रामो लवणं क्षारमम्भो यस्यासौ **लवणाम्भ**स्तस्मिँल्लवणाब्धौ **प्लवगैः** प्रयोज्यैः । **शार्ङ्गिणो** विष्णोः **स्वप्नाय** शयनाय **रसातलात्** पातालादु**न्मग्न**मुत्थितं **शेष**मिव स्थितम् । **सेतुं बन्धयामास** ॥ ७० ॥

तेनोत्तीर्य पथा लङ्कां रोधयामास पिङ्गलैः ।
द्वितीयं हेमप्राकारं कुर्वद्भिरिव वानरैः ॥ ७१ ॥

**तेनेति** ॥ रामस्तेन **पथा** सेतुमार्गेणो**त्तीर्य**, सागरमिति शेषः । **पिङ्गलैः** सुवर्णवर्णैरत एव **द्वितीयं** हेमप्राकारं **कुर्वद्भिरिव** स्थितैर्वा**नरैर्लङ्कां रोधयामास** ॥ ७१ ॥

रणः प्रववृते तत्र भीमः[5] प्लवगरक्षसाम् ।
दिग्विजृम्भितकाकुत्स्थपौलस्त्यजयघोषणः[6] ॥ ७२ ॥

**रण इति** ॥ **तत्र** लङ्कायां **प्लवगानां रक्षसां** च **भीमो** भयंकरो **दिग्विजृम्भितं काकुत्स्थ-पौलस्त्ययो** राम-रावणयो**र्जयघोषणं** जयशब्दो यस्मिन्स तथोक्तो **रणः प्रववृते** प्रवृत्तः । 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः ॥ ७२ ॥

पाठा०—१ 'यो बभौ'. २ 'उन्मग्नः'; 'उत्तीर्णः'. ३ 'शेषः'. ४ 'स्वापाय'. ५ 'घोरः'. ६ 'घोषिणाम्'.

टिप्प०—1 ननु कथमागमनमात्रादेव राज्यलाभ इत्यत आह-समये प्रारब्धा नीतयः फलिता भवन्ति दत्त-रति दिनकर०।

पादपाविद्धपरिघः शिलानिष्पिष्टमुद्गरः ।
अतिशस्त्रनखन्यासः शैलरुग्णमतंगजः ॥ ७३ ॥

**पादपेति** ॥ किंविधो रणः ? पादपैर्वृक्षैराविद्धा भग्नाः परिघा लोहबद्धकाष्ठानि यस्मिन्स तथोक्तः । 'परिघः परिघातनः' इत्यमरः । **शिलाभिर्निष्पिष्टाश्चूर्णिता मुद्गरा** अयोघना यस्मिन्स तथोक्तः । 'द्रुघणो मुद्गरघनौ' इत्यमरः । **अतिशस्त्राः** शस्त्राण्यतिक्रान्ता **नखन्यासा** यस्मिन्स तथोक्तः । **शैले रुग्णा** भग्ना **मतंगजा** यस्मिन्स तथोक्तः ॥ ७३ ॥

अथ रामशिरश्छेददर्शनोत्क्रान्तचेतनाम् ।
सीतां मायेति शंसन्ती त्रिजटा समजीवयत् ॥ ७४ ॥

**अथेति** ॥ अथानन्तरम् । छिद्यत इति छेदः खण्डः । शिर एव छेद इति विग्रहः । **रामशिरश्छेदस्य** विद्युज्जिह्वाख्यराक्षसमायानिर्मितस्य **दर्शनेनोत्क्रान्तचेतनां** गतसंज्ञां **सीतां त्रिजटा** नाम काचित्सीतापक्षपातिनी राक्षसी **माया**कल्पितं न त्वेतत्सत्यमिति **शंसन्ती** ब्रुवाणा । 'शप्श्यनोर्नित्यम्' (पा. ७।१।८१) इति नित्यं नुमागमः । **समजीवयत्** ॥ ७४ ॥

कामं जीवति मे नाथ इति सा विजहौ शुचम् ।
प्राङ्मत्वा सत्यमस्यान्तं जीवितास्मीति लज्जिता ॥ ७५ ॥

**काममिति** ॥ सा सीता मे नाथो जीवतीति हेतोः **शुचं** शोकं **कामं विजहौ** । किंतु **प्राक्** पूर्वम**स्य** नाथस्या**न्तं** नाशं **सत्यं** यथार्थं **मत्वा जीविता** जीवितवत्य**स्मीति** हेतोर्**लज्जिता** लज्जावती । कर्तरि क्तः । दुःखादपि दुःसहो लज्जाभर इति भावः ॥ ७५ ॥

गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः ।
दाशरथ्योः क्षणक्लेशः स्वप्नवृत्त इवाभवत् ॥ ७६ ॥

**गरुडेति** ॥ गरुडस्तार्क्ष्यः तस्यापातेनागमनेन **विश्लिष्टं मेघनाद**स्येन्द्रजितो**ऽस्त्रेण** नागपाशेन **बन्धनं** यस्मिन्स तथोक्तः **क्षणक्लेशो दाशरथ्यो** रामलक्ष्मणयोः **स्वप्नवृत्तः** स्वप्नावस्थानुभूत **इवाभवत्** ॥ ७६ ॥

ततो बिभेद पौलस्त्यः शक्त्या वक्षसि लक्ष्मणम् ।
रामस्त्वनाहतोऽप्यासीद्विदीर्णहृदयः शुचा ॥ ७७ ॥

पाठा०-१ 'भग्न'. २ 'चेतसाम्'. ३ 'विश्लेषि'. ४ 'बन्धनम्'. ५ 'क्षणक्लेशि'. ६ 'स्वप्नवृत्तम्'; 'स्वप्नवृत्तिः'.

तत इति ॥ ततः पौलस्त्यो रावणः शक्त्या कासूनामकेनायुधेन । 'कासूः सामर्थ्ययोः शक्तिः' इत्यमरः । लक्ष्मणं वक्षसि बिभेद विदारयामास । रामस्त्वनाहतोऽप्यहतोऽपि शुचा शोकेन विदीर्णहृदय आसीत् ॥ ७७ ॥

स मारुतिसमानीतमहौषधिहृतव्यथः ।
लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ॥ ७८ ॥

स इति ॥ लक्ष्मणो मारुतिना मरुत्सुतेन हनुमता समानीतया महौषध्या संजीविन्या हृतव्यथः सन् पुनः शरैर्लङ्कास्त्रीणां विलापे परिदेवने । 'विलापः परिदेवनम्' इत्यमरः । आचार्यकमाचार्यकर्म । 'योपधाद्गुरूपोत्तमाद्वुञ्' (पा. ५।१।१३२ ) इति वुञ् । चक्रे । पुनरपि राक्षसाञ्जघानेति व्यज्यते ॥ ७८ ॥

स नादं मेघनादस्य धनुश्चेन्द्रायुधप्रभम् ।
मेघस्येव शरत्कालो न किंचित्पर्यशेपयत् ॥ ७९ ॥[1]

स इति ॥ स लक्ष्मणः शरत्कालो मेघस्येव । मेघनादस्येन्द्रजितो नादं सिंहनादम् । अन्यत्र,–गर्जितं च इन्द्रायुधप्रभं शक्रधनुःप्रभं धनुश्च किंचिद्ल्पमपि न पर्यशेपयन्नावशेषितवान् । तमवधीदित्यर्थः ॥ ७९ ॥

कुम्भकर्णः कपीन्द्रेण तुल्यावस्थः स्वसुः कृतः ।
रुरोध रामं शृङ्गीव टङ्कच्छिन्नमनःशिलः ॥ ८० ॥

कुम्भकर्ण इति ॥ कपीन्द्रेण सुग्रीवेण स्वसुः शूर्पणखायास्तुल्यावस्थो नासाकर्णच्छेदेन सदृशः कृतः । कुम्भकर्णष्टङ्केन शिलाभेदकशस्त्रेण छिन्ना मनःशिला रक्तवर्णधातुविशेषो यस्य स तथोक्तः । 'टङ्कः पाषाणदारणः' इति, 'धातुर्मनःशिलाद्यद्रेः' इति चामरः । शृङ्गी शिखरीव । रामं रुरोध ॥ ८० ॥

अकाले बोधितो भ्रात्रा प्रियस्वप्नो वृथा भवान् ।
रामेषुभिरितीवासौ दीर्घनिद्रां प्रवेशितः ॥ ८१ ॥

अकाल इति ॥ प्रियस्वप्न इष्टनिद्रोऽनुजो भवान्वृथा भ्रात्रा रावणेनाकाले बोधित इतीवासौ कुम्भकर्णो रामेषुभी रामबाणैर्दीर्घनिद्रां मरणं प्रवेशितो

पाठा०–१ 'हृत'. २ 'नादं सः'. ३ 'क्लेशेन महतीं निद्रां त्याजितं रणदुर्जयम् । रावणः प्रेषयामास युद्धायानुजमात्मनः ॥ स जघान तदादेशात्कपीनुग्राननेकशः । विवेश च पुरीं लङ्कां समादाय हरीश्वरम् ॥'. ४ '°नुजः'.

टिप्प०–1 यथा शरत्काले मेघस्य नादं गर्जितं तथा शक्रधनुश्च नावशेषयति । 'काल'-ग्रहणं पुंस्त्वार्थम्, अन्यथा शरदा लक्ष्मणस्योपमानं भिन्नलिङ्गं स्यात्–इति दिनकर० ।

गमितः। यथा लोकेष्विष्टवस्तुविनाशाद्दुःखितस्य ततोऽपि भूयिष्ठमुपपाद्यते तद्वदिति भावः॥ ८१॥

**इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु।**
**रजांसि समरोत्थानि तच्छोणितनदीष्विव॥ ८२॥**

**इतराणीति**॥ इतराणि रक्षांस्यपि वानरकोटिषु। समरोत्थानि रजांसि तेषां रक्षसां शोणितनदीषु रक्तप्रवाहेष्विव। पेतुः। निपत्य मृतानीत्यर्थः॥ ८२॥

**निर्ययावथ पौलस्त्यः पुनर्युद्धाय मन्दिरात्।**
**अरावणमरामं वा जगदद्येति निश्चितः॥ ८३॥**

**निर्ययाविति**॥ अथ पौलस्त्यो रावणः। अद्य जगदरावणं रावणशून्य-मरामं रामशून्यं वा भवेत्। इति निश्चितो निश्चितवान्, कर्तरि क्तः। विजय-मरणयोरन्यतरनिश्चयवान् पुनर्युद्धाय मन्दिरान्निर्ययौ निर्जगाम॥ ८३॥

**रामं पदातिमालोक्य लङ्केशं च वरूथिनम्।**
**हरियुग्यं रथं तस्मै प्रजिघाय पुरंदरः॥ ८४॥**

**राममिति**॥ पादाभ्यामततीति **पदातिः**। तं पादचारिणं **रामम्**। वरूथो रथगुप्तिः। 'रथगुप्तिर्वरूथो ना' इत्यमरः। अत्र वरूथेन रथो लक्ष्यते। **वरूथिनं** रथिनं **लङ्केशं चालोक्य पुरंदर** इन्द्रः। युगं वहन्तीति युग्या रथाश्वाः। 'तद्वहति रथयुगप्रासङ्गम्' (पा. ३।४।७६) इति यत्प्रत्ययः। **हरियुग्यं** कपिलवर्णाश्वम्। 'शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः। **रथं तस्मै** रामाय **प्रजिघाय** प्रहितवान्॥ ८४॥

**तमाधूतध्वजपटं व्योमगङ्गोर्मिवायुभिः।**
**देवसूतभुजालम्बी जैत्रमध्यास्त राघवः॥ ८५॥**

**तमिति**॥ **राघवो व्योमगङ्गोर्मिवायुभिराधूतध्वजपटम्**। मार्ग-वशादिति भावः। जेतैव जैत्रो जयनशीलः, तं **जैत्रम्**। 'जेतृ'शब्दात्तृन्नन्तात् 'प्रज्ञा-दिभ्यश्च' (पा. ५।४।३८) इति स्वार्थेऽण्प्रत्ययः। तं रथं **देवसूतभुजालम्बी** मातलिहस्तावलम्बः सन्, **अध्यास्ता**धिष्ठितवान्। आरोहेत्॥ ८५॥

---

पाठा०—१ 'निश्चितम्'.

---

टिप्प०—1 इन्द्रो रामं पादचारं वीक्ष्य, वरूथो रथगुप्तिः 'वरूथ'शब्देन लक्षणयाऽत्र रथः, वरूथोऽस्यास्तीति तयोक्तं वरूथिनं रावणं च वीक्ष्य—इति दिनकर०।

मातलिस्तस्य माहेन्द्रमामुमोच तनुच्छदम् ।
यत्रोत्पलदलक्लैब्यमस्त्राण्यापुः सुरद्विषाम् ॥ ८६ ॥

मातलिरिति ॥ मातलिरिन्द्रसारथिर्माहेन्द्रम् । तनुश्छाद्यतेऽनेनेति तनुच्छदो वर्म । 'पुंसि संज्ञायां घः प्रायेण' (पा. ३।३।११८) इति घः । तम् । तस्य रामस्यामुमोचात्याजयामास । यत्र तनुच्छदे सुरद्विषामस्त्राण्युत्पलदलानां यत्क्लैब्यं नपुंसकत्वं निरर्थकत्वं तदापुः ॥ ८६ ॥

अन्योन्यदर्शनप्राप्तविक्रमावसरं चिरात् ।
रामरावणयोर्युद्धं चरितार्थमिवाभवत् ॥ ८७ ॥

अन्योन्येति ॥ चिरादन्योन्यदर्शनेन प्राप्तविक्रमावसरं रामरावणयोर्युद्धमायोधनं चरितार्थं सफलमभवदिव । प्राप्तपराक्रमावसरदौर्लभ्याद्विफलस्याथ तल्लाभात्साफल्यमुत्प्रेक्ष्यते ॥ ८७ ॥

भुजमूर्धोरुबाहुल्यादेकोऽपि धनदानुजः ।
ददृशे ह्ययथापूर्वो मातृवंश इव स्थितः ॥ ८८ ॥

भुजेति ॥ यथाभूतः पूर्वं यथापूर्वः । सुप्सुपेति समासः । यथापूर्वो न भवतीत्ययथापूर्वः । निहतबन्धुत्वाद्रक्षःपरिचारशून्य इत्यर्थः । अत एवैकोऽपि सन् धनदानुजो रावणः । भुजाश्च मूर्धानश्चोरवः पादाश्च भुजमूर्धोरु । प्राण्यङ्गत्वाद्द्वन्द्वैकवद्भावः । तस्य बाहुल्याद्बहुलत्वाद्धेतोः । तद्बहुत्वे यादवः—'दशास्यो विंशतिभुजश्चतुष्पान्मातृमन्दिरे' इति । मातृवंशे मातृसंबन्धिनि वर्गे स्थित इव ददृशे दृष्टो

---

पाठा०—१ 'शस्त्राणि'. २ 'वैरम्'. ३ 'भुजोत्तमाङ्ग'. ४ 'सः'. ५ 'यथापूर्वम्'.

---

टिप्प०—1 यदि द्वयोः परस्परविलोकन नाभविष्यत् तदा समराभावात् प्रोद्भूतमपि वैर नाफलिष्यत् इत्यन्योन्यसंगात्सफलमिवासीदिति भावः–इति शिशु० ।

2 यथा पूर्वो न भवतीत्ययथापूर्वः, नष्टराक्षसपरिवार इत्यर्थः । एकोऽपि धनदानुजो रावणस्तस्य माता राक्षसी पुष्पोत्कटानाम्नी, तस्या कुलं राक्षसकुलम्, तत्र स्थित इव ददृशे इत्यर्थः । कस्मात्? भुजोत्तमाङ्गबाहुल्यात् । भुजाश्चोत्तमाङ्गानि च मूर्धानश्च तेषां बाहुल्यात् । 'भुजमूर्धोरुबाहुभ्याम्' इति पाठे–भुजाश्च मूर्धानश्च ऊरवश्च तेषा बाहुल्यात् भुजानां मूर्ध्नां चोरु महद्बाहुल्य इति वा । तस्य हि विंशतिर्भुजा दश मूर्धानश्चत्वार ऊरवः । यदाह यादवप्रकाशः–'दशास्यो विंशतिभुजश्चतुष्पान्मातृमन्दिरे । लंकेश्वरो यातुपतिः संनादोऽस्य विलोकनः', इति–हेमाद्रिः ॥ मातुर्निकषानाम्न्या राक्षस्या वंशः परिवार इवावलोकितः, रामसैन्यैरिति शेषः–इति दिनकर०–शिशु० ॥ 'कैकसी' इति रावणमातुर्नाम रामायणे (उ. १) भारतेऽपि (वन. २७३–४) च लभ्यते, अतो हेमाद्र्यादिटीकाकृन्नामनिर्देशश्चिन्त्यः—संपादकः ।

हि । 'वंशो वेणी कुले वर्गे' इति विश्वः । अत्र रावणमातृ रक्षोजातित्वात्तद्वर्गो रक्षोवर्ग इति लभ्यते । अतश्चैकोऽप्यनेकरक्षःपरिवृत इवालक्ष्यतेत्यर्थः ॥ ८८ ॥

**जेतारं लोकपालानां स्वमुखैरर्चितेश्वरम् ।**
**रामस्तुलितकैलासमरातिं बह्वमन्यत ॥ ८९ ॥**

**जेतारमिति** ॥ लोकपालानामिन्द्रादीनां **जेतारम्** । 'कर्तृकर्मणोः कृति' (पा. २।३।६५) इति कर्मणि षष्ठी । **स्वमुखैः** स्वशिरोभिरर्चितेश्वरं **तुलितकैलासम्** उत्क्षिप्तरजताद्रिं तमेवं शौर्यवीर्यसत्त्वसंपन्नं महावीर्यम**रातिं** शत्रुं **रामो** गुणग्राहित्वाज्जितव्योत्कर्षस्य जेतुः स्वोत्कर्षहेतुत्वाच्च **बह्वमन्यत** । साधु मद्विक्रमस्यायं पर्याप्तो विषय इति बहुमानमकरोदित्यर्थः । बह्विति क्रियाविशेषणम् ॥ ८९ ॥

**तस्य स्फुरति पौलस्त्यः सीतासंगमशंसिनि ।**
**निचखानाधिकक्रोधः शरं सव्येतरे भुजे ॥ ९० ॥**

**तस्येति** ॥ **अधिकक्रोधः पौलस्त्यः स्फुरति** स्पन्दमानेऽत एव **सीतासंगमशंसिनि तस्य** रामस्य सव्य इतरो यस्मात्स**व्येतरे** दक्षिणे । 'न बहुव्रीहौ' (पा. १।१।२९) इति 'इतर'शब्दस्य सर्वनामसंज्ञाप्रतिषेधः । **भुजे शरं निचखान** निखातवान् ॥ ९० ॥

**रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः ।**
**विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम् ॥ ९१ ॥**

**रावणस्येति** ॥ रामेणा**स्तः** क्षिप्त **आशुगो** बाणः । विश्रवसोऽपत्यं पुमान् रावणः । 'विश्रवः'शब्दादपत्येऽर्थेऽण्प्रत्यये सति 'विश्रवसो विश्रवणरवणौ' इति रवणादेशः । तस्य **रावणस्यापि हृदयं** वक्षो **भित्त्वा** विदीर्य । **उरगेभ्यः** पातालवासिभ्यः **प्रियमाख्यातुमिव** । **भुवं विवेश** ॥ ९१ ॥

**वचसैवं तयोर्वाक्यमस्त्रमस्त्रेण निघ्नतोः ।**
**अन्योन्यजयसंरम्भो ववृधे वादिनोरिव ॥ ९२ ॥**

**वचसेति** ॥ **वाक्यं** वचसैवा**स्त्रमस्त्रेण निघ्नतोः** प्रतिकुर्वतोस्त**योः** रामरावणयोः । **वादिनोः** कथकयो**रिव** । अन्योन्यविषये **जयसंरम्भो ववृधे** ॥ ९२ ॥

पाठा०—१ 'तमरिम्'. २ 'अधिकक्रोधात्'. ३ 'इव'.

टिप्प०—1 एतैर्विशेषणैः सौन्दर्यधैर्यवरप्रभावादिकथनाद्दणदुर्भेदत्वं रावणस्योक्तम्—इति दिनकर० ।

3 रावणस्य हृदयं भित्त्वा नागेभ्योऽभीष्टं वक्तुमिव भूमिं प्राविशत्—इति दिनकर० ।

विक्रमव्यतिहारेण सामान्याऽभूद्द्वयोरपि ।
जयश्रीरन्तरा वेदिर्मत्तवारणयोरिव ॥ ९३ ॥

**विक्रमेति** ॥ **जयश्रीर्विक्रमस्य व्यतिहारेण** पर्यायक्रमेण तयो**र्द्वयोरपि** । **अन्तरा** मध्ये । अव्ययमेतत् । **वेदि**र्वेद्याकारा भित्ति**र्मत्तवारणयोरिव** । **सामान्या** साधारणा**ऽभूत्** । न त्वन्यतरनियतेत्यर्थः । अत्र 'मत्तवारणयोः' इत्यत्र 'द्वयोः' इत्यत्र च 'अन्तरान्तरेण युक्ते' (पा. २।३।४) इति द्वितीया न भवति । 'अन्तरा'शब्दस्योक्तरीत्याऽन्यत्रान्वयात् । मध्ये कामपि भित्तिं कृत्वा गजौ योधयन्तीति प्रसिद्धिः ॥ ९३ ॥

कृतप्रतिकृतप्रीतैस्तयोर्मुक्तां सुरासुरैः ।
परस्परशरव्राताः पुष्पवृष्टिं न सेहिरे ॥ ९४ ॥

**कृतेति** ॥ स्वयमस्त्रप्रयोगः **कृतं प्रतिकृतं** परकृतप्रतीकारस्ताभ्यां **प्रीतैः सुरासुरै**र्यथासंख्यं **तयो** राम-रावणयो**र्मुक्तां पुष्पवृष्टिम्** । द्वयीमिति शेषः । **परस्परं शरव्राता न सेहिरे** । अहमेवालं, किं त्वयेति चान्तराल एवेतरेतरबाणवृष्टिरितरेतरपुष्पवृष्टिमवारयदित्यर्थः ॥ ९४ ॥

अयःशङ्कुचितां रक्षः शतघ्नीमथ शत्रवे ।
हृतां वैवस्वतस्येव कूटशाल्मलिमक्षिपत् ॥ ९५ ॥

**अय इति** ॥ **अथ रक्षो** रावणो**ऽयसः शङ्कुभिः** कीलै**श्चितां** कीर्णां **शतघ्नीं** लोहकण्टककीलितयष्टिविशेषम् । 'शतघ्नी तु चतुस्ताला लोहकण्टकसञ्चिता । यष्टिः' इति केशवः । **हृतां** विजयलब्धाम् । **वैवस्वतस्या**न्तकस्य **कूटशाल्मलिमिव** । **शत्रवे** राघवा**याक्षिपत्** क्षिप्तवान् । कूटशाल्मलिरिव कूटशाल्मलिरिति व्युत्पत्त्या वैवस्वतगदाया गौणी संज्ञा । कूटशाल्मलिर्नामैकमूलप्रकृतिः कण्टकी वृक्षविशेषः । 'रोचनः कूटशाल्मलिः' इत्यमरः । तत्सादृश्यं च गदाया अयःशङ्कुचितत्वादनुसंधेयम् ॥ ९५ ॥

पाठा०—१ 'परस्परं शरव्रताः'.

टिप्प०—1 यथा युध्यतोर्मत्तगजयोरन्तरा मध्ये बहिर्दिगन्तरावेदि पिण्डिका भित्तिर्यस्य भवति, मध्यभित्तिं विधाय गजयुद्धं प्रसिद्धम् । समानार्थोऽपि सामान्यशब्दोऽस्ति;—इति दिनकर० ।

2 ननु 'सुरासुरैः' इत्यत्र 'येषां च विरोधः शाश्वतिकः' (पा. २।४।९) इति कथं न द्वन्द्वैकत्वम्? उच्यते,—दिवि सुराणां कादाचित्को विरोधः इति रक्षितोक्तत्वात्साधुः । तथा च भारविप्रयोगः—'देवासुरैरमृतमम्बुनिधिर्ममन्थे'—इति दिनकर० ।

राघवो रथमप्राप्तां तामाशां च सुरद्विषाम् ।
अर्धचन्द्रमुखैर्बाणैश्चिच्छेद कदलीसुखम् ॥ ९६ ॥

राघव इति ॥ राघवो रथमप्राप्तां तां शतघ्नीं सुरद्विषां रक्षसामाशां विजयतृष्णां च । 'आशा तृष्णादिशोः प्रोक्ता' इति विश्वः । अर्धचन्द्र इव मुखं येषां तैर्बाणैः कदलीवत्सुखं यथा तथा चिच्छेद । अथवा कदल्यामिव सुखमक्लेशो यस्मिन्कर्मणि तदिति विग्रहः ॥ ९६ ॥

अमोघं संदधे चास्मै धनुष्येकधनुर्धरः ।
ब्राह्ममस्त्रं प्रियाशोकशल्यनिष्कर्षणौषधम् ॥ ९७ ॥

अमोघमिति ॥ एकोऽद्वितीयो धनुर्धरो रामः प्रियायाः शोक एव शल्यं तस्य निष्कर्षणमुद्धारकं यदौषधं तदमोघं ब्राह्मं ब्रह्मदेवताकमस्त्रमभिमन्त्रितं बाणमस्मै रावणाय च । तद्वधार्थमित्यर्थः । धनुषि संदधे ॥ ९७ ॥

तद्व्योम्नि शतधा भिन्नं ददृशे दीप्तिमन्मुखम् ।
वपुर्महोरगस्येव करालफणमण्डलम् ॥ ९८ ॥

तदिति ॥ व्योम्नि शतधा भिन्नं प्रसृतं दीप्तिमन्ति मुखानि यस्य तद्ब्रह्मास्त्रम् । करालं भीषणं तुङ्गं वा फणमण्डलं यस्य तत्तथोक्तम् । 'करालो दन्तुरे तुङ्गे करालो भीषणेऽपि च' इति विश्वः । महोरगस्य शेषस्य वपुरिव । ददृशे दृष्टम् ॥ ९८ ॥

तेन मन्त्रप्रयुक्तेन निमेषार्धादपातयत् ।
स रावणशिरःपङ्क्तिमज्ञातव्रणवेदनाम् ॥ ९९ ॥

तेनेति ॥ स रामो मन्त्रप्रयुक्तेन तेनास्त्रेणाज्ञातव्रणवेदनामतिशैघ्र्यादननुभूतव्रणदुःखां रावणशिरःपङ्क्तिं निमेषार्धादपातयत् पातयामास ॥ ९९ ॥

---

पाठा०—१ 'सुरद्विपः'. २ 'कदलीमिव'. ३ 'दशधा'. ४ 'रावणस्य शिरःपङ्क्तिम्'.

---

टिप्प०—1 शतं हन्तीति शतघ्नीं चतुस्तालप्रमाणां लोहशङ्कि-इति दिनकर० ।

2 शतघ्न्यां छिन्नायां रावणस्य विजयप्रत्याशापि नष्टा-इति शिशु० ।

3 अत्र 'दशधा भिन्नम्' इति पाठमादृत्य दशानां रावणशिरसां नाशाय दशधा भिन्नं दशशरीरं, छेद्यस्य दशसंख्यायोगाद्दशधा इत्युक्तम्-इत्याचष्टे-शिशु० ।

4 तदस्त्रं करालभीषणं फणानां मण्डलं समूहो यस्य तन्महासर्पस्य वपुरिव दृष्टम् । 'महोरग' शब्देन फणेषु मणयो ध्वन्यन्ते-इति दिनकर० ।

5 अनेन शीघ्रभेदाद्रामस्य लघुहस्तता शस्त्रनिपुणत्वं च सूच्यते-दिनकर० ।

बालार्कप्रतिमेवाप्सु वीचिभिन्ना पतिष्यतः।
रराज रक्षःकायस्य कण्ठच्छेदपरम्परा॥ १००॥

बालेति॥ पतिष्यत आसन्नपातस्य रक्षःकायस्य रावणकलेवरस्य छिद्यन्त इति छेदाः खण्डाः। कण्ठानां ये छेदास्तेषां परम्परा पङ्क्तिः। वीचिभिर्भिन्ना नानाकृताप्सु बालार्कस्य प्रतिमा प्रतिबिम्बमिव। रराज। अर्कस्य बालविशेषणमारुण्यसिद्ध्यर्थमिति भावः॥ १००॥

मरुतां पश्यतां तस्य शिरांसि पतितान्यपि।
मनो नातिविशश्वास पुनःसंधानशङ्किनाम्॥ १०१॥

मरुतामिति॥ पतितानि तस्य रावणस्य शिरांसि पश्यतामपि पुनःसंधानशङ्किनाम्। पूर्वं तथादर्शनादिति भावः। मरुताममराणाम्। 'मरुतौ पवनामरौ' इत्यमरः। मनो नातिविशश्वासाऽतिविश्वासं न प्राप॥ १०१॥

अथ मदगुरुपक्षैर्लोकपालद्विपाना-
मनुगतमलिवृन्दैर्गण्डभित्तीर्विहाय।
उपनतमणिबन्धे मूर्ध्नि पौलस्त्यशत्रोः
सुरभि सुरविमुक्तं पुष्पवर्षं पपात॥ १०२॥

अथेति॥ अथ मदेन गजगण्डसंचारसंक्रान्तेन गुरुपक्षैर्भारायमाणपक्षैरलिवृन्दैर्लोकपालद्विपानामैरावतादीनां गगनवर्तिनां गण्डभित्तीर्विहायानुगतमनुद्रुतं सुरभि सुगन्धि। 'सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः। गन्धोपले सौरमेय्यां सल्लकीमातृभेदयोः॥ सुगन्धौ च मनोज्ञे च वाच्यवत्सुरभि स्मृतम्।' इति विश्वः। सुरविमुक्तं पुष्पवर्षमुपनत आसन्नो मणिबन्धो राज्याभिषेकसमये भावी यस्य तस्मिन्। पौलस्त्यशत्रो रामस्य मूर्ध्नि पपात। इदमेव राज्याभिषेकसूचकमिति भावः॥ १०२॥

यन्ता हरेः सपदि संहृतकार्मुकज्य-
मापृच्छ्य राघवमनुष्ठितदेवकार्यम्।
नामाङ्करावणशराङ्कितकेतुयष्टि-
मूर्ध्वं रथं हरिसहस्रयुजं निनाय॥ १०३॥

---

पाठा०—१ 'बालार्कप्रतिमेवाप्सु'. २ 'युवम्'.

**यन्तेति** ॥ **हरेरिन्द्रस्य यन्ता** मातलिः **सपदि संहृतकार्मुकज्यमनुष्ठितं** देवकार्यं रावणवधरूपं येन तं **राघवमापृच्छय** 'साधु यामि' इत्यामन्त्र्य । **नामाङ्कै**-र्नामाक्षरचिह्नै **रावणशरैरङ्किता** चिह्निता **केतुयष्टि**र्ध्वजदण्डो यस्य तम् । हरीणां वाजिनां सहस्रेण युज्यत इति **हरिसहस्रयुक्** । तम् । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । हरिः' इत्युभयत्राप्यमरः । **रथमूर्ध्वं निनाय** नीतवान् ॥ १०३ ॥

रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां
प्रियसुहृदि विभीषणे संगमय्य श्रियं वैरिणः ।
रविसुतसहितेन तेनानुयातः ससौमित्रिणा
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ॥ १०४ ॥

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृतौ रावणवधो नाम द्वादशः सर्गः ।

---

**रघुपतिरिति** ॥ **रघुपतिरपि जातवेद**स्यग्नौ **विशुद्धां** जातशुद्धिं **प्रियां** सीतां **प्रगृह्य** स्वीकृत्य । **प्रियसुहृदि** विभीषणे **वैरिणो** रावणस्य **श्रियं** राजलक्ष्मीं **संगमय्य** संगतां कृत्वा । गमेर्ण्यन्तात्ल्यप्प्रत्ययः । 'मितां ह्रस्वः' (पा. ६।४।९२) इति ह्रस्वः । 'ल्यपि लघुपूर्वात्' (पा. ६।४।५६) इति णेरयादेशः । **रविसुतसहितेन** सुग्रीवयुक्तेन **ससौमित्रिणा** सलक्ष्मणेन **तेन** विभीषणे**नानुयातो**ऽनुगतः सन् विमानं रत्नमिव विमानरत्नमित्युपमितसमासः । **भुजविजितं** यद्विमानरत्नं पुष्पकं **तदारूढः** सन् । **पुरी**मयोध्यां **प्रतस्थे** । 'समवप्रविभ्यः स्थः' (पा. १।३।२२) इत्यात्मनेपदम् । अत्र प्रस्थानक्रियाया अकर्मकत्वेऽपि तदङ्गभूतोद्देशक्रियापेक्षया सकर्मकत्वम् । अस्ति च धातूनां क्रियान्तरोपसर्जनकस्वार्थाभिधायकत्वम् । यथा 'कुसूलात्पचति' इत्यादावादानक्रियागर्भः पाको विधीयत इति ॥ १०४ ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशव्याख्यायां संजीविनीसमाख्यायां द्वादशः सर्गः ।

---

पाठा०—१ 'संक्रमय्य'.

# त्रयोदशः सर्गः।

त्रैलोक्यशल्योद्धरणाय सिन्धोश्चकार बन्धं मरणं रिपूणाम् ।
पुण्यप्रणामं भुवनाभिरामं रामं विरामं विपदामुपासे ॥

**अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः ।**
**रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच ॥ १ ॥**

**अथेति** ॥ अथ प्रस्थानानन्तरम् । जानातीति ज्ञः । 'इगुपध–' (पा. ३।१।१३५) इत्यादिना कप्रत्ययः । गुणानां ज्ञो **गुणज्ञः** । रत्नाकरादिवर्ण्यैश्वर्यगुणाभिज्ञ इत्यर्थः । **स रामाभिधानो** हरिर्विष्णुः शब्दो गुणो यस्य तच्छब्द**गुणमात्मनः** स्वस्य **पदं** विष्णुपदम् । आकाशमित्यर्थः । 'वियद्विष्णुपदम्' इत्यमरः । 'शब्दगुणमाकाशम्' इति तार्किकाः । **विमानेन** पुष्पकेण **विगाहमानः** सन् **रत्नाकरं वीक्ष्य मिथो** रहसि । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः । **जायां** पत्नीं सीता**मिति** वक्ष्यमाण-प्रकारेणो**वाच** । रामस्य 'हरि'रित्यभिधानं निरङ्कुशमहिमद्योतनार्थम् । 'मिथो'ग्रहणं गोष्ठीविश्रम्भसूचनार्थम् ॥ १ ॥

**वैदेहि ! पश्याऽऽमलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम् ।**
**छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम् ॥ २ ॥**

**वैदेहीति** ॥ हे **वैदेहि** सीते ! **आ मलयान्**मलयपर्यन्तम् । 'पञ्चम्यपाङ्परिभिः' (पा. २।३।१०) इति पञ्चमी । पदद्वयं चैतत् । **मत्सेतुना विभक्तं** द्विधा कृतम् । अत्यायतसेतुनेत्यर्थः । दर्पाधिक्याच्च मद्ग्रहणम् । **फेनिलं** फेनवन्तम् । 'फेनादिलच्च' (पा. ५।२।९९) इतीलच्प्रत्ययः । क्षिप्रकारी चायमिति भावः । **अम्बुराशिम्** । **छायापथेन विभक्तं शरत्प्रसन्नमाविष्कृतचारुतारमाकाशमिव** । **पश्य** । मम महानयं प्रयासस्त्वदर्थ इति हृदयम् । छायापथो नाम ज्योतिश्चक्रमध्यवर्ती कश्चित्तिरश्चीनोऽवकाशः ॥ २ ॥

**गुरोर्यियक्षोः कपिलेन मेध्ये रसातलं संक्रमिते तुरंगे ।**
**तदर्थमुर्वीमवदारयद्भिः पूर्वैः[1] किलायं परिवर्धितो नः ॥ ३ ॥**

**गुरोरिति** ॥ यियक्षोर्यष्टुमिच्छोः । यजेः सन्नन्तादुप्रत्ययः । **गुरोः** सगरस्य **मेध्ये**ऽश्वमेधार्हे **तुरंगे** हये **कपिलेन** मुनिना **रसातलं** पातालं **संक्रमिते** सति । **तदर्थमुर्वीमवदारयद्भिः** खनद्भि**र्नो**ऽस्माकं **पूर्वै**र्वृद्धैः सगरसुतै**रयं** समुद्रः

---

पाठा०–१ 'पूर्वम्'.

परिवर्धितः किल । 'किल' इत्यैतिह्ये । अतो न पूज्य इति भावः । यद्यपि तुरंगहारी शतक्रतुस्तथापि तस्य कपिलसमीपे दर्शनात्स एवेति तेषां भ्रान्तिः तन्मत्वैव कविना कपिलेनेति निर्दिष्टम् ॥ ३ ॥

गर्भं दधत्यर्कमरीचयोऽस्माद्विवृद्धिमत्राश्नुवते वसूनि ।
अविन्धनं वह्निमसौ बिभर्ति प्रह्लादनं ज्योतिरजन्यनेन ॥ ४ ॥

गर्भमिति ॥ अर्कमरीचयोऽस्मादब्धेः । अपादानात् । गर्भमम्मयं दधति । वृष्ट्यर्थमित्यर्थः । अयमर्थो दशमसर्गे 'ताभिर्गर्भः–' ( ५८ ) इत्यत्र स्पष्टीकृतः । अयं लोकोपकारीति भावः । अत्राब्धौ वसूनि धनानि । 'धने रत्ने वसु स्मृतम्' इति विश्वः । विवृद्धिमश्नुवते प्राप्नुवन्ति । संपद्यन्त इत्यर्थः । असौ । अविन्धनं आप इन्धनं दाह्यं यस्य तद्दाहकं वह्निं बिभर्ति । अपकारेऽप्याश्रितं न त्यजतीति भावः । अनेन प्रह्लादनमाह्लादकं ज्योतिश्चन्द्रोऽजनि जनितम् । जनेर्ण्यन्तात्कर्मणि लुङ् । सौम्य इति भावः ॥ ४ ॥

तां तामवस्थां प्रतिपद्यमानं स्थितं दश व्याप्य दिशो महिम्ना ।
विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा ॥ ५ ॥

तां तामिति ॥ तां तामनेकाम् । 'नित्यवीप्सयोः' (पा. ८।१।४) इति वीप्सया द्विरुक्तिः । अवस्थामक्षोभाद्यवस्थाम् । विष्णुपक्षे,–सत्त्वाद्यवस्थाम् । प्रतिपद्यमानं भजमानं महिम्ना दश दिशो व्याप्य स्थितं विष्णोरिवास्य रत्नाकरस्य रूपं स्वरूपमुक्तरीत्या बहुप्रकारत्वाद्व्यापकत्वाच्चेदृक्तया, इयत्तया वा प्रकारतः परिमाणतश्चानवधारणीयं दुर्निरूपम् ॥ ५ ॥

नाभिप्ररूढाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान्पुरुषोऽधिशेते ॥ ६ ॥

नाभीति ॥ युगान्ते कल्पान्त उचिता परिचिता योगः स्वात्मनिष्ठैव निद्रेव निद्रा यस्य स पुरुषो विष्णुर्लोकान्संहृत्य । नाभ्यां प्ररूढं यदम्बुरुहं पद्मं तदासनेन तन्नाभिकमलाश्रयेण [2]प्रथमेन धात्रा दक्षादीनामपि स्रष्ट्रा पितामहेन

---

टिप्प०—1 अत्र हेमाद्रिः—प्रवाहरूपेणार्थस्य विद्यमानत्वाद्वर्तमाने निर्देशः; यदुक्तम्— 'संभक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत् । बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः ॥' इति ।

2 दशब्रह्मापेक्षया प्रथमशब्दोऽयम् । हरिवंशे यथा–'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । भृगुर्वसिष्ठो दक्षश्च नारदो दशमस्तथा । दश ब्रह्माण इत्येते पुराणे निश्चयं गताः ॥' इति । कुमारसंभवेऽपि–'विधाता वेधसामपि', 'कुले प्रसूतिः प्रथमस्य वेधसः' इति च ।

संस्तूयमानः सन्। अमुमधिशेते। अमुष्मिञ्छेत इत्यर्थः। कल्पान्तेऽप्यस्तीति भावः॥ ६॥

पक्षच्छिदा गोत्रभिदात्तगन्धाः शरण्यमेनं शतशो महीध्राः।
नृपा इवोपप्लविनः परेभ्यो धर्मोत्तरं मध्यममाश्रयन्ते॥ ७॥

पक्षेति॥ पक्षच्छिदा गोत्रभिदेन्द्रेण। उभयत्र 'सत्सूद्विष-' (पा. ३।२।६१) इत्यादिना क्विप्। आत्तगन्धा हृतगर्वाः। अभिभूता इत्यर्थः। 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः' इति विश्वः। 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः। महीं धारयन्तीति महीध्राः पर्वताः। मूलविभुजादित्वात्कप्रत्ययः। शतं शतं शतशः शरण्यं रक्षणसमर्थमेनं समुद्रम्। परेभ्यः शत्रुभ्य उपप्लविनो भयवन्तो नृपा धर्मोत्तरं धर्मप्रधानं मध्यमं मध्यमभूपालमिव। आश्रयन्ते। 'अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः' इति कामन्दकः। आर्तबन्धुरिति भावः॥ ७॥

रसातलादादिभवेन पुंसा भुवः प्रयुक्तोद्वहनक्रियायाः।
अस्याच्छमम्भः प्रलयप्रवृद्धं मुहूर्तवक्त्राभरणं बभूव॥ ८॥

रसातलादिति॥ आदिभवेन पुंसाऽऽदिवराहेण रसातलात्प्रयुक्तोद्वहनक्रियायाः कृतोद्धरणक्रियायाः। विवाहक्रिया च व्यज्यते। भुवो भूदेवतायाः प्रलये प्रवृद्धमस्याब्धेरच्छमम्भो मुहूर्तं वक्त्राभरणं लज्जारक्षणार्थं मुखावगुण्ठनं बभूव। तदुक्तम्—'उद्धृतासि वराहेण कृष्णेन शतबाहुना' इति॥ ८॥

मुखार्पणेषु प्रकृतिप्रगल्भाः स्वयं तरंगाधरदानदक्षः।
अनन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धूः॥ ९॥

मुखेति॥ अन्येषां पुंसां सामान्या साधारणा न भवतीत्यनन्यसामान्या कलत्रेषु वृत्तिर्भोगरूपा यस्य स तथोक्तः। इममेवार्थं प्रतिपादयति-तरंग एवाधरस्तस्य दाने समर्पणे दक्षश्चतुरोऽसौ समुद्रो मुखार्पणेषु प्रकृत्या सख्यादिप्रेषणं विना प्रगल्भा धृष्टाः सिन्धूर्नदीः। 'सिन्धुः समुद्रे नद्यां च' इति विश्वः।

पाठा०-१ 'पक्षच्छिदः'. २ 'गोत्रभिदः'; 'गोत्रभित्तः'. ३ 'भयार्ताः'. ४ 'धृतम्'. ५ 'यस्य'.

टिप्प०—1 पुरा खलु पर्वता गरुडसमवेगिनः पक्षिण आसन्। ते चेतस्ततः सर्वासु दिक्षु परिभ्रमन्तो देवादीनां भीतिदायका अभवन्। तेन च क्रुद्धो देवेन्द्रः पर्वतपक्षान्सहस्रशश्छिच्छेदेति रामायणादवसेयमितिवृत्तम्।

2 शक्राद्भीताः सपक्षाः पर्वताः जलाब्धिं प्रविष्टा इत्यागमः-इति वल्लभः।

स्वयं पिबति पाययते च। तरंगाधरमिति शेषः। 'न पादम्याङ्यमा-'[1] (पा. १।३।७९) इत्यादिना पिबतेर्ण्यन्तान्नित्यं परस्मैपदनिषेधः। 'गतिबुद्धिप्रत्यव-सानार्थ'-(पा. १।४।५२) इत्यादिना सिन्धूनां कर्मत्वम्। दंपत्योर्युगपत्परस्पराधर-पानमनन्यसाधारणमिति भावः ॥ ९ ॥

ससत्त्वमादाय नदीमुखाम्भः संमीलयन्तो[1] विवृताननत्वात्[2]।
अमी शिरोभिस्तिमयः सरन्ध्रैरूर्ध्वं वितन्वन्ति जलप्रवाहान् ॥ १० ॥

ससत्त्वमिति ॥ अमी तिमयो[2] मत्स्यविशेषाः। तदुक्तम्—'अस्ति मत्स्य-स्तिमिर्नाम शतयोजनमायतः' इति। विवृताननत्वाद्व्यात्तमुखत्वाद्धेतोः। आनन-विवृतेत्यर्थः। ससत्त्वं मत्स्यादिप्राणिसहितं नदीमुखाम्भ आदाय संमील-[3]यन्तश्चञ्चुपुटानि संघट्टयन्तः सन्तः सरन्ध्रैः शिरोभिर्जलप्रवाहानूर्ध्वं वित-न्वन्ति। जलयन्त्रक्रीडासमाधिर्व्यज्यते ॥ १० ॥

मातंगनक्रैः सहसोत्पतद्भिर्भिन्नान्द्विधा पश्य समुद्रफेनान्।
कपोलसंसर्पितया य एषां व्रजन्ति कर्णक्षणचामरत्वम् ॥ ११ ॥

मातंगेति ॥ सहसोत्पतद्भिर्मातंगनक्रैः मातंगाकारैर्ग्राहैर्[4]द्विधा भिन्नान्स-मुद्रफेनान् पश्य। ये फेनाः एषां जलमातंगनक्राणां कपोलेषु संसर्पितया संसर्पणेन हेतुना कर्णेषु क्षणं चामरत्वं व्रजन्ति ॥ ११ ॥

वेलानिलाय प्रसृता भुजंगा महोर्मिविस्फूर्जथुनिर्विशेषाः[3]।
सूर्यांशुसंपर्कसमृद्धरागैर्व्यज्यन्त एते मणिभिः फणस्थैः ॥ १२ ॥

पाठा०—१ 'संमीलयन्तः'. २ 'विवृताननत्वम्'. ३ 'विस्फूर्जित'. ४ 'विवृद्ध'.

टिप्प०—1 यस्य कस्यापि पुंसः कान्ताधरस्य पाने स्वस्याधरदानं युगपन्न संभवति। अस्य तु संभवत्येवेत्यनन्यसामान्यत्वम्-इति हेमाद्रिः॥ अपरोऽपि कामी धात्रीपुत्र्याद्युपदेशमन्त्रेणैव चुम्बनादौ प्रौढकान्तामुखं पिबति, स्वयं च तदधरखण्डने समर्पणे वा कुशलः सन् ताः पाय-यति-इति शिशु०।

2 'अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृतः। तिमिंगिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः॥' राघवः=मत्स्यभेदः,-इति हेमाद्रिः।

3 भोज्यनिर्गमनशङ्कया मुखसंकोचस्तस्मादुत्पथेन जलनिर्गमः। मत्स्यविशेषाणां मूर्ध्नि रन्ध्रमिति प्रसिद्धिः-इति हेमाद्रिः।

4 हेमाद्रिश्चात्र—मातङ्गरूपा नक्रा जलचरास्तैः, शाकपार्थिवादिः, जलगजैरित्यर्थः। इत्यु-पक्रम्य-'यावन्तो दृश्यन्ते नरकरितुरगादयः स्थले जीवाः। तावन्तः सलिलेष्वपि जलपूर्वास्ते तु विज्ञेयाः॥' इति हलायुधः। भट्टिकाव्ये च-'प्रमुदितकनागगणा वेलातटशिखरिणो यत्र' इत्युदाहरति।

वेलेति ॥ वेलानिलाय । वेलानिलं पातुमित्यर्थः । 'क्रियार्थोपपद–' (पा. २।३।१४) इत्यादिना चतुर्थी । प्रसृता निर्गता महोर्मीणां विस्फूर्जथुरुद्रेकः । 'द्वितोऽथुच्' (पा. ३।३।८९) इत्यथुच्प्रत्ययः । तस्मान्निर्विशेषा दुर्भेदभेदा एते भुजंगाः सूर्यांशुसंपर्केण समृद्धरागैः प्रवृद्धकान्तिभिः फणस्थैर्मणिभिर्व्यज्यन्त उन्नीयन्ते ॥ १२ ॥

तवाधरस्पर्धिषु विद्रुमेषु पर्यस्तमेतत्सहसोर्मिवेगात् ।
ऊर्ध्वाङ्कुरप्रोतमुखं कथंचित्क्लेशादपक्रामति शङ्खयूथम् ॥ १३ ॥

तवेति ॥ तवाधरस्पर्धिषु । अधरसदृशेष्वित्यर्थः । विद्रुमेषु प्रवालेषु सहसोर्मिवेगात्पर्यस्तं प्रोत्क्षिप्तमूर्ध्वाङ्कुरैर्विद्रुमप्ररोहैः प्रोतमुखं स्यूतवदनमेतच्छङ्खानां यूथं वृन्दं कथंचित्क्लेशादपक्रामति । विलम्ब्यापसरतीत्यर्थः ॥ १३ ॥

प्रवृत्तमात्रेण पयांसि पातुमावर्तवेगाद्भ्रमता घनेन ।
आभाति भूयिष्ठमयं समुद्रः प्रमथ्यमानो गिरिणेव भूयः ॥ १४ ॥

प्रवृत्तेति ॥ पयांसि पातुं प्रवृत्त एव प्रवृत्तमात्रो न तु पीतवान्, तेन आवर्तवेगात् । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । भ्रमता घनेनायं समुद्रो भूयः पुनरपि गिरिणा मन्दरेण प्रमथ्यमान इव भूयिष्ठमत्यन्तमाभाति ॥ १४ ॥

दूरादयश्चक्रनिभस्य तन्वी तमालतालीवनराजिनीला ।
आभाति वेला लवणाम्बुराशेर्धारानिबद्धेव कलङ्करेखा ॥ १५ ॥

दूरादिति ॥ अयश्चक्रनिभस्य लवणाम्बुराशेर्दूरात्तन्व्यणुत्वेनावभासमाना तमालतालीवनराजिभिर्नीला वेला तीरभूमिर्धारानिबद्धा चक्राश्रिता कलङ्करेखामालिन्यरेखेव । आभाति । 'मालिन्यरेखां तु कलङ्कमाहुः' इति दण्डी ॥ १५ ॥

वेलानिलः केतकरेणुभिस्ते संभावयत्याननमायताक्षि ।
मामक्षमं मण्डनकालहानेर्वेत्तीव बिम्बाधरबद्धतृष्णम् ॥ १६ ॥

वेलेति ॥ हे आयताक्षि ! 'वेला स्यात्तीरनीरयोः' इति विश्वः । वेलानिलः केतकरेणुभिस्त आननं संभावयति । किमर्थमित्यपेक्षायामुत्प्रेक्ष्यते—बिम्बा-

पाठा०-१ 'कष्टात्'. २ 'इतः'. ३ 'लेखा'.

टिप्प०—1 यद्वा,—तवाधरस्पर्धिषु विद्रुमेषु कथंचित्पर्यस्तमूर्ध्वाङ्कुरप्रोतमुखमेव शङ्खयूथमूर्मिवेगात्-सहसाऽपक्रामति गच्छति-इति हेमाद्रिः ।

धरे बद्धतृष्णं मां मण्डनेनाभरणक्रियया कालहानिर्विलम्बस्तस्या अक्षमम-सहमानम् । कर्मणि षष्ठी । कालहानिमसहमानं वेत्तीव वेत्ति किम्? नो चेत्कथं संभावयेदित्यर्थः ॥ १६ ॥

एते वयं सैकतभिन्नशुक्तिपर्यस्तमुक्तापटलं पयोधेः ।
प्राप्ता मुहूर्तेन विमानवेगात्कूलं फलावर्जितपूगमालम् ॥ १७ ॥

एत इति ॥ एते वयं सैकतेषु भिन्नाभिः स्फुटिताभिः शुक्तिभिः पर्य-स्तानि परितः क्षिप्तानि मुक्तानां पटलानि यस्मिंस्तत्तथोक्तं फलैरावर्जिता आन-मिता पूगमाला यस्मिंस्तत् पयोधेः कूलं विमानवेगान्मुहूर्तेन प्राप्ताः ॥ १७ ॥

कुरुष्व तावत्करभोरु ! पश्चान्मार्गे मृगप्रेक्षिणि ! दृष्टिपातम् ।
एषा विदूरीभवतः समुद्रात्सकानना निष्पततीव भूमिः ॥ १८ ॥

कुरुष्वेति ॥ 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः । करभ इवोरू यस्याः सा करभोरूः । 'ऊरूत्तरपदादौपम्ये' (पा. ४।१।६९) इत्यूङ् । तस्याः संबु-द्धिर्हे करभोरु । मृगवत्प्रेक्षत इति विग्रहः । हे मृगप्रेक्षिणि ! तावत्पश्चान्मार्गे लङ्घिताध्वनि दृष्टिपातं कुरुष्व । एषा सकानना भूमिर्विदूरीभवतः समु-द्रान्निष्पतति निष्क्रामतीव । 'विदूर'शब्दाद्विशेष्यनिघ्नाच्विः ॥ १८ ॥

क्वचित्पथा संचरते सुराणां क्वचिद्घनानां पततां क्वचिच्च ।
यथाविधो मे मनसोऽभिलाषः प्रवर्तते पश्य तथा विमानम् ॥ १९ ॥

क्वचिदिति ॥ हे देवि ! विमानं पुष्पकं मे मनसोऽभिलापो यथाविध-स्तथा प्रवर्तते पश्य । क्वचित् सुराणां पथा संचरते । क्वचिद्घनानां क्वचित्पततां पक्षिणां च पथा संचरते । 'समस्तृतीयायुक्तात्' (पा. १।३।५४) इति संपूर्वाच्चरतेरात्मनेपदम् ॥ १९ ॥

असौ महेन्द्रद्विपदानगन्धिस्त्रिमार्गगावीचिविमर्दशीतः ।
आकाशवायुर्दिनयौवनोत्थानाचामति स्वेदलवान्मुखे ते ॥ २० ॥

असाविति ॥ महेन्द्रद्विपदानगन्धिरैरावतमदगन्धिः । त्रिभिर्मार्गैर्गच्छतीति त्रिमार्गगा गङ्गा । 'तद्धितार्थ-' (पा. २।१।५१) इत्यादिनोत्तरपदसमासः । तस्या

पाठा०—१ 'निःसरति'. २ 'मरुताम्'. ३ 'महेन्द्रद्विपदानगन्धी'; 'सुरेन्द्रद्विप-दानगन्धी'.

टिप्प०—1 अत्र 'गन्ध'शब्दस्याल्पपर्यायत्वादल्पस्य दानस्य ग्रहणाद्वायोर्मान्द्यम्-इति हेमाद्रिः ।

वीचीनां विमर्देन संपर्केण शीतोऽसावाकाशवायुर्दिनयौवनोत्थान्मध्याह्न-संभवांस्ते मुखे स्वेदलवानाचामति हरति। अनेन सुरपथसंचारो दर्शितः ॥२०॥

करेण वातायनलम्बितेन स्पृष्टस्त्वया चण्डि! कुतूहलिन्या।
आमुञ्चतीवाभरणं द्वितीयमुद्भिन्नविद्युद्वलयो घनस्ते ॥ २१ ॥

करेणेति ॥ हे चण्डि कोपने! 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः। कुतूहलिन्या विनोदार्थिन्या त्वया कर्यां वातायने गवाक्षे लम्बितेनावलंबितेन करेण स्पृष्ट उद्भिन्नविद्युद्वलयो घनस्ते द्वितीयमाभरणं वलयमामुञ्चती-वार्पयतीव। 'चण्डि' इत्यनेन कोपनशीलत्वाद्भीतः क्षिप्रं त्वां मुञ्चति मेघ इति व्यज्यते ॥ २१ ॥

अमी जनस्थानमपोढविघ्नं मत्वा समारब्धनवोटजानि।
अध्यासते चीरभृतो यथास्वं चिरोज्झितान्याश्रममण्डलानि ॥२२॥

अमी इति ॥ अमी चीरभृतस्तापसा जनस्थानमपोढविघ्नमपास्तविघ्नं मत्वा ज्ञात्वा समारब्धा नवा उटजाः पर्णशाला येषु तानि। 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः। चिरोज्झितानि। राक्षसभयादित्यर्थः। आश्रममण्डला-न्याश्रमविभागान्। यथास्वं स्वमनतिक्रम्य। अध्यासतेऽधितिष्ठन्ति ॥ २२ ॥

सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम्।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥ २३ ॥

सैषेति ॥ सा पूर्वानुभूता स्थल्येषा। दृश्यत इत्यर्थः। यत्र स्थल्यां त्वां विचिन्वताऽन्विष्यता मया। त्वच्चरणारविन्देन यो विश्लेषो वियोगस्तेन यद्दुःखं तस्मादिव बद्धमौनं निःशब्दम्। उर्व्यां भ्रष्टमेकं नूपुरं मञ्जीरः। 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः। अदृश्यत दृष्टम्। हेतूत्प्रेक्षा ॥ २३ ॥

त्वं रक्षसा भीरु! यतोऽपनीता तं मार्गमेताः कृपया लता मे[1]।
अदर्शयन्वक्तुमशक्नुवत्यः शाखाभिरावर्जितपल्लवाभिः ॥ २४ ॥

---

पाठा०—१ 'ते'.

---

टिप्प०—1 सविद्युत घनं दृष्ट्वा श्यामवर्णसाम्यात् रामः स्त्र्यन्तरयुक्तः इति सीतायाः कोपोऽभूदिति 'चण्डि'पदम्। विद्युद्भूषित मेघं दृष्ट्वा नीलोत्पलदलश्यामो स्त्र्यन्तरयुक्त इति सीताया वर्णसाम्यात्कोपवत्ता-इति हेमाद्रिः।

2 इह पद्ये कविरिष्टदैवतमत्र निक्षेपेति सम्प्रदाय —इति दिनकर० ॥ स च नूपुरपर्यायित्वात् 'हस' इति ज्ञेय -इति शिशु०।

त्वमिति ॥ हे भीरु भयशीले ! 'ऊङुतः' (पा. ४।१।६६) इत्यूङ् । ततो नदीत्वात्संबुद्धौ ह्रस्वः । त्वं रक्षसा रावणेन यतो येन मार्गेण । सार्वविभक्तिकस्तसिः । अपनीताऽपहृता तं मार्गं वागिन्द्रियाभावाद्वक्तुमशक्नुवत्य एता लता वीरुध आवर्जिता नमिताः पल्लवाः पाणिस्थानीया याभिस्ताभिः शाखाभिः स्वावयवभूताभिः कृपया मेऽदर्शयन् । हस्तचेष्टयाऽसूचयन्नित्यर्थः । 'शाखा वृक्षान्तरे भुजे' इति विश्वः । लतादीनामपि ज्ञानमस्त्येव । तदुक्तं मनुना (१।४९)–'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः' इति ॥ २४ ॥

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन्माम् ।
व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि ॥ २५ ॥

मृग्यश्चेति ॥ दर्भाङ्कुरेषु भक्ष्येषु निर्व्यपेक्षा निःस्पृहा मृग्यो मृगाङ्गनाश्चोत्पक्ष्मराजीनि विलोचनानि दक्षिणस्यां दिशि व्यापारयन्त्यः प्रवर्तयन्त्यः स्तवागतिज्ञं गमनभिज्ञं मां समबोधयन् । दृष्टिचेष्टया त्वद्गतिमबोधयन्नित्यर्थः ॥ २५ ॥

एतद्गिरेर्माल्यवतः पुरस्तादाविर्भवत्यम्बरलेखि शृङ्गम् ।
नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं विसृष्टम् ॥ २६ ॥

एतदिति ॥ माल्यवतो नाम गिरेरम्बरलेख्यभ्रंकषं शृङ्गमेतत्पुरस्तादग्र आविर्भवति । यत्र शृङ्गे घनैर्मेघैर्नवं पयो मया त्वद्विप्रयोगेण यदश्रु तच्च समं युगपद्विसृष्टम् । मेघदर्शनाद्दुर्पनुत्वमश्रु विमुक्तमिति भावः ॥ २६ ॥

गन्धश्च धाराहतपल्वलानां कादम्बमर्धोद्गतकेसरं च ।
स्निग्धाश्च केकाः शिखिनां बभूवुर्यस्मिन्नसह्यानि विना त्वया मे ॥ २७ ॥

गन्धश्चेति ॥ यस्मिन् शृङ्गे धाराभिर्वर्षधाराभिराहतानां पल्वलानां गन्धश्च । अर्धोद्गतकेसरं कादम्बं नीपकुसुमं च । स्निग्धा मधुराः । शिखिनां बर्हिणाम् । 'शिखिनौ वह्निबर्हिणौ' इत्यमरः । केकाश्च । त्वया विना मेऽसह्यानि बभूवुः । 'नपुंसकमनपुंसकेन—' (पा. १।२।६९) इति नपुंसकैकशेषः ॥ २७ ॥

---

पाठा०–१ 'मम्बरलेढि'. २ 'विसृष्टम्'. ३ 'त्वया मे'. ४ 'विना दुःप्रसह्यान्यभूवन्'.

पूर्वानुभूतं स्मरता च यत्र कम्पोत्तरं भीरु ! तवोपगूढम् ।
गुहाविसारीण्यतिवाहितानि मया कथंचिद्घनगर्जितानि ॥ २८ ॥

पूर्वेति ॥ किंच, हे भीरु ! यत्र शृङ्गे पूर्वानुभूतं कम्पोत्तरं कम्पप्रधानं तवोपगूढमुपगूहनं स्मरता मया गुहाविसारीणि घनगर्जितानि कथंचिदतिवाहितानि । स्मारकत्वेनोद्दीपकत्वात्क्लेशेन गमितानीत्यर्थः ॥ २८ ॥

[illegible] तैः ।
[illegible] २९ ॥

आ ... [illegible] कन्दली- पुष्पैररुणवर्णैरासारेण धारासंपातेन । 'धारासंपात आसारः' इत्यमरः । 'सिक्तायाः क्षितेर्बाष्पस्य धूमवर्णस्य योगाद्धेतोर्विडम्ब्यमानाऽनुक्रियमाणा ते विवाहधूमेनारुणा लोचनश्रीः । सादृश्यात्स्मर्यमाणेति शेषः । मामक्षिणोदपीडयत् ॥२९॥

उपान्तवानीरवनोपगूढान्यालक्ष्यपारिप्लवसारसानि ।
दूरावतीर्णा पिबतीव खेदादमूनि पम्पासलिलानि दृष्टिः ॥ ३० ॥

उपान्तेति ॥ उपान्तवानीरवनोपगूढानि पार्श्ववञ्जुलवनच्छन्नान्यालक्ष्या ईषद्दृश्याः पारिप्लवाश्चञ्चलाः सारसा येषु तान्यमूनि पम्पासलिलानि पम्पासरोजलानि दूरादवतीर्णा मे दृष्टिरत एव खेदात्पिबतीव । न विहातुमुत्सहत इत्यर्थः ॥ ३० ॥

अत्रावियुक्तानि रथाङ्गनाम्नामन्योन्यदत्तोत्पलकेसराणि ।
द्वन्द्वानि दूरान्तरवर्तिना ते मया प्रिये ! सस्पृहमीक्षितानि ॥ ३१ ॥

अत्रेति ॥ अत्र पम्पासरसि । अन्योन्यस्मै दत्तोत्पलकेसराण्यवियुक्तानि रथाङ्गनाम्नां द्वन्द्वानि चक्रवाकमिथुनानि ते तव दूरान्तरवर्तिना दूरदेशवर्तिना मया हे प्रिये ! सस्पृहं साभिलाषमीक्षितानि । तदानीं त्वामस्मार्षमित्यर्थः ॥३१॥

इमां तटाशोकलतां च तन्वीं स्तनाभिरामस्तवकाभिनम्राम् ।
त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः सौमित्रिणा साश्रुरहं निषिद्धः ॥३२॥

पाठा०—१ 'रात्रौ'. २ 'अवनम्राम्'. ३ 'परिरिप्समाणः'; 'परिरिप्स्यमानः'. ४ 'सास्रम्'.

टिप्प०—1 अन्यापि श्रान्ता जलं पिबति—इति दिनकर० ।

2 तान्यवियुक्तानि चक्रवाकानां द्वन्द्वानि तव दूरे यदन्तरं व्यवहितो देशस्तत्र मध्यवर्तिना मया सस्पृहं दृष्टानि, 'ममाप्येवं कदा भविष्यति ?' इति साभिलाषमलोकिषीति भावः—इति दिनकर० ।

इमामिति ॥ किंच स्तनवदभिरामाभ्यां स्तवकाभ्यामभिनम्रां तन्वीमिमां तटाशोकस्य लतां शाखाम्, अतस्त्वत्प्राप्तिबुद्ध्या त्वमेव प्राप्तेति भ्रान्त्या परिरब्धुमालिङ्गितुं कामो यस्य सोऽहं सौमित्रिणा लक्ष्मणेन साश्रुर्निषिद्धः नेयं सीतेति निवारितः। 'परिरब्धुकाम' इत्यत्र 'तुं काममनसोरपि' इति वचनान्मकारलोपः ॥ ३२ ॥

अमूर्विमानान्तरलम्बिनीनां श्रुत्वा स्वनं काञ्चनकिङ्किणीनाम्।
प्रत्युद्व्रजन्तीव खमुत्पतन्त्यो गोदावरीसारसपङ्क्तयस्त्वाम् ॥ ३३ ॥

अमूरिति ॥ विमानस्यान्तरेष्ववकाशेषु लम्बन्ते यास्तासां काञ्चनकिङ्किणीनां स्वनं श्रुत्वा स्वयूथशब्दभ्रमात्खमाकाशमुत्पतन्त्योऽमूर्गोदावरीसारसपङ्क्तयस्त्वां प्रत्युद्व्रजन्तीव ॥ ३३ ॥

एषा त्वया पेशलमध्ययापि घटाम्बुसंवर्धितबालचूता।
आनन्दयत्युन्मुखकृष्णसारा दृष्टा चिरात्पञ्चवटी मनो मे ॥ ३४ ॥

एषेति ॥ पेशलमध्ययापि। भाराक्षमयापीत्यर्थः। त्वया घटाम्बुभिः संवर्धिता बालचूता यस्याः सा। उन्मुखा अस्मदभिमुखा त्वत्संवर्धिता एव कृष्णसारा यस्याः सा चिराद्दृष्टा पञ्चवटी मे मन आनन्दयत्याह्लादयति। 'पञ्चवटी'शब्दः पूर्वमेव व्याख्यातः ॥ ३४ ॥

अत्रानुगोदं मृगयानिवृत्तस्तरंगवातेन विनीतखेदः।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तः ॥ ३५ ॥

अत्रेति ॥ अत्र पञ्चवट्याम्। गोदा गोदावरी, तस्याः समीपेऽनुगोदम्। 'अनुर्यत्समया' (पा. २।१।१५) इत्यव्ययीभावः। मृगयाया निवृत्तस्तरंगवातेन विनीतखेदो रहो रहसि। अत्यन्तसंयोगे द्वितीया। त्वदुत्सङ्गनिषण्णमूर्धा सन्नहं वानीरगृहेषु सुप्तः स्मरामि। वाक्यार्थः कर्म। सुप्त इति यत्तत्स्मरामीत्यर्थः ॥ ३५ ॥

पाठा०—१ 'अमूम्'. २ 'पेलवमध्यया'; 'कोमलमध्यया'. ३ 'बालचूतान्'. ४ 'आह्लादयति'; 'आक्रन्दयति'. ५ 'निपन्नमूर्धा'.

टिप्प०—1 उन्मुखाः नीलकंठा मयूरा यस्यां सा तथा चिराद्दृष्टा पञ्चवटी स्थानभेदो मे मन उत्कण्ठयति। श्यामं रामं वीक्ष्य 'मेघोऽयम्' इति भ्रमान्मयूराणामुन्मुखीभावः-इति दिनकर०।
2 प्रकृतत्वात्स्मरस्येव प्रकृतत्वम्, 'सुप्तम्' इति पाठे वर्तमानप्रयोगे मृगयानिवृत्त इत्यादिभूतप्रयोगानामन्वयासंभवात् 'सुप्त' इति भव्यः पाठः। यद्वा,-'स' इति पृथक् पदम्, 'रामि' इति पृथक्। सुप्तं शयनं रामि स गृहीतवानस्मीत्यर्थः। 'समुदाये प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' इति न्यायादनुगोदम्, पादैकदेशप्रयोगोऽयम्। 'भीमो भीमसेनः', 'सत्या सत्यभामा' इतिवत्-इति दिनकर०।

**भ्रूभेदमात्रेण पदान्मघोनः प्रभ्रंशयां यो नहुषं चकार ।**
**तस्याविलाम्भःपरिशुद्धिहेतोर्भौमो मुनेः स्थानपरिग्रहोऽयम् ॥ ३६॥**

**भ्रूभेदेति** ॥ यो मुनि**र्भ्रूभेदमात्रेण** भ्रूभङ्गमात्रेणैव **नहुषं** राजानं **मघोनः पदा**दिन्द्रत्वात् । **प्रभ्रंशयां चकार** प्रभ्रंशयति स्म । **आविलाम्भःपरिशुद्धिहेतोः** कलुषजलप्रसादहेतोस्तस्य **मुने**रगस्त्यस्य । अगस्त्योदये शरदि जलं प्रसीदतीत्युक्तं प्राक् । भूमौ भवो **भौमः स्थानपरिग्रह** आश्रमो**ऽयम्** । दृश्यत इति शेषः । 'भौम' इत्यनेन दिव्योऽप्यस्तीत्युक्तम् । परिगृह्यत इति परिग्रहः, स्थानमेव परिग्रह इति विग्रहः ॥ ३६ ॥

**त्रेताग्निधूमाग्रमनिन्द्यकीर्तेस्तस्येदमाक्रान्तविमानमार्गम् ।**
**घ्रात्वा हविर्गन्धि रजोविमुक्तः समश्नुते मे लघिमानमात्मा ॥ ३७॥**

**त्रेतेति** ॥ **अनिन्द्यकीर्तेस्तस्या**गस्त्यस्य । **आक्रान्तविमानमार्गम्** । हविर्गन्धोऽस्यास्तीति **हविर्गन्धि** त्रेताभिरग्नित्रयम् । 'अग्नित्रयमिदं त्रेता' इत्यमरः । पृषोदरादित्वादेत्वम् । **त्रेताग्नेर्धूमाग्रमिदं घ्रात्वा**ऽऽघ्राय **रज**सो गुणाद्विमुक्तो **मे** मम । **आत्मा**ऽन्तःकरणं **लघिमानं** लघुत्वगुणं **समश्नुते** प्राप्नोति ॥ ३७ ॥

**एतन्मुनेर्मानिनि ! शातकर्णेः पञ्चाप्सरो नाम विहारवारि ।**
**आभाति पर्यन्तवनं विदूरान्मेघान्तरालक्ष्यमिवेन्दुबिम्बम् ॥ ३८ ॥**

**एतदिति** ॥ हे **मानिनि ! शातकर्णेर्मुनेः** संबन्धि **पञ्चाप्सरो नाम** 'पञ्चाप्सर' इति प्रसिद्धम् । पञ्च अप्सरसो यस्मिन्निति विग्रहः । पर्यन्तेषु वनानि यस्य तत्प-

---

पाठा०—१ 'भ्रूभङ्गमात्रेण'. २ 'माण्डकर्णेः'; 'मान्दकर्णेः'.

---

टिप्प०—1 पुरा किल पुरुवंशे नहुषाख्यो नृपस्तपोमहिम्ना शक्रपदं प्राप्य शचीमचीकमत् । सा च 'सुराचार्यप्रेरिताऽगस्त्यादिमुनिजनवाह्य चतुरस्रयानमारुह्य यदा यास्यसि तदोररीकरिष्यामि' इत्युवाच । सोऽपि तद्भोगबद्धादरस्तथा कृत्वा मन्दगामिनमगस्त्यं 'सर्प सर्प' इति जल्पन् पादेनाताडयत् । समुत्पन्नमन्युः सोऽपि 'सर्पो भव' इति त शशाप—इत्याख्यायिका ।

2 अत्र 'माण्डकर्णेः' इति पाठो रामायणसमतः, 'इद पञ्चाप्सरो नाम तटाकं सार्वकालिकम् । निर्मितं तपसा राम ! मुनिना माण्डकर्णिना ।' इत्युक्तत्वात् । दिनकरमिश्रा अपि—मण्टकर्णस्यापत्य माण्डकर्णिः, तस्य मुनेर्विहारार्थं वारि यस्य स तथा पर्यन्तं वन यस्य तत् पञ्चभिरप्सरोभिः सह कृतत्वात् 'पञ्चाप्सरो' नामैतत्सरो; मेघानां मध्ये ईषल्लक्ष्यं चन्द्रमिव राजते—इति व्याकुर्वन्तः । 'माण्डकर्णेः' इत्येव पाठोऽत्र युक्त, रम्यगतिकगतित्वात् टीकाकृदादृत एवात्र पाठो धृतः—संपादकः ।

र्यन्तवनमेतद्विहारवारि क्रीडासरो विदूरात् । मेघानामन्तरे मध्य आलक्ष्यमीषद्दृश्यम् । आङीषदर्थेऽभिव्याप्तौ । इन्दुबिम्बमिव । आभाति ॥ ३८ ॥

पुरा स दर्भाङ्कुरमात्रवृत्तिश्चरन्मृगैः सार्धमृषिर्मघोना ।
समाधिभीतेन किलोपनीतः पञ्चाप्सरोयौवनकूटबन्धम् ॥ ३९ ॥

पुरेति ॥ पुरा पूर्वस्मिन्काले दर्भाङ्कुरमात्रवृत्तिस्तन्मात्राहारो मृगैः सार्धं सह चरन्, स ऋषिः समाधेस्तपसो भीतेन मघोनेन्द्रेण पञ्चानामप्सरसां यौवनम् । 'तद्धितार्थ–' (पा. २।१।५१) इत्यादिनोत्तरपदसमासः । तदेव कूटबन्धं कपटयन्त्रमुपनीतः । 'उन्माथः कूटयन्त्रं स्यात्' इत्यमरः । 'किल' इत्यैतिह्ये मृगसाहचर्यान्मृगवदेव बद्ध इति भावः ॥ ३९ ॥

तस्यायमन्तर्हितसौधभाजः प्रसक्तसंगीतमृदङ्गघोषः ।
वियद्गतः पुष्पकचन्द्रशालाः क्षणं प्रतिश्रुन्मुखराः करोति ॥ ४० ॥

तस्येति ॥ अन्तर्हितसौधभाजो जलान्तर्गतप्रासादगतस्य तस्य शातकर्णेरयं प्रसक्तः संततः संगीतमृदङ्गघोषो वियद्गतः सन् पुष्पकस्य चन्द्रशालाः शिरोगृहाणि । 'चन्द्रशाला शिरोगृहम्' इति हलायुधः । क्षणं प्रतिश्रुद्भिः प्रतिध्वानैर्मुखरा ध्वनन्तीः करोति । 'स्त्री प्रतिश्रुत्प्रतिध्वाने' इत्यमरः ॥ ४० ॥

हविर्भुजामेधवतां चतुर्णां मध्ये ललाटंतपसप्तसप्तिः ।
असौ तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दान्तः ॥ ४१ ॥

हविरिति ॥ नाम्ना सुतीक्ष्णः सुतीक्ष्णनामा चरितेन दान्तः सौम्योऽसावपरस्तपस्वी । एधवतामिन्धनवताम् । 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः । चतुर्णां हविर्भुजामग्नीनां मध्ये । ललाटं तपतीति ललाटंतपः सूर्यः । 'असूर्यललाटयोर्दृशितपोः' (पा. ३।२।३६) इति खश्प्रत्ययः । 'अरुर्द्विषत्–' (पा. ६।३।६७) इत्यादिना मुमागमः । ललाटंतपः सप्तसप्तिः सप्ताश्वः सूर्यो यस्य स तथोक्तः सन् । तपस्यति तपश्चरति । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' (पा. ३।१।१५) इति क्यङ् । 'तपसः परस्मैपदं च' (वा. १७३३) इति वक्तव्यम् ॥ ४१ ॥

---

पाठा०—१ 'भेदेन'. २ 'प्रयुक्त'. ३ 'नादः'. ४ 'हि तप्स्यति'.

---

टिप्प०—1 दिनकरमिश्रास्तु 'कूटयन्त्रं' इति पाठमाश्रित्य पञ्चानामप्सरसां यौवनमेव कूटयन्त्रं तेनोन्मादार्थं प्रापितः । यथा कूटयन्त्रेण बद्धानां मृगाणामन्यत्र गत्यभावः, तथाऽस्यापि स्यादिति तारुण्यकूटयन्त्रेण बन्धनम् । अतस्ताभिरेव रमत इत्यर्थः–इति व्याचख्युः ।

**अमुं सहासप्रहितेक्षणानि व्याजार्धसंदर्शितमेखलानि ।**
**नालं विकर्तुं जनितेन्द्रशङ्कं सुराङ्गनाविभ्रमचेष्टितानि ॥ ४२ ॥**

**अमुमिति ॥ जनितेन्द्रशङ्कम्** । तपसेति शेषः । **अमुं** सुतीक्ष्णं **सहासं प्रहितानीक्षणानि** दृष्टयो येषु तानि । **व्याजेन** केनचिन्मिषेण । 'पुंस्यर्धोऽर्धं समेंऽशके' इति विश्वः । **अर्धमीषत् संदर्शिता मेखला** येषु तानि **सुराङ्गनानामि**न्द्रप्रेषितानां **विभ्रमा** विलासा एव **चेष्टितानि विकर्तुं** स्खलयितुम**लं** समर्थानि **न** । बभूवुरिति शेषः ॥ ४२ ॥

**एषोऽक्षमालावलयं मृगाणां कण्डूयितारं कुशसूचिलावम् ।**
**सभाजने मे भुजमूर्ध्वबाहुः सव्येतरं प्राध्वमितः प्रयुङ्क्ते ॥ ४३ ॥**

**एष इति ॥ ऊर्ध्वबाहुरेष** सुतीक्ष्णोऽ**क्षमालैव वलयं** यस्य तं **मृगाणां कण्डूयितारम्** । कुशा एव सूचयस्ता लुनातीति **कुशसूचिलावस्तम्** । 'कर्मण्यण्' (पा. ३।२।१) इत्यण् । एभिर्विशेषणैर्जपशीलत्वं भूतदया कर्मक्षमत्वं च द्योत्यते । **सव्यादितरं** दक्षिणं **भुजं मे** मम **सभाजने** सम्माननिमित्ते । 'निमित्तात्कर्मयोगे' ( वा. १४९० ) इति सप्तमी । **इतः प्राध्वं** प्रकृतानुकूलबन्धं **प्रयुङ्क्ते** । 'आनुकूल्यार्थकं प्राध्वम्' इत्यमरः । अव्ययं चैतत् ॥ ४३ ॥

**वाचंयमत्वात्प्रणतिं ममैष कम्पेन किंचित्प्रतिगृह्य मूर्ध्नः ।**
**दृष्टिं विमानव्यवधानमुक्तां पुनः सहस्रार्चिषि संनिधत्ते ॥ ४४ ॥**

**वाचंयमेति ॥ एष** सुतीक्ष्णः । वाचं यच्छतीति **वाचंयमो** मौनव्रती । 'वाचि यमो व्रते' (पा. ३।२।४०) इति खच्प्रत्ययः । 'वाचंयमपुरंदरौ च' (पा. ६।३।६९) इति मुम् । तस्य भावस्तत्त्वान्मम **प्रणतिं किंचिन्मूर्ध्नः कम्पेन प्रतिगृह्य विमानेन व्यवधानं** तिरोधानं तस्मा**न्मुक्ताम्** । 'अपेतापोढमुक्तपतित-' (पा. २।१।३८) इत्यादिना पञ्चमीसमासः । **दृष्टिं पुनः सहस्रार्चिषि** सूर्ये **संनिधत्ते** । सम्यग्धत्त इत्यर्थः । अन्यथाऽकर्मकत्वप्रसङ्गात् ॥ ४४ ॥

**अदः शरण्यं शरभङ्गनाम्नस्तपोवनं पावनमाहिताग्नेः ।**
**चिराय संतर्प्य समिद्भिरग्निं यो मन्त्रपूतां तनुमप्यहौषीत् ॥ ४५ ॥**

**अद इति ॥** शरणे रक्षणे साधु **शरण्यम्** । पावयतीति **पावनम्** । **अदो** दृश्यमानं **तपोवनमाहिताग्नेः शरभङ्गनाम्नो** मुनेः संबन्धि । **यः** शरभङ्गश्चि**राय**

---

पाठा०-१ 'उग्रतेजाः', २ 'प्रांशु'.

चिरमग्निं समिद्भिः संतर्प्य तर्पयित्वा ततो मन्त्रैः पूतां शुद्धां तनुमप्यहौ-षीद्धुतवान्। जुहोतेर्लुङ् ॥ ४५ ॥

छायाविनीताध्वपरिश्रमेषु भूयिष्ठसंभाव्यफलेष्वमीषु।
तस्यातिथीनामधुना सपर्या स्थिता सुपुत्रेष्विव पादपेषु ॥ ४६॥

छायेति ॥ अधुनाऽस्मिन्काले तस्य शरभङ्गस्य संबन्धिन्यतिथीनां सपर्याऽतिथिपूजा। 'पूजा नमस्यापचितिः सपर्याचार्हणाः समाः' इत्यमरः। छायाभिर्विनीतोऽपनीतोऽध्वपरिश्रमो यैस्तेषु भूयिष्ठानि बहुतमानि संभाव्यानि श्लाघ्यानि फलानि येषां तेष्वमीषु पादपेष्वाश्रमवृक्षेषु सुपुत्रेष्विव स्थिता। तत्पुत्रैरिव पादपैरनुष्ठीयत इत्यर्थः ॥ ४६ ॥

धारास्वनोद्गारिदरीमुखोऽसौ शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः।
बध्नाति मे बन्धुरगात्रि! चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः ॥ ४७॥

धारेति ॥ धारा निर्झरधाराः। यद्वा,–धारया सातत्येन स्वनोद्गारिदर्येव मुखं यस्य सः। शृङ्गं शिखरं विषाणं च तस्याग्रे लग्नोऽम्बुद एव वप्रपङ्को वप्र-
५ क्रीडासक्तपङ्को यस्य सः। असौ चित्रकूटो हे बन्धुरगात्रि उन्नतानताङ्गि! 'बन्धुरं तून्नतानतम्' इत्यमरः। दृप्तः ककुद्मान् वृषभ इव। मे चक्षुर्बध्नात्यनन्यासक्तं करोति ॥ ४७ ॥

एषा प्रसन्नस्तिमितप्रवाहा सरिद्विदूरान्तरभावतन्वी।
मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः ॥ ४८॥

एषेति ॥ प्रसन्नो निर्मलः स्तिमितो निःस्पन्दः प्रवाहो यस्याः सा विदूरस्यान्तरस्य मध्यवर्त्यवकाशस्य भावात्तन्वी दूरदेशवर्तित्वात्तनुत्वेनावभासमाना मन्दाकिनी नाम काचिच्चित्रकूटनिकटगैषा सरित्। नगोपकण्ठेन भूमेः कण्ठगता मुक्तावलीव। भाति। अत्र नगस्य शिरस्त्वं तदुपकण्ठस्य कण्ठत्वं च गम्यते ॥ ४८ ॥

अयं सुजातोऽनुगिरं तमालः प्रवालमादाय सुगन्धि यस्य।
यवाङ्कुरापाण्डुकपोलशोभी मयावतंसः परिकल्पितस्ते ॥ ४९ ॥

अयमिति ॥ गिरेः समीपेऽनुगिरम्। 'गिरेश्च सेनकस्य' (पा. ५।४।११२) इति समासान्तष्टच्प्रत्ययः। सुजातः स तमालोऽयं दृश्यते। यस्य तमालस्य। शोभनो गन्धो यस्य तत्सुगन्धि। 'गन्धस्य–' (पा. ५।४।१३५) इत्यादिनेकारः समासान्तः। प्रवालं पल्लवमादाय मया ते यवाङ्कुरवदापाण्डौ कपोले शोभी शोभते यः सोऽवतंसः परिकल्पितः ॥ ४९ ॥

---

टिप्प०—1 दर्शनादेव प्रीतिं जनयतीत्यर्थः–इति दिनकर०।

**अनिग्रहत्रासविनीतसत्त्वमपुष्पलिङ्गात्[1]फलबन्धिवृक्षम् ।**
**वनं तपःसाधनमेतदत्रेराविष्कृतोदग्रतरप्रभावम्[2] ॥ ५० ॥**

**अनिग्रहेति** ॥ **अनिग्रहत्रासा** दण्डभयरहिता अपि **विनीताः सत्त्वा** जन्तवो यस्मिंस्तत् । **अपुष्पलिङ्गात्**पुष्पनिमित्तं विनैव **फलबन्धिनः** फलग्राहिणो **वृक्षा** यस्मिंस्तत् । अत एवाऽऽ**विष्कृतोदग्रतरप्रभावम**त्रेर्मुनेस्तपसः **साधनं वनमेतत्** ॥ ५० ॥

**अत्राभिषेकाय तपोधनानां सप्तर्षिहस्तोद्धृतहेमपद्माम् ।**
**प्रवर्तयामास किलानसूया त्रिस्रोतसं त्र्यम्बकमौलिमालाम् ॥ ५१ ॥**

**अत्रेति** ॥ **अत्र** वनेऽ**नसूया**ऽत्रिपत्नी । सप्त च ते ऋषयश्च **सप्तर्षयः** । 'दिक्संख्ये संज्ञायाम्' ( पा. २।१।५० ) इति तत्पुरुषसमासः । तेषां **हस्तैरुद्धृतानि हेमपद्मानि** यस्यास्तां **त्र्यम्बकमौलिमालां** हरशिरःस्रजं **त्रिस्रोतसं** भागीरथीं **तपोधनाना**मृषीणा**मभिषेकाय** स्नानाय **प्रवर्तयामास** प्रवाहयामास । **किले**त्यैतिह्ये ॥ ५१ ॥

**वीरासनैर्ध्यानजुषामृषीणाममी समध्यासितवेदिमध्याः ।**
**निवातनिष्कम्पतया[3] विभान्ति योगाधिरूढा इव शाखिनोऽपि ॥ ५२ ॥**

**वीरेति** ॥ **वीरासनै**र्जयसाधनैः । ध्यानं जुषन्ते सेवन्त इति **ध्यानजुषः** । तेषां तैरुपविश्य ध्यायता**मृषीणां** संबन्धिनः **समध्यासितवेदिमध्याः** । इदं वीरासनस्थानीयम् । **अमी शाखिनोऽपि निवाते निष्कम्पतया योगाधिरूढा इव** ध्यानभाज इव **विभान्ति** । ध्यायन्तोऽपि निश्चलाङ्गा भवन्ति । वीरासने वसिष्ठः—'एकपादमथैकस्मिन्विन्यस्योरुणि संस्थितम् । इतरस्मिंस्तथा चान्यं वीरासनमुदाहृतम् ॥' इति ॥ ५२ ॥

**त्वया पुरस्तादुपयाचितो यः सोऽयं वटः श्याम इति प्रतीतः[4] ।**
**राशिर्मणीनामिव गारुडानां सपद्मरागः फलितो विभाति ॥ ५३ ॥[5]**

---

पाठा०—१ 'अपुण्यलिङ्गासमपुण्यवृक्षम्'. २ 'प्रवाहम्'. ३ 'निष्कम्पितया'. ४ 'प्रकाशः'. ५ 'वमिस्वया शुक्लनिवेशभिन्ना कुन्दस्रगिन्दीवरमालयेव । कृतिर्हरेः कृष्णमृगत्वचेव भूतिः स्मरारेरिव कण्ठभासा ॥ द···र्धया शारदमेघलेखा निर्धूवनिर्भिन्नरुचा दिशेव । गवाक्षकालागरुधूमराज्या हर्म्यस्थलीलेपसुधा नवेव ॥ तुषारसंघातशिला हिमाद्रेर्जात्यञ्जनप्रस्तरशोभयेव । पतत्रिणां मानसगोचराणां श्रेणीव कादम्बविहंगपङ्क्त्या ॥'.

त्वयेति ॥ त्वया पुरस्तात् पूर्वं य उपयाचितः प्रार्थितः । तथा च रामायणे—'न्यग्रोधं तमुपस्थाय वैदेही वाक्यमब्रवीत् । नमस्तेऽस्तु महावृक्ष ! पालयेन्मे व्रतं पतिः ॥' इति । श्याम इति प्रतीतः स वटोऽयं फलितः सन् । सपद्मरागो गारुडानां मणीनां मरकतानां राशिरिव । विभाति ॥ ५३ ॥

'क्वचित्–' इत्यादिभिश्चतुर्भिः श्लोकैः प्रयागे गङ्गायमुनासंगमं वर्णयति—

क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव[1] ॥ ५४ ॥
क्वचित्खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः ।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ॥ ५५ ॥
क्वचित्प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव ।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा ॥ ५६ ॥
क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य ।
पश्यानवद्याङ्गि ! विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः ॥ ५७ ॥

हे अनवद्याङ्गि ! यमुनातरङ्गैर्भिन्नप्रवाहा व्यामिश्रौघा गङ्गा जाह्नवी विभाति । त्वं पश्य । केव ? क्वचित्प्रदेशे प्रभया लिम्पन्ती संनिहितमिति प्रभालेपिभिरिन्द्रनीलैरनुविद्धा सह गुम्फिता मुक्तामयी यष्टिरिव हारावलिरिव विभाति । अन्यत्र प्रदेश इन्दीवरैर्नीलोत्पलैरुत्खचितान्तरा सह ग्रथिता सितपङ्कजानां पुण्डरीकाणां मालेव । विभातीति सर्वत्र संबन्धः । क्वचित्कादम्बसंसर्गवती नीलहंससंसृष्टा[1] प्रियं मानसं नाम सरो येषां तेषां खगानां राजहंसानां पङ्क्तिरिव । 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः । अन्यत्र कालागुरुणा दत्तपत्रा रचितमकरिकापत्रा भुवश्चन्दनकल्पिता भक्तिरिव । क्वचिच्छायासु विलीनैः स्थितैस्तमोभिः शबलीकृता कर्बुरीकृता चान्द्रमसी प्रभा चन्द्रिकेव । अन्यत्र रन्ध्रेष्वालक्ष्यनभःप्रदेशा[2] शुभ्रा शरदभ्रलेखा शरन्मेघपङ्क्तिरिव । क्वचित्कृष्णोरगभूषणा भस्माङ्गरागेश्वरस्य तनुरिव विभाति । शेषो व्याख्यातः । कलापकम् ॥ ५४–५७ ॥

पाठा०—१ 'उद्ग्रथितान्तरा'.

टिप्प०—1 कलहंसानां धूसरपक्षत्वाद्यमुनातरङ्गसाम्यम्–इति दिनकर० ।

2 रन्ध्रेष्वालक्ष्येषद्दृश्यो नभःप्रदेशो यत्र सा शरत्कालघनलेखेव । नभोनीलिम्नो लोकप्रसिद्धिसिद्धत्वाद् यमुनातरङ्गसाम्यम्–इति दिनकर० ।

**समुद्रपत्न्योर्जलसंनिपाते पूतात्मनामत्र किलाभिषेकात् ।**
**तत्त्वावबोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्धः ॥ ५८ ॥**

**समुद्रेति** ॥ अत्र **समुद्रपत्न्योः** गङ्गा-यमुनयोर्**जलसंनिपाते** [1]संगमे**ऽभिषेकात्** स्नानात् **पूतात्मनां तनुत्यजां** शुद्धात्मनां पुंसां **तत्त्वावबोधेन** तत्त्वज्ञानेन **विनापि** प्रारब्धशरीरत्यागानन्तरं **भूयः** पुनः **शरीरबन्धः** शरीरयोगो **नास्ति किल**। अन्यत्र ज्ञानादेव **मुक्तिः**, अत्र तु स्नानादेव मुक्तिरित्यर्थः ॥ ५८ ॥

**पुरं निषादाधिपतेरिदं तद्यस्मिन्मया मौलिमणिं विहाय ।**
**जटासु बद्धास्वरुदत्सुमन्त्रः कैकेयि ! कामाः फलितास्तवेति ॥५९॥**

**पुरमिति** ॥ **निषादाधिपतेर्**गुहस्य **तत्पुरमिदम्** । **यस्मिन्**पुरे **मया मौलिमणिं विहाय जटासु बद्धासु** रचितासु सतीषु **सुमन्त्रः** 'हे **कैकेयि !** तव **कामा** मनोरथाः **फलिताः** सफला जाताः' **इत्यरुदत्** । 'रुदिरश्रुविमोचने' इति धातोर्लुङ् ॥ ५९ ॥

**पयोधरैः पुण्यजनाङ्गनानां निर्विष्टहेमाम्बुजरेणु यस्याः ।**
**ब्राह्मं सरः कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरन्ति ॥ ६० ॥**

**पयोधरैरिति** ॥ [2]**पुण्यजनाङ्गनानां** यक्षस्त्रीणां **पयोधरैः** स्तनैर्**निर्विष्ट** उपभुक्तो **हेमाम्बुजरेणुर्**यस्य तत्। तत्र ताः क्रीडन्तीति व्यज्यते। [3]ब्रह्मण **इदं ब्राह्मम्**। 'नस्तद्धिते' (पा. ६।४।१४४) इति टिलोपः। **ब्राह्मं सरो** मानसाख्यं **यस्याः** सरय्वाः। **बुद्धेर्**महत्तत्त्वस्याव्यक्तं प्रधान**मिव कारणम्**। आप्तस्य वाच [4]**आप्तवाचो** वेदाः। यद्वा,-बहुव्रीहिणा मुनयः। **उदाहरन्ति** प्रचक्षते ॥ ६० ॥

पाठा०-१ 'शरीरिणाम्'. २ 'मौलिमणीन्'. ३ 'निर्घुष्ट'.

टिप्प०-1 संगमेऽभिषेकात्स्नानात् पूतात्मनां तनुत्यजां पुंसां तत्त्वावबोधेन तत्त्वज्ञानेन विनापि पुनः शरीरबन्धो नास्ति किल। तथा च श्रुतिः-'सितासिते सरिते (यत्र) संगते' इत्यादि। 'या गतिर्योगयुक्तस्य तत्त्वज्ञस्य मनीषिणः। सा गतिस्त्यजतां प्राणान् गंगा-यमुन-सङ्गमे' इति स्मृतिः। 'अभिषेकात् पूतात्मनाम्' इति स्नानस्यापि फलत्वोक्तिः-इति हेमाद्रिः।

2 'भवेत् पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च' इति विश्वः।

3 ब्रह्मण आगतं ब्राह्मम्, ब्रह्मकमण्डलोरित्यर्थः। मानसं सरो यस्याः सरय्वाः कारणं वदन्ति। बुद्धेरव्यक्तं मूलप्रकृतिकारणमिव। अनुत्पादितकार्याणि सत्त्व-रजस्तमांसि मूलप्रकृतिः, यथा कुशलस्य ब्राह्मणः-इति हेमाद्रिः। यथा सांख्या योगिनो बुद्धेरव्यक्तं कारणं वदन्ति, "यदुक्तम्-'अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे। रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥' इति। अव्यक्तात्किल बुद्धेरुत्पत्तिरिति सांख्याः-इति वल्लभः।

4 आप्ताश्च ता वाचश्च प्रमाणानि, आप्तानामृषीणामिति वा-इति हेमाद्रिः।

जलानि या तीरनिखातयूपा वहत्ययोध्यामनु राजधानीम्।
तुरंगमेधावभृथावतीर्णैरिक्ष्वाकुभिः पुण्यतरीकृतानि ॥ ६१ ॥

**जलानीति** ॥ यूपः संस्कृतः पशुबन्धनार्हो दारुविशेषः। **तीरनिखातयूपा** या सरयूस्तुरंगमेधा अश्वमेधास्तेष्ववभृथार्थमेवावतीर्णैरवरूढैरिक्ष्वाकुभि- रिक्ष्वाकुगोत्रापत्यैर्नृपैः पूर्वैः। तद्राजत्वादणो लुक्। **पुण्यतरीकृतान्यतिशयेन पुण्यानि** कृतानि **जलान्ययोध्यां राजधानीं** नगरीमनु समीपे, तया लक्षितमेत्यर्थः। 'अनु'शब्दस्य 'लक्षणेत्थंभूत–' (पा. १।४।९०) इत्यादिना कर्मप्रवचनीयत्वात्तयोगे द्वितीया। **वहति** प्रापयति ॥ ६१ ॥

यां सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्धितानाम्।
सामान्यधात्रीमिव मानसं मे संभावयत्युत्तरकोसलानाम् ॥ ६२ ॥

**यामिति** ॥ **यां** सरयूं **मे मानसं** कर्तृ **सैकतं** पुलिनं तदेवोत्सङ्गः तत्र यत्सुखं तत्रोचितानां **प्राज्यैः** प्रभूतैः **पयोभिरम्बुभिः** क्षीरैश्च। 'पयः क्षीरं पयोऽम्बु च' इत्यमरः। **परिवर्धितानां** पुष्टानामुत्तरकोसलानामुत्तरकोसलेश्व- राणां **सामान्यधात्रीं** साधारणमातरमिव **संभावयति**। 'धात्री जनन्या- मलकीवसुमत्युपमातृषु' इति विश्वः ॥ ६२ ॥

सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता।
दूरे वसन्तं शिशिरानिलैर्मां तरंगहस्तैरुपगूहतीव ॥ ६३ ॥

**सेयमिति** ॥ **मदीया जननी** कौसल्येव **मान्येन** पूज्येन **तेन राज्ञा** दशरथेन **वियुक्ता सेयं सरयूर्दूरे वसन्तम्**। ग्रीष्मागच्छन्तमित्यर्थः। **मां** पुत्रभूतं **शिशिरानिलैस्तरंगैरेव हस्तैः। उपगूहतीवा**लिङ्गतीव ॥ ६३ ॥

विरक्तसंध्याकपिशं परस्तार्द्यतो रजः पार्थिवमुज्जिहीते।
शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥ ६४ ॥

**विरक्तेति** ॥ **विरक्ता**ऽविरक्ता या **संध्या** तद्वत् **कपिशं** ताम्रवर्णम्। पृथिव्या इदं **पार्थिवम्। रजो** धूलिः **पुरस्ता**दग्रे **यतो** यस्मात्कारणादुज्जिहीत उद्ग-

पाठा०—१ 'यूपैः'. २ 'विमुक्ता'. ३ 'दूरेऽपि सन्तम्'. ४ 'यस्मात्'; 'एतत्'; 'यथा'. ५ 'हनुमान्कथित'.

टिप्प०—1 सरयूरयोध्यां राजधानीं पुरीं अन्वीक्ष्वाकुभिः सर्वंवंदयैर्नृपैः पुण्यतरीकृतानि जलानि–इति हेमाद्रिः।

च्छति। तस्मात्। हनुरस्यास्तीति **हनूमान्**। 'शरादीनां च' (पा. ६।३।२०) इति दीर्घः। तेन **कथिता प्रवृत्ति**रस्मदागमनवार्ता यस्मै स **भरतः ससैन्यः** सन्, **मां प्रत्युद्गत** इति **शङ्के** तर्कयामि। 'शङ्का भयवितर्कयोः' इति शब्दार्णवे। अत्र यत्तदोर्नित्यसंबन्धात्तच्छब्दलाभः ॥ ६४ ॥

**अद्धा श्रियं पालितसंगराय प्रत्यर्पयिष्यत्यनघां स साधुः।**
**हत्वा निवृत्ताय मृधे खरादीन्संरक्षितां त्वामिव लक्ष्मणो मे ॥ ६५ ॥**

**अद्धेति** ॥ किंच, **साधुः** सज्जनः **स** भरतः। 'साधुर्वार्धुषिके चारौ सज्जने चापि वाच्यवत्' इति विश्वः। **पालितसंगराय** पालितपितृप्रतिज्ञाय **मे** मह्यम्। **अनघा**मदोषां भोगाभावादनुच्छिष्टां किंतु संरक्षितां **श्रियम्**। **मृधे** युद्धे **खरादीन्हत्वा निवृत्ताय मे लक्ष्मणः संरक्षितामनघां त्वामिव प्रत्यर्पयिष्यत्यद्धा** सत्यम्। 'सत्ये त्वद्धाञ्जसा द्वयम्' इत्यमरः ॥ ६५ ॥

**असौ पुरस्कृत्य गुरुं पदातिः पश्चादवस्थापितवाहिनीकः।**
**वृद्धैरमात्यैः सह चीरवासा मामर्घ्यपाणिर्भरतोऽभ्युपैति ॥ ६६ ॥**

**असाविति** ॥ **असौ पदातिः** पादचारी **चीरवासा** वल्कलवसनो **भरतः पश्चात्** पृष्ठभागेऽवस्थापिता **वाहिनी** सेना येन स तथोक्तः सन्। 'नद्यृतश्च' (पा. ५।४।१५३) इति कप्। **गुरुं** वसिष्ठं **पुरस्कृत्य वृद्धैरमात्यैः सहार्घ्यपाणिः** सन् **मामभ्युपैति** ॥ ६६ ॥

**पित्रा विसृष्टां मदपेक्षया यः श्रियं युवाप्यङ्कगतामभोक्ता।**
**इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् ॥ ६७ ॥**

**पित्रेति** ॥ **यो** भरतः **पित्रा विसृष्टां** दत्तामङ्कमुत्सङ्गं च **गतामपि**। यः **श्रियं युवापि मदपेक्षया** मद्भक्त्याऽभोक्ता[2] सन्। तृन्नन्तत्वात् 'न लोक-' (पा. २।३।६९) इति षष्ठीनिषेधः। **इयन्ति वर्षाण्ये**तावतो वत्सरान्। अत्यन्तसंयोगे द्वितीया।

पाठा०—१ 'अद्य'. २ 'अर्घपाणिः'. ३ 'निसृष्टाम्'. ४ 'अङ्गगताम्'.

टिप्प०—1 हनुर्वदनैकदेशः कुत्सितो यस्य इति निन्दाया मतुप्। 'अन्येषामपि दृश्यते' इति दीर्घत्वम्। यथा पुरुषः पूरुष इति। तस्य हि किल जातमात्रस्य रविरथमुत्पत्य विजिघत्सोः रणे हनुर्भग्नेति श्रूयते। भरतस्य वार्तानिवेदनार्थं हनुमान्प्रेषित इत्यनेनैव (?) ज्ञेयम्। श्रीरामप्रवेशसमये 'रामश्चतुर्दशवर्षेष्वतिवाहितेषु समनन्तरे दिने मध्याह्नसमये यदि वा न समागतः तदाग्निं प्रवेक्ष्यामि' इति भरतस्य प्रतिज्ञाऽपि सूचिता–इति हेमाद्रिः।

2 अभोक्तेति तृजादीनामनिर्दिष्टकालत्वात् कालत्रयेऽपि प्रयोगसंभवाद्भूते ताच्छीलिकस्तृन्। 'अभुक्त' इति वा पाठः–इति दिनकर०।

तया श्रिया सह। श्रियेति च गम्यते। उग्रं दुश्चरमासिधारं नाम व्रतमभ्यस्यतीव[2] वर्तयतीव। 'युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरेत्। अन्तर्निवृत्तसङ्गः स्यादासिधारव्रतं हि तत् ॥' इति यादवः। इदं चासिधाराचङ्क्रमणतुल्यत्वादासिधारव्रतमित्युक्तम् ॥ ६७ ॥

> एतावदुक्तवति दाशरथौ तदीया-
> मिच्छां विमानमधिदेवतया विदित्वा।
> ज्योतिष्पथादवततार सविस्मयाभि-
> रुद्वीक्षितं प्रकृतिभिर्भरतानुगाभिः ॥ ६८ ॥

एतावदिति ॥ दाशरथौ रामे एतावदुक्तवति सति विमानं पुष्पकं कर्तृ तदीयां रामसंबन्धिनीमिच्छामधिदेवतया मिषेण विदित्वा। तत्प्रेरितं सदित्यर्थः। सविस्मयाभिर्भरतानुगाभिः प्रकृतिभिः प्रजाभिरुद्वीक्षितं सज्ज्योतिष्पथादभ्रशादवततार ॥ ६८ ॥

> तस्मात्पुरःसरविभीषणदर्शितेन
> सेवाविचक्षणहरीश्वरदत्तहस्तः।
> यानादवातरददूरमहीतलेन
> मार्गेण भङ्गिरचितस्फटिकेन रामः ॥ ६९ ॥

तस्मादिति ॥ रामः सेवायां विचक्षणः कुशलो हरीश्वरः सुग्रीवस्तेन दत्तहस्तो दत्तावलम्बो यस्य तादृशः सन्। स्वल्पज्ञत्वात्पुरःसरो विभीषणस्तेन दर्शितेनादूरमासन्नं महीतलं यस्य तेन भङ्गिभिर्विच्छित्तिभी रचितस्फटिकेन बद्धस्फटिकेन सोपानपर्वणा मार्गेण तस्माद्यानात् पुष्पकादवातरदवतीर्णवान्। तत्त्वेऽड् ॥ ६९ ॥

> इक्ष्वाकुवंशगुरवे प्रयतः प्रणम्य
> स भ्रातरं भरतमर्घ्यपरिग्रहान्ते।
> पर्यश्रुरस्वजत मूर्धनि चोपजघ्रौ
> तद्भक्त्यपोढपितृराज्यमहाभिषेके ॥ ७० ॥

पाठा०–१ 'सभ्रातरम्'. २ 'अर्घपरिग्रहान्ते'.

1 एकस्मिन्नेव शय्यायां मध्ये खड्गं निधाय स्त्रीपुंसौ यत्र ब्रह्मचर्येण शयाते तदसिधारा-व्रतम्-इति दिनकर०। हेमाद्रिस्तु-दिनकरमिश्रोक्तं लक्षणमरुन्धोदाहृत्याह—'अन्तर्निवृत्तसङ्गः स्यादसिधाराव्रतं हि तत्' इति वैजयन्ती-त्याह।

2 अभ्यासस्याप्यपरित्यागाद्वर्तमानप्रयोगः-इति दिनकर०।

इक्ष्वाकिति ॥ प्रयतः स राम इक्ष्वाकुवंशगुरवे वसिष्ठाय प्रणम्य नमस्कृत्याद्यर्घस्य परिग्रहः स्वीकारस्तस्यान्ते पर्यश्रुः परिगतानन्दबाष्पः सन् । भ्रातरं भरतमस्वजतालिङ्गत् । तस्मिन्रामे भक्त्याऽपोढः परिहृतः पितृराज्यमहाभिषेको येन तस्मिन्मूर्धन्युपजघ्रौ च । 'घ्रा गन्धोपादाने' लिटि रूपम् ॥ ७० ॥

श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च[1]
प्लक्षान्[2]प्ररोहजटिलानिव मन्त्रिवृद्धान् ।
अन्वग्रहीत्[3]प्रणमतः शुभदृष्टिपातै-[4]
र्वार्तानुयोगमधुराक्षरया च वाचा ॥ ७१ ॥

श्मश्रिवति ॥ श्मश्रूणां मुखरोम्णां प्रवृद्ध्या संस्काराभावादभिवृद्ध्या जनिताननेषु विक्रिया विकृतिर्येषां तानत एव प्ररोहैः शाखावलम्बिभिरधोमुखैर्मूलैर्जटिलाञ्जटावतः प्लक्षान्न्यग्रोधानिव स्थितान् । प्रणमतो मन्त्रिवृद्धांश्च शुभैः कृपार्द्रैर्दृष्टिपातैर्वार्तस्यानुयोगेन कुशलप्रश्नेन मधुराक्षरया वाचा चान्वग्रहीदनुगृहीतवान् ॥ ७१ ॥

दुर्जातबन्धुरयमृक्षहरीश्वरो[5] मे
पौलस्त्य एष समरेषु[6] पुरःप्रहर्ता ।
इत्यादृतेन[7] कथितौ रघुनन्दनेन
व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥ ७२ ॥

दुर्जात इति ॥ अयं मे दुर्जातबन्धुरापद्बन्धुः । 'दुर्जातं व्यसनं प्रोक्तम्' इति विश्वः । ऋक्षहरीश्वरः सुग्रीवः । एष समरेषु पुरःप्रहर्ता पौलस्त्यो विभीषणः । इत्यादृतेनाऽऽदरवता । कर्तरि क्तः । रघूणां नन्दनेन रामेण कथितावुभौ विभीषण-सुग्रीवौ लक्ष्मणमनुजमपि व्युत्क्रम्यालिङ्गनादिभिरसंभाव्य भरतो ववन्दे ॥ ७२ ॥

पाठा०—१ 'आकृतिविक्रियान्'. २ 'वृक्षान्'. ३ 'प्रत्यग्रहीत्'. ४ 'दानैः'. ५ 'दुःखैकबन्धुः'. ६ 'समरे च'. ७ 'आदरेण'.

टिप्प०—1 प्रेमातिशयाश्रुवति सत्यर्थः—इति दिनकर० ।

2 अत्र 'दुःखैकबन्धुः' इति पाठमादृत्य 'दुःखे सति एको मुख्यो बन्धुर्दुःखैकबन्धुः, दुःखस्योद्धर्तेत्यर्थः ।...रामप्रणामानन्तरोचितं लक्ष्मणालिङ्गनमनतिक्रम्य नमश्चकार । यद्वा,—लक्ष्मणं व्युत्क्रम्य लक्ष्मणप्रणामो विधाय तौ ववन्दे इति व्याख्यायां लक्ष्मणस्य ज्येष्ठत्वं प्रतीयते—इति व्याचख्युः—दिनकर० ॥ 'दुःखैकबन्धुः' इति अंशहरत्वात्—इति हेमाद्रिः ।

सौमित्रिणा तदनु संससृजे स चैन-
मुत्थाप्य नम्रशिरसं भृशमालिलिङ्ग।
रूढेन्द्रजित्प्रहरणव्रणकर्कशेन
क्लिश्यन्निवास्य भुजमध्यमुरःस्थलेन ॥ ७३ ॥

सौमित्रिणेति ॥ तदनु सुग्रीवादिवन्दनानन्तरं स भरतः सौमित्रिणा संससृजे संगतः। 'सृज विसर्गे' दैवादिकात्कर्तरि लिट्। नम्रशिरसं प्रणतमेनं सौमित्रिमुत्थाप्य भृशं गाढमालिलिङ्ग च। किं कुर्वन्? रूढेन्द्रजित्प्रहरणव्रणैः कर्कशेनास्य सौमित्रेरुरःस्थलेन भुजमध्यं स्वकीयं क्लिश्यन्निव पीडयन्निव। क्लिश्नातिरयं सकर्मकः। 'क्लिश्नाति भुवनत्रयम्' इति दर्शनात्। ननु रामायणे—'ततो लक्ष्मणमासाद्य वैदेहीं च परंतपः। अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत्॥' इति भरतस्य कानिष्ठ्यं प्रतीयते। किमर्थं ज्यैष्ठ्यमवलम्ब्यानार्जवेन श्लोको व्याख्यातः? सत्यम्,-किंतु रामायणश्लोकार्थष्टीकाकृतोक्तः श्रूयताम्। 'ततो लक्ष्मणमासाद्य-' इत्यादिश्लोक आसादनं लक्ष्मणवैदेह्योः। अभिवादनं तु वैदेह्या एव। अन्यथा पूर्वोक्तं भरतस्य ज्यैष्ठ्यं विरुध्येतेति ॥ ७३ ॥

रामाज्ञया हरिचमूपतयस्तदानीं
कृत्वा मनुष्यवपुरारुरुहुर्गजेन्द्रान्।
तेषु क्षरत्सु बहुधा मदवारिधाराः
शैलाधिरोहणसुखान्युपलेभिरे ते ॥ ७४ ॥

रामेति ॥ तदानीं हरिचमूपतयो रामाज्ञया मनुष्यवपुः कृत्वा गजेन्द्रानारुरुहुः। बहुधा मदवारिधाराः क्षरत्सु वर्षत्सु तेषु गजेन्द्रेषु ते कपियूथनाथाः शैलाधिरोहणसुखान्युपलेभिरेऽनुबभूवुः ॥ ७४ ॥

सानुप्लवः प्रभुरपि क्षणदाचराणां
भेजे रथान्दशरथप्रभवानुशिष्टः।
मायाविकल्परचितैरपि ये तदीयै-
र्न स्यन्दनैस्तुलितकृत्रिमभक्तिशोभाः ॥ ७५ ॥

सानुप्लव इति ॥ सानुप्लवः सानुगः। 'अभिसारस्त्वनुचरः सहायोऽनुप्लवोऽनुगः' इति यादवः। क्षणदाचराणां प्रभुर्विभीषणोऽपि। प्रभवत्यस्मादिति

पाठा०-१ 'येषु'. २ 'रथम्'. ३ 'यः'. ४ 'भक्तिशोभि'.

लते इव। 'वल्ली तु व्रततिर्लता' इत्यमरः। भर्तुर्दशरथस्य प्रणाशाच्छोचनीयं देशान्तरमवस्थान्तरम्। 'अवस्थायां वस्त्रान्ते स्याद्दशापि' इति विश्वः। प्रपन्ने प्राप्ते जननौ कौसल्यासुमित्रे तत्र साकेतोपवने समं[2] युगपदपश्यताम्। दृशेः कर्तरि लङ्॥ १॥

उभावुभाभ्यां प्रणतौ हतारी यथाक्रमं विक्रमशोभिनौ तौ।
विस्पष्टमस्त्रान्धतया न दृष्टौ ज्ञातौ सुतस्पर्शसुखोपलम्भात्[1]॥ २॥

उभाविति॥ यथाक्रमं स्वस्वमातृपूर्वकं प्रणतौ नमस्कृतवन्तौ हतारी हतशत्रुकौ विक्रमशोभिनौ तावुभौ रामलक्ष्मणौ। उभाभ्यां मातृभ्यामस्रैरश्रुभिरन्धतया हेतुना। 'अस्रमश्रु च शोणितम्' इति यादवः। विस्पष्टं न दृष्टौ किंतु सुतस्पर्शेन[3] यत् सुखं तस्योपलम्भादनुभवाज्ज्ञातौ॥ २॥

आनन्दजः शोकजमश्रु बाष्पस्तयोरशीतं शिशिरो बिभेद।
गङ्गासरय्वोर्जलमुष्णतप्तं हिमाद्रिनिस्यन्द इवावतीर्णः॥ ३॥

आनन्दज इति॥ तयोर्मात्रोरानन्दजः शिशिरो बाष्पः शोकजमशीतमुष्णमश्रु। उष्णतप्तं ग्रीष्मतप्तं गङ्गासरय्वोर्जलं कर्म अवतीर्णो हिमाद्रेर्निस्यन्दो निर्झर इव। बिभेद। आनन्देन शोकस्तिरस्कृत इत्यर्थः॥ ३॥

ते[2] पुत्रयोर्नैर्ऋतशस्त्रमार्गानार्द्रानिवाङ्गे सदयं स्पृशन्त्यौ।
अपीप्सितं क्षत्रकुलाङ्गनानां न वीरसूशब्दमकामयेताम्॥ ४॥

ते इति॥ ते मातरौ पुत्रयोरङ्गे शरीरे नैर्ऋतशस्त्राणां राक्षसशस्त्राणां मार्गान्व्रणानार्द्रान्सरसानिव सदयं स्पृशन्त्यौ क्षत्रकुलाङ्गनानामीप्सितमिष्टमपि वीरसूर्वीरमातेति शब्दं नाकामयेताम्। वीरप्रसवो दुःखहेतुरिति भावः॥ ४॥

---

पाठा०—१ 'सुतस्पर्शरसोपलम्भात्'; 'सुखस्पर्शसुखोपलम्भात्'. २ 'ते पुत्रयोर्नैर्ऋतशस्त्रमार्गान्स्थिरप्ररूढानपि वत्सलत्वात्। आर्द्रानिवाङ्गे सदयं स्पृशन्त्यौ भूयस्तयोर्जन्म समर्थयेताम्'. ३ 'घातान्'. ४ 'अकारयेताम्'; 'अपाकरोति'.

---

1 वार्धकेन दुःखेन वा रूपान्तरम्—इति हेमाद्रिः।

2 'समं' इत्यनेन नैकस्यानविज्ञाय, उपक्रान्तरोर्मन्त्रेव—इति हेमाद्रिः।

3 स्वसुतस्पर्शसुखमनुपममिति नात्रानौचित्यम्—इति हेमाद्रिः॥ प्राक्पुत्रालिङ्गनसुखस्य परिचितत्वात्तत्सुतस्पर्शसुखस्योपलम्भोऽनुभवस्तस्माज्ज्ञातौ—इति दिनकर०।

क्लेशावहा भर्तुरलक्षणाहं सीतेति नाम स्वमुदीरयन्ती ।
स्वर्गप्रतिष्ठस्य गुरोर्महिष्यावभक्तिभेदेन वधूर्ववन्दे ॥ ५ ॥

क्लेशावहेति ॥ आवहतीत्यावहा । भर्तुः क्लेशावहा क्लेशकारिणी । अत एव, अलक्षणाऽहं सीतेति स्वं नामोदीरयन्ती स्वर्गः प्रतिष्ठाऽऽस्पदं यस्य तस्य स्वर्गस्थितस्य गुरोः श्वशुरस्य महिष्यौ श्वश्र्वौ वधूः स्नुषा । 'वधूः स्नुषा वधूर्जाया' इत्यमरः । अभक्तिभेदेन ववन्दे । 'स्वर्गप्रतिष्ठस्य'इत्यनेन श्वश्रूवैधव्यदर्शनदुःखं सूचितम् ॥ ५ ॥

उत्तिष्ठ वत्से ! नन्वसानुजोऽसौ वृत्तेन भर्ता शुचिना तवैव ।
कृच्छ्रं महत्तीर्ण इति प्रियार्हां तामूचतुस्ते प्रियमप्यमिथ्या ॥ ६ ॥

उत्तिष्ठेति ॥ 'ननु वत्से ! उत्तिष्ठ । असौ सानुजो भर्ता तवैव शुचिना वृत्तेन महत्कृच्छ्रं दुःखं तीर्णस्तीर्णवान्' इति प्रियार्हां तां वधूं प्रियमप्यमिथ्या सत्यं ते श्वश्र्वावूचतुः । उभयं दुर्वचमिति भावः ॥ ६ ॥

अथाभिषेकं रघुवंशकेतोः प्रारब्धमानन्दजलैर्जनन्योः ।
निर्वर्तयामासुरमात्यवृद्धास्तीर्थाहृतैः काञ्चनकुम्भतोयैः ॥ ७ ॥

अथेति ॥ अथ जनन्योरानन्दजलैरानन्दबाष्पैः प्रारब्धं प्रक्रान्तं रघुवंशकेतो रामस्याभिषेकममात्यवृद्धास्तीर्थेभ्यो गङ्गाप्रमुखेभ्य आहृतैरानीतैः काञ्चनकुम्भतोयैर्निर्वर्तयामासुर्निष्पादयामासुः ॥ ७ ॥

सरित्समुद्रान्सरसीश्च गत्वा रक्षःकपीन्द्रैरुपपादितानि ।
तस्यापतन्मूर्ध्नि जलानि जिष्णोर्विन्ध्यस्य मेघप्रभवा इवापः ॥ ८ ॥

सरिदिति ॥ रक्षःकपीन्द्रैः सरितो गङ्गायाः समुद्रान्पूर्वादीन्सरसीर्मानसादींश्च गत्वा । उपपादितान्युपनीतानि जलानि जिष्णोर्जयशीलस्य । 'ग्लाजिस्थश्च ग्स्नुः' (पा. ३।२।१३९ ) इति ग्स्नुप्रत्ययः । तस्य रामस्य मूर्ध्नि । विन्ध्यस्य विन्ध्याद्रेर्मूर्ध्नि मेघप्रभवा आप इव । अपतन् ॥ ८ ॥

---

पाठा०—१ 'उदाहरन्ती'. २ 'स्वर्गं प्रविष्टस्य'.

---

टिप्प०—1 मद्विवाहसमनन्तरं पत्युर्वनवासः, श्वशुरस्य स्वर्गस्थिता च भवत्योर्वैधव्यमासीदित्यस्य मे दुर्लक्षणमिति सूचितवतीत्यभिप्रायः-इति दिनकर० ।

2 अभक्तिभेदेन गुरुतया भक्त्या-इति दिनकर० ।

3 उत्तिष्ठ वत्से अयं तव पतिरेव निर्दुष्टेन शुद्धेनाचारेण महत्कृच्छ्रं व्यसनमुत्तीर्णवानतु-इति दिनकर० ।

तपस्विवेषक्रिययापि तावद्यः प्रेक्षणीयः सुतरां बभूव।
राजेन्द्रनेपथ्यविधानशोभा तस्योदितासीत्पुनरुक्तदोषा ॥ ९ ॥

तपस्वीति ॥ यो रामस्तपस्विवेषक्रिययापि तपस्विवेषरचनयापि सुतरामत्यन्तं प्रेक्षणीयस्तावद्दर्शनीय एव बभूव। तस्य राजेन्द्रनेपथ्यविधानेन राजवेषरचनया या शोभा उदिता सा पुनरुक्तं नाम दोषो यस्याः सा पुनरुक्तदोषा द्विगुणासीत् ॥ ९ ॥

स मौलरक्षोहरिभिः ससैन्यस्तूर्यस्वनानन्दितपौरवर्गः।
विवेश सौधोद्गतलाजवर्षामुत्तोरणामन्वयराजधानीम् ॥ १० ॥

स इति ॥ स रामः ससैन्यस्तूर्यस्वनैरानन्दितपौरवर्गः सन्। मूले भवा मौला मन्त्रिवृद्धास्तै रक्षोभिर्हरिभिश्च सह सौधेभ्य उद्गतलाजवर्षामुत्तोरणामन्वयराजधानीमयोध्यां विवेश प्रविष्टवान् ॥ १० ॥

सौमित्रिणा सावरजेन मन्दमाधूतवालव्यजनो रथस्थः।
धृतातपत्रो भरतेन साक्षादुपायसंघात इव प्रवृद्धः॥ ११ ॥

सौमित्रिणेति ॥ सावरजेन शत्रुघ्नयुक्तेन सौमित्रिणा लक्ष्मणेन मन्दमाधूते वालव्यजने चामरे यस्य स रथस्थो भरतेन धृतातपत्र एवं चतुर्व्यूहो रामः प्रवृद्धः साक्षादुपायानां सामादीनां संघातः समष्टिरिव। 'विवेश' इति पूर्वेण संबन्धः ॥ ११ ॥

प्रासादकालागुरुधूमराजिस्तस्याः पुरो वायुवशेन भिन्ना।
वनान्निवृत्तेन रघूत्तमेन मुक्ता स्वयं वेणिरिवाबभासे ॥ १२ ॥

प्रासादेति ॥ वायुवशेन भिन्ना प्रासादे यः कालागुरुधूमस्तस्य राजी

पाठा०-१ 'स मौलिरक्षोहरिभिः सुसैन्यः', 'स मौलिरक्षोहरिभिश्च सैन्य.'; 'स पौररक्षोहरिभिश्च सैन्यः'. २ 'पौरवर्गाम्'; 'राजमार्गम्'. ३ 'प्रवृत्तः'; 'प्रसिद्धः'. ४ 'कालागरुधूपराजिः'. ५ 'वायुवशाच्च'. ६ 'मुक्ता'. ७ 'रघूद्वहेन'.

टिप्प०—1 यो रामस्तपस्विना वेषस्य क्रियया धारणेनापि तावत्साकल्येन भृशं दर्शनीयोऽभूत्, तस्य राज्ञो नेपथ्यस्यालङ्कारस्य विधानेन या शोभा सोदिता कथिता सा पुनरुक्तदोषो यस्यास्तादृशी स्यात्। तापसवेषाधिकशोभया नृपनेपथ्यशोभाद्वैगुण्येऽनुमितेऽपि यदि सा शोभा वर्ण्यते तर्हि पौनरुक्त्यं स्यादित्यर्थः-इति दिनकर० ॥ तथा चालङ्कारे पुनरुक्तदोषः 'रतिलीलाश्रमं भिन्ते' इत्यत्र 'लीला'शब्दः इति साहित्यदर्पणम्।

2 यथा पार्थो रथस्थमरवेन धृतातपत्रः प्रसिद्धः-इति हेमाद्रिः।

3 प्रासादेषु कालागुरूणां धूमराजिर्वायुवशाद्विभिन्ना बभासे। निवृत्तेन रघूद्वहेन रामेण स्वयं मुक्ता वेणिरिव। 'वेणिः प्रवेणिः शीर्षण्या'-इति हेमाद्रिः।

रेखा । वनान्निवृत्तेन रघूत्तमेन रामेण स्वयं मुक्ता तस्याः पुरः पुर्या वेणिरिवं । आबभासे । पुरोऽपि पतिव्रतासमाधिरभूत् । 'न प्रोषिते तु संस्कुर्यान्न वेणीं च प्रमोचयेत्' इति हारीतः ॥ १२ ॥

श्वश्रूजनानुष्ठितचारुवेषां कर्णीरथस्थां रघुवीरपत्नीम् ।
प्रासादवातायनदृश्यबन्धैः साकेतनार्योऽञ्जलिभिः प्रणेमुः ॥ १३ ॥

श्वश्रूजनेति ॥ श्वश्रूजनेनानुष्ठितचारुवेषां कृतरम्यनेपथ्याम् । 'आकल्पवेषौ नेपथ्यम्' इत्यमरः । कर्णीरथः स्त्रीयोग्योऽल्परथः । 'कर्णीरथः प्रवहणं डयनं रथगर्भके' इति यादवः । तत्रस्थां रघुवीरपत्नीं सीतां साकेतनार्यः प्रासादवातायनेषु दृश्यबन्धैर्लक्ष्यपुटैरञ्जलिभिः प्रणेमुः ॥ १२ ॥

स्फुरत्प्रभामण्डलमानसूयं सा बिभ्रती शाश्वतमङ्गरागम् ।
रराज शुद्धेति पुनः स्वपुर्यै संदर्शिता वह्निगतेव भर्त्रा ॥ १४ ॥

स्फुरदिति ॥ स्फुरत्प्रभामण्डलमानसूयमनसूयया दत्तं शाश्वतं सदातनमङ्गरागं बिभ्रती सा सीता भर्त्रा स्वपुर्यै शुद्धेति संदर्शिता पुनर्वह्निगतेव रराज ॥ १४ ॥

वेश्मानि रामः परिबर्हवन्ति विश्राण्य सौहार्दनिधिः सुहृद्भ्यः ।
बाष्पायमाणो बलिमन्निकेतमालेख्यशेषस्य पितुर्विवेश ॥ १५ ॥

वेश्मानीति ॥ सुहृदो भावः सौहार्दं सौजन्यम् । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य–' (पा. ७।३।१९) इत्युभयपदवृद्धिः । सौहार्दनिधी रामः सुहृद्भ्यः सुग्रीवादिभ्यः परिबर्हवन्त्युपकरणवन्ति वेश्मानि विश्राण्य दत्त्वा । आलेख्यशेषस्य चित्रमात्रशेषस्य पितुर्बलिमत्पूजायुक्तं निकेतं गृहं बाष्पायमाणो बाष्पमुद्वमन्विवेश । 'बाष्पोष्मभ्यामुद्वमने' (पा. ३।१।१६) इति क्यङ्प्रत्ययः ॥ १५ ॥

कृताञ्जलिस्तत्र यदम्ब ! सत्यान्नाभ्रश्यत स्वर्गफलाद्गुरुर्नः ।
तच्चिन्त्यमानं सुकृतं तवेति जहार लज्जां भरतस्य मातुः ॥ १६ ॥

कृताञ्जलिरिति ॥ तत्र निकेतने कृताञ्जलिः सन् रामः । हे अम्ब ! नो गुरुः पिता स्वर्गः फलं यस्य तस्मात्सत्यान्नाभ्रश्यत न भ्रष्टवानिति यत्तदभ्रंशनं तच्चिन्त्यमानं विचार्यमाणं तव सुकृतम् । इत्येवंप्रकारेण भरतस्य मातुः कैकेय्या लज्जां जहारापानयत् । राज्ञां प्रतिज्ञापरिपालनं स्वर्गसाधनमित्यर्थः । 'भरत'ग्रहणं तदपेक्षयापि कैकेय्यनुसरणमिति द्योतनार्थम् ॥ १६ ॥

तथैवं सुग्रीवविभीषणादीनुपाचरत्कृत्रिमसंविधाभिः ।
संकल्पमात्रोदितसिद्धयस्ते क्रान्ता यथा चेतसि विस्मयेन ॥ १७ ॥

तथेति ॥ सुग्रीवविभीषणादीन् । संविधीयन्त इति संविधा भोग्यवस्तूनि । कृत्रिमसंविधाभिस्तथा तेन प्रकारेणैवोपाचरत् । यथा संकल्पमात्रेणेच्छामात्रेणोदितसिद्धयस्ते सुग्रीवादयश्चेतसि विस्मयेन क्रान्ता व्याप्ताः ॥ १७ ॥

सभाजनायोपगतान्स दिव्यान्मुनीन्पुरस्कृत्य हतस्य शत्रोः ।
शुश्राव तेभ्यः प्रभवादि वृत्तं स्वविक्रमे गौरवमादधानम् ॥ १८ ॥

सभाजनायेति ॥ स रामः सभाजनायाभिवन्दनायोपगतान् । दिवि भवान्मुनीनगस्त्यादीन्पुरस्कृत्य हतस्य शत्रो रावणस्य प्रभवादि जन्मादिकं स्वविक्रमे गौरवमुत्कर्षमादधानं वृत्तं तेभ्यो मुनिभ्यः शुश्राव श्रुतवान् । विजितोत्कर्षाज्जेतुरुत्कर्ष इत्यर्थः ॥ १८ ॥

प्रतिप्रयातेषु तपोधनेषु सुखादविज्ञातगतार्धमासान् ।
सीतास्वहस्तोपहृताग्र्यपूजान्रक्षःकपीन्द्रान्विससर्ज रामः ॥ १९ ॥

प्रतीति ॥ तपोधनेषु मुनिषु प्रतिप्रयातेषु प्रतिनिवृत्य गतेषु सत्सु सुखादविज्ञात एव गतोऽर्धमासो येषां ताननन्तरं सीतायाः । स्वहस्तेनोपहृता दत्ताऽग्र्यपूजोत्तमसंभावना येभ्यस्तान् । एतेन सौहार्दातिशय उक्तः । रक्षःकपीन्द्रान्रामो विससर्ज विसृष्टवान् ॥ १९ ॥

पाठा०—१ 'तथा च'. २ 'आदधानः'.

टिप्प०—1 अत्र वल्लभः—यदि वरस्त्वया नोरीक्रियते तदाऽनृतवादितया पिता स्वर्गाद्भ्रष्टः स्यात् । यदुक्तम्—'यो वरं वरद दत्त्वा न करोति च तत्तथा । स याति नरके घोरे सहपूर्वैर्न संशयः ॥' इति ।

2 स्वस्य विक्रमे पौरुषे गौरवमादधानः इति श्रवणे हेतुः—इति हेमाद्रिः ।

तच्चात्मचिन्तासुलभं विमानं हृतं सुरारेः सह जीवितेन।
कैलासनाथोद्वहनाय भूयः पुष्पं दिवः पुष्पकमन्वमंस्त ॥ २० ॥

तच्चेति ॥ तच्चात्मचिन्तासुलभं स्वेच्छामात्रलभ्यं सुरारे रावणस्य जीवितेन सह हृतं दिवः पुष्पं पुष्पवदाभरणभूतं पुष्पकं विमानं भूयः पुनरपि कैलासनाथस्य कुबेरस्योद्वहनायान्वमंस्तानुज्ञातवान्। मन्यतेर्लुङ्। 'भूयो'ग्रहणेन पूर्वमप्येतत्कुबेरस्यैवेति सूच्यते ॥ २० ॥

पितुर्नियोगाद्वनवासमेवं निस्तीर्य रामः प्रतिपन्नराज्यः।
धर्मार्थकामेषु समां[2] प्रपेदे यथा तथैवावरजेषु वृत्तिम् ॥ २१ ॥

पितुरिति ॥ राम एवं पितुर्नियोगाच्छासनाद्वनवासं निस्तीर्य, अनन्तरं प्रतिपन्नराज्यः प्राप्तराज्यः सन्। धर्मार्थकामेषु यथा तथैवावरजेष्वनुजेषु समां वृत्तिं प्रपेदे। अवैषम्येण व्यवहृतवानित्यर्थः ॥ २१ ॥

सर्वासु मातृष्वपि वत्सलत्वात्स निर्विशेषप्रतिपत्तिरासीत्।
षडाननापीतपयोधरासु नेता चमूनामिव कृत्तिकासु ॥ २२ ॥

सर्वास्विति ॥ स रामो वत्सलत्वात्स्निग्धत्वात्। न तु लोकप्रतीत्यर्थम्। 'स्निग्धस्तु वत्सलः' इत्यमरः। सर्वासु मातृष्वपि निर्विशेषप्रतिपत्तिस्तुल्यसत्कार आसीत्। कथमिव? चमूनां नेता षण्मुखः षड्भिराननैरापीताः पयोधराः स्तना यासां तासु कृत्तिकास्विव ॥ २२ ॥

तेनार्थवाँल्लोभपराङ्मुखेन तेन घ्नता विघ्नभयं क्रियावान्।
तेनास लोकः पितृमान्विनेत्रा तेनैव शोकापनुदेव पुत्री ॥ २३ ॥

तेनेति ॥ लोको लोभपराङ्मुखेन वदान्येन तेन रामेण। अर्थवान् धनिक

पाठा०—१ 'वनवासदुःखम्'. २ 'समम्'.

टिप्प०—1 अनुजेषु समां तुल्यां कदस्था प्राप। तदुक्तम्—'धर्मार्थकामाः सममेव सेव्याः'—इति वल्लभः।

2 तथोक्तं महाभारते (शल्य. ४५) 'तास्त्वन्वे महात्मानमनवात्मरमीश्वरम्। ममायमिति ताः सर्वाः पुत्रार्थिन्योऽभिचुक्रुशुः। तासां विदित्वा भावं तं मातृणां भगवान् प्रभुः॥ प्रस्नुतानां पयः षड्भिर्वदनैरपिबत्तदा। तं प्रभावं समालक्ष्य तस्य बालस्य कृत्तिकाः॥ परं विस्मयमापन्ना देव्यो दिव्यवपुर्धराः।' इत्यादौ॥ वल्लभस्तु—चमूनां नेता कार्त्तिकेयः कृत्तिकासु।......तासु कुमारो हि जातमात्रो बहुभिः स्तन्येन वर्धितः—इति व्याचष्टे

3 लोभपराङ्मुखेनालुब्धेन। लोभाद्धि कदाचिदुद्दण्डो भवेत्।......सुतवत्केन मकरन्दमरणादिप्याधिविधिनिवारणात्। पुत्री हि शोकमपहाय सुखमुत्पादयति—इति वल्लभः

आस बभूव । तिङन्तप्रतिरूपकमव्ययमेतत् । विघ्नेभ्यो भयं भर्ता नुदता तेन क्रियावानुष्ठानवानास । विनेत्रा नियामकेन तेन पितृमानास । पितृवच्छिक्षयतीत्यर्थः । शोकमपनुदतीति शोकापनुदो दुःखस्य हर्ता तेन । 'तुन्दशोकयोः परिमृजापनुदोः' (पा. ३।२।५) इति कप्रत्ययः । तेन पुत्री पुत्रवानास । पुत्रवदानन्दयतीत्यर्थः ॥ २३ ॥

स पौरकार्याणि समीक्ष्य काले रेमे विदेहाधिपतेर्दुहित्रा ।
उपस्थितश्चारु वपुस्तदीयं कृत्वोपभोगोत्सुकयेव लक्ष्म्या ॥ २४ ॥

स इति ॥ स रामः कालेऽवसरे पौराणां कार्याणि प्रयोजनानि समीक्ष्य विदेहाधिपतेर्दुहित्रा सीतया । उपभोगोत्सुकया, अत एव तदीयं सीतासंबन्धि चारु वपुः कृत्वा स्थितया लक्ष्म्येव । उपस्थितः संगतः सन् । रेमे । 'उपस्थानं तु संगतिः' इति यादवः ॥ २४ ॥

तयोर्यथाप्रार्थितमिन्द्रियार्थानासेदुषोः सद्मसु चित्रवत्सु ।
प्राप्तानि दुःखान्यपि दण्डकेषु संचिन्त्यमानानि सुखान्यभूवन् ॥ २५ ॥

तयोरिति ॥ चित्रवत्सु वनवासवृत्तान्तालेख्यवत्सु सद्मसु यथाप्रार्थितं यथेष्टमिन्द्रियार्थानिन्द्रियविषयाञ्शब्दादीनासेदुषोः प्राप्तवतोस्तयोः सीता-रामयोर्दण्डकेषु दण्डकारण्येषु प्राप्तानि दुःखान्यपि विरहविलापान्वेषणादीनि संचिन्त्यमानानि स्मर्यमाणानि सुखान्यभूवन् । स्मारकं तु चित्रदर्शनमिति द्रष्टव्यम् ॥ २५ ॥

अथाधिकस्निग्धविलोचनेन मुखेन सीता शरपाण्डुरेण ।
आनन्दयित्री परिणेतुरासीदनक्षरव्यञ्जितदोहदेन ॥ २६ ॥

अथेति ॥ अथ सीताऽधिकस्निग्धविलोचनेनात्यन्तमसृणलोचनेन शरवत्तृणविशेषवत् पाण्डुरेणात एव अनक्षरमवाग्व्यापारं यथा भवति तथा व्यञ्जितं दोहदं गर्भो येन तेन मुखेन परिणेतुः पत्युरानन्दयित्र्यासीत् ॥ २६ ॥

पाठा०—३ 'उपस्थितम्'. १ 'इन्द्रियार्थम्'. २ 'सुखीबभूवुः'. ३ 'दौर्हृदेन'.

टिप्प०—1 उपभोगोत्सुकया रतिलालसया लक्ष्म्या उपस्थित इव । 'स्थितया' इत्यध्याहार इति कश्चित्-इति हेमाद्रिः ।

2 दुःखं पूर्वं सुखं प्राप्तं निवर्तं सुखकारि । यथोक्तम्-'यदेवोपनतं दुःखं सुखं तद्रसवत्तरम् । निर्वाणाय तरोश्छाया तप्तस्य हि विशेषतः' इति । कथालेख्यशेषस्य पितुर्दर्शनदुःखात् प्राप्तानि दण्डकारण्यदुःखान्यपि वरम्, पितृभक्त्यतिशयत्वात्-इति वल्लभः ।

तामङ्कमारोप्य कृशाङ्गयष्टिं वर्णान्तराक्रान्तपयोधराग्राम्।
विलज्जमानां रहसि प्रतीतः पप्रच्छ रामां रमणोऽभिलापम् ॥२७॥

तामिति ॥ प्रतीतो गर्भज्ञानवान्। रमयतीति रमणः। प्रियं कृशाङ्गयष्टिं वर्णान्तरेण नीलिम्नाऽऽक्रान्तपयोधराग्रां विलज्जमानां तां रामां रहस्यङ्कमारोप्याभिलापं मनोरथं पप्रच्छ। एतच्च—'दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात्' इति शास्त्रात्। न तु लौल्यादित्यनुसंधेयम् ॥ २७ ॥

सा दष्टनीवारबलीनि हिंस्रैः[2] संबद्धवैखानसकन्यकानि[3]।
इयेष भूयः कुशवन्ति गन्तुं भागीरथीतीरतपोवनानि ॥ २८ ॥

सेति ॥ सा सीता [1]हिंस्रैर्दष्टा नीवारा एव बलयो येषु तानि। तिर्यग्भिक्षुकादिदानं बलिः। संबद्धाः कृतसंबन्धाः कृतसख्या वैखानसानां कन्यका येषु तानि [2]कुशवन्ति भागिरथीतीरतपोवनानि भूयः पुनरपि गन्तुमियेषाभिललाष ॥ २८ ॥

तस्यै प्रतिश्रुत्य रघुप्रवीरस्तदीप्सितं पार्श्वचरानुयातः।
आलोकयिष्यन्मुदितामयोध्यां प्रासादमभ्रंलिहमारुरोह ॥ २९ ॥

तस्या इति ॥ रघुप्रवीरो रामस्तस्यै सीतायै तत् पूर्वोक्तमीप्सितं मनोरथं प्रतिश्रुत्य पार्श्वचरैस्तत्कालोचितैरनुयातः सन् मुदितां तामयोध्यामालोकयिष्यन्। अभ्रं लेढीत्यभ्रंलिहमभ्रंकषं प्रासादमारुरोह। 'वहाभ्रे लिहः' (पा. ३।२।३२) इति खश्प्रत्ययः। 'अरुर्द्विषदजन्तस्य मुम्' (पा. ६।३।६७) इति मुमागमः ॥ २९ ॥

ऋद्धापणं[3] राजपथं स पश्यन्विगाह्यमानां सरयूं च नौभिः।
विलासिभिश्चाध्युषितानि पौरैः पुरोपकण्ठोपवनानि रेमे ॥ ३० ॥

ऋद्धापणमिति ॥ स रामः। ऋद्धाः[3] समृद्धा आपणाः पण्यभूमयो यस्मिंस्तं राजपथम्। नौभिः समुद्रवाहिनीभिर्विगाह्यमानां सरयूं च पौरैर्विलासिभि-

पाठा०—१ 'फलानि'. २ 'हंसैः'. ३ 'समृद्ध'.

टिप्प०—1 हिंस्रैर्दष्टः कवलितो नीवारस्य बलिरुपहारो यत्र तानि इति दिनकर०॥ हिंस्रैर्दुष्टतरैर्दष्टनीवारफलानि वनगजमहिषादिभिरुपभुक्तशालिफलानि-इति वल्लभः।
2 'कुशवन्ति' इत्यनेन कुशस्य जन्म सूच्यते-इति दिनकर०।
3 एतेन द्रव्यसमृद्धिर्द्रव्यमास्युपायो द्रव्यस्यानुरूप व्ययश्चोक्तः—इति दिनकर०।

रध्युषितानि पुरोपकण्ठोपवनानि च पश्यन्त्वेमे। विलासिनश्च विलासिन्यश्च विलासिनः। 'पुमान्स्त्रिया' (पा. १।२।६७) इत्येकशेषः ॥ ३० ॥

स किंवदन्तीं वदतां पुरोगः स्ववृत्तमुद्दिश्य विशुद्धवृत्तः।
सर्पाधिराजोरुभुजोऽपसर्पं पप्रच्छ भद्रं विजितारिभद्रः ॥ ३१ ॥

स इति ॥ वदतां वाग्मिनां पुरोगः श्रेष्ठो विशुद्धवृत्तः। सर्पाधिराजः शेषः तद्वदुरू भुजौ यस्य स विजितारिभद्रो[1] विजितारिश्रेष्ठः स रामः स्ववृत्तमुद्दिश्य भद्रं भद्रनामकमपसर्पं चरं किंवदन्तीं जनवादं पप्रच्छ। 'अपसर्पश्चरः स्पशः' इति, 'किंवदन्ती जनश्रुतिः' इति चामरः ॥ ३१ ॥

निर्बन्धपृष्टः स जगाद सर्वं स्तुवन्ति पौराश्चरितं त्वदीयम्।
अन्यत्र रक्षोभवनोषितायाः परिग्रहान्मानवदेव! देव्याः ॥ ३२ ॥

निर्बन्धेति ॥ निर्बन्धेनाग्रहेण पृष्टः सोऽपसर्पो जगाद। किमिति? हे मानवदेव! रक्षोभवन उषिताया देव्याः सीतायाः परिग्रहात्स्वीकारात् अन्यत्रेतराशे। तं वर्जयित्वेत्यर्थः। त्वदीयं सर्वं चरितं पौराः स्तुवन्ति ॥ ३२ ॥

कलत्रनिन्दागुरुणा किलैवमभ्याहतं कीर्तिविपर्ययेण।
अयोघनेनाय इवाभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे ॥ ३३ ॥

कलत्रेति ॥ एवं किल कलत्रनिन्दया गुरुणा दुर्वहेण कीर्तिविपर्ययेणाऽकीर्त्याऽभ्याहतं वैदेहिबन्धोर्वैदेहिवल्लभस्य। 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' (पा. ६।३।६३) इति ह्रस्वः। 'कालिदास' इतिवत्। हृदयम्। अयोघनेनाभितप्तं संतप्तमय इव। विदद्रे विदीर्णम्। कर्तरि लिट् ॥ ३३ ॥

---

पाठा०–१ 'वृत्तम्'.

---

टिप्प०—1 दिनकरमिश्रास्तत्र 'विहतारिभद्र' इति पाठमाश्रित्य विहतं दूरीकृतमरीणां भद्रं कल्याणं येन सः—इति व्याचख्युः।

2 पुरवासिनो मां सद्वृत्तमसद्वृत्तं वा कथयन्तीति पप्रच्छ—इति दिनकर०।

3 सद्वृत्तस्यापि गृहे स्थिता स्त्री शंकनीया भवति, किं पुनर्दुराचारस्येति भावः। 'अन्यत्र' इति वर्जनार्थेऽव्ययम्—इति दिनकर०।

4 सीतास्वीकारवर्जं त्वदीयं सर्वं चरितं स्तुवन्ति। राजा यत्परगृहचिरोषितदारस्वीकारमकारि तदसाकमप्येव पवितं इति जनोक्तिः—इति वल्लभः।

5 प्राक्सीतात्मकम्, इदानीं पृथग्भूदित्यर्थः। अयोनिर्मितेन घनेन हस्तकूटेनाहत तप्तमयो यथा विदरति तद्वत्—इति दिनकर०।

किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत संत्यजामि ।
इत्येकपक्षाश्रयविक्लवत्वादासीत्स दोलाचलचित्तवृत्तिः ॥ ३४ ॥

किमिति ॥ आत्मनो निर्वादोऽपवाद एव कथा तां किमुपेक्षे? उत अदोषां साध्वीं जायां संत्यजामि? उभयत्रापि प्रश्ने लट् । इत्येकपक्षाश्रये अन्यतरपक्षपरिग्रहे विक्लवत्वादपरिच्छेतृत्वात्स रामो दोलेव चला चित्तवृत्तिर्यस्य स आसीत् ॥ ३४ ॥

निश्चित्य चानन्यनिवृत्ति वाच्यं त्यागेन पत्न्याः परिमार्ष्टुमैच्छत् ।
अपि स्वदेहात्किमुतेन्द्रियार्थाद्यशोधनानां हि यशो गरीयः ॥ ३५ ॥

निश्चित्येति ॥ किंच, वाच्यमपवादम् । नास्त्यन्येन त्यागातिरिक्तोपायेन निवृत्तिर्यस्य तदनन्यनिवृत्ति । निश्चित्य पत्न्यास्त्यागेन परिमार्ष्टुं परिहर्तुमैच्छत् । तथा हि—यशोधनानां पुंसां स्वदेहादपि यशो गरीयो गुरुतरम् । इन्द्रियार्थात् स्रक्चन्दनवनितादेरिन्द्रियविषयाद्गरीय इति किमुत वक्तव्यम्? 'पञ्चमी विभक्ते' (पा. २।३।४२) इत्युभयत्रापि पञ्चमी ॥ सीता चेन्द्रियार्थ एव ॥ ३५ ॥

स संनिपात्यावरजान्हतौजास्तद्विक्रियादर्शनलुप्तहर्षान् ।
कौलीनमात्माश्रयमाचचक्षे तेभ्यः पुनश्चेदमुवाच वाक्यम् ॥ ३६ ॥

स इति ॥ हतौजा निस्तेजस्कः स रामस्तस्य रामस्य विक्रियादर्शनेन लुप्तहर्षानवरजान् संनिपात्य संगमय्य । आत्माश्रयं स्वविषयकं कौलीनं निन्दां तेभ्य आचचक्षे । पुनरिदं वाक्यमुवाच ॥ ३६ ॥

राजर्षिवंशस्य रविप्रसूतेरुपस्थितः पश्यत कीदृशोऽयम् ।
मत्तः सदाचारशुचेः कलङ्कः पयोदवातादिव दर्पणस्य ॥ ३७ ॥

राजर्षीति ॥ रवेः प्रसूतिर्जन्म यस्य तस्य राजर्षिवंशस्य सदाचारशुचेः सद्वृत्ताच्छुद्धान्मत्तो मत्सकाशात् । दर्पणस्य पयोदवातादिव । साम्भःकणादित्यर्थः । कीदृशोऽयं कलङ्क उपस्थितः प्राप्तः पश्यत ॥ ३७ ॥

---

पाठा०—१ 'उपेक्ष्ये'; 'अपेक्षे'. २ 'संत्यजानि'. ३ 'महौजाः'.

---

टिप्प०—1 आत्मनो निर्वादो निन्दा, तत्कथं किमुपेक्षे?
अथवा,-[illegible] भार्यां त्यजामि?-इति दिनकर० ।
3 द्वयोर्मध्ये एकस्य पक्षाश्रये [illegible]-इति दिनकर० ॥ [illegible]-इति [illegible]

पौरेषु सोऽहं बहुलीभवन्तमपां तरंगेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः ॥ ३८ ॥

पौरेष्विति ॥ सोऽहम् । अपां तरंगेषु तैलबिन्दुमिव । पौरेषु बहुलीभवन्तं प्रसरन्तम् । स एव पूर्वो यस्य स तम् । तत्पूर्वमवर्णमपवादम् । 'अवर्णाक्षेपनिर्वादपरीवादापवादवत्' इत्यमरः । द्विपेन्द्रः । आलानमेवालानिकम् । विनयादित्वात्स्वार्थे ठक् । अथवा,-आलानं बन्धनं प्रयोजनमस्येत्यालानिकम् । 'प्रयोजनम्' (पा. ५।१।१०९) इति ठक् । स्थाणुं स्तम्भमिव । 'चूतवृक्ष' इतिवत्सामान्यविशेषभावादपौनरुक्त्यं द्रष्टव्यम् । सोढुं नेशे न शक्नोमि ॥ ३८ ॥

तस्यापनोदाय फलप्रवृत्तावुपस्थितायामपि निर्व्यपेक्षः ।
त्यक्ष्यामि वैदेहसुतां पुरस्तात्समुद्रनेमिं पितुराज्ञयेव ॥ ३९ ॥

तस्येति ॥ तस्यावर्णस्यापनोदाय फलप्रवृत्तावपत्योत्पत्तावुपस्थितायां सत्यामपि निर्व्यपेक्षो निःस्पृहः सन् । वैदेहसुताम् । पुरस्तात् पूर्वं पितुराज्ञया समुद्रनेमिम् । समुद्रो नेमिरिव नेमिर्यस्याः सा भूमिः । तामिव । त्यक्ष्यामि ॥ ३९ ॥

ननु सर्वथा साध्वी न त्याज्येत्यत्राह—

अवैमि चैनामनघेति किंतु लोकापवादो बलवान्मतो मे ।
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः ४०

अवैमीति ॥ एनां सीतामनघा साध्वीति चावैमि । किंतु मे मम लोकापवादो बलवान्मतः । कुतः? हि यस्मात् प्रजाभिर्भूमेश्छाया प्रतिबिम्बं शुद्धिमतो निर्मलस्य शशिनो मलत्वेन कलङ्कत्वेनारोपिता । अतो लोकापवाद एव बलवानित्यर्थः ॥ ४० ॥

रक्षोवधान्तो न च मे प्रयासो व्यर्थः स वैरप्रतिमोचनाय ।
अमर्षणः शोणितकाङ्क्षया किं पदा स्पृशन्तं दशति द्विजिह्वः ॥४१॥

पाठा०-१ 'स्तम्भम्'. २ 'मलत्वे नारोपिता'; 'मलत्वे निरूपिता'.

टिप्प०—1 यथा तरंगेषु प्रसरन्तं तैलबिन्दुं निवारयितुं कोऽपि न शक्नोति । क इव ? द्विपेन्द्र इव । यथा द्विपेन्द्रो गजेन्द्र आलानिकं बलादिव भुजबन्धपदमालानभूतं स्थाणुं सोढुं न क्षमते-इति वल्लभः ।

2 वल्लभस्तु—'छाया नु भूमेः शशिनो मलत्वे चारोपिता शुद्धिमतः प्रजाभिः' इत्यनवद्यं पाठमाश्रित्य भूमेश्छाया प्रतिबिम्बं शुद्धिमतो निष्कलङ्कस्य चन्द्रस्य कलङ्कत्वे लोकैः कल्पिता ननु-इति व्याचष्टे ।

रक्ष इति ॥ किंच, मे रक्षोवधान्तः प्रयासो व्यर्थो न। किंतु स वैर-प्रतिमोचनाय वैरशोधनाय। तथा हि—अमर्षणोऽसहनो द्विजिह्वः सर्पः पदा पादेन स्पृशन्तं पुरुषं शोणितकाङ्क्षया दशति किम्? किंतु वैरनिर्यातनायेत्यर्थः ॥ ४१ ॥

तदेष सर्गः करुणार्द्रचित्तैर्न मे भवद्भिः प्रतिषेधनीयः।
यद्यर्थिता निर्हृतवाच्यशल्यान्प्राणान्मया धारयितुं चिरं वः ॥४२॥

तदिति ॥ तत्तस्मादेष मे सर्गो निश्चयः। 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इत्यमरः। करुणार्द्रचित्तैर्भवद्भिर्न प्रतिषेधनीयः। निर्हृतं वाच्यमेव शल्यं येषां तान्प्राणान्मया चिरं धारयितुं धारणं कारयितुं वो युष्माकमर्थिताऽर्थित्वमिच्छा यदि। अस्तीति शेषः ॥ ४२ ॥

इत्युक्तवन्तं जनकात्मजायां नितान्तरूक्षाभिनिवेशमीशम्।
न कश्चन भ्रातृषु तेषु शक्तो निषेद्धुमासीदनुमोदितुं वा ॥ ४३ ॥

इतीति ॥ इत्युक्तवन्तं जनकात्मजायां विषये नितान्तरूक्षाभिनिवेशमतिक्रूराग्रहमीशं स्वामिनं तेषु भ्रातृषु मध्ये कश्चनापि निषेद्धुं निवारयितुमनुमोदितुं प्रवर्तयितुं वा शक्तो नासीत्। पक्षद्वयस्यापि प्रबलत्वादित्यर्थः॥४३॥

स लक्ष्मणं लक्ष्मणपूर्वजन्मा विलोक्य लोकत्रयगीतकीर्तिः।
सौम्येति चाभाष्य यथार्थभाषी स्थितं निदेशे पृथगादिदेश ॥ ४४॥

स इति ॥ लोकत्रयगीतकीर्तिर्यथार्थभाषी लक्ष्मणपूर्वजन्मा लक्ष्मणाग्रजः स रामो निदेशे स्थितमाज्ञाकारिणं लक्ष्मणं विलोक्य 'हे सौम्य सुभग!' इत्याभाष्य च पृथग्भरत-शत्रुघ्नाभ्यां विनाहूय। आदिदेशाज्ञापयामास ॥४४॥

प्रजावती दोहदशंसिनी ते तपोवनेषु स्पृहयालुरेव।
स त्वं रथी तद्व्यपदेशनेयां प्रापय्य वाल्मीकिपदं त्यजैनाम् ॥४५॥

प्रजावतीति ॥ दोहदो गर्भिणीमनोरथः। तच्छंसिनी ते प्रजावती भ्रातृजाया। 'प्रजावती भ्रातृजाया' इत्यमरः। तपोवनेषु स्पृहयालुरेव सस्पृहैव। 'स्पृहिगृहि-'(पा. ३।२।१५८) इत्यादिनाऽऽलुच्प्रत्ययः। स त्वं रथी सन्। तद्व्यपदेशेन दोहदमिषेण नेयां नेतव्यामेनां सीतां वाल्मीकेः पदं स्थानं प्रापय्य गमयित्वा। 'विभाषाऽऽपः' (पा. ६।४।५७) इत्ययादेशः। त्यज ॥ ४५ ॥

---

पाठा०—१ 'निर्गत'. २ 'मनुपर्वदुम्'. ३ 'दौर्हृद'. ४ 'तपोवनेभ्यः'.

स शुश्रुवान्मातरि भार्गवेण पितुर्नियोगात्प्रहृतं द्विषद्वत् ।
प्रत्यग्रहीदग्रजशासनं तदाज्ञा गुरूणां ह्यविचारणीया ॥ ४६ ॥

स इति ॥ पितुर्जमदग्नेर्नियोगाच्छासनाद्भार्गवेण जामदग्न्येन कर्त्रा । 'न लोक-'( पा. २।३।६९ ) इत्यादिना षष्ठीप्रतिषेधः । मातरि द्विषतीव द्विषद्वत् । 'तत्र तस्येव' ( पा. ३।२।१०८ ) इति वतिप्रत्ययः । प्रहृतं प्रहारं शुश्रुवाञ्श्रुतवान् । 'भाषायां सदवसश्रुवः' ( पा. ५।१।११६ ) इति क्वसुप्रत्ययः । स लक्ष्मणस्तदग्रजशासनं प्रत्यग्रहीत् । हि यस्माद्गुरूणामाज्ञाऽविचारणीया ॥ ४६ ॥

अथानुकूलश्रवणप्रतीतामत्रस्नुभिर्युक्तधुरं तुरंगैः ।
रथं सुमन्त्रप्रतिपन्नरश्मिमारोप्य वैदेहसुतां प्रतस्थे ॥ ४७ ॥

अथेति ॥ अथासौ लक्ष्मणः । अनुकूलश्रवणेन प्रतीतामिष्टाकर्णनेन तुष्टां वैदेहसुतामत्रस्नुभिरभीरुभिर्गर्भिणीवहनयोग्यैः । 'त्रसिगृधिधृषिक्षिपेः क्नुः' ( पा. ३।२।१४० ) इति क्नुप्रत्ययः । तुरंगैर्युक्तधुरं सुमन्त्रेण प्रतिपन्नरश्मिं गृहीतप्रग्रहं रथमारोप्य प्रतस्थे ॥ ४७ ॥

सा नीयमाना रुचिरान्प्रदेशान्प्रियंकरो मे प्रिय इत्यनन्दत् ।
नाबुद्ध कल्पद्रुमतां विहाय जातं तमात्मन्यसिपत्रवृक्षम् ॥ ४८ ॥

सेति ॥ सा सीता रुचिरान्प्रदेशान्नीयमाना प्राप्यमाणा सती मे मम प्रियः प्रियं करोतीति प्रियंकरः प्रियकारीत्यनन्दत् । 'क्षेमप्रियमद्रेऽण्च' ( पा. ३।२।४४ ) इति चकारात्खच्प्रत्ययः । तं प्रियमात्मनि विषये कल्पद्रुमतां विहायासिपत्रवृक्षं जातं नाबुद्ध नाज्ञासीत् । बुध्यतेर्लुङ् । असिपत्रवृक्षः खड्गाकारदलः कोऽप्यपूर्वो वृक्षविशेषः । 'असिपत्रो भवेत्कोषकारे च नरकान्तरे' इति विश्वः । आसन्नघातुक इति भावः ॥ ४८ ॥

जुगूह तस्याः पथि लक्ष्मणो यत्सव्येतरेण स्फुरता तदक्ष्णा ।
आख्यातमस्यै गुरु भावि दुःखमत्यन्तलुप्तप्रियदर्शनेन ॥ ४९ ॥

जुगूहेति ॥ पथि लक्ष्मणो यद्दुःखं तस्याः सीताया जुगूह प्रविसंहृतवान् तद्गुरु भावि भविष्यद्दुःखमत्यन्तलुप्तं प्रियदर्शनं यस्य तेन स्फुरता सव्येतरेण दक्षिणेनाक्ष्णाऽस्यै सीताया आख्यातम् । स्त्रीणां दक्षिणाक्षिस्फुरणं दुर्निमित्तमाहुः ॥ ४९ ॥

---

पाठा०-१ 'निदेशात्'. २ 'विशङ्कम्'. ३ 'स्व°'. ४ 'रुचिरप्रदेशान्'. ५ 'जुगोप'. ६ 'प्रियचुम्बनेन'; 'प्रियचन्दनेन'.

सा दुर्निमित्तोपगताद्विषादात्सद्यःपरिम्लानमुखारविन्दा ।
राज्ञः शिवं सावरजस्य भूयादित्याशशंसे करणैरबाह्यैः ॥ ५० ॥

सेति ॥ सा सीता दुर्निमित्तेन दक्षिणाक्षिस्फुरणरूपेणोपगतात्प्राप्ताद्विषादाद्दुःखात् सद्यःपरिम्लानमुखारविन्दा सती 'सावरजस्य सानुजस्य राज्ञो रामस्य शिवं भूयात्' इत्यबाह्यैः करणैरन्तःकरणैः । आशशंसे । संप्रतिपेक्षायामात्मनेपदमिष्यते । 'करणैः' इति बहुवचनं क्रियावृत्त्यभिप्रायम् । पुनःपुनराशशंस इत्यर्थः ॥ ५० ॥

गुरोर्नियोगाद्वनितां वनान्ते साध्वीं सुमित्रातनयो विहास्यन् ।
अवार्यतेवोत्थितवीचिहस्तैर्जह्नोर्दुहित्रा स्थितया पुरस्तात् ॥ ५१ ॥

गुरोरिति ॥ गुरोर्ज्येष्ठस्य नियोगात्साध्वीं वनिताम् । अत्याज्यामित्यर्थः । वनान्ते विहास्यंस्त्यक्ष्यन् सुमित्रातनयो लक्ष्मणः पुरस्तादग्रे स्थितया जह्नोर्दुहित्रा जाह्नव्योत्थितवीचिहस्तैरवार्यतेव । 'अकार्यं मा कुरु' इत्यवार्यतेव इत्युत्प्रेक्षा ॥ ५१ ॥

रथात्स यन्त्रा निगृहीतवाहात्तां भ्रातृजायां पुलिनेऽवतार्य ।
गङ्गां निषादाहृतनौविशेषस्ततार संधामिव सत्यसंधः ॥ ५२ ॥

रथादिति ॥ सत्यसंधः सत्यप्रतिज्ञः स लक्ष्मणो यन्त्रा सारथिना निगृहीतवाहाद्बद्धाश्वाद्रथाद्भ्रातृजायां पुलिनेऽवतार्यारोप्य निषादेन किरातेनाहृतनौविशेष आनीततरणीकः सन् गङ्गां भागीरथीम् । संधां प्रतिज्ञामिव ततार । 'संधा प्रतिज्ञा मर्यादा' इत्यमरः ॥ ५२ ॥

अथ व्यवस्थापितवाक्कथंचित्सौमित्रिरन्तर्गतबाष्पकण्ठः ।
औत्पातिकं मेघ इवाश्मवर्षं महीपतेः शासनमुज्जगार ॥ ५३ ॥

अथेति ॥ अथ कथंचिद्व्यवस्थापिता प्रकृतिमापादिता वाग्येन सः अन्तर्गतबाष्पः कण्ठो यस्य सः । कण्ठस्तम्भितबाष्प इत्यर्थः । सौमित्रिर्महीपतेः शासनम् । मेघ उत्पाते भवमौत्पातिकमश्मवर्षं शिलावर्षमिव । उज्जगारोद्गीर्णवान् । दारुणत्वेनावाच्यत्वात् 'उज्जगार' इत्युक्तम् ॥ ५३ ॥

---

पाठा०—१ 'उपगमात्'. २ 'मुखारविन्दम्'. ३ 'भ्रातुः'. ४ 'निदेशात्'. ५ 'अपि याम्'; 'दयिताम्'. ६ 'न्यवार्यत'. ७ 'उत्प्लुत' 'उद्धत'. ८ 'स प्रत्यर्थनिरस्तपाशात्'; 'सुमधर्मनिरस्तपाशात्'. ९ 'औत्पातिकः'.

---

टिप्प०—1 क्वचित् 'औत्पातिको मेघ इवाश्मवर्षं' इति पाठः—औत्पातिको मेघो [illegible] विकारसंनिभं [illegible] यस्य भाव [illegible] करोति ।

ततोऽभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना ।
स्वमूर्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसा जगाम ॥ ५४ ॥

तत इति ॥ ततः अभिषङ्गः पराभवः । 'शापे त्वभिषङ्गः पराभवे' इत्यमरः । स एवानिलस्तेन विप्रविद्धा अभिहता । प्रभ्रश्यमानानि पतन्त्याभरणान्येव प्रसूनानि यस्याः सा सीता लतेव । सहसा स्वमूर्तिलाभस्य स्वशरीरलाभस्य स्वोत्पत्तेः प्रकृतिं कारणं धरित्रीं जगाम । भूमौ पपातेत्यर्थः । स्त्रीणामापदि मातैव शरणमिति भावः ॥ ५४ ॥

इक्ष्वाकुवंशप्रभवः कथं त्वां त्यजेदकस्मात्पतिरार्यवृत्तः ।
इति क्षितिः संशयितेव तस्यै ददौ प्रवेशं जननी न तावत् ॥ ५५ ॥

इक्ष्वाक्विति ॥ इक्ष्वाकुवंशप्रभवः । महाकुलप्रसूत इत्यर्थः । आर्यवृत्तः साधुचरितः पतिर्भर्ता त्वामकस्मादकारणात् कथं त्यजेत् । असंभावितमित्यर्थः । इति संशयितेव संदिहानेव तावत् । त्यागहेतुज्ञानावधेः प्रागित्यर्थः । जननी क्षितिस्तस्यै सीतायै प्रवेशम् । आत्मनीति शेषः । न ददौ ॥ ५५ ॥

सा लुप्तसंज्ञा न विवेद दुःखं प्रत्यागतासुः समतप्यतान्तः ।
तस्याः सुमित्रात्मजयत्नलब्धो मोहादभूत्कष्टतरः प्रबोधः ॥ ५६ ॥

सेति ॥ लुप्तसंज्ञा नष्टचेतना मूर्च्छिता सा दुःखं न विवेद । प्रत्यागतासुर्लब्धसंज्ञा सती, अन्तः समतप्यत । दुःखेनादह्यतेत्यर्थः । तपेः कर्मणि लट् । कर्मकर्तरीति केचित्,—तन्न; 'तपस्तपःकर्मकस्यैव' (पा. ३।१।८८) इति यङ्नियमात् । तस्याः सीतायाः सुमित्रात्मजयत्नलब्धः प्रबोधो मोहात्कष्टतरोऽतिदुःखदोऽभूत् । दुःखवेदनासंभवादिति भावः ॥ ५६ ॥

न चावदद्भर्तुरवर्णमार्या निराकरिष्णोर्वृजिनादृतेऽपि ।
आत्मानमेव स्थिरदुःखभाजं पुनः पुनर्दुष्कृतिनं निनिन्द ॥ ५७ ॥

न चेति ॥ आर्या साध्वी सीता वृजिनादृत एनसो विनापि । 'कलुषं वृजिनैनोऽघम्' इत्यमरः । 'अन्यारादितरर्ते—' (पा. २।३।२९) इत्यादिना पञ्चमी ।

पाठा०—१ 'अभिषङ्गानलविप्रविद्धा'. २ 'आर्यवृत्ति'. ३ 'इत्थम्'. ४ 'संशयति'.

टिप्प०—1 यथा लता वल्ली दुःसहवातधारिना सती भूमिं याति—इति वल्लभः ।
2 माता क्षपस्य तत्कायाः दुहितुस्तत्त्वमविज्ञाय प्रवेशं न ददाति—इति वल्लभः ।

निराकरिष्णोर्निरासकस्य । 'अलंकृञ्-' ( पा. ३।२।१३६ ) इत्यादिनेष्णुच्प्रत्ययः । भर्तुरवर्णमपवादं न चावदन्नैवावादीत् । किंतु स्थिरदुःखभाजमत एव दुष्कृतिनमात्मानं पुनः पुनर्निनिन्द ॥ ५७ ॥

आश्वास्य रामावरजः सतीं तामाख्यातवाल्मीकिनिकेतमार्गः ।
निघ्नस्य मे भर्तृनिदेशरौक्ष्यं देवि ! क्षमस्वेति बभूव नम्रः ॥ ५८ ॥

आश्वास्येति ॥ रामावरजो लक्ष्मणः सतीं साध्वीं तामाश्वास्य । आख्यात उपदिष्टो वाल्मीकेर्निकेतस्याश्रमस्य मार्गो येन स तथोक्तः सन् । निघ्नस्य पराधीनस्य । 'अधीनो निघ्न आयत्तः' इत्यमरः । मे भर्तृनिदेशेन स्वाम्यनुज्ञया हेतुना यद्रौक्ष्यं पारुष्यं तद्धे देवि ! क्षमस्व । इति नम्रः प्रणतो बभूव ॥ ५८ ॥

सीता तमुत्थाप्य जगाद वाक्यं प्रीतास्मि ते सौम्य ! चिराय जीव ।
बिडौजसा विष्णुरिवाग्रजेन भ्रात्रा यदित्थं परवानसि त्वम् ॥ ५९ ॥

सीतेति ॥ सीता तं लक्ष्मणमुत्थाप्य वाक्यं जगाद । किमिति ? हे सौम्य साधो ! ते प्रीतास्मि । चिराय चिरं जीव । यद्यस्मात् । बिडौजसेन्द्रेण विष्णुरुपेन्द्र इव । अग्रजेन ज्येष्ठेन भ्रात्रा त्वमित्थं परवान् परतन्त्रोऽसि ॥ ५९ ॥

श्वश्रूजनं सर्वमनुक्रमेण विज्ञापय प्रापितमत्प्रणामः ।
प्रजानिषेकं मयि वर्तमानं सूनोरनुध्यायत चेतसेति ॥ ६० ॥

श्वश्रूजनमिति ॥ सर्वं श्वश्रूजनमनुक्रमेण प्रापितमत्प्रणामः सन् । मत्प्रणाममुक्त्वेत्यर्थः । विज्ञापय । किमिति ? निषिच्यत इति निषेकः । मयि वर्तमानं सूनोस्त्वत्पुत्रस्य प्रजानिषेकं गर्भं चेतसाऽनुध्यायत 'शिवमस्तु' इति चिन्तयतेति ॥ ६० ॥

वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य ॥ ६१ ॥

वाच्य इति ॥ स राजा त्वया मद्वचनान्मद्वचनमिति कृत्वा । ल्यब्लोपे पञ्चमी । वाच्यो वक्तव्यः । किमित्यत आह 'वह्नौ' इत्यादिभिः सप्तभिः श्लोकैः.—

पाठा०—१ 'स सीताम्'. २ 'भ्रातृनिदेशरौक्ष्यम्'; 'भर्तृनिदेशरूक्षम्'; 'भर्तृनिदेशरौक्ष्म्'. ३ 'वत्स'. ४ 'विज्ञापयेः'. ५ 'ते'.

टिप्प०—१ आदित्यतेन हि दक्षस्य विष्णुः कनीयान्-' इति वल्लभः।

रैकात् । **मुक्तकण्ठं** यथा स्यात्तथा । वाग्भृत्येत्यर्थः । **विग्ना** भीता **कुररीवो**-त्क्रोशीव । 'उत्क्रोशकुररौ समौ' इत्यमरः । **भूयो** भूयिष्ठं **चक्रन्द** चुक्रोश ॥ ६८ ॥

**नृत्यं¹ मयूराः कुसुमानि वृक्षा² दर्भानुपात्तान्विजहुर्हरिण्यः¹ ।**
**तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि ॥ ६९ ॥**

**नृत्यमिति** ॥ **मयूरा नृत्यं विजहुस्त्यक्तवन्तः । वृक्षाः** कुसुमानि । **हरिण्य उपात्तान्दर्भान्** । इत्थं **तस्याः** सीतायाः **समदुःखभावं प्रपन्ने** तुल्यदुःखत्वं प्राप्ते **वनेऽप्यत्यन्तं रुदितमासीत्** । यथा रामगेहेऽपीति 'अपि'शब्दार्थः ॥६९॥

**तामभ्यगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय यातः ।**
**निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ॥ ७० ॥**

**तामिति** ॥ **कुशेध्माहरणाय यातः कवि**र्वाल्मीकी **रुदितानुसारी** सन्, **तां** सीताम**भ्यगच्छत्** । अभिगमने च दयालुतयेत्याह—**निषादेति** । **निषा**-**देन** व्याधेन **विद्धस्याण्डजस्य** क्रौञ्चस्य **दर्शनेनोत्थ** उत्पन्नो **यस्य शोकः श्लोकत्वमापद्यत** । श्लोकरूपेणावोचदित्यर्थः । स च श्लोकः पठ्यते (बाल. २।१५) 'मा निषाद! प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौञ्चमिथुनादेकमवधीः काममोहि-तम् ॥' इति । तिरश्चामपि दुःखं न सेहे । किमुतान्येषामिति भावः ॥ ७० ॥

**तमश्रु नेत्रावरणं प्रमृज्य सीता विलापाद्विरता³ ववन्दे ।**
**तस्यै मुनिर्दोहदलिङ्गदर्शी⁴ दाश्वान्⁵ सुपुत्राशिषमित्युवाच ॥ ७१ ॥**

**तमिति** ॥ **सीता विलापाद्विरता** सती **नेत्रावरणं** दृष्टिप्रतिबन्धक**मश्रु प्रमृज्य तं मुनिं ववन्दे । दोहदलिङ्गदर्शी** गर्भचिह्नदर्शी **मुनिस्तस्यै** सीतायै **सुपुत्राशिषं** तत्प्राप्तिहेतुभूता **दाश्वान्** दत्तवानिति वक्ष्यमाणप्रकारे**णोवाच** । 'दाश्वान्साह्वान्मीढ्वांश्च' ( पा. ६।१।१२ ) इति क्वसन्तो निपातः ॥ ७१ ॥

**जाने विसृष्टां प्रणिधानतस्त्वां मिथ्यापवादक्षुभितेन भर्त्रा ।**
**तन्मा व्यथिष्ठा विषयान्तरस्थं प्राप्तासि वैदेहि! पितुर्निकेतम्⁷ ॥७२॥**

---

**पाठा०**–१ 'नृत्तम्'. २ 'भृङ्गा.'. ३ 'अत्यर्थम्'. ४ 'प्रलापात्'. ५ 'दौर्हृद'. ६ 'दत्त्वा'. ७ 'घने'.

---

टिप्प०—1 मयूरा नृत्यं तत्यजुः, वृक्षाश्च कुसुमानि, हरिण्यश्चानुगृहीतान् दर्भान्, समं तुल्यं दुःखं यस्य स समदुःखस्तस्य भावं गतेऽपि तस्याः सीताया रुदितमत्यर्थमासीत् । तद्दुः-खेन चेतनाऽचेतना अपि दुःखिनोऽभूवन्नित्यर्थः-इति **दिनकर०** ।

–2 लुब्धकशरताडितसारसविलोकनोत्पन्नः शोक एव श्लोकत्वं जगाम, दुःखवशात्तस्य मुखादयं श्लोको निर्यातः–'मा निषाद...।...काममोहितम्' एतावता कविर्वाल्मीकिरित्यर्थः–इति **वल्लभः** ।

जान इति ॥ त्वां मिथ्यापवादेन क्षुभितेन भर्त्रा विसृष्टां त्यक्तां प्रणिधानतः समाधिदृष्ट्या जाने । हे वैदेहि ! विषयान्तरस्थं देशान्तरस्थं पितुर्जनकस्यैव निकेतं गृहं प्राप्तासि । तत्तस्मान्मा व्यथिष्ठा मा शोचीः । व्यथेर्लुङ् । 'न माङ्योगे' (पा. ६।४।७४) इत्यडागमप्रतिषेधः । भर्त्रोपेक्षितानां पितृगृहवास एवोचित इति भावः ॥ ७२ ॥

उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि ।
त्वां प्रत्यकस्मात्कलुषप्रवृत्तावस्त्येव मन्युर्भरताग्रजे मे ॥ ७३ ॥

उत्खातेति ॥ उत्खातलोकत्रयकण्टकेऽपि रावणादिकण्टकोद्धरणेन सर्वलोकोपकारिण्यपीत्यर्थः । सत्यप्रतिज्ञे सत्यसंधेऽपि । अविकत्थनेऽनात्मश्लाघिन्यपि । इत्थं स्नेहपात्रेऽपि त्वां प्रत्यकस्मादकारणात्कलुषप्रवृत्तौ गर्हितव्यापारे भरताग्रजे मे मन्युः कोपोऽस्त्येव । सर्वगुणाच्छादकोऽयं दोष इत्यर्थः । सीतानुनयार्थोऽयं रामोपालम्भः ॥ ७३ ॥

तवोरुकीर्तिः श्वशुरः सखा मे सतां भवोच्छेदकरः पिता ते ।
धुरि स्थिता त्वं पतिदेवतानां किं तन्न येनासि ममानुकम्प्या ॥७४॥

तवेति ॥ उरुकीर्तिस्तव श्वशुरो दशरथो मे सखा । ते पिता जनकः सतां विदुषां भवोच्छेदकरो ज्ञानोपदेशादिना संसारदुःखध्वंसकारी । त्वं पतिदेवतानां पतिव्रतानां धुरि अग्रे स्थिता । येन निमित्तेन ममानुकम्प्याऽनुग्राह्या नासि तत्किम् ? न किंचिदित्यर्थः ॥ ७४ ॥

तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसास्मिन् ।
इतो भविष्यत्यनघप्रसूतेरपत्यसंस्कारमयो विधिस्ते ॥ ७५ ॥

तपस्वीति ॥ तपस्विसंसर्गेण विनीतसत्त्वे शान्तजन्तुकेऽस्मिंस्तपोवने

---

पाठा०–१ 'इन्दुकीर्तिः'. २ 'भयच्छेदकरः'. ३ 'पितृदेवतानाम्'.

---

टिप्प०—1 यद्वा,–जनकदेशादन्यदेशस्य पितृगृहमित्यर्थः–इति दिनकर० ।

2 दण्डकारण्ये कृता तपस्विरक्षणप्रतिज्ञा सूचिता–इति हेमाद्रिः ।

3 अविकत्थने इति । मुनयो मया रक्षिता इत्यात्मश्लाघाभावः सूचितः–इति हेमाद्रिः ।

4 सतां मुमुक्षूणां भवस्य संसारस्य ध्वंसे गुरुः, ब्रह्मविद्योपदेष्टेत्यर्थः, त्वं च साध्वीनां धुर्यग्रे स्थिता, एवं स्थिते तत्किं येन ममानुकम्प्या न भवेः? यद्यपि मुनिः सर्वजन्तुषु साधारणहृदयस्तथापि सीताविश्वासार्थमियमुक्तिः–इति दिनकर० । ज्ञानवृद्धत्वं जनकस्योक्तं उत्तररामचरिते 'तदयं ब्रह्मवादी पुराणराजर्षिः' इति ।

वीतभया निर्भीका वस। इतोऽस्मिन्वनेऽनघप्रसूतेः सुखप्रसूतेस्तेऽपत्यसंस्कारमयो जातकर्मादिरूपो विधिरनुष्ठानं भविष्यति ॥ ७५ ॥

अशून्यतीरां मुनिसंनिवेशैस्तमोपहन्त्रीं तमसां वगाह्य।
तत्सैकतोत्सङ्गबलिक्रियाभिः संपत्स्यते ते मनसः प्रसादः ॥ ७६ ॥

अशून्येति ॥ संनिविशन्ते येष्विति संनिवेशा उटजाः। अधिकरणार्थे घञ्प्रत्ययः। मुनीनां संनिवेशैरुटजैरशून्यतीरां पूर्णतीरां तमसः शोकस्य पापस्य वाऽपहन्त्रीम्। 'तमस्तु क्लीबे पापे नरकशोकयोः' इत्यमरः। तमसां नदीं वगाह्य तत्र स्नात्वा। बलिक्रियापेक्षया पूर्वकालता। तस्याः सैकतोत्सङ्गेषु बलिक्रियाभिरिष्टदेवतापूजाविधिभिस्ते मनसः प्रसादः संपत्स्यते भविष्यति ॥ ७६ ॥

पुष्पं फलं चार्तवमाहरन्त्यो बीजं च बालेयमकृष्टरोहि।
विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम् ॥ ७७ ॥

पुष्पमिति ॥ ऋतुरस्य प्राप्त आर्तवम्। स्वस्वकालप्राप्तमित्यर्थः। पुष्पं फलं च। अकृष्टरोह्यकृष्टक्षेत्रोत्थम्। अकृष्टपच्यमित्यर्थः। बलये हितं बालेयं पूजायोग्यम्। 'छदिरुपधिबलेर्ढञ्' (पा. ५।१।१३) इति ढञ्प्रत्ययः। बीजं नीवारादि धान्यं चाहरन्त्य उदारवाचः प्रगल्भगिरो मुनिकन्यका नवाभिषङ्गां नूतनदुःखां त्वां विनोदयिष्यन्ति ॥ ७७ ॥

पयोघटैराश्रमबालवृक्षान्संवर्धयन्ती स्वबलानुरूपैः।
असंशयं प्राक्तनयोपपत्तेः स्तनंधयप्रीतिमवाप्स्यसि त्वम् ॥ ७८ ॥

पय इति ॥ स्वबलानुरूपैः स्वशक्त्यनुसारिभिः पयसामम्भसां घटैः। स्तन्यैरिति च ध्वन्यते। आश्रमबालवृक्षान्संवर्धयन्ती त्वं तनयोपपत्तेः प्राक् पूर्वम्। असंशयं यथा तथा। स्तनं धयति पिबतीति स्तनंधयः शिशुः। 'नासिकास्तनयोर्ध्माधेटोः' (पा. ३।२।२९) इति खश्प्रत्ययः। 'अरुर्द्विष–'(पा. ६।३।६७) इत्यादिना मुमागमः। तस्मिन्या प्रीतिस्तामवाप्स्यसि। ततः परं सुलभ एव विनोद इति भावः ॥ ७८ ॥

---

पाठा०–१ 'विगाह्य'. २ '°सोऽभिलाषः'. ३ 'बालेयमकृष्टपच्यम्', 'काले यदकृष्टरोहि'. ४ 'स्फीतिम्'.

---

टिप्प०—1 ऋतौ भवमार्तवम्, अलाङ्गलकर्षणाज्जातम्–इति दिनकर०।

अनुग्रहप्रत्यभिनन्दिनीं तां वाल्मीकिरादाय दयार्द्रचेताः ।
सायं मृगाध्यासितवेदिपार्श्वं स्वमाश्रमं शान्तमृगं निनाय ॥ ७९ ॥

अनुग्रहेति ॥ दयार्द्रचेता वाल्मीकिः । अनुग्रहं प्रत्यभिनन्दतीति तथोक्तां तां सीतामादाय सायं मृगैरध्यासितवेदिपार्श्वमधिष्ठितवेदिप्रान्तं शान्तमृगं स्वमाश्रमं निनाय ॥ ७९ ॥

तामर्पयामास च शोकदीनां तदागमप्रीतिषु तापसीषु ।
निर्विष्टसारां पितृभिर्हिमांशोरन्त्यां कलां दर्श इवौषधीषु ॥ ८० ॥

तामिति ॥ शोकदीनां तां सीतां तस्याः सीताया आगमेन प्रीतिर्यासां तासु तापसीषु । पितृभिरग्निष्वात्तादिभिर्निर्विष्टसारां भुक्तसारां हिमांशोरन्त्यामवशिष्टां कलां दर्शोऽमावास्याकाल ओषधीष्विव अर्पयामास च । अत्र पराशरः–'पिबन्ति विमलं सोमं विशिष्टा तस्य या कला । सुधामृतमयी पुण्यां तामिन्दोः पितरो मुने ! ॥' इति । व्यासश्च–'अमायां तु सदा सोम ओषधीः प्रतिपद्यते' इति ॥ ८० ॥

ता इङ्गुदीस्नेहकृतप्रदीपमास्तीर्णमेध्याजिनतल्पमन्तः ।
तस्यै सपर्यानुपदं दिनान्ते निवासहेतोरुटजं वितेरुः ॥ ८१ ॥

ता इति ॥ तास्तापस्यः । तस्यै सीतायै सपर्यानुपदं पूजानन्तरं दिनान्ते सायंकाले निवास एव हेतुस्तस्य निवासहेतोः, निवासार्थमित्यर्थः । 'षष्ठी हेतुप्रयोगे' (पा. २।३।२६) इति षष्ठी । 'इङ्गुदी तापसतरुः' इत्यमरः । इङ्गुदीस्नेहेन कृतप्रदीपमन्तरास्तीर्णं मेध्यं शुद्धमजिनमेव तल्पं शय्या यस्मिंस्तमुटजं पर्णशालां वितेरुर्ददुः ॥ ८१ ॥

तत्राभिषेकप्रयता वसन्ती प्रयुक्तपूजा विधिनातिथिभ्यः ।
वन्येन सा वल्कलिनी शरीरं पत्युः प्रजासंततये बभार ॥ ८२ ॥

तत्रेति ॥ तत्राश्रमेऽभिषेकेण स्नानेन प्रयता नियता वसन्ती विधिना

---

पाठा०–१ 'अनुमहम्'. २ 'शान्तमुखीम्'. ३ 'समर्पयामास सः'. ४ 'समागमप्रीतिषु'. ५ 'निर्विष्टसारा'. ६ 'अन्त्या'. ७ 'कला'. ८ 'विभेजुः'. ९ 'विविधातिथिभ्यः', 'विधुयातिथिभ्यः'.

---

टिप्प०—1 यथा दर्शोऽमावास्या पितृभिर्निर्विष्ट उपभुक्तः सारो यस्यास्तामिन्दोरन्तिमां कलामोषधीषु संयोजयति-रवि दिनकर० । इदं हि प्राह् (रघु ५।१६) प्रतिपादितमेव हिमन्तान् ।

शास्त्रेणातिथिभ्यः प्रयुक्तपूजा कृतसत्कारा वल्कलिनी सा सीता पत्युः प्रजासंततये संतानाविच्छेदाय हेतोः। वन्येन कन्दमूलादिना शरीरं बभार पुपोषं ॥ ८२ ॥

अपि प्रभुः सानुशयोऽधुना स्यात्किमुत्सुकः शक्रजितोऽपि[2] हन्ता।
शशंस सीतापरिदेवनान्तमनुष्ठितं[3] शासनमग्रजाय ॥ ८३ ॥

अपीति ॥ प्रभू राजा। अधुनापि सानुशयः सानुतापः स्यात्किम् इति काकुः। उत्सुकः शक्रजित इन्द्रजितो हन्ता लक्ष्मणोऽपि सीतापरिदेवनान्तं सीताविलापान्तमनुष्ठितं शासनमग्रजाय शशंस ॥ ८३ ॥

बभूव रामः सहसा[4] सबाष्पस्तुषारवर्षीव[5] सहस्यचन्द्रः।
कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः ॥ ८४ ॥

बभूवेति ॥ सहसा सपदि सबाष्पो रामः। तुषारवर्षी सहस्यचन्द्र इव बभूव। अस्रश्रुतया तुषारवर्षिणा पौषचन्द्रेण तुल्योऽभूत्। 'पौषे तैषसहस्यौ द्वौ' इत्यमरः। युक्तं चैतदित्याह—कौलीनाल्लोकापवादाद्भीतेन तेन रामेण वैदेहसुता सीता गृहान्निरस्ता। न मनस्तो मनसश्चित्ताच्च निरस्ता। पञ्चम्यास्तसिल् ॥ ८४ ॥

निगृह्य शोकं स्वयमेव धीमान्वर्णाश्रमावेक्षणजागरूकः।
स भ्रातृसाधारणभोगमृद्धं[6] राज्यं रजोरिक्तमनाः शशास ॥ ८५ ॥

निगृह्येति ॥ धीमान् वर्णानामाश्रमाणां चावेक्षणेऽनुसधाने जागरूकोऽप्रमत्तः 'जागरूकः' (पा. ३।२।१६५) इत्यूकप्रत्ययः। रजोरिक्तमना रजोगुणशून्यचेताः स रामः स्वयमेव शोकं निगृह्य निरुध्य भ्रातृभिः साधारणभोगम्। शरीरस्थितिमात्रोपयुक्तमित्यर्थः। ऋद्धं राज्यं शशास ॥ ८५ ॥

तामेकभार्यां परिवादभीरोः साध्वीमपि त्यक्तवतो नृपस्य[7]।
वक्षस्यसंघट्टसुखं वसन्ती रेजे[8] सपत्नीरहितेव लक्ष्मीः ॥ ८६ ॥

तामिति ॥ परिवादभीरोर्निन्दाभीरोरत एव एकभार्यामपि साध्वीमपि तां सीतां त्यक्तवतो नृपस्य वक्षस्यसंघट्टसुखमसंभाव्यसुखं वसन्ती लक्ष्मीः सपत्नीरहितेव रेजे दिदीपे। तस्य स्त्र्यन्तरपरिग्रहो नाभूदिति भावः ॥ ८६ ॥

पाठा०—१ 'इति'. २ 'निहत्वा'. ३ 'परिदेवितान्तम्'. ४ 'सपदि'. ५ 'प्रवाप्पः'. ६ 'योगम्'. ७ 'तस्य'. ८ 'रसे'.

टिप्प०—1 न तु जीवनेच्छयेति भावः–इति दिनकर०।

सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार ।
वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ॥ ८७ ॥

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृतौ सीतापरित्यागो नाम चतुर्दशः सर्गः ।

---

सीतामिति ॥ दशमुखरिपू रामः सीतां हित्वा त्यक्त्वाऽन्यां स्त्रियं नोपयेमे न परिणीतवानिति यत् । 'उपायमः स्वकरणे' ( पा. १।३।५६ ) इत्यात्मनेपदम् । किंच, तस्याः सीताया एव प्रतिकृतेः प्रतिमायाः हिरण्मय्याः सखा प्रतिकृतिसखः सन् क्रतूनाजहाराहृतवानिति यत्तेन श्रवणविषयप्रापिणा श्रोत्रदेशगामिना भर्तुर्वृत्तान्तेन वार्तया हेतुना सा सीता दुर्वारं दुर्निरोधं परित्यागेन यद्दुःखं तत्कथमपि विषेहे विसोढवती ॥ ८७ ॥

इति महोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशव्याख्यायां संजीविनीसमाख्यायां चतुर्दशः सर्गः ।

---

## पञ्चदशः सर्गः ।

श्रीरण्यक गृहस्थानं श्वशुरो यद्वज.कन्याः ।
स्वयमौद्वाहिकं गेहं तस्मै रामाय ते नमः ॥

कृतसीतापरित्यागः स रत्नाकरमेखलाम् ।
बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् ॥ १ ॥

कृतेति ॥ कृतसीतापरित्यागः स पृथिवीपालो रामो रत्नाकर एव मेखला यस्यास्ताम् । सार्णवामित्यर्थः । केवलाम् । एकामित्यर्थः । पृथिवीमेव । बुभुजे भुक्तवान् । नतु पार्थिवीमित्यर्थः । सापि रत्नखचितमेखला । पृथिव्याः कान्तासमाधिर्व्यज्यते । रामस्य स्त्र्यन्तरपरिग्रहो नास्तीति श्लोकाभिप्रायः ॥ १ ॥

लवणेन विलुप्तेज्यास्तामिस्रेण तमभ्ययुः ।
मुनयो यमुनाभाजः शरण्यं शरणार्थिनः ॥ २ ॥

लवणेनेति ॥ लवणेन लवणाख्येन तामिस्रेण तमिस्राचारिणा । रक्षसेत्यर्थः । विलुप्तेज्या लुप्तयागक्रिया अत एव शरणार्थिनो रक्षणार्थिनो यमुनाभाजो यमुनातीरवासिनो मुनयः शरण्यं शरणार्हं रक्षणसमर्थं तं रामं रक्षितारमभ्ययुः प्राप्ताः । यातेर्लङ् ॥ २ ॥

अवेक्ष्य रामं ते तस्मिन्न प्रजह्रुः स्वतेजसा ।
त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम् ॥ ३ ॥

अवेक्ष्येति ॥ ते मुनयो राममवेक्ष्य । रक्षितारमिति शेषः । तस्मिँल्लवणे स्वतेजसा शापरूपेण न प्रजह्रुः । तथा हि—त्रायत इति त्राणं रक्षकम् । कर्तरि ल्युट् । तदभावे शाप एवास्त्रं येषां ते शापास्त्राः सन्तस्तपसो व्ययं कुर्वन्ति । शापदानात्तपसो व्यय इति प्रसिद्धेः ॥ ३ ॥

प्रतिशुश्राव काकुत्स्थस्तेभ्यो विघ्नप्रतिक्रियाम् ।
धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः ॥ ४ ॥

प्रतीति ॥ काकुत्स्थो रामस्तेभ्यो मुनिभ्यो विघ्नप्रतिक्रियां लवणवधरूपां प्रतिशुश्राव प्रतिजज्ञे । तथा हि—भुवि शार्ङ्गिणो विष्णोः प्रवृत्ती रामरूपेणावतरणं धर्मसंरक्षणमेवार्थः प्रयोजनं यस्याः सा तथैव ॥ ४ ॥

ते रामाय वधोपायमाचख्युर्विबुधद्विषः ।
दुर्जयो लवणः शूली विशूलः प्रार्थ्यतामिति ॥ ५ ॥

---

पाठा०—१ 'धर्मसंरक्षणायैव'; 'धर्मसंरक्षणार्थाय'. २ 'प्रस्थानम्'.

---

टिप्प०—1 'स्वेककृत्स्नयोः' इत्यमरोक्तेः 'केवल'शब्दोऽत्र कृत्स्नार्थः । अन्यथा 'एव'कारे प्रयुक्ते पुनः 'केवल'शब्दप्रयोगे पौनरुक्त्यं स्यात् । अन्ये त्वन्यथा समादधिरे । अन्ययोगव्यवच्छेदार्थं 'एव'कारोऽन्ययोगव्यवच्छेदार्थः 'केवल'शब्दः । अपरे तु के सुखेऽबलामसमर्थामिति व्याचख्युरे—इति दिनकर० ।

2 भुवि विष्णोरवतारो धर्मस्य संरक्षणार्थं; उक्तं च (गीता. अ. ४।७)—'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्'—इति दिनकर० ।

त इति ॥ ते मुनयो रामाय विबुधद्विषः सुरारेर्लवणस्य वधोपायमाचख्युः । लुनातीति लवणः । नन्द्यादित्वाल्ल्युः । तत्रैव निपातनाण्णत्वम् । लवणः शूली शूलवान् दुर्जयोऽजेयः । किंतु विशूलः शूलरहितः प्रार्थ्यतामभिगम्यताम् । 'याच्ञायामभिमाने च प्रार्थना कथ्यते बुधैः' इति केशवः ॥ ५ ॥

आदिदेशाथ शत्रुघ्नं तेषां क्षेमाय राघवः ।
करिष्यन्निव नामास्य यथार्थमरिनिग्रहात् ॥ ६ ॥

आदिदेशेति ॥ अथ तेषां मुनीनां क्षेमाय क्षेमकरणाय राघवो रामः शत्रुघ्नमादिदेश । अत्रोत्प्रेक्ष्यते—अस्य शत्रुघ्नस्य नाम अरिनिग्रहाच्छत्रुहननाद्धेतोः । यथाभूतोऽर्थो यस्य तद्यथार्थं करिष्यन्निव । शत्रून्हन्तीति शत्रुघ्नः । 'अमनुष्यकर्तृके च' ( पा. ३।२।५३ ) इति चकाराकृतघ्नशत्रुघ्नादयः सिद्धा इति दुर्गसिंहः । पाणिनीयेऽपि बहुलग्रहणाद्यथेष्टसिद्धिः 'कृत्ल्युटो बहुलम्' ( पा. ३।३।११३ ) इति ॥ ६ ॥

रामस्य स्वयमप्रयाणे हेतुमाह—

यः कश्चन रघूणां हि परमेकः परंतपः ।
अपवाद इवोत्सर्गं व्यावर्तयितुमीश्वरः ॥ ७ ॥

य इति ॥ हि यस्मात् । परान्छत्रूंस्तापयतीति परंतपः । 'द्विषत्परयोस्तापेः' ( पा. ३।२।३९ ) इति खच्प्रत्ययः । 'खचि ह्रस्वः' ( पा. ६।४।९४ ) इति ह्रस्वः । रघूणां मध्ये यः कश्चनैकः । अपवादो विशेषशास्त्रमुत्सर्गं सामान्यशास्त्र-

टिप्प०—1 पुरा किल मधुनामको राक्षसो महत्या तपश्चर्यया रुद्रं संप्रीणितवान् । तेन तपसा तुष्टो हि रुद्रस्तस्मै दुर्जयं शूलं दत्त्वा देवदानवगन्धर्वैश्च न प्रधर्षणीयत्वमुपादिदेश । स्वनिधनसमयासन्नः स मधुः स्वपुत्राय लवणाय तं शूलं प्रदत्त्वा 'त्वं सदा शूलधारी भव, तेन न कोऽपि त्वां हन्तुं प्रभवेत्' इत्युक्त्वा च शिवोपदेशं प्रतिश्रुतवान्—इति रामायणे ( उत्तर. स. ६१ ) कथानकम् ।

2 ननु—'अमनुष्यकर्तृके च' ( पा. ३।२।५३ ) इति टक्प्रत्ययस्य विधानात् कथं 'शत्रुघ्न' इति ? उच्यते,—अस्य देवत्वविवक्षयाऽमनुष्यकर्तृकत्वम् । यद्वा,—मूलविभुजादित्वात् कप्रत्यय इति भाष्यवृत्तिकारोक्तत्वात्साधुः—इति दिनकर० ।

3 अपवादः [illegible]
बाधनं शास्त्रे-
निषेधमपवादः
दिनकर० ॥

प्रवृत्त्यभावात्' । बहुव्यापकं सामान्यम्, अल्पव्यापको विशेषः । यथा 'धीङ्' इत्यत्र 'इको यणचि' ( पा. ६।१।७७ ) इत्यस्योत्सर्गस्य 'अकः सवर्णे दीर्घः' ( पा. ६।१।१०१ ) इत्यपवादः । तथोक्तम्—'अपोद्योत्सृज्यते शास्त्रं उत्सर्गस्तु विधीयते । अपवादः स विज्ञेयो मुख्यो व्याकरणादिषु ॥'—इति हेमाद्रिः ।

मिव । परं शत्रुं व्यावर्तयितुं बाधितुमीश्वरः समर्थः । अतः शत्रुघ्नमेवादिदेशेति पूर्वेणान्वयः ॥ ७ ॥

> अग्रजेन प्रयुक्ताशीस्ततो दाशरथी रथी ।
> ययौ वनस्थलीः पश्यन्पुष्पिताः सुरभीरभीः ॥ ८ ॥

अग्रजेनेति ॥ ततोऽग्रजेन रामेण प्रयुक्ताशीः कृताशीर्वादो रथी रथिकोऽभीर्निर्भीको दाशरथिः पुष्पाणि संजातानि यासां ताः पुष्पिताः सुरभीरामोदमाना वनस्थलीः पश्यन्ययौ ॥ ८ ॥

> रामादेशादनुगता सेना तस्यार्थसिद्धये ।
> पश्चादध्ययनार्थस्य धातोरधिरिवाभवत् ॥ ९ ॥

रामेति ॥ रामादेशादनुगता[1] सेना तस्य शत्रुघ्नस्य । अध्ययनमर्थोऽभिधेयो यस्य तस्य । धातोः[2] 'इङध्ययने' इत्यस्य धातोः पश्चादधिरध्युपसर्ग इव । अर्थसिद्धये प्रयोजनसाधनायेत्येकत्र । अन्यत्र,-अभिधेयसाधनाय । अभवत् । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । यथा 'इङिकावध्युपसर्गं न व्यभिचरतः' इति न्यायेनाध्युपसर्गः स्वयमेवार्थसाधकस्य धातोः संनिधिमात्रेणोपकरोति, सेनापि तस्य तद्वदिति भावः ॥ ९ ॥

> आदिष्टवर्त्मा मुनिभिः स गच्छंस्तपतां वरः ।
> विरराज रथप्रष्ठैर्वालखिल्यैरिवांशुमान् ॥ १० ॥

---

पाठा०-१ 'तदा'. २ 'अनुपदं' (=सेनाङ्गं तस्य सिद्धये). ३ 'स गच्छन्वदताम्'; 'स गच्छन्मतिमताम्'. ४ 'वरैः'.

---

टिप्प०—1 वल्लभस्तु-'रामदेशादनुपदं' इति पाठमादृत्य रामाज्ञया सेनाङ्गं गजरथतुरगपदातिलक्षणं तस्य शत्रुघ्नस्यानुपदं पश्चादभवत् । किमर्थम्? सिद्धये क्रियासिद्ध्यर्थम्-इति व्याचष्टे ।

2 यथा उपसर्गनिरपेक्षतयैवार्थवत 'इङ् अध्ययने' इत्यस्य धातोः पश्चाद्राम्यधिरुपसर्गो भवति, तथा रामादेशात् कार्यसिद्धये सैन्यनिरपेक्षतयैवारिनिग्रहशक्तिर्यस्य तस्य सेनाङ्गं पश्चाद्राम्यभवत् । यद्यपि धातुरुपसर्गं न व्यभिचरति, उपसर्गस्तु धातुं व्यभिचरति, एवमादि महाभाष्ये धातोरेवार्थवत्त्वादुपसर्गस्य द्योतकत्व तिरणायि-इति दिनकर० ।

आदिष्टेति ॥ रथप्रष्ठै रथाग्रगामिभिः। 'प्रष्ठोऽग्रगामिनि' (पा. ८।३।९२) इति निपातः। मुनिभिः पूर्वैकैरादिष्टवर्त्मा निर्दिष्टमार्गो गच्छंस्तपतां देदीप्यमानानां मध्ये वरः श्रेष्ठः स शत्रुघ्नः। वालखिल्यैर्मुनिभिरंशुमान्सूर्य इव। विरराज। तेऽपि रथप्रष्ठा इत्यनुसंधेयम् ॥ १० ॥

तस्य मार्गवशादेका बभूव वसतिर्यतः।
रथस्वनोत्कण्ठमृगे वाल्मीकीये तपोवने ॥ ११ ॥

तस्येति ॥ यतो गच्छतः। इण्धातोः शतृप्रत्ययः। तस्य शत्रुघ्नस्य मार्गवशाद्रथस्वन उत्कण्ठा उद्ग्रीवा मृगा यस्मिंस्तस्मिन्वाल्मीकीये वाल्मीकिसंबन्धिनि। 'वृद्धाच्छः' (पा. ४।२।११४) इति छप्रत्ययः। तपोवन एका वसती रात्रिर्बभूव। तत्रैकां रात्रिमुषित इत्यर्थः। 'वसती रात्रिवेश्मनोः' इत्यमरः ॥ ११ ॥

तमृषिः पूजयामास कुमारं क्लान्तवाहनम्।
तपःप्रभावसिद्धाभिर्विशेषप्रतिपत्तिभिः ॥ १२ ॥

तमिति ॥ क्लान्तवाहनं श्रान्तयुग्यं तं कुमारं शत्रुघ्नमृषिर्वाल्मीकिस्तपःप्रभावसिद्धाभिर्विशेषप्रतिपत्तिभिरुत्कृष्टसंभावनाभिः पूजयामास ॥ १२ ॥

तस्यामेवास्य यामिन्यामन्तर्वत्नी प्रजावती।
सुतावसूत संपन्नौ कोशदण्डाविव क्षितिः ॥ १३ ॥

तस्यामिति ॥ तस्यामेव यामिन्यां रात्रौ। अस्य शत्रुघ्नस्य। अन्तरस्या अस्तीत्यन्तर्वत्नी गर्भिणी 'अन्तर्वत्नी च गर्भिणी' इत्यमरः। 'अन्तर्वत्पतिवतोर्नुक्' (पा. ४।१।३२) इति ङीप्, नुगागमश्च। प्रजावती भ्रातृजाया सीता। क्षितिः संपन्नौ समग्रौ कोशदण्डाविव। सुतावसूत ॥ १३ ॥

संतानश्रवणाद्भ्रातुः सौमित्रिः सौमनस्यवान्।
प्राञ्जलिर्मुनिमामन्त्र्य प्रातर्युक्तरथो ययौ ॥ १४ ॥

संतानेति ॥ भ्रातुर्ज्येष्ठस्य संतानश्रवणाद्धेतोः सौमनस्यवान्प्रीतिमान्

---

पाठा०—१ 'रथस्वनोत्कीर्णमृगे'; 'रथस्वनोत्कर्णमृगे'. २ 'श्रान्त'. ३ 'विपुल'. ४ 'संपन्ना'.

---

टिप्प०—1 वालखिल्यैः रथप्रष्ठैः स्यन्दनगामिभिरादिष्टवर्त्मभिः, ते हि तस्य सहचराः—इति मल्लिभः ॥ यथोक्तं भागवते (स्कं. १२।११) 'वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः। पुरतोऽभिमुखं यान्ति स्तुवन्ति स्तुतिभिर्विभुम्॥' इति।

सौमित्रिः शत्रुघ्नः प्रातर्युक्तरथः सज्जरथः सन्। प्राञ्जलिः कृताञ्जलिर्मुनिमा-
मन्त्र्यापृच्छ्य ययौ ॥ १४ ॥

स च प्राप मधूपघ्नं कुम्भीनस्याश्च कुक्षिजः ।
वनात्करमिवादाय सत्त्वराशिमुपस्थितः ॥ १५ ॥

स चेति ॥ स शत्रुघ्नश्च मधूपघ्नं नाम लवणपुरं प्राप । कुम्भीनसी नाम रावणस्वसा । तस्याः कुक्षिजः पुत्रो लवणश्च वनात्करं बलिमिव सत्त्वानां प्राणिनां राशिमादायोपस्थितः प्राप्तः ॥ १५ ॥

धूमधूम्रो वसागन्धी ज्वालाबभ्रुशिरोरुहः ।
क्रव्याद्गणपरीवारश्चिताग्निरिव जंगमः ॥ १६ ॥

धूमेति ॥ किंभूतो लवणः? धूम इव धूम्रः कृष्णलोहितवर्णः । 'धूमधूम्रौ कृष्णलोहिते' इत्यमरः । वसागन्धो हृन्मेदोगन्धः । सोऽस्यास्तीति वसागन्धी । 'हृन्मेदस्तु वपा वसा' इत्यमरः । ज्वाला इव बभ्रवः पिङ्गलाः शिरोरुहाः केशा यस्य स तथोक्तः । 'विपुले नकुले विष्णौ बभ्रुः स्यात्पिङ्गले त्रिषु' इत्यमरः । क्रव्यं मांसमदन्तीति क्रव्यादो राक्षसाः, तेषां गण एव परीवारो यस्य स तथोक्तः । अत एव जंगमश्चरिष्णुश्चिताग्निरिव स्थितः । कृशानुपक्षे,–धूमैर्धूम्रवर्णः । ज्वाला एव शिरोरुहाः । क्रव्यादो गृध्रादयः इत्यनुसंधेयम् ॥ १६ ॥

अपशूलं तमासाद्य लवणं लक्ष्मणानुजः ।
रुरोध संमुखीनो हि जयो रन्ध्रप्रहारिणाम् ॥ १७ ॥

अपशूलमिति ॥ लक्ष्मणानुजः शत्रुघ्नोऽपशूलं शूलरहितं तं लवणमासाद्य रुरोध । तथा हि–रन्ध्रप्रहारिणां रन्ध्रप्रहरणशीलानाम् । अपशूलतैवात्र रन्ध्रम् । जयः संमुखीनो हि संमुखस्य दर्शनो हि । 'यथामुखसंमुखस्य दर्शनः खः' (पा. ५।२।६) इति खप्रत्ययः । अधिकरलक्षणार्थस्तु दुर्लभ एव ॥ १७ ॥

नातिपर्याप्तमालक्ष्य मत्कुक्षेरद्य भोजनम् ।
दिष्ट्या त्वमसि मे धात्रा भीतेनेवोपपादितः ॥ १८ ॥

---

पाठा०–१ 'सांयुगीनः'. २ 'आलोक्य'. ३ 'चेतनम्'.

---

… नृपमाश्च भागमिव सत्त्वानां जन्तून् … दिनकर० । कुंभीनसी मधुभार्या …

2 क्रव्यादानां पक्षिणां सङ्घैः परिवृतो जङ्गमश्चिताग्निरिवोपस्थित इति पूर्वेण सम्बन्धः–इति दिनकर० ॥ क्रव्याद्गणः गृध्रादिपरिवारः । स्वभेद्ये-जङ्गमश्चिताग्निरिव, सोऽप्येवंविधो भवति–इति वल्लभः ।

इति संतर्ज्य शत्रुघ्नं राक्षसस्तज्जिघांसया।
प्रांशुमुत्पाटयामास मुस्तास्तम्बमिव द्रुमम् ॥ १९ ॥

नेति ॥ इतीति ॥ युष्मम्। राक्षसो लवणः। अद्य मत्कुक्षेः। भुज्यत इति भोजनम्। भोज्यं मृगादिकं नातिपर्याप्तमनतिसमग्रमालक्ष्य दृष्ट्वा भीतेनेव धात्रा दिष्ट्या भाग्येन मे त्वमुपपादितः कल्पितोऽसि। इति शत्रुघ्नं संतर्ज्य तस्य शत्रुघ्नस्य जिघांसया हन्तुमिच्छया प्रांशुमुन्नतं द्रुमम्। मुस्तास्तम्बमिव अक्लेशेनोत्पाटयामास ॥ १८-१९ ॥

सौमित्रेर्निशितैर्बाणैरन्तरा शकलीकृतः।
गात्रं पुष्परजः प्राप न शाखी नैर्ऋतेरितः ॥ २० ॥

सौमित्रेरिति ॥ नैर्ऋतेरितो रक्षःप्रेरितः शाख्यन्तरा मध्ये निशितैर्बाणैः शकलीकृतः सन्, सौमित्रेः[1] शत्रुघ्नस्य गात्रं न प्राप। किंतु पुष्परजः प्राप ॥ २० ॥

विनाशात्तस्य वृक्षस्य रक्षस्तस्मै महोपलम्।
प्रजिघाय कृतान्तस्य मुष्टिं पृथगिव स्थितम् ॥ २१ ॥

विनाशादिति ॥ रक्षो लवणस्तस्य विनाशाद्धेतोः। महोपलं महान्तं पाषाणम्। पृथक्स्थितं कृतान्तस्य यमस्य मुष्टिमिव। 'मुष्टि'शब्दो द्विलिङ्गः। तस्मै शत्रुघ्नाय प्रजिघाय प्रहितवान् ॥ २१ ॥

ऐन्द्रमस्त्रमुपादाय शत्रुघ्नेन स ताडितः।
सिकतात्वादपि परां प्रपेदे परमाणुताम् ॥ २२ ॥

ऐन्द्रमिति ॥ स महोपलः शत्रुघ्नेनैन्द्रमिन्द्रदेवताकमस्त्रमुपादाय ताडितोऽभिहतः सन्। सिकतात्वात्सिकताभावादपि परां परमाणुतां प्रपेदे। यतोऽप्युर्नास्ति स परमाणुरित्याहुः ॥ २२ ॥

---

पाठा०—१ 'शकलीकृतम्'. २ 'विनाशं तस्य वृक्षस्य'; 'निशातं तस्य वृक्षस्य'. ३ 'तं च'. ४ 'सिकताभावत्'; 'सिकताभ्यः'. ५ 'हि पराम्'; 'अपराम्'.

---

टिप्प०—1 वृक्षः सौमित्रिगात्रं न प्राप किंतु शाखान्तरच्युतपुष्परेणुः प्राप—इति दिनकर०।

[2] परमाणुत्वं चोक्तं कल्लुभा—'जालान्तरस्थसूर्यांशौ यत्सूक्ष्मं दृश्यते रजः। भागस्तस्य च षष्ठो यः परमाणुः स उच्यते॥' इति॥ एवं ततः सूक्ष्मतमाम्—इति वल्लभः।

तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः ।
एकताल इवोत्पातपवनप्रेरितो गिरिः ॥ २३ ॥

तमिति ॥ निशाचरो राक्षसो दक्षिणं दोः । 'ककुद्दोषणी' इति भगवतो भाष्यकारस्य प्रयोगाद्दोषशब्दस्य नपुंसकत्वं द्रष्टव्यम् । 'भुजबाहू प्रवेष्टो दोः' इति पुंलिङ्गसाहचर्यात्पुंस्त्वं च । तथा च प्रयोगः–'दोष तस्य तथाविधस्य भजते' इति । सव्येतरं बाहुमुद्यम्य । एकस्तालस्तदाख्यवृक्षो यस्मिन्स एकतालः । उत्पात-पवनेन प्रेरितो गिरिरिव । तं शत्रुघ्नमुपाद्रवदभिद्रुतः ॥ २३ ॥

कार्ष्णेन पत्रिणा शत्रुः स भिन्नहृदयः पतन् ।
आनिनाय भुवः कम्पं जहाराश्रमवासिनाम् ॥ २४ ॥

कार्ष्णेनेति ॥ स शत्रुर्लवणः । कार्ष्णेन वैष्णवेन पत्रिणा बाणेन । उक्तं च रामायणे—'एवमेष प्रजनितो विष्णोस्तेजोमयः शरः' इति । 'विष्णुर्नारायण कृष्णः' इत्यमरः । भिन्नहृदयः पतन्, भुवः कम्पमानिनाय[नीतवान्] । देहभारादि-त्यर्थः । आश्रमवासिनां कम्पं जहार । तदाश्रमवासिनोऽकुतोभया बभूवुरित्यर्थः ॥ २४ ॥

वयसां पङ्क्तयः पेतुर्हतस्योपरि विद्विपः ।
तत्प्रतिद्वन्द्विनो मूर्ध्नि दिव्याः कुसुमवृष्टयः ॥ २५ ॥

वयसामिति ॥ हतस्य विद्वेष्टीति विद्विट् तस्य विद्विषो राक्षसस्योपरि वयसां पक्षिणां पङ्क्तयः पेतुः । तत्प्रतिद्वन्द्विनः शत्रुघ्नस्य मूर्ध्नि तु दिव्याः कुसुमवृष्टयः पेतुः ॥ २५ ॥

स हत्वा लवणं वीरस्तदा मेने महौजसः ।
भ्रातुः सोदर्यमात्मानमिन्द्रजिद्वधशोभिनः ॥ २६ ॥

स इति ॥ स वीरः शत्रुघ्नो लवणं हत्वा तदाऽऽत्मानं महौजसो महाब-लस्येन्द्रजिद्वधेन शोभिनो भ्रातुर्लक्ष्मणस्य समानोदरे शयितं सोदर्यमेकोदरं मेने[1] । 'सोदराद्यः' (पा. ४।४।१०९) इति यप्रत्ययः ॥ २६ ॥

तस्य संस्तूयमानस्य चरितार्थैस्तपस्विभिः ।
शुशुभे विक्रमोदग्रं व्रीडयावनतं शिरः ॥ २७ ॥

पाठा०—१ 'तमुपाद्रवदुद्यम्य राक्षसो दक्षिणं करम्'; 'तमुपाद्रवदुद्यम्य दोषं रक्षोऽथ दक्षिणम्'; 'दक्षिणं दोषमुद्यम्य लवणस्समुपाद्रवत्'. २ 'दाम्नोः'. 'रक्षसः'. ४ 'वीरम्'. ५ 'महामना'.

टिप्प०—1 यद्यपि प्राक् जन्मना सोदराव भ्रातवानित्यर्थः-इति दिनकर० ।

तस्येति ॥ चरितार्थैः कृतार्थैः कृतकार्यैस्तपस्विभिः संस्तूयमानस्य तस्य शत्रुघ्नस्य विक्रमेणोदग्रमुन्नतं व्रीडया लज्जयावनतं नम्रं शिरः शुशुभे। विक्रान्तस्य लज्जैव भूषणमिति भाव. ॥ २७ ॥

उपकूलं स कालिन्द्याः पुरीं पौरुषभूषणः ।
निर्ममे निर्ममोऽर्थेषु मथुरां मधुराकृतिः ॥ २८ ॥

उपेति ॥ पौरुषभूषणः । अर्थेषु विषयेषु निर्ममो निःस्पृहः । मधुराकृतिः सौम्यरूप' । स शत्रुघ्नः कालिन्द्या यमुनाया उपकूलं कूले । विभक्त्यर्थेऽव्ययीभावः । मथुरां नाम पुरीं निर्ममे निर्मितवान् ॥ २८ ॥

या सौराज्यप्रकाशाभिर्बभौ पौरविभूतिभिः ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता ॥ २९ ॥

येति ॥ या पूः । शत्रुघ्नः शोभनो राजा यस्याः पुरः सा सुराज्ञी, सुराज्ञ्या भावः सौराज्यम् । तेन प्रकाशाभिः प्रकाशमानाभिः पौराणां विभूतिभिरैश्वर्यैः । स्वर्गस्याभिष्यन्दोऽतिरिक्तजनस्तस्य वमनमाहरणं कृत्वा, उपनिवेशितोपस्थापितेव बभौ । अत्र कौटिल्यः—'भूतपूर्वमभूतपूर्वं वा जनपदं परदेशप्रवाहेण स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्' इति ॥ २९ ॥

तत्र सौधगतः पश्यन्यमुनां चक्रवाकिनीम् ।
हेमभक्तिमतीं भूमेः प्रवेणीमिव पिप्रिये ॥ ३० ॥

तत्रेति ॥ तत्र मथुरायां सौधगतो हर्म्यारूढः स चक्रवाकिनीं चक्रवाकवतीं यमुनाम् । हेमभक्तिमतीं सुवर्णरचनावतीं भूमेः प्रवेणीं वेणीमिव । 'वेणि' प्रवेणी' इत्यमरः । पश्यन्पिप्रिये प्रीत. । 'प्रीङ् प्रीणने' इति धातोर्दैवादिकाल्लिट् ॥ ३० ॥

सम्प्रति रामव्रतानवृत्तान्तमाह—

सखा दशरथस्यापि जनकस्य च मन्त्रकृत् ।
संचस्कारोभयप्रीत्या मैथिलेयौ यथाविधि ॥ ३१ ॥

सखेति ॥ दशरथस्य जनकस्य च सखा मन्त्रकृन्मन्त्रद्रष्टा स वाल्मीकिरपि । 'सुकर्मपापमन्त्रपुण्येषु कृञः' (पा. ३।२।८९) इति क्विप् । उभयोर्दशरथ-

---

पाठा०—१ 'परम'. २ 'सा'. ३ 'पौरसमृद्धिभिः'. ४ 'विनिवेशिता'. ५ 'हेमभक्तिमयीम्'; 'हेमपङ्क्तिमयीम्'. ६ 'स वेणीम्'. ७ 'अथ'. ८ 'मन्त्रवित्'.

---

टिप्प०—1 स्वर्गस्य सारमादाय निर्मितेव—इति वल्लभः ।

जनकयोः **प्रीत्या** स्नेहेन **मैथिलेयौ** मैथिलीपुत्रौ **यथाविधि** यथाशास्त्रं **संचस्कार** संस्कृतवान्। जातकर्मादिभिरिति शेषः ॥ ३१ ॥

**स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया।**
**कविः कुशलवावेव चकार किल नामतः ॥ ३२ ॥**

**स इति** ॥ स **कवि**र्वाल्मीकिः कुशैर्दर्भैर्लवैर्गोपुच्छलोमभिः। 'लवो लवणकिञ्जल्कपक्ष्मगोपुच्छलोमसु' इति वैजयन्ती। उन्मृष्टो गर्भक्लेदो गर्भोपद्रवो ययोस्तौ **कुशलवोन्मृष्टगर्भक्लेदौ तौ** मैथिलेयौ **तेषां** कुशानां च लवानां **चाख्यया नामतो** नाम्ना यथासंख्यं **कुशलवावेव चकार किल**। कुशोन्मृष्टः कुशः। लवोन्मृष्टो लवः ॥ ३२ ॥

**साङ्गं च वेदमध्याप्य किंचिदुत्क्रान्तशैशवौ।**
**स्वकृतिं गापयामास कविप्रथमपद्धतिम् ॥ ३३ ॥**

**साङ्गमिति** ॥ **किंचिदुत्क्रान्तशैशवा**वतिक्रान्तबाल्यौ तौ **साङ्गं च वेदमध्याप्य कवीना प्रथमपद्धतिम्**। कवितावीजमित्यर्थः। **स्वकृतिं** काव्यं रामायणाख्यं **गापयामास**। गापयतेर्लिट्। शब्दकर्मत्वात् 'गतिबुद्धि-' (पा. १।४।५२) इत्यादिना द्विकर्मकत्वम् ॥ ३३ ॥

**रामस्य मधुरं वृत्तं गायन्तौ मातुरग्रतः।**
**तद्वियोगव्यथां किंचिच्छिथिलीचक्रतुः सुतौ ॥ ३४ ॥**

**रामस्येति** ॥ तौ **सुतौ रामस्य वृत्तं मातुरग्रतो मधुरं गायन्तौ तद्वियोगव्यथां** रामविरहवेदनां **किंचिच्छिथिलीचक्रतुः** ॥ ३४ ॥

**इतरेऽपि रघोर्वंश्यास्त्रयस्त्रेताग्नितेजसः।**
**तद्योगात्पतिवत्नीषु पत्नीष्वासन्द्विसूनवः ॥ ३५ ॥**

**इतरेऽपीति** ॥ **रघोर्वंश्या** वंशे भवाः। त्रेतेत्यग्नयस्त्रेताग्नयः। तेषां तेज इव तेजो येषां ते **त्रेताग्नितेजसः**। **इतरे** रामादन्ये **त्रयो** भरतादयोऽपि **तद्योगा**त्तेषां योगाद्भरतादिसंबन्धात्**पतिवत्नीषु** भर्तृमतीषु जीवत्पतिकासु। स्त्रीविमतीष्वित्यर्थः। 'पतिवत्नी सभर्तृका' इत्यमरः। 'अन्तर्वत्पतिवतोर्नुक्' (पा. ४।१।३२) इति ङीप्प्रत्ययो नुगागमश्च। **पत्नीषु द्विसूनव आसन्**। द्वौ द्वौ सूनू येषां ते द्विसूनव इति विग्रहः। क्वचित्संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत् ॥ ३५ ॥

पाठा०—१ 'सुतौ'. २ 'कविः प्रथमपद्धतिम्'. ३ 'अपरे'.

टिप्प०—1 तनुस्वरूपेण कवरतृणविशेष इत्यन्ये—इति दिनकर०।
2 कीर्तिं स्वकृतिम्। कविप्रथमपद्धतिम्, कवेराद्या पदवीं, तस्मादिदमभ्यस्य प्रसरणाद् प्रथमकविरिति जगति ख्यातिः—इति वल्लभः।

शत्रुघातिनि शत्रुघ्नः सुबाहौ च बहुश्रुते।
मथुराविदिशे सून्वोर्निदधे[1] पूर्वजोत्सुकः ॥ ३६ ॥

शत्रुघातिनीति ॥ पूर्वजोत्सुको ज्येष्ठप्रियः शत्रुघ्नो बहुश्रुते शत्रुघातिनि सुबाहौ च तन्नामकयोः सून्वोर्मथुरा च विदिशा च ते नगर्यौ निदधे। निधाय गत इत्यर्थः ॥ ३६ ॥

भूयस्तपोव्ययो मा भूद्वाल्मीकेरिति सोऽत्यगात्।
मैथिलीतनयोद्गीतनिःस्पन्दमृगमाश्रमम् ॥ ३७ ॥

भूय इति ॥ स शत्रुघ्नो मैथिलीतनययोः कुश-लवयोरुद्गीतेन निःस्पन्दमृगं गीतप्रियतया निश्चलहरिणं वाल्मीकेराश्रमम्। भूयः पुनरपि तपोव्ययः संविधानकरणार्थं तपोहानिर्मा भूदिति हेतोः। अत्यगात्। अतिक्रम्य गत इत्यर्थः ॥ ३७ ॥

वशी विवेश चायोध्यां रथ्यासंस्कारशोभिनीम्।
लवणस्य वधात्पौरैरीक्षितोऽत्यन्तगौरवम्[2] ॥ ३८ ॥

वशीति ॥ वशी स लवणस्य वधाद्धेतोः पौरैः पौरजनैरत्यन्तं गौरवं यस्मिन्कर्मणि तत्तथेक्षितः सन्। रथ्यासंस्कारैस्तोरणादिभिः शोभते या तामयोध्यां विवेश च ॥ ३८ ॥

स ददर्श सभामध्ये सभासद्भिरुपस्थितम्।
रामं सीतापरित्यागादसामान्यपतिं भुवः ॥ ३९ ॥

स इति ॥ स शत्रुघ्नः सभामध्ये सभासद्भिः सभ्यैरुपस्थितं सेवितं सीतापरित्यागाद्भुवोऽसामान्यपतिमसाधारणपतिं रामं ददर्श ॥ ३९ ॥

तमभ्यनन्दत्प्रणतं लवणान्तकमग्रजः।
कालनेमिवधात्प्रीतस्तुराषाडिव शार्ङ्गिणम्[2] ॥ ४० ॥

तमिति ॥ अग्रजो रामो लवणस्यान्तकं हन्तारं प्रणतं तं शत्रुघ्नम्। काल-

पाठा०—१ 'निदधत्'. २ 'ततः'; 'कृती'; 'बली'. ३ 'अतिगौरवमीक्षितः'; 'अधिगौरवमीक्षितः'.

टिप्प०—1 भूयस्तपोव्ययो मा भूत् मा कदाचिन्मुनिर्मां पुनर्भोजनार्थं स्थापयेदिति मार्गान्तरेण जगाम। किंभूतमाश्रमम? मैथिलीतनयोद्गीतनिःस्पन्दमृगं कुशलवसंगीतरामायणाकर्णननिश्चलमृगम्—इति वल्लभः॥ आतिथ्यविधिना यस्तपोव्ययः—इति हेमाद्रिः।

2 विष्णुः शतमुखं कालनेमिनामकं क्रूरदानवमवधीत् इति मात्स्ये (अ. १७७) कथानकम्।

नेमिर्नाम राक्षसः । तस्य वधात्प्रीतः । तुर वेगं सहत इति तुराषाडिन्द्रः 'छन्दसि सहः' ( पा. ३।२।६३ ) इति ण्वि प्रत्यय । यद्वा,-सहतेर्णिचि कृते साहयतेः क्विप् । 'अन्येषामपि दृश्यते' ( पा. ६।३।१३७ ) इति पूर्वपदस्य दीर्घः । 'सहेः साडः सः' ( पा. ८।३।५६ ) इति षत्वम् । शार्ङ्गिणमुपेन्द्रमिव । अभ्यनन्दत् ॥४०॥

स पृष्टः सर्वतो वार्तमाख्यद्राज्ञे न संततिम् ।
प्रत्यर्पयिष्यतः काले कवेराद्यस्य शासनात् ॥ ४१ ॥

स इति ॥ स शत्रुघ्नः पृष्टः सन् । सर्वतो वार्तं कुशलं राज्ञे रामाय । आख्यदाख्यातवान् । चक्षिङो लुङ् । 'चक्षिङः ख्याञ्' ( पा. २।४।५४ ) इति ख्याञादेशः । 'अस्यतिवक्ति-' ( पा. ३।१।५२ ) इत्यङ् । 'आतो लोप इटि च' ( पा. ६।४।६४ ) इत्याकारलोपः । ख्यातेर्वा लुङ् । संततिं कुशलवोत्पत्तिं नाख्यत् । कुतः ? कालेऽवसरे प्रत्यर्पयिष्यत आद्यस्य कवेर्वाल्मीकेः शासनात् ॥४१॥

अथ जानपदो विप्रः शिशुमप्राप्तयौवनम् ।
अवतार्याङ्कशय्यास्थं द्वारि चक्रन्द भूपतेः ॥ ४२ ॥

अथेति ॥ अथ जनपदे भवो जानपदो विप्रः । कश्चिदिति शेषः । अप्राप्तयौवनं शिशुम् । मृतमिति शेषः । भूपते रामस्य द्वारि । अङ्कशय्यास्थं यथा तथाऽवतार्याङ्कस्थत्वेनैवावरोप्य । चक्रन्द चुक्रोश ॥ ४२ ॥

शोचनीयासि वसुधे ! या त्वं दशरथाच्च्युता ।
रामहस्तमनुप्राप्य कष्टात्कष्टतरं गता ॥ ४३ ॥

पाठा०—१ 'वार्ताम्'. २ 'आख्यात्'. ३ 'प्रत्यापयिष्यतः'. ४ 'पुत्रम्' ५ 'दारयाया.'. ६ 'अनु'. ७ 'अनुप्राप्ता'. ८ 'कृत्वा'.

टिप्प०—1 यथा तुराषाडिन्द्रः शार्ङ्गिणमुपेन्द्रमभ्यनन्दत् । किंभूत इन्द्र ? कालनेमिवधात् प्रीतः कालनेमिदानववधान्मुदितः—इति वल्लभः ॥ तुरं वेगं सहते इति 'तुरट्'शब्द आवन्त इति मुग्धबोध० । तुरं त्वरितं साहयत्यभिभवत्यरीन्—इति क्षीरस्वामी ।

2 राज्ञे सर्वतः वार्तमाख्यत् नृपाय कुशलमाचचक्ष, न सन्ततिं न तु सीतायाः पुत्रोत्पत्तिम् । किंभूतस्य कवेः ? काले कुत्रोऽप्यवसरे प्रत्यापयिष्यतः कथयिष्यतः । 'वार्त'शब्द उभयलिङ्गः—इति वल्लभः ।

3 जानपदो विप्र उत्तरकोशलनिवासी द्विज' अप्राप्तयौवनं बालं मृतमङ्कशय्यायाः अवतार्य राज्ञो द्वारि चक्रन्द—इति वल्लभः ।

शोचनीयेति ॥ हे वसुधे ! दशरथाच्च्युता या त्वं रामहस्तमनुप्राप्य कष्टात्कष्टतरं गता सती शोचनीयाऽसि ॥ ४३ ॥

श्रुत्वा तस्य शुचो हेतुं गोप्ता जिह्राय राघवः ।
न ह्यकालभवो मृत्युरिक्ष्वाकुपदमस्पृशत् ॥ ४४ ॥

श्रुत्वेति ॥ गोप्ता रक्षको राघवस्तस्य विप्रस्य शुचः शोकस्य हेतुं पुत्रमरणरूपं श्रुत्वा जिह्राय लज्जितः । कुतः ? हि यस्मादकालभवो मृत्युरिक्ष्वाकूणां पदं राष्ट्रं नास्पृशत् । वृद्धे जीवति यवीयान्न म्रियत इत्यर्थः ॥ ४४ ॥

स मुहूर्तं क्षमस्वेति द्विजमाश्वास्य दुःखितम् ।
यानं सस्मार कौबेरं वैवस्वतजिगीषया ॥ ४५ ॥

स इति ॥ स रामो दुःखितं द्विजं मुहूर्तं क्षमस्वेत्याश्वास्य वैवस्वतस्यान्तकस्य जिगीषया जेतुमिच्छया कौबेरं यानं पुष्पकं सस्मार ॥ ४५ ॥

आत्तशस्त्रस्तदध्यास्य प्रस्थितः स रघूद्वहः ।
उच्चचार पुरस्तस्य गूढरूपा सरस्वती ॥ ४६ ॥

आत्तेति ॥ स रघूद्वहो राम आत्तशस्त्रः सन् । तत् पुष्पकमध्यास्य प्रस्थितः । अथ तस्य पुरो गूढरूपा सरस्वत्यशरीरा वागुच्चचारोद्बभूव ॥ ४६ ॥

राजन् ! प्रजासु ते कश्चिदपचारः प्रवर्तते ।
तमन्विष्य प्रशमयेर्भवितासि ततः कृती ॥ ४७ ॥

राजन्निति ॥ हे राजन् ! ते प्रजासु कश्चिदपचारो वर्णधर्मव्यतिक्रमः प्रवर्तते । तमपचारमन्विष्य प्रशमयेः । ततः कृती कृतकृत्यो भवितासि भविष्यसि ॥ ४७ ॥

इत्याप्तवचनाद्रामो विनेष्यन्वर्णविक्रियाम् ।
दिशः पपात पत्रेण वेगनिष्कम्पकेतुना ॥ ४८ ॥

इतीति ॥ इत्याप्तवचनाद्रामो वर्णविक्रियां वर्णापचारं विनेष्यन्नपनेष्यन् वेगेन निष्कम्पकेतुना पत्रेण वाहनेन पुष्पकेण । 'पत्रं वाहनपक्षयोः' इत्यमरः । दिशः पपात धावति स्म ॥ ४८ ॥

अथ धूमाभिताम्राक्षं वृक्षशाखावलम्बिनम् ।
ददर्श कंचिदैक्ष्वाकस्तपस्यन्तमधोमुखम् ॥ ४९ ॥

पाठा०—१ 'वपुः'. २ 'सहस्व'. ३ 'जिघांसया.' ४ 'च'. ५ 'यास्य'. ६ 'अन्विष्यन्'. ७ 'विमृश्यन्'. ८ 'विलम्बिनम्'. ९ 'इक्ष्वाकुः'.

1 द्वितीयपक्षेऽपि दशरथात्प्रियं कष्टम्, ततो रामराज्ये कष्टतरम्—इति हेमाद्रिः।

**अथेति** ॥ अथेक्ष्वाकुवंशप्रभव ऐक्ष्वाको रामः। 'कोपधाच्च' (पा. ४।२।१३२) इत्यणि कृते 'दाण्डिनायन-' (पा. ६।४।१७४) इत्यादिनोकारलोपनिपातः। **धूमेन पीयमानेनाभिताम्राक्षं वृक्षशाखावलम्बिनमधोमुखं तपस्यन्तं** तपश्चरन्तं **कंचित्पुरुषं ददर्श** ॥ ४९ ॥

**पृष्टनामान्वयो राज्ञा स किलाचष्ट धूमपः ।**
**आत्मानं शम्बुकं नाम शूद्रं सुरपदार्थिनम् ॥ ५० ॥**

**पृष्टेति** ॥ **राज्ञा नाम** चान्वयश्च नामान्वयौ, तौ पृष्टौ यस्य स तथोक्तः। धूमं पिबतीति **धूमपः**। 'सुपि-' (पा. ३।२।४) इति योगविभागात्कप्रत्ययः। **स** पुरुष **आत्मानं सुरपदार्थिनं** स्वर्गार्थिनम्। अनेन प्रयोजनमपि पृष्टमिति ज्ञेयम्। **शम्बुकं नाम शूद्रमाचष्ट** बभाषे **किल** ॥ ५० ॥

**तपस्यनधिकारित्वात्प्रजानां तमघावहम् ।**
**शीर्षच्छेद्यं परिच्छिद्य नियन्ता शस्त्रमाददे ॥ ५१ ॥**

**तपसीति** ॥ **तपस्यनधिकारित्वात्प्रजानामघावहं** दुःखावहं **तं** शूद्रं **शीर्षच्छेद्यम्**। 'शीर्षच्छेदाद्यच्च' (पा. ५।१।६५) इति यत्प्रत्ययः। **परिच्छिद्य** निश्चित्य **नियन्ता** रक्षको रामः **शस्त्रमाददे** जग्राह ॥ ५१ ॥

**स तद्वक्त्रं हिमक्लिष्टकिञ्जल्कमिव पङ्कजम् ।**
**ज्योतिष्कणाहतश्मश्रु कण्ठनालादपातयत् ॥ ५२ ॥**

**स इति** ॥ **स** रामो **ज्योतिष्कणैः** स्फुलिङ्गैराहतानि दग्धानि **श्मश्रूणि** यस्य तत्तस्य **वक्त्रम्**। **हिमक्लिष्टकिञ्जल्कं पङ्कजमिव**। **कण्ठ एव नालं तस्मादपातयत्** ॥ ५२ ॥

**कृतदण्डः स्वयं राज्ञा लेभे शूद्रः सतां गतिम् ।**
**तपसा दुश्चरेणापि न स्वमार्गविलङ्घिना ॥ ५३ ॥**

---

टिप्प०—1 'शूद्रस्य द्विजशुश्रूषा' (याज्ञ० आचार० १२०) इत्युक्तत्वात्तस्यानधिकारिणः -इति दिनकर०।

2 तपस्यनधिकारित्वात्।...शूद्रस्य द्विजधर्माचरणं लोकव्यसनकरम्, शूद्रस्योपवासमात्रोऽधिकारः-इति वल्लभः॥ शास्ता रामः शूद्रस्य तपस्यनधिकाराल्लोकानां दुःखावहमत एव शीर्षच्छेदमर्हतीति शीर्षच्छेद्यं तं ज्ञात्वा शस्त्रं जग्राह-इति दिनकर०।

3 तुषारेण क्लिष्टा मलिनाः केसरा यस्य तादृशं पद्ममिवाग्निकणैर्दग्धं श्मश्रु यस्य तत्तस्य शूद्रस्य वक्त्रं कण्ठनालादच्छैत्सीत्-इति दिनकर०।

कृतेति ॥ शूद्रः शम्बुको राज्ञा स्वयं कृतदण्डः कृतशिक्षः सन् । सतां गतिं लेभे । दुश्चरेणापि स्वमार्गविलङ्घिना । अनधिकारदुष्टेनेत्यर्थः । तपसा न लेभे । अत्र मनुः (८।३१८) 'राजभिः कृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥' इति ॥ ५३ ॥

रघुनाथोऽप्यगस्त्येन मार्गसंदर्शितात्मना ।
महौजसा संयुयुजे शरत्काल इवेन्दुना ॥ ५४ ॥

रघुनाथ इति ॥ रघुनाथोऽपि मार्गसंदर्शितात्मना महौजसाऽगस्त्येन । इन्दुना शरत्काल इव संयुयुजे संगतः । इन्दावपि विशेषणं योज्यम् । 'रघुनाथ' इत्यत्र क्षुभ्नादित्वाण्णत्वाभावः ॥ ५४ ॥

कुम्भयोनिरलंकारं तस्मै दिव्यपरिग्रहम् ।
ददौ दत्तं समुद्रेण पीतेनेवात्मनिष्क्रयम् ॥ ५५ ॥

कुम्भेति ॥ कुम्भयोनिरगस्त्यः पीतेन समुद्रेणात्मनिष्क्रयमिवात्ममोचनमूल्यमिव दत्तम् । अत एव परिगृह्यत इति व्युत्पत्त्या दिव्यपरिग्रहः । दिव्यानां परिग्राह्य इत्यर्थः । तमलंकारं तस्मै रामाय ददौ ॥ ५५ ॥

तं दधन्मैथिलीकण्ठनिर्व्यापारेण बाहुना ।
पश्चान्निववृते रामः प्राक्परासुर्द्विजात्मजः ॥ ५६ ॥

तमिति ॥ मैथिलीकण्ठनिर्व्यापारेण बाहुना तमलंकारं दधद्रामः पश्चान्निववृते निवृत्तः । परासुर्मृतो द्विजात्मजः प्राक् रामात्पूर्वं निववृते ॥ ५६ ॥

तस्य पूर्वोदितां निन्दां द्विजः पुत्रसमागतः ।
स्तुत्या निवर्तयामास त्रातुर्वैवस्वतादपि ॥ ५७ ॥

तस्येति ॥ पुत्रसमागतः पुत्रेण संगतो द्विजो वैवस्वतादन्तकादपि त्रातु

पाठा०—१ 'मार्गे संदर्शितात्मना'. २ 'समन्वितः'.

टिप्प०—1 मार्गसंदर्शितात्मना पथि प्रदर्शितात्मरूपेण । यथा शरत्काल इन्दुना संयुज्यते। शरत्सुरयः—इति वल्लभः।

2 तस्मै मुनये समुद्रेण निपीतशेषेणात्मनिष्क्रयं दत्तमिव । पीतेनाग्निना मुंच मामित्याः [illegible]

[illegible] वरितं नदर। यो निरस्य सर्वं शर्वं मृत्युमुखमनीनयत् ॥"—इति वल्लभः।

रक्षकस्य। 'भीत्रार्थानां भयहेतुः' (पा. १।४।२५) इत्यपादानात्पञ्चमी। तस्य रामस्य पूर्वोदितां पूर्वोक्तां निन्दां स्तुत्वा निवर्तयामास ॥ ५७ ॥

तमध्वराय मुक्ताश्वं रक्षःकपिनरेश्वराः।
मेघाः सस्यमिवाम्भोभिरभ्यवर्षन्नुपायनैः ॥ ५८ ॥

तमिति ॥ अध्वरायाश्वमेधाय मुक्ताश्वं तं रामं रक्षःकपिनरेश्वराः सुग्रीवविभीषणादयो राजानश्च। मेघा अम्भोभिः सस्यमिव। उपायनैरभ्यवर्षन् ॥ ५८ ॥

दिग्भ्यो निमन्त्रिताश्चैनमभिजग्मुर्महर्षयः।
न भौमान्येव धिष्ण्यानि हित्वा ज्योतिर्मयान्यपि ॥ ५९ ॥

दिग्भ्य इति ॥ निमन्त्रिता आहूता महर्षयश्च भूम्याः संबन्धीनि भौमानि धिष्ण्यानि स्थानान्येव न। 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः। किंतु ज्योतिर्मयानि नक्षत्ररूपाणि धिष्ण्यान्यपि हित्वा दिग्भ्य एनं राममभिजग्मुः ॥५९॥

उपशल्यनिविष्टैस्तैश्चतुर्द्वारमुखी बभौ।
अयोध्या सृष्टलोकेव सद्यः पैतामही तनुः ॥ ६० ॥

उपेति ॥ चत्वारि द्वाराण्येव मुखानि यस्याः सा चतुर्द्वारमुख्ययोध्या। उपशल्येषु ग्रामान्तेषु निविष्टैः। 'ग्रामान्त उपशल्यं स्यात्' इत्यमरः। तैर्महर्षिभिः। सद्यः सृष्टलोका पितामहस्येयं पैतामही तनुर्मूर्तिरिव। बभौ ॥ ६० ॥

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः।
अनन्यजानेः सैवासीद्यस्माज्जाया हिरण्मयी ॥ ६१ ॥

श्लाघ्य इति ॥ वैदेह्यास्त्यागोऽपि श्लाघ्यो वर्ण्य एव। कुतः? यस्मात् प्राग्वंशः प्राचीनस्थूणो यज्ञशालाविशेषः। तद्वासिनः। नास्त्यन्या जाया यस्य तस्यानन्यजानेः। 'जायाया निङ्' (पा. ५।४।१३४) इति समासान्तो निङादेशः। पत्यू रामस्य हिरण्मयी सौवर्णी। 'दाण्डिनायन–' (पा.६।४।१७४) आदिसूत्रेण निपातः। सा निजैव जाया पत्न्यासीत्। कविवाक्यमेतत् ॥ ६१ ॥

---

पाठा०—१ 'आसीद्यस्सैव'; 'यस्यासीत्सैव'; 'तस्यासीत्सैव'.

---

टिप्प०—1 'ग्रामान्त उपशल्यं स्यात्' इत्यत्र 'ग्राम'शब्दो नगरोपलक्षणार्थे, यथा 'ग्रामशूकरो न भक्ष्यः' इत्यादिवत्–इति दिनकर०।

2 प्राग्वंशे देवयजने प्राग्देशस्थितस्य, न विद्यतेऽन्या जाया यस्य तस्यानन्यजानेः रामस्य सैमीव सीता स्वर्णरूपा भार्याऽभूत्, मदारस्य यागानर्हत्वेऽपि पत्न्यन्तरं न स्वीचकारेत्यर्थः। 'प्राग्वंशः प्राग्घविर्गेहात्' इत्यमरः–इति दिनकर०।

विधेरधिकसंभारस्ततः प्रववृते मखः ।
आसन्यत्र क्रियाविघ्ना राक्षसा एव रक्षिणः ॥ ६२ ॥

**विधेरिति** ॥ ततो **विधेः** शास्त्रादधिकसंभारोऽतिरिच्यमानपरिकरो **मखः प्रववृते** प्रवृत्तः । **यत्र** मखे । विहन्यन्त एभिरिति विघ्नाः प्रत्यूहाः । 'घनर्थे कविधानम्' (वा. २२०४) इति कः । **क्रियाविघ्ना** अनुष्ठानविघातका **राक्षसा एव रक्षिणो** रक्षका **आसन्** ॥ ६२ ॥

अथ प्राचेतसोपज्ञं रामायणमितस्ततः ।
मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ ॥ ६३ ॥

**अथेति** ॥ **अथ मैथिलेयौ** मैथिलीतनयौ । 'स्त्रीभ्यो ढक्' (पा. ४।१।१२०) **कुशलवौ गुरुणा** वाल्मीकिना **चोदितौ** प्रेरितौ सन्तौ । प्राचेतसो वाल्मीकिः । उपज्ञायत इत्युपज्ञा । 'आतश्चोपसर्गे' (पा. ३।३।१०६) इति कर्मण्यङ्प्रत्ययः । प्राचेतसस्योपज्ञा **प्राचेतसोपज्ञम्** । प्राचेतसेनादौ ज्ञातमित्यर्थः । 'उपज्ञा ज्ञानमाद्यं स्यात्' इत्यमरः । 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' (पा. २।४।२१) इति नपुंसकत्वम् । अय्यते ज्ञायतेऽनेनेत्ययनम् । रामस्यायनं चरितं **रामायणं** रामायणाख्यं काव्यम् । 'पूर्वपदात्संज्ञायामगः' (पा. ८।४।३) इति णत्वम् । उत्तरायणमितिवत् । **इतस्ततोजगतुः** । गायतेर्लिट् ॥ ६३ ॥

वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किंनरस्वनौ ।
किं तद्येन मनो हर्तुमलं स्यातां न शृण्वताम् ॥ ६४ ॥

**वृत्तमिति** ॥ **रामस्य वृत्तं** वर्ण्यम् । वस्त्विति शेषः । **वाल्मीकेः कृतिः** काव्यम् । गेयमिति शेषः । **तौ** कुशलवौ **किंनरस्वनौ** किंनरकण्ठौ गायकौ । पुनरिति शेषः । अत एव **तत्किं येन** निमित्तेन तौ **शृण्वतां मनो हर्तुमलं** शक्तौ **न स्याताम्** । सर्वं सरसमित्यर्थः ॥ ६४ ॥

रूपे गीते च माधुर्यं तयोस्तज्ज्ञैर्निवेदितम् ।
ददर्श सानुजो रामः शुश्राव च कुतूहली ॥ ६५ ॥

**रूप इति** ॥ तं जानन्तीति तज्ज्ञाः, तैस्तज्ज्ञैरभिज्ञैर्निवेदितं **तयोः** कुशलवयो

---

पाठा०—१ 'नोदितौ'.

---

टिप्प०—1 तयोर्वधीतश्रवणे दत्तचित्ताऽभूत्, मुखे यस्याः सा सुमा सायम्नुकणशायिनी निद्रांग ववसदीव वमौ–इति दिनकर०।

रूपे आकारे गीते च माधुर्यं रामणीयकं सानुजो रामः कुतूहली सानन्दः सन्, यथासंख्यं ददर्श शुश्राव च ॥ ६५ ॥

तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ।
हिमनिष्यन्दिनी प्रातर्निर्वातेव वनस्थली ॥ ६६ ॥

तदिति ॥ तयोर्गीतश्रवण एकाग्राऽऽसक्ता। अश्रुमुखी। आनन्दादिति भावः। संसत् सभा प्रातर्हिमनिष्यन्दिनी निर्वाता वातरहिता वनस्थलीव। बभौ शुशुभे। आनन्दपारवश्याक्षिष्पन्दमास्त इत्यर्थः ॥ ६६ ॥

वयोवेषविसंवादि रामस्य च तयोस्तदा।
जनता प्रेक्ष्य सादृश्यं नाक्षिकम्पं व्यतिष्ठत ॥ ६७ ॥

वय इति ॥ जनता जनानां समूहः। 'ग्रामजनबन्धुसहायेभ्यस्तल्' (पा. ४।३।७) इति तल्प्रत्ययः। वयोवेषाभ्यामेव विसंवादि विलक्षणं तदा तयोः कुशलवयो रामस्य च सादृश्यं प्रेक्ष्य। नास्त्यक्षिकम्पो यस्मिन्कर्मणि तद्यथा तथा, नञर्थस्य नशब्दस्य बहुव्रीहिः। व्यतिष्ठताविष्ठत्। 'समवप्रविभ्यः स्थः' (पा. १।३।२२) इत्यात्मनेपदम्। विस्मयादनिमिषमद्राक्षीदित्यर्थः ॥ ६७ ॥

उभयोर्न तथा लोकः प्रावीण्येन विसिष्मिये।
नृपतेः [3]प्रीतिदानेषु वीतस्पृहतया यथा ॥ ६८ ॥

उभयोरिति ॥ लोको जन उभयोः कुमारयोः प्रावीण्येन नैपुण्येन तथा न विसिष्मिये न विस्मितवान्, यथा नृपतेः प्रीतिदानेषु वीतस्पृहतया नैःस्पृह्येण विसिष्मिये ॥ ६८ ॥

गेये को नु विनेता वां कस्य चेयं [4]कृतिः कवेः।
इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम् ॥ ६९ ॥

गेय इति ॥ गेये गीते को नु वां युवयोर्विनेता शिक्षकः। 'नु'शब्दः प्रश्ने।

पाठा०—१ 'च सा'. २ 'वीक्षापन्ना'; 'वीक्ष्यापन्ना'; 'व्रीडापन्ना'; 'विस्मयेन'. ३ 'प्रीतिदानेन'. ४ 'कवेः कृतिः'.

टिप्प०—1 'वां' इति पदैकदेशप्रयोगः, यथा-सत्या सत्यभामा, भीमो भीमसेनः, 'कस्य च कवेरियं कृतिः?' इति स्वय राज्ञा पृष्टौ तौ कुशलवौ वाल्मीकिमशंसताम्। 'युवामित्यर्थेऽव्ययम्' इति कृष्णभट्टाः। वां युवयोः संबन्धिनः कस्य कवेरिति केचिद्व्याचक्षिरे। वां युवयोर्मध्ये कस्य-इत्यपरे। 'षष्ठीचतुर्थीद्वितीयासु वस्नसौ' इति विभक्तीनां विभक्तिनिर्देशो तज्ज्ञापकादन्यत्रापि वामादेश इत्यपरे। 'गेये केन विनीतिर्वाम्' इति दक्षिणावर्तः-इति दिनकर०। हेमाद्रि-वल्लभादयस्तु 'गेये केन विनीतौ वां' इति पपठुः। प्रक्रियाप्रसादे-वामिति युवामित्यर्थे इति।

'नु पृच्छायां वितर्के च' इत्यमरः। इयं च कस्य कवेः कृतिरिति राज्ञा स्वयं **पृष्टौ तौ कुशलवौ वाल्मीकिमशंसताम्** उक्तवन्तौ। विनेतारं कविं चेत्यर्थः। **'गेये केन विनीतौ वाम्'** इति पाठे 'वा' इति युष्मदर्थप्रतिपादकमव्ययं द्रष्टव्यम्। तथा चायमर्थः—केन पुंसा वां युवां गेये गीतविषये विनीतौ शिक्षितौ ? कर्मणि निष्ठाप्रत्ययः ॥ ६९ ॥

**अथ सावरजो रामः प्राचेतसमुपेयिवान्।**
**ऊरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत् ॥ ७० ॥**

अथेति ॥ **अथ सावरजो रामः प्राचेतसं** वाल्मीकि**मुपेयिवान्** प्राप्तः सन्। **देह**मात्मानं **ऊरीकृत्य**। आत्मानं स्थापयित्वेत्यर्थः। **राज्यमस्मै** प्राचेताय **न्यवेदयत्** समर्पितवान् ॥ ७० ॥

**स तावाख्याय रामाय मैथिलेयौ तदात्मजौ।**
**कविः कारुणिको वव्रे सीतायाः संपरिग्रहम् ॥ ७१ ॥**[5]

**स** इति ॥ करुणा प्रयोजनमस्य **कारुणिको** दयालुः। 'प्रयोजनम्' (पा. ५।१।१०९) इति ठञ्। 'स्याद्दयालुः कारुणिकः' इत्यमरः। **स** कवी **रामाय तौ मैथिलेयौ तदात्मजौ** रामसुतावाख्याय **सीतायाः संपरिग्रहं** स्वीकारं **वव्रे** ययाचे ॥ ७१ ॥

**तात! शुद्धा समक्षं नः स्नुषा ते जातवेदसि।**
**दौरात्म्याद्रक्षसस्तां तु नात्रत्याः श्रद्दधुः प्रजाः ॥ ७२ ॥**

तातेति ॥ हे **तात! ते स्नुषा** सीता **नो**ऽस्माकम्। अक्ष्णोः समीपं **समक्षम्**। 'अव्ययीभावे शरत्प्रभृतिभ्यः' (पा.५।४।१०७) इति समासान्तष्टच्। **जातवेदसि** वह्नौ **शुद्धा**। नास्माकमविश्वास इत्यर्थः। किंतु **रक्षसो** रावणस्य **दौरात्म्या**-**दत्रत्याः प्रजास्तां न श्रद्दधुर्न** विशश्वसुः ॥ ७२ ॥

**ताः स्वचारित्रमुद्दिश्य प्रत्याययतु मैथिली।**
**ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया ॥ ७३ ॥**

ता इति ॥ **मैथिली स्वचारित्रमुद्दिश्य ताः** प्रजाः **प्रत्याययतु** विश्वासयतु। विश्वासस्य बुद्धिरूपत्वात् 'णौ गमिरबोधने' (पा.२।४।४६) इति इणो गम्या-

पाठा०—१ 'ऊरीकृत्य'. २ 'रामस्य'. ३ 'तदात्मजौ'. ४ 'तं परिग्रहम्'. ५ 'तदाकर्ण्य यशस्तस्य रामो राजीवलोचनः। सह दर्शविषादाभ्यां युगपत्रं प्रोक्षयात्मुनिम् ॥'.

देशो नास्ति । ततोऽनन्तरं पुत्रवतीमेनां सीता त्वदाज्ञया प्रतिपत्स्ये स्वीकरिष्ये ॥ ७३ ॥

इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः ।
शिष्यैरानाययामास स्वसिद्धिं नियमैरिव ॥ ७४ ॥

इतीति ॥ राज्ञेति प्रतिश्रुते प्रतिज्ञाते सति मुनिराश्रमाज्जानकीं शिष्यैः प्रयोज्यैः स्वसिद्धिं स्वार्थसिद्धिं नियमैस्तपोभिरिव । आनाययामास ॥ ७४ ॥

अन्येद्युरथ काकुत्स्थः संनिपात्य पुरौकसः ।
कविमाह्वाययामास प्रस्तुतप्रतिपत्तये ॥ ७५ ॥

अन्येद्युरिति ॥ अथ काकुत्स्थो राम । अन्येद्युरन्यस्मिन्नहनि प्रस्तुतप्रतिपत्तये प्रकृतकार्यानुसधानाय पुरौकसः पौरान् सनिपात्य मेलयित्वा कविं वाल्मीकिम् । आह्वाययामासाकारयामास ॥ ७५ ॥

स्वरसंस्कारवत्यासौ पुत्राभ्यामथ सीतया ।
ऋचेवोदर्चिषं सूर्यं राम मुनिरुपस्थितः ॥ ७६ ॥

स्वरेति ॥ अथ स्वर उदात्तादि । संस्कारः शब्दशुद्धि । तद्वत्या ऋचा सावित्र्योदर्चिषं सूर्यमिव । पुत्राभ्यामुपलक्षितया सीतया करणेनोदर्चिषं राममसौ मुनिरुपस्थित उपतस्थे ॥ ७६ ॥

कापायपरिवीतेन स्वपदार्पितचक्षुषा ।
अन्वमीयत शुद्धेति शान्तेन वपुषैव सा ॥ ७७ ॥

कापायेति ॥ कपायेण रक्त कापायम् । 'तेन रक्त रागात्' ( पा. ४।२।१ ) इत्यण् । तेन परिवीतेन संवृतेन स्वपदार्पितचक्षुषा शान्तेन प्रसन्नेन वपुषैव सा सीता शुद्धा साध्वीत्यन्वमीयतानुमिता ॥ ७७ ॥

जनास्तदालोकपथात्प्रतिसंहृतचक्षुषः ।
तस्थुस्तेऽवाङ्मुखाः सर्वे फलिता इव शालय. ॥ ७८ ॥

पाठा०—१ 'आह्वाययामास'. २ 'सनिमन्त्र्य'. ३ 'च'; 'इव'. ४ 'सह'. ५ 'सा तथा'. ६ 'अधोमुखा', 'उर्वीमुखा'.

टिप्प०—1 'नीवह्यो प्रतिषेधो वक्तव्य' इत्युक्तत्वात् शिष्यै ' इति तृतीया—इति दिनकर०।
2 स्वराणामुदात्तादीनां संस्कार साधुत्वं तद्युक्तया ऋचा हुतदीप्तिं रविमिव मुनि पुत्राभ्यामुपलक्षितया सीतया राममुपस्थित —इति दिनकर०॥ यथा मुनि ऋचा ('ॐ तत्सवितुर्वरेण्यम्' इति ) ऋग्वेदमन्त्रेणोदर्चिषमुदित सूर्यमुपतिष्ठति स्तौति । किंभूतया ऋचा ? स्वरसंस्कारवत्या, स्वरा उदात्तादय । 'निरवद्य'शब्दोच्चारणे सिद्धि । छन्दोलक्षणयुक्तया वा—इति वल्लभ' ।
3 तपस्विन्यो हि कापाय वस्त्र परिदधति—इति वल्लभ' ।

जना इति ॥ तस्याः सीतायाः क्रमेण आलोकपथाद्दर्शनमार्गात् प्रतिसंहृतचक्षुषो निवर्तितदृष्टयः सर्वे जनाः। फलिताः शालय इव अवाङ्मुखा अवनतमुखास्तस्थुः ॥ ७८ ॥

तां दृष्टिविषये भर्तुर्मुनिरास्थितविष्टरः।
कुरु निःसंशयं वत्से! स्ववृत्ते लोकमित्यशात् ॥ ७९ ॥

तामिति ॥ आस्थितविष्टरोऽधिष्ठितासनो मुनिः। हे वत्से! भर्तुर्दृष्टिविषये समक्षं स्ववृत्ते स्वचरित्रे विषये लोकं निःसंशयं कुरु। इति तां सीतामशाच्छास्ति स्म ॥ ७९ ॥

अथ वाल्मीकिशिष्येण पुण्यमावर्जितं पयः।
आचम्योदीरयामास सीता सत्यां सरस्वतीम् ॥ ८० ॥

अथेति ॥ अथ वाल्मीकिशिष्येणावर्जितं दत्तं पुण्यं पय आचम्य सीता सत्यां सरस्वतीं वाचमुदीरयामासोच्चारयामास ॥ ८० ॥

वाङ्मनःकर्मभिः पत्यौ व्यभिचारो यथा न मे।
तथा विश्वंभरे देवि! मामन्तर्धातुमर्हसि ॥ ८१ ॥

वाङ्मन इति ॥ वाङ्मनःकर्मभिः पत्यौ विषये मे व्यभिचारः स्खलितं न यथा नास्ति यदि तथा तर्हि। विश्वं बिभर्तीति विश्वंभरा भूमिः। 'संज्ञायां भृतृ-' (पा. ३।२।४६) इत्यादिना खच्प्रत्ययः। 'अरुर्द्विषत्-' (पा. ६।३।६७) इत्यादिना मुमागमः। हे विश्वंभरे देवि! मामन्तर्धातुं गर्भे वासयितुमर्हसि ॥ ८१ ॥

एवमुक्ते तया साध्व्या रन्ध्रात्सद्योभवाद्भुवः।
शातह्रदमिव ज्योतिः प्रभामण्डलमुद्ययौ ॥ ८२ ॥

एवमिति ॥ साध्व्या पतिव्रतया तया सीतयैवमुक्ते सति सद्योभवाद्भुवो रन्ध्राच्छातह्रदं वैद्युतं ज्योतिरिव प्रभामण्डलमुद्ययौ ॥ ८२ ॥

तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी।
समुद्ररशना साक्षात्प्रादुरासीद्वसुंधरा ॥ ८३ ॥

---

पाठा०—१ 'ततः'. २ 'निषादिनी'. ३ 'समुद्रवसना'.

---

टिप्प०—1 तदा सद्योभवात्तत्क्षणमुत्पन्नाद् शातह्रदाया विद्युतः संबन्धि शातह्रदं ज्योतिरिव प्रभामण्डलमुत्थितम्-इति दिनकर०।

तत्रेति ॥ तत्र प्रभामण्डले **नागफणोत्क्षिप्ते सिंहासने निषेदुष्यासीना समुद्ररशना** समुद्रमेखला **साक्षात्**। वसूनि धारयतीति **वसुंधरा** भूमिः। 'खचि ह्रस्वः' (पा. ६।४।९४) इति ह्रस्वः। **प्रादुरासीत्** ॥ ८३ ॥

**सा सीतामङ्कमारोप्य भर्तृप्रणिहितेक्षणाम्।**
**मा मेतिव्याहरत्येव तस्मिन्पातालमभ्यगात् ॥ ८४ ॥**

सेति ॥ **सा** वसुंधरा भर्तरि **प्रणिहितेक्षणां** दत्तदृष्टिं **सीतामङ्कमारोप्य तस्मिन्**भर्तरि रामे **मा मेति** मा हरेति **व्याहरति** वदत्येव। व्याहरन्तमनादृत्येत्यर्थः। 'षष्ठी चानादरे' (पा. २।३।३८) इति सप्तमी। **पातालमभ्यगात्**॥८४॥

**धरायां तस्य संरम्भं सीताप्रत्यर्पणैषिणः।**
**गुरुर्विधिबलापेक्षी शमयामास धन्विनः ॥ ८५ ॥**

धरायामिति ॥ सीताप्रत्यर्पणमिच्छतीति तथोक्तस्य **धन्विन** आत्तधनुष्कस्य रामस्य **धरायां** विषये **संरम्भं विधिबलापेक्षी** दैवशक्तिदर्शी **गुरु**र्मेधा **शमयामास**। अवश्यंभावी विधिरिति भावः ॥ ८५ ॥

**ऋषीन्विसृज्य यज्ञान्ते सुहृदश्च पुरस्कृतान्।**
**रामः सीतागतं स्नेहं निदधे तदपत्ययोः ॥ ८६ ॥**

ऋषीनिति ॥ **रामो यज्ञान्ते पुरस्कृता**न्पूजितान्। **ऋषीन्सुहृदश्च विसृज्य सीतागतं स्नेहं तदपत्ययोः** कुशलवयो**र्निदधे** ॥ ८६ ॥

**युधाजितश्च संदेशात्स देशं सिन्धुनामकम्।**
**ददौ दत्तप्रभावाय भरताय भृतप्रजः ॥ ८७ ॥**

**युधाजित इति** ॥ किंच, **भृतप्रजः स रामो युधाजितो** भरतमातुलस्य

पाठा०—१ 'भर्तरि प्रहितेक्षणाम्'. २ 'रसायाम्'. ३ 'सीताम्युद्धरणैषिणः'. ४ 'युधाजितस्य'. ५ 'दिष्टप्रभावाय'. ६ 'धृतप्रजः'.

टिप्प०—1 तस्यां सभायां नागस्य शेषस्य फणाभिरुत्क्षिप्ते सिंहासने उपविष्टा समुद्रा एव वसनं यस्याः सा पृथ्वी साक्षात्प्रत्यक्षा प्रकटीबभूव-इति दिनकर०।

2 संरम्भं विधेर्बलस्य यद्बलं तस्य द्रष्टा मुनिर्निवर्तयामास—इति दिनकर०। 'विधिर्बलवान्, नाथ हे पौरुषावसरः' इति स्वयम्भुवा दृष्टो स्वयमागत्य निषिद्ध'-इति वल्लभः।

3 भरतमातुलस्य संदेशात् सिन्धुकूलं देशं भरताय ददौ। वत्स! मातुलेन संदिष्टं यथा दुष्टैर्गन्धर्वैराक्रान्तोऽयं देशस्त्वद्गच्छ विद्रावणाय-इति वल्लभः। युधाजितो मातुल आत्मीयक देशं संदेशप्रेषणाद्भरताय ददौ, गन्धर्वाक्रान्तत्वाज्जेतुमशक्यम्-इति वल्लभः।

संदेशात्सिन्धुनामकं देशं दत्तप्रभावाय दत्तैश्वर्याय । रामेणेति शेषः । भरताय ददौ ॥ ८७ ॥

भरतस्तत्र गन्धर्वान्युधि निर्जित्य केवलम् ।
आतोद्यं ग्राहयामास समत्याजयदायुधम् ॥ ८८ ॥

भरत इति ॥ तत्र सिन्धुदेशे भरतोऽपि युधि गन्धर्वान्निर्जित्य केवलमेकमातोद्यं वीणाम् । 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् । चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ।' इत्यमरः । ग्राहयामास । आयुधं समत्याजयत् त्याजितवान् । प्रहित्यज्योर्ण्यन्तयोर्द्विकर्मकत्वं नित्यमित्यनुसंधेयम् ॥ ८८ ॥

स तक्षपुष्कलौ पुत्रौ राजधान्योस्तदाख्ययोः ।
अभिषिच्याभिषेकार्हौ रामान्तिकमगात्पुनः ॥ ८९ ॥

स इति ॥ स भरतः । अभिषेकार्हौ तक्षपुष्कलौ नाम पुत्रौ तदाख्ययोः । तक्षपुष्कलाख्ययोरित्यर्थः । पुष्कलं पुष्कलावत्यां तक्षं तक्षशिलायामिति राजधान्योर्नगर्योरभिषिच्य पुना रामान्तिकमगात् ॥ ८९ ॥

अङ्गदं चन्द्रकेतुं च लक्ष्मणोऽप्यात्मसंभवौ ।
शासनाद्रघुनाथस्य चक्रे कारापथेश्वरौ ॥ ९० ॥

अङ्गदमिति ॥ लक्ष्मणोऽपि रघुनाथस्य रामस्य शासनादङ्गदं चन्द्रकेतुं च तदाख्यावात्मसंभवौ पुत्रौ । कारापथो नाम देशः । तस्येश्वरौ चक्रे ॥९०॥

इत्यारोपितपुत्रास्ते जननीनां जनेश्वराः ।
भर्तृलोकप्रपन्नानां निवापान्विदधुः क्रमात् ॥ ९१ ॥

इतीति ॥ इत्यारोपितपुत्रास्ते जनेश्वरा रामादयो भर्तृलोकप्रपन्नानां स्वर्यातानां जननीनां क्रमान्निवापाञ्श्राद्धादीन्विदधुश्चक्रुः ॥ ९१ ॥

उपेत्य मुनिवेषोऽथ कालः प्रोवाच राघवम् ।
रहःसंवादिनौ पश्येदावां यस्तं त्यजेरिति ॥ ९२ ॥

पाठा०—१ 'आयुधान्'. २ 'तक्षपुष्करौ'. ३ 'मुनिवेषेण'.

टिप्प०—1 ननु 'तक्षशिला-पुष्करवत्योर्नगर्योः 'तक्ष-पुष्कर' संज्ञे कथम् ? उच्यते,-समुदायेषु प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' इति न्यायात् 'सत्यासत्यवाम्' इतिवददोषः-इति दिनकर० ।

2 कारापथेश्वरौ चन्द्रपथप्रभु-इति वल्लभः।

उपेत्येति ॥ अथ कालोऽन्तको मुनिवेषः सन्नुपेत्य राघवं प्रोवाच । किमित्याह—रहस्येकान्ते संवादिनौ संभाषिणावावां यः पश्येत् । रहस्यभङ्गं कुर्यादित्यर्थः । [1]तं त्यजेरिति ॥ ९२ ॥

तथेति प्रतिपन्नाय विवृतात्मा नृपाय सः ।
आचख्यौ दिवमध्यास्व शासनात्परमेष्ठिनः ॥ ९३ ॥

तथेति ॥ स कालस्तथेति प्रतिपन्नाय नृपाय रामाय विवृतात्मा प्रकाशितनिजस्वरूपः सन् । [2]परमेष्ठिनो ब्रह्मणः शासनाद्दिवमध्यास्वेत्याचख्यौ ॥९३॥

विद्वानपि तयोर्द्वाःस्थः समयं लक्ष्मणोऽभिनत् ।
भीतो दुर्वाससः शापाद्रामसंदर्शनार्थिनः ॥ ९४ ॥[2]

विद्वानिति ॥ द्वाःस्थो द्वारि नियुक्तो लक्ष्मणो विद्वानपि पूर्वश्लोकोक्तं जानन्नपि रामसंदर्शनार्थिनो दुर्वाससो मुनेः शापाद्भीतः सन् । [3]तयोः काल रामयोः समयं संवादम् । अभिनद्बिभेद ॥ ९४ ॥

स गत्वा सरयूतीरं देहत्यागेन योगवित् ।
[3]चकाराऽवितथां भ्रातुः प्रतिज्ञां पूर्वजन्मनः ॥ ९५ ॥

स इति ॥ योगविद्योगमार्गवेदी स लक्ष्मणः सरयूतीरं गत्वा देहत्यागेन पूर्वजन्मनो भ्रातुः प्रतिज्ञामवितथां सत्यां चकार ॥ ९५ ॥

तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि ।
राघवः शिथिलं तस्थौ भुवि धर्मस्त्रिपादिव ॥ ९६ ॥

तस्मिन्निति ॥ चतुर्थो भागश्चतुर्भागः । सङ्ख्याशब्दस्य वृत्तिविषये पूरणार्थत्वं शतांशवत् । आत्मचतुर्भागे तस्मिँल्लक्ष्मणे प्राङ्नाकमधितस्थुषि पूर्वं स्वर्गं जग्मुषि सति राघवो रामः भुवि त्रिपाद्धर्म इव । शिथिलं तस्थौ । पाद-

---

पाठा०—१ 'आरोढुम्'. २ 'गच्छ लक्ष्मण शीघ्रं त्वं मा भूद्धर्मविपर्ययः। त्यागो वापि वधो वापि साधूनामुभयं समम् ॥'. ३ 'चकार वितथाम्'. ४ 'शिथिलः'.

---

टिप्प०—1 'तं त्यजे-' इति संकेतपूर्वकं जगौ-इति दिनकर० ।

2 परमेष्ठिन आदिनारायणस्यादेशात् स्वर्गमधितिष्ठेत्युक्तवान् इति दिनकर० ।

3 एतयोः राम-यमयोः संकेतं विद्वान् जानन्नपि लक्ष्मणः संकेतं बिभिदे-इति दिनकर० ।

4 रामावतारो भगवांश्चतुरात्माऽवतीर्णः, तस्मिन्नात्मचतुर्भागे लक्ष्मणाख्ये प्राक् पूर्वं नाकमधितस्थुषि स्वर्गमारूढे राघवो रामो भुवि पृथिव्यां शिथिलं तस्थौ स्वल्पकालमस्थात् । क इव ? त्रिपाद्धर्म इव; यथा त्रिपाद् धर्मः, यथा कृते चतुष्पाद्धर्मः, त्रेतायामेकपाद् अहन्यां स्वोक्रमतिष्ठत्-इति वल्लभः । यथोक्तम्-'तपः शौचं दया सत्यमिति पादाः प्रकीर्तिताः । अधर्मांशैस्त्रयो भग्नाः स्मयसङ्गमदैस्तव' इति भागवते ।

विकलो हि शिथिलं तिष्ठतीति भावः । त्रेतायां धर्मस्त्रिपादित्याहुः । पादश्चतुर्थांशः अङ्घ्रिश्च कथ्यते । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । त्रयः पादा यस्यासौ त्रिपात् । 'संख्या-सुपूर्वस्य' (पा.५।४।१४०) इत्यकारलोपः समासान्तः ॥ ९६ ॥

स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम् ।
शरावत्यां सतां सूक्तैर्जनिताश्रुलवं लवम् ॥ ९७ ॥
उदक्प्रतस्थे स्थिरधीः सानुजोऽग्निपुरःसरः ।
अन्वितः पतिवात्सल्याद्गृहवर्जमयोध्यया ॥ ९८ ॥

स इति । उदगिति च ॥ युग्मम् । स्थिरधीः स रामः । रिपव एव नागा गजास्तेषामङ्कुशं निवारकं कुशं कुशावत्यां पुर्यां निवेश्य स्थापयित्वा । सूक्तैः समीचीनवचनैः सतां जनिता अश्रुलवा अश्रुलेशा येन तं लवं लवाख्यं पुत्रम् । 'लवो लेशे विलासे च छेदने रामनन्दने' इति विश्वः । शरावत्यां पुर्याम् । 'शरादीनां च' (पा.६।३।१२०) इति 'शर'–'कुश'शब्दयोर्दीर्घः । निवेश्य । सानुजोऽग्निपुरःसरः सन् । पत्यौ भर्तरि वात्सल्यादनुरागात् । गृहान् वर्जयित्वा गृहवर्जम् । 'द्वितीयायां च' (पा.३।४।५३) इति णमुल् । अयं क्वचिदपरीप्सायामपीष्यते 'अनुदात्तं पदमेकवर्जम्' (पा.६।१।१५८) इत्येकाचः शेषतया व्याख्यातत्वात् । परीप्सा त्वरा । अयोध्ययान्वितोऽनुगत उदक्प्रतस्थे ॥ ९७–९८ ॥

जगृहुस्तस्य चित्तज्ञाः पदवीं हरिराक्षसाः ।
कदम्बमुकुलस्थूलैरभिवृष्टां प्रजाश्रुभिः ॥ ९९ ॥

जगृहुरिति ॥ चित्तज्ञा हरिराक्षसाः कदम्बमुकुलस्थूलैः प्रजाश्रुभिरभिवृष्टां तस्य रामस्य पदवीं मार्गं जगृहुः । तेऽप्यनुजग्मुरित्यर्थः ॥ ९९ ॥

उपस्थितविमानेन तेन भक्तानुकम्पिना ।
चक्रे त्रिदिवनिःश्रेणिः सरयूरनुयायिनाम् ॥ १०० ॥

उपस्थितेति ॥ उपस्थितं प्राप्तं विमानं यस्य तेन । भक्ताननुकम्पत इति भक्तानुकम्पिना । तेन रामेणानुयायिनां सरयूस्त्रिदिवनिःश्रेणिः स्वर्गाधिरोहणी चक्रे । 'निःश्रेणिस्त्वधिरोहणी' इत्यमरः ॥ १०० ॥

पाठा०–१ 'सन्निवेश्य'. २ 'सरावत्याम्'; 'श्रावत्यां च'; 'श्रावस्त्यां च'. ३ 'वृत्तज्ञाः'; 'वर्त्मज्ञाः'. ४ 'कपिराक्षसाः'.

1 अग्निपुरःसरः 'मेताग्निसहित', अपरं किंभूतः ? पतिवात्सल्यात् शोकशोकाननोदाव' –इति वल्लभः ।

यद्गोप्रतरकल्पोऽभूत्संमर्दस्तत्र मज्जताम् ।
अतस्तदाख्यया तीर्थं पावनं भुवि पप्रथे ॥ १०१ ॥

यदिति ॥ यद्यस्मात्तत्र सरय्वां मज्जतां संमर्दः । गोप्रतरो गोप्रतरणम् । तत्कल्पोऽभूत् । अतस्तदाख्यया गोप्रतराख्यया पावनं शोधकं तीर्थं भुवि पप्रथे ॥ १०१ ॥

स विभुर्विबुधांशेषु प्रतिपन्नात्ममूर्तिषु ।
त्रिदशीभूतपौराणां स्वर्गान्तरमकल्पयत् ॥ १०२ ॥

स इति ॥ विभुः प्रभुः स रामो विबुधानामंशेषु सुग्रीवादिषु प्रतिपन्नात्ममूर्तिषु सत्सु त्रिदशीभूता देवभुवनं गता ये पौरास्तेषां नूतनसुराणां स्वर्गान्तरमकल्पयत् ॥ १०२ ॥

निर्वर्त्यैवं दशमुखशिरश्छेदकार्यं सुराणां
विष्वक्सेनः स्वतनुमविशत्सर्वलोकप्रतिष्ठाम् ।
लङ्कानाथं पवनतनयं चोभयं स्थापयित्वा
कीर्तिस्तम्भद्वयमिव गिरौ दक्षिणे चोत्तरे च ॥ १०३ ॥

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृतौ
श्रीरामस्वर्गारोहणो नाम पञ्चदशः सर्गः ।

---

निर्वर्त्येति ॥ विष्वक्सेनो विष्णुः । एवं सुराणां दशमुखशिरश्छेदकार्यं निर्वर्त्य निष्पाद्य । लङ्कानाथं बिभीषणं पवनतनयं हनूमन्तं चोभयं कीर्तिस्तम्भद्वयमिव । दक्षिणे गिरौ चित्रकूटे चोत्तरे गिरौ हिमवति च स्थापयित्वा । सर्वलोकप्रतिष्ठां सर्वलोकाश्रयभूतां स्वतनुं स्वमूर्तिमविशत् ॥१०३॥

इति महोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशव्याख्यायां
संजीविनीसमाख्यायां पञ्चदशः सर्गः ।

---

पाठा०—१ 'यद्गोप्रतारकल्पोऽभूद्विमर्दः'. २ 'पौरार्यम्'. ३ 'दशमुखभयच्छेदकार्यम्'; 'दशमुखभयोच्छेदि कार्यम्'. ४ 'सप्तलोक'.

टिप्प०—1 'सप्तलोकप्रतिष्ठाम्' इति पाठमाश्रित्य सप्तानां लोकानां प्रतिष्ठा यस्यां तादृश्या समूर्तौ प्राविक्षत्-इति व्याचख्युर्दिनकरमिश्राः।

# षोडशः सर्गः ।

वृन्दारका यस्य भवन्ति भृङ्गा मन्दाकिनी यन्मकरन्दबिन्दुः ।
तवारविन्दाक्ष ! पदारविन्दं वन्दे चतुर्वर्गचतुष्पदं तत् ॥

**अथेतरे सप्तरघुप्रवीरा ज्येष्ठं पुरोजन्मतया गुणैश्च ।**
**चक्रुः कुशं रत्नविशेषभाजं सौभ्रात्रमेषां हि कुलानुसारि ॥ १ ॥**

**अथेति** ॥ अथ रामनिर्वाणानन्तरम् । **इतरे** लवादयः **सप्तरघुप्रवीराः** । **पुरः** पूर्वं जन्म यस्य तस्य भावस्तत्ता **तया** । **गुणैश्च ज्येष्ठं कुशं रत्नविशेषभाजं** तत्तच्छ्रेष्ठवस्तुभागिनं **चक्रुः** । तदुक्तम्—'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इति । तथा हि—सुभ्रातॄणां भावः **सौभ्रात्रम्** । 'हायनान्त–' (पा.५।१।१३०) इत्यादिना युवादित्वादण्प्रत्ययः । **एषां** कुशलवादीनां **कुलानुसारि** वंशानुगतं **हि** ॥ १ ॥

**ते सेतुवार्तागजबन्धमुख्यैरभ्युच्छ्रिताः कर्मभिरप्यवन्ध्यैः ।**
**अन्योन्यदेशप्रविभागसीमां वेलां समुद्रा इव न व्यतीयुः ॥ २ ॥**

**त इति** ॥ **सेतुर्जलबन्धः** । **वार्ता** कृषिगोरक्षणादिः । 'वार्ता कृष्याद्युदन्तयोः' इति विश्वः । **गजबन्ध** आकरेभ्यो गजग्रहणम् । ते **मुख्यं** प्रधानं येषां तै**रवन्ध्यैः** सफलैः **कर्मभिरभ्युच्छ्रिताः** । अतिसमर्था अपीत्यर्थः । **ते** कुशादयः । प्रविभज्यन्त इति प्रविभागाः । **अन्योन्यदेशप्रविभागानां या सीमा ताम्** । **वेलां समुद्रा इव** । **न व्यतीयुर्नातिचक्रमुः** । अत्र कामन्दकः– 'कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरधनादानं शून्यानां च निवेशनम् ॥ अष्टवर्गमिमं साधुः स्वयं वृद्धोऽपि वर्धयेत् ॥' इति ॥ २ ॥

**चतुर्भुजांशप्रभवः स तेषां दानप्रवृत्तेरनुपारतानाम् ।**
**सुरद्विपानामिव सामयोनिर्भिन्नोऽष्टधा विप्रससार वंशः ॥ ३ ॥**

**चतुर्भुजेति** ॥ **चतुर्भुजो** विष्णुः, तदंशा रामादयः ते **प्रभवाः** कारणानि यस्य स तथोक्तः । दानं त्यागो मदश्च । 'दानं गजमदे त्यागे' इति विश्वः । प्रवृत्तिर्व्या-

टिप्प०—1 सप्तरघुप्रवीराः लव–तक्ष–पुष्कराङ्गद–चन्द्रकेतु–शत्रुघातिसुबाहवो–रघुश्रेष्ठाः कुशं रत्नविशेषभाज चक्रुः मुख्यमकुर्वन् । तस्य ते करदा बभूवुरित्यर्थः–इति वल्लभः ।

2 यथोच्छ्रिताः सागरा वेलां न व्यतिक्रामंति–इति वल्लभः ॥ अभ्युच्छ्रिताः समृद्धास्ते कुशादयोऽन्योन्यस्य यो देशानां प्रविभागस्तत्सीमां नातिक्रामन्ति स्म । यथाऽब्धयो वेलां नोल्लंघयन्ति । तथा च कामन्दकः–'कृषिर्वणिक्पथो दुर्गं सेतुं कुञ्जरबन्धनम् ।...इति दिनकर० ।

पारः प्रवाहश्च । दानप्रवृत्तेरनुपारतानां तेषां कुशलवादीनां स वंशः । सामयोनिः सामवेदप्रभवो दानप्रवृत्तेरनुपारतानां सुरद्विपानां दिग्गजानां वंश इव । अष्टधा भिन्नः सन् । विप्रससार विस्तृतोऽभूत् । 'सामयोनि-'इत्यत्र पालकाप्यः—'सूर्यस्याण्डकपाले द्वे समानीय प्रजापतिः । हस्ताभ्यां परिगृह्याथ सप्त सामान्यगायत । गायतो ब्रह्मणस्तस्मात्समुत्पेतुर्मतङ्गजाः ॥' इति ॥ ३ ॥

अथार्धरात्रे स्तिमितप्रदीपे शय्यागृहे सुप्तजने प्रबुद्धः ।
कुशः प्रवासस्थकलत्रवेषामदृष्टपूर्वां वनितामपश्यत् ॥ ४ ॥

अथेति ॥ अथ अर्धं रात्रेरर्धरात्रः । 'अर्धं नपुंसकम्' ( पा. २।२।२ ) इत्येकदेशसमासः । 'अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः' ( पा.५।४।८७ ) इति समासान्तोऽच्प्रत्ययः । 'रात्राह्नाहाः पुंसि' ( पा. २।४।२९ ) इति नियमात्पुंस्त्वम् । अर्धरात्रे निशीथे स्तिमितप्रदीपे सुप्तजने शय्यागृहे प्रबुद्धः, न तु सुप्तः । कुशः प्रवासस्थकलत्रवेषां प्रोषितभर्तृकावेषाम् । अदृष्टा पूर्वमित्यदृष्टपूर्वा ताम् । सुप्सुपेति समासः । वनितामपश्यत् ॥ ४ ॥

सा साधुसाधारणपार्थिवर्द्धेः स्थित्वा पुरस्तात्पुरुहूतभासः ।
जेतुः परेषां जयशब्दपूर्वं तस्याञ्जलिं बन्धुमतो बबन्ध ॥ ५ ॥

सेति ॥ सा वनिता साधुसाधारणपार्थिवर्द्धेः सज्जनसाधारणराज्यश्रियः पुरुहूतभास इन्द्रतेजसः परेषां शत्रूणां जेतुर्बन्धुमतस्तस्य कुशस्य पुरस्तात्स्थित्वा जयशब्दपूर्वं[3] यथा तथाऽञ्जलिं बबन्ध ॥ ५ ॥

अथानपोढार्गलमप्यगारं छायामिवादर्शतलं प्रविष्टाम् ।
सविस्मयो दाशरथेस्तनूजः प्रोवाच पूर्वार्धविसृष्टतल्पः ॥ ६ ॥

अथेति ॥ अथ सविस्मयः पूर्वार्धेन शरीरपूर्वभागेन विसृष्टतल्पस्त्यक्तशय्यो दाशरथेस्तनूजः कुशः । अनपोढार्गलमनुद्घाटितविष्कम्भमपि । 'तद्वि-

पाठा०—१ 'तां सोऽनपोढार्गलम्'.

टिप्प०—1 यथा सामयोनिः सामवेदाध्ययनायत्तश्च ऐरावणादीनां वंशोऽष्टधा प्रसृतः । तथा चोक्तम्—'हस्ताभ्यां परिगृह्याथ सप्त सामान्यगापयन् । गायतो ब्रह्मणस्तस्मात्समुत्पेतुर्मतङ्गजाः ॥' —इति दिनकर० ॥ सामयोनिः सामाभिगायतो ब्रह्मणः करादष्टौ करिणः समुत्पन्ना इत्यागमः— इति वल्लभः ।

2 प्रवासस्थकलत्रस्य पान्थस्य भार्या तस्या इव वेषो यस्याः सा तां विरहिणीवेषधराम्— इति वल्लभः ।

3 'जय महाराज' इति शब्दपूर्वं—इति दिनकर० ।

प्कम्भोऽर्गलं न ना' इत्यमरः । अगारम् । आदर्शतलं छायामिव । प्रविष्टां तां वनितां प्रोवाचावदत् ॥ ६ ॥

लब्धान्तरा सावरणेऽपि गेहे योगप्रभावो न च लक्ष्यते ते ।
बिभर्षि चाकारमनिर्वृतानां मृणालिनी हैममिवोपरागम् ॥ ७ ॥
का त्वं शुभे ! कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते ।
आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ॥ ८ ॥

लब्धेति । का त्वमिति च ॥ युग्मम् । सावरणेऽपि गेहे लब्धान्तरा लब्धावकाशा । त्वमिति शेषः । योगप्रभावश्च ते न लक्ष्यते । मृणालिनी हैमं हिमकृतमुपरागमुपद्रवमिव । अनिर्वृतानां दुःखितानामाकारं बिभर्षि च । न हि योगिनां दुःखमस्तीति भावः । किं च, हे शुभे ! त्वं का ? कस्य वा परिग्रहः पत्नी ? ते तव मदभ्यागमे कारणं वा किम् ? वशिनां जितेन्द्रियाणां रघूणां मनः परस्त्रीषु विषये विमुखा प्रवृत्तिर्यस्य तत्तथाभूतं मत्वाऽऽचक्ष्व ॥ ७-८ ॥

तमब्रवीत्सा गुरुणानवद्या या नीतपौरा स्वपदोन्मुखेन ।
तस्याः पुरः संप्रति वीतनाथां जानीहि राजन्नधिदेवतां माम् ॥ ९ ॥

तमिति ॥ सा वनिता तं कुशमब्रवीत् । अनवद्याऽदोषा या पूः स्वपदोन्मुखेन विष्णुपदोन्मुखेन गुरुणा त्वत्पित्रा नीतपौरा हे राजन् ! मां संप्रति वीतनाथामनाथां तस्याः पुरो नगर्या अयोध्याया अधिदेवतां जानीहि ॥ ९ ॥

वस्वौकसारामभिभूय साहं सौराज्यबद्धोत्सवया विभूत्या ।
समग्रशक्तौ त्वयि सूर्यवंश्ये सति प्रपन्ना करुणामवस्थाम् ॥ १० ॥

वस्वौकसारामिति ॥ साऽहं सौराज्येन राजन्वत्तया हेतुना बद्धोत्सवया विभूत्या । वस्वौकसाराऽलका पुरी । 'अलका पुरी वस्वौकसारा स्यात्' इति कोशः । अथवा,-मानसोत्तरशैलशिखरवर्तिनी शक्रनगरी । 'वस्वौकसारा शक्रस्य' इति विष्णु-

पाठा०-१ 'प्रवेशः'. २ 'दृश्यते'.

टिप्प०—1 अत्र 'तां' इति मूले पाठो मल्लिनाथसंमत इति प्रतीयते ।
2 अनुद्घाटितकपाटेऽपि गेहे वेश्मनि प्राप्ता सावकाशा वर्तसे योगप्रभावो न च दृश्यते, अन्यद् विस्मये । अनिर्वृतानां दुःखितानामाकारं बिभर्षि । योगिनो हि मुदिता भवन्ति । केव ? मृणालिनीव, यथा कमलिनी हैममुपरागं बिभर्ति च-इति वल्लभः ।
3 योगभावः परकायप्रवेशादियोगशक्तिः-इति दिनकर० ।
4 अथ रिरंसयागमनमिति चेत्तत्राह-वशिनामिति-इति दिनकर० ।

पुराणात्। तामभिभूय विरहरूप समग्रशक्तौ त्वयि सूर्यवंश्ये सति करुणामवस्थां दीनां दशां प्रपन्ना प्राप्ता ॥ १० ॥

**विशीर्णतल्पाट्टशतो निवेशः पर्यस्तसालः प्रभुणा विना मे ।**
**विडम्बयत्यस्तनिमग्नसूर्यं दिनान्तमुग्रानिलभिन्नमेघम् ॥ ११ ॥**

**विशीर्णेति** ॥ तल्पान्यट्टालिकाः। 'तल्पं शय्याट्टदारेषु' इत्यमरः। अट्टानि गृहभेदः। 'अट्टं भक्ते च शुष्के च क्षौमेऽत्यर्थं गृहान्तरे' इति विश्वः। विशीर्णानि तल्पानामट्टानां च शतानि यस्य स तथोक्तः। 'विशीर्णकल्पाट्टशतो निवेशः' इति वा पाठः। अट्टाः क्षौमाः। 'स्यादट्टः क्षौममस्त्रियाम्' इत्यमरः। ईषदसमाप्तं विशीर्णानि विशीर्णकल्पान्यट्टशतानि यस्य स तथोक्तः। **पर्यस्तसालः** स्रस्तप्राकारः। 'प्राकारो वरणः सालः' इत्यमरः। **प्रभुणा** स्वामिना **विनैवंभूतो मे निवेशः** निवेशनम्। अस्तनिमग्नसूर्यमस्ताद्रिलीनार्कमुग्रानिलेन भिन्नमेघं दिनान्तं विडम्बयत्यनुकरोति ॥ ११ ॥

**निशासु भास्वत्कलनूपुराणां यः संचरोऽभूदभिसारिकाणाम् ।**
**नदन्मुखोल्काविचितामिषाभिः स वाह्यते राजपथः शिवाभिः ॥ १२ ॥**

**निशास्विति** ॥ **निशासु भास्वन्ति** दीप्तिमन्ति कलान्यव्यक्तमधुराणि **नूपुराणि** यासां तासामभिसारिकाणाम्। 'कान्तार्थिनी तु या याति संकेतं साऽभिसारिका' इत्यमरः। **यः राजपथः** संचरन्त्यनेनेति **संचरः** संचारसाधनमभूत्। 'गोचरसंचर–' (पा. ३।३।११९) इत्यादिना घप्रत्ययान्तो निपातः। **नदत्सु मुखेषु** या उल्कास्ताभिर्विचितामिषाभिरन्विष्टमांसाभिः **शिवाभिः** क्रोष्ट्रीभिः **स राजपथो वाह्यते** गम्यते। वहेरन्यो वहिधातुरस्तीत्युपदेशः ॥ १२ ॥

**आस्फालितं यत्प्रमदाकराग्रैर्मृदङ्गधीरध्वनिमन्वगच्छत् ।**
**वन्यैरिदानीं महिषैस्तदम्भः शृङ्गाहतं क्रोशति दीर्घिकाणाम् ॥ १३ ॥**

**आस्फालितमिति** ॥ यदम्भः **प्रमदाकराग्रैरास्फालितं** ताडितं सत्।

पाठा०—१ 'विशीर्णतल्पो गृहसंनिवेशः'. २ 'अर्ध'. ३ 'ज्वलन्मुख'; 'नदन्मुखोल्कावचिता'. ४ 'ध्वनितामगच्छत्'. ५ 'दीर्घिकासु'.

टिप्प०—1 'सूर्यवंश्ये' इत्यनेन त्वमेव पतिर्नान्य-इत्याह वल्लभः। हेमाद्रिस्तु–'वस्वौकसारा शक्रस्य याम्या संयमिनी तथा। पुरी सुखा जलेशस्य सोमस्य तु विभावरी॥' वस्वोकसारा रत्नानामोकैः सद्मभिः सारा। 'ओक-' इत्यदन्तोऽपि इत्याह।

2 नदद्भ्यो मुखेभ्यो निर्गता उल्का नदन्मुखोल्कास्ताभिर्विचितम्।

जलक्रीडास्विति शेषः। मृदङ्गानां यो धीरध्वनिस्तमन्वगच्छदन्वकरोत्। तद्दीर्घिकाणामम्भ इदानीं वन्यैर्महिषैः कर्तृभिः शृङ्गैर्विषाणैराहतं सत् क्रोशति। न तु मृदङ्गध्वनिमनुकरोतीत्यर्थः ॥ १३ ॥

वृक्षेशया यष्टिनिवासभङ्गान्मृदङ्गशब्दापगमादलास्याः।
प्राप्ता दवोल्काहतशेषबर्हाः क्रीडामयूरा वनबर्हिणत्वम् ॥ १४ ॥

वृक्षेशया इति। यष्टिरेव निवासः स्थानं तस्य भङ्गात्। वृक्षे शेरत इति वृक्षेशयाः। 'अधिकरणे शेतेः' (पा. ३।२।१५) इत्यच्प्रत्ययः। 'शयवासवासिष्वकालात्' (पा. ६।३।१८) इत्यलुक्सप्तम्याः। मृदङ्गशब्दानामपगमादभावादलास्या नृत्यशून्याः। दवोऽरण्यवह्निः। 'दवदावौ वनारण्यवह्नी' इत्यमरः। तस्योल्काभिः स्फुलिङ्गैर्हतेभ्यः शेषाणि बर्हाणि येषां ते क्रीडामयूरा वनबर्हिणत्वं वनमयूरत्वं प्राप्ताः ॥ १४ ॥

सोपानमार्गेषु च येषु रामा निक्षिप्तवत्यश्चरणान्सरागान्।
सद्योहतन्यङ्कुभिरस्रदिग्धं व्याघ्रैः पदं तेषु निधीयते मे[1] ॥ १५ ॥

सोपानेति ॥ किंच, येषु सोपानमार्गेषु रामा रमण्यः सरागाँल्लाक्षारसार्द्रांश्चरणान्निक्षिप्तवत्यः। तेषु मे मम मार्गेषु सद्योहतन्यङ्कुभिर्मारितमृगैर्व्याघ्रैरस्रदिग्धं रुधिरलिप्तं पदं निधीयते ॥ १५ ॥

चित्रद्विपाः पद्मवनावतीर्णाः करेणुभिर्दत्तमृणालभङ्गाः।
नखाङ्कुशाघातविभिन्नकुम्भाः संरब्धसिंहप्रहृतं वहन्ति ॥ १६ ॥

चित्रेति ॥ पद्मवनमवतीर्णाः प्रविष्टाः। तथा लिखिता इत्यर्थः। करेणुभिः करेणीभिः। चित्रगताभिरेव। 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः। दत्तमृणालभङ्गाश्चित्रद्विपा आलेख्यमातङ्गाः। नखा एवाङ्कुशास्तेषामाघातैर्विभिन्नकुम्भाः सन्तः संरब्धसिंहप्रहृतं कुपितसिंहप्रहारं वहन्ति ॥ १६ ॥

स्तम्भेषु योषित्प्रतियातनानामुत्क्रान्तवर्णक्रमधूसराणाम्।
स्तनोत्तरीयाणि भवन्ति सङ्गान्निर्मोकपट्टाः फणिभिर्विमुक्ताः ॥ १७ ॥

स्तम्भेष्विति ॥ उत्क्रान्तवर्णक्रमा विदीर्णवर्णविन्यासास्ताश्च धूसराश्च तासां स्तम्भेषु योषित्प्रतियातनानां स्त्रीप्रतिकृतीनां दारुमयीणां फणिभि-

पाठा०—१ 'चरणाग्ररागान्'. २ 'अद्य'. ३ 'निर्मोकपत्राः'.

टिप्प०—1 कर्णकटुकशब्दं करोतीत्यर्थः—इति दिनकर०।
2 'दत्तमृणाल—' इति सापेक्षत्वेऽपि गमकत्वात्समासः—इति दिनकर०।

पुराणात् । तामभिभूय विरक्तल समग्रशक्तौ त्वयि सूर्यवंश्ये सति करुणामवस्थां दीना दशा प्रपन्ना प्राप्ता ॥ १० ॥

विशीर्णतल्पाट्टशतो निवेशः पर्यस्तसालः प्रभुणा विना मे ।
विडम्बयत्यस्तनिमग्नसूर्यं दिनान्तमुग्रानिलभिन्नमेघम् ॥ ११ ॥

**विशीर्णेति** ॥ तल्पान्यट्टालिका । 'तल्पं शय्याट्टदारेषु' इत्यमरः । अट्टानि गृहभेदः । 'अट्ट भक्ते च शुष्के च क्षौमेऽत्यर्थे गृहान्तरे' इति विश्वः । विशीर्णानि तल्पानामट्टानां च शतानि यस्य स तथोक्तः । 'विशीर्णकल्पाट्टशतो निवेशः' इति वा पाठः । अट्टाः क्षौमाः । 'स्यादट्टः क्षौममस्त्रियाम्' इत्यमरः । ईषदसमाप्ता विशीर्णानि विशीर्णकल्पान्यट्टशतानि यस्य स तथोक्तः । पर्यस्तसालः स्रस्तप्राकारः । 'प्राकारो वरणः सालः' इत्यमरः । प्रभुणा स्वामिना विनैवभूतो मे निवेशः निवेशनम् । अस्तनिमग्नसूर्यमस्तादिलीनार्कमुग्रानिलेन भिन्नमेघं दिनान्तं विडम्बयत्यनुकरोति ॥ ११ ॥

निशासु भास्वत्कलनूपुराणां यः संचरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्काविचितामिषाभिः स वाह्यते राजपथः शिवाभिः ॥१२॥

**निशास्विति** ॥ निशासु भास्वन्ति दीप्तिमन्ति कलान्यव्यक्तमधुराणि नूपुराणि यासां तासामभिसारिकाणाम् । 'कान्तार्थिनी तु या याति संकेतं साऽभिसारिका' इत्यमरः । यः राजपथः संचरत्यनेनेति संचरः संचारसाधनमभूत् । 'गोचरसंचर–' (पा ३।३।११९) इत्यादिना घप्रत्ययान्तो निपातः । नदत्सु मुखेषु या उल्कास्ताभिर्विचितामिषाभिरन्विष्टमांसाभिः शिवाभिः क्रोष्ट्रीभिः स राजपथो वाह्यते गम्यते । वहेरन्यो वहिधातुरस्तीत्युपदेशः ॥ १२ ॥

आस्फालितं यत्प्रमदाकराग्रैर्मृदङ्गधीरध्वनिमन्वगच्छत् ।
वन्यैरिदानीं महिषैस्तदम्भः शृङ्गाहतं क्रोशति दीर्घिकाणाम् ॥ १३ ॥

**आस्फालितमिति** ॥ यदम्भः प्रमदाकराग्रैरास्फालितं ताडितं सत् ।

---

पाठा०–१ 'विशीर्णतल्पो गृहसंनिवेशः' २ 'अर्ध' ३ 'ज्वलन्मुख', 'नदन्मुखोल्काचकिता'. ४ 'ध्वनितामगच्छत्' ५ 'दीर्घिकासु'

---

टिप्प०—1 'सूर्यवंश्ये' इत्यनेन त्वमेव पतिः–याप्रयः–इत्याह वल्लभः । हेमाद्रिस्तु– 'वस्वौकसारा शक्रस्य याम्या संयमिनी तथा । पुरी शुद्धा जलेशस्य सोमस्य तु विभावरी ॥' वसूनां रत्नानामोके सद्मनि सारा । 'ओक' इत्यदन्तोऽपि इत्याह ।

2 नदद्भ्यो मुखेभ्यो निर्गता उल्का नदन्मुखोल्कास्ताभिर्विचितम् ।

जलक्रीडाखिति शेषः। मृदङ्गानां यो धीरध्वनिस्तमन्वगच्छदन्वकरोत्। तद्दीर्घिकाणामम्भ इदानीं वन्यैर्महिषैः कर्तृभिः शृङ्गैर्विषाणैराहतं सत् क्रोशति। न तु मृदङ्गध्वनिमनुकरोतीत्यर्थः ॥ १३ ॥

वृक्षेशया यष्टिनिवासभङ्गान्मृदङ्गशब्दापगमादलास्याः।
प्राप्ता दवोल्काहतशेषबर्हाः क्रीडामयूरा वनबर्हिणत्वम् ॥१४॥

वृक्षेशाया इति। यष्टिरेव निवासः स्थानं तस्य भङ्गात्। वृक्षे शेरत इति वृक्षेशयाः। 'अधिकरणे शेतेः' (पा. ३।२।१५) इत्यच्प्रत्ययः। 'शयवासवासिष्वकालात्' (पा. ६।३।१८) इत्यलुक्सप्तम्याः। मृदङ्गशब्दानामपगमादभावादलास्या नृत्यशून्याः। दवोऽरण्यवह्निः। 'दवदावौ वनारण्यवह्नी' इत्यमरः। तस्योल्काभिः स्फुलिङ्गैर्हतेभ्यः शेषाणि बर्हाणि येषां ते क्रीडामयूरा वनबर्हिणत्वं वनमयूरत्वं प्राप्ताः ॥ १४ ॥

सोपानमार्गेषु च येषु रामा निक्षिप्तवत्यश्चरणान्सरागान्[1]।
सद्योहतन्यङ्कुभिरस्रदिग्धं व्याघ्रैः[2] पदं तेषु निधीयते मे[3] ॥ १५ ॥

सोपानेति ॥ किंच, येषु सोपानमार्गेषु रामा रमण्यः सरागाँल्लाक्षारसार्द्रांश्चरणान्निक्षिप्तवत्यः। तेषु मे मम मार्गेषु सद्योहतन्यङ्कुभिर्मारितमृगैर्व्याघ्रैरस्रदिग्धं रुधिरलिप्तं पदं निधीयते ॥ १५ ॥

चित्रद्विपाः पद्मवनावतीर्णाः करेणुभिर्दत्तमृणालभङ्गाः।
नखाङ्कुशाघातविभिन्नकुम्भाः संरब्धसिंहप्रहृतं वहन्ति ॥ १६ ॥

चित्रेति ॥ पद्मवनमवतीर्णाः प्रविष्टाः। तथा लिखिता इत्यर्थः। करेणुभिः करिणीभिः। चित्रगताभिरेव। 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः। दत्तमृणालभङ्गाश्चित्रद्विपा आलेख्यमातङ्गाः। नखा एवाङ्कुशास्तेषामाघातैर्विभिन्नकुम्भाः सन्तः संरब्धसिंहप्रहृतं कुपितसिंहप्रहारं वहन्ति ॥ १६ ॥

स्तम्भेषु योषित्प्रतियातनानामुत्क्रान्तवर्णक्रमधूसराणाम्।
स्तनोत्तरीयाणि भवन्ति सङ्गान्निर्मोकपट्टाः फणिभिर्विमुक्ताः ॥ १७ ॥

स्तम्भेष्विति ॥ उत्क्रान्तवर्णक्रमा विशीर्णवर्णविन्यासास्ताश्च धूसराश्च याश्वासां स्तम्भेषु योषित्प्रतियातनानां स्त्रीप्रतिकृतीनां दारुमयीणां फणिभि-

पाठा०-१ 'चरणाङ्करागान्'. २ 'अद्य'. ३ 'निर्मोकपद्याः'.

टिप्प०—1 कर्णकटुशब्दं करोतीत्यर्थः-इति दिनकर०।
2 'दत्तमृणाल-' इति सापेक्षत्वेऽपि गमकत्वात्समासः-इति दिनकर०।

विमुक्ता निर्मोका कञ्चुका एव पट्टा । 'समौ कञ्चुकनिर्मोकौ' इत्यमरः । सङ्गासफलत्वात् स्तनोत्तरीयाणि स्तनाच्छादनवस्त्राणि भवन्ति ॥ १७ ॥

कालान्तरश्यामसुधेषु नक्तमितस्ततो रूढतृणाङ्कुरेषु ।
त एव मुक्तागुणशुद्धयोऽपि हर्म्येषु मूर्च्छन्ति न चन्द्रपादाः ॥ १८ ॥

कालेति ॥ कालान्तरेण कालभेदवशेन श्यामसुधेषु मलिनचूर्णेष्वितस्ततो रूढतृणाङ्कुरेषु हर्म्येषु गृहेषु नक्तं रात्रौ मुक्तागुणानां शुद्धिरिव शुद्धिः स्वाच्छ्यं येषां तादृशा अपि । ततः पूर्वं ये मूर्च्छन्ति स्म त एव चन्द्रपादाश्चन्द्ररश्मयः । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । न मूर्च्छन्ति । न प्रतिफलन्तीत्यर्थः ॥ १८ ॥

आवर्ज्य शाखाः सदयं च यासां पुष्पाण्युपात्तानि विलासिनीभिः ।
वन्यैः पुलिन्दैरिव वानरैस्ताः क्लिश्यन्त उद्यानलता मदीयाः ॥ १९ ॥

आवर्ज्येति ॥ किंच, विलासिनीभिः सदयं शाखा एतावयवानावर्ज्य नमय्य यासां लतानां पुष्पाण्युपात्तानि गृहीतानि ता मदीया उद्यानलताः । वन्यैः पुलिन्दैर्म्लेच्छविशेषैरिव वानरैः । उभयैरपीत्यर्थः । क्लिश्यन्ते पीड्यन्ते । क्लिश्नातेः कर्मणि लट् । 'भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः' इत्यमरः ॥ १९ ॥

रात्रावनाविष्कृतदीपभासः कान्तामुखश्रीवियुता दिवापि ।
तिरस्क्रियन्ते कृमितन्तुजालैर्विच्छिन्नधूमप्रसरा गवाक्षाः ॥ २० ॥

रात्राविति ॥ रात्रावनाविष्कृतदीपभासः । दीपप्रभाशून्या इत्यर्थः । दिवापि दिवसेऽपि कान्तामुखानां श्रिया कान्त्या वियुता रहिता विच्छिन्नो नष्टो धूमप्रसरो येषां ते गवाक्षाः कृमितन्तुजालैर्लूतातन्तुवितानैः । तिरस्क्रियन्ते छाद्यन्ते ॥ २० ॥

बलिक्रियावर्जितसैकतानि स्नानीयसंसर्गमनाप्नुवन्ति ।
उपान्तवानीरगृहाणि दृष्ट्वा शून्यानि दूये सरयूजलानि ॥ २१ ॥

बलिक्रियेति ॥ 'बलिः पूजोपहारः स्यात्' इति शाश्वतः । बलिक्रियावर्जितानि सैकतानि येषां तानि स्नानीयानि स्नानसाधनानि चूर्णादीनि । 'कृत्यल्युटो बहुलम्' ( पा ३।३।११३ ) इति करणेऽनीयर्प्रत्ययः । स्नानीयसंसर्गमनाप्नुवन्ति सरयूजलानि शून्यानि रिक्तान्युपान्तेषु वानीरगृहाणि येषां तानि च दृष्ट्वा दूये परितप्ये ॥ २१ ॥

पाठा०-१ 'भूप' २ 'वस्त्राणि'. ३ 'वदानि'.

तदर्हसीमां वसतिं विसृज्य मामभ्युपेतुं कुलराजधानीम् ।
हित्वा तनुं कारणमानुषीं तां यथा गुरुस्ते परमात्ममूर्तिम् ॥ २२॥

तदिति ॥ तत्तस्मादिमां वसतिं कुशावतीं विसृज्य कुलराजधानीमयोध्यां मामभ्युपेतुमर्हसि । कथमिव ? ते गुरुः पिता रामस्तां प्रसिद्धां कारणवशान्मानुषीं तनुं मानुषमूर्तिं हित्वा परमात्ममूर्तिं यथा विष्णुमूर्तिमिव ॥ २२ ॥

तथेति तस्याः प्रणयं प्रतीतः प्रत्यग्रहीत्प्राग्रहरो रघूणाम् ।
पूरप्यभिव्यक्तमुखप्रसादा शरीरबन्धेन तिरोबभूव ॥ २३ ॥

तथेति ॥ रघूणां प्राग्रहरः श्रेष्ठः कुशस्तस्याः पुरः प्रणयं याच्ञां प्रतीतो हृष्टः सन्, तथेति प्रत्यग्रहीत् स्वीकृतवान् । पूः पुराधिदेवताप्यभिव्यक्तमुखप्रसादा सती । इष्टलाभादिति भावः । शरीरबन्धेन शरीरयोगेन करणेन तिरोबभूवान्तर्दधे । मानवं रूपं विहाय दैवं रूपमग्रहीदित्यर्थः ॥ २३ ॥

तदद्भुतं संसदि रात्रिवृत्तं प्रातर्द्विजेभ्यो नृपतिः शशंस ।
श्रुत्वा त एनं कुलराजधान्या साक्षात्पतित्वे वृतमभ्यनन्दन्॥२४॥

तदिति ॥ नृपतिः कुशस्तदद्भुतं रात्रिवृत्तान्तं प्रातः संसदि सभायां द्विजेभ्यः शशंस । ते द्विजाः श्रुत्वैनं कुलराजधान्या साक्षात् स्वयमेव पतित्वे विषये वृतमभ्यनन्दन् । पतित्वेन वृतोऽसीत्यपूजयन् । आशीर्भिरिति शेषः । अत्र गार्ग्यः—'दृष्ट्वा स्वप्नं शोभनं नैव सुप्यात्पश्चाद्दृष्टो यः स पाकं विधत्ते । शंसेदिष्टं तत्र साधुर्द्विजेभ्यस्ते चाशीर्भिः प्रीणयेयुर्नरेन्द्रम्' । इदमपि स्वप्नतुल्यमिति भावः ॥ २४ ॥

कुशावतीं श्रोत्रियसात्स कृत्वा यात्रानुकूलेऽहनि सावरोधः ।
अनुद्रुतो वायुरिवाभ्रवृन्दैः सैन्यैरयोध्याभिमुखः प्रतस्थे ॥ २५॥

कुशावतीमिति ॥ स कुशः कुशावतीं श्रोत्रियेषु छान्दसेष्वधीनां श्रोत्रियसात् । 'तदधीनवचने' (पा. ५।४।५४) इति सातिप्रत्ययः । 'श्रोत्रियंश्छन्दोऽधीते' (पा. ५।२।८४) इति निपातः । 'श्रोत्रियच्छान्दसौ समौ' इत्यमरः । कृत्वा यात्रानुकूलेऽहनि सावरोधः सान्तःपुरः सन् । वायुरभ्रवृन्दैरिव । सैन्यैरनुद्रुतोऽनुगतः सन्, अयोध्याभिमुखं प्रतस्थे ॥ २५ ॥

सा केतुमालोपवना बृहद्भिर्विहारशैलानुगतेव नागैः ।
सेना रथोदारगृहा प्रयाणे तस्याभवज्जंगमराजधानी ॥ २६ ॥

पाठा०-१ 'प्रग्रसरः'.

सेति॥ केतुमाला एव उपवनानि यस्याः सा बृहद्भिर्नागैर्गजैर्विहारशैलैः क्रीडाशैलैरनुगतेव स्थिता। रथा एवोदारगृहा यस्याः सा। सा सेना तस्य कुशस्य प्रयाणे जंगमराजधानी सचारिणी नगरीव। अभवद्बभूव॥ २६॥

तेनातपत्रामलमण्डलेन प्रस्थापितः पूर्वनिवासभूमिम्।
बभौ बलौघः शशिनोदितेन वेलामुदन्वानिव नीयमानः॥ २७॥

तेनेति॥ आतपत्रमेवामलं मण्डलं बिम्बं यस्य तेन। तेन कुशेन पूर्वनिवासभूमिमयोध्यां प्रति प्रस्थापितो बलौघः। आतपत्रवदमलमण्डलेनोदितेन शशिना वेलां नीयमानः प्राप्यमाणः। उदकमस्यास्तीत्युदन्वान् उदधिरिव। बभौ। 'उदन्वानुदधौ च' (पा. ८।२।१३) इति निपातनात्साधुः॥ २७॥

तस्य प्रयातस्य वरूथिनीनां पीडामपर्याप्तवतीव सोढुम्।
वसुंधरा विष्णुपदं द्वितीयमध्यारुरोहेव रजश्छलेन॥ २८॥

तस्येति॥ प्रयातस्य प्रस्थितस्य तस्य कुशस्य वरूथिनीनां सेनानां कर्त्रीणां 'कर्तृकर्मणोः कृति' (पा. २।३।६५) इति कर्तरि षष्ठी। पीडां सोढुमपर्याप्तवतीवाशक्तेव वसुंधरा रजश्छलेन द्वितीयं विष्णुपदमाकाशमध्यारुरोहेव। इत्युत्प्रेक्षा॥ २८॥

उद्यच्छमाना गमनाय पश्चात्पुरो निवेशे पथि च व्रजन्ती।
सा यत्र सेना ददृशे नृपस्य तत्रैव सामग्र्यमतिं चकार॥ २९॥

उद्यच्छमानेति॥ पश्चात्कुशावत्याः सकाशाद्गमनाय प्रयाणाय तथा पुरोऽग्रे निवेशे निमित्ते। निवेष्टुं चेत्यर्थः। उद्यच्छमानोद्योगं कुर्वती। 'समुदाङ्भ्यो यमोऽग्रन्थे' (पा. १।३।७५) इत्यस्य सकर्मकाधिकारत्वादात्मनेपदम्। पथि च व्रजन्ती नृपस्य सा सेना यत्र पश्चात्पुरो मध्ये वा ददृशे तत्रैव सामग्र्यमतिं कृत्स्नताबुद्धिं चकार। अपरिमिता तस्य सेनेत्यर्थः॥ २९॥

तस्य द्विपानां मदवारिसेकात्खुराभिघाताच्च तुरंगमाणाम्।
रेणुः प्रपेदे पथि पङ्कभावं पङ्कोऽपि रेणुत्वमियाय नेतुः॥ ३०॥

तस्येति॥ नेतुस्तस्य कुशस्य द्विपानां मदवारिभिः सेकात्तुरंगमाणां

पाठा०—१ 'उद्गतेन'. २ 'विसोढुम्'. ३ 'उद्गच्छमाना'. ४ 'सामग्र्यपदम्'.

टिप्प०—1 'पीडा'शब्दस्य साधुत्वं प्रथमसर्गे 'पव प्रलपादि'-इति दिनकर०। यो बाधां न सहते सोऽन्यदयमन्यत्र याति-इति शिशु०।

खुराभिघाताच्च यथासंख्यं पथि रेणू रजः पङ्कभावं पङ्कतां प्रपेदे । पङ्कोऽपि रेणुत्वमियाय । तत्र तावदस्तीत्यर्थः ॥ ३० ॥

मार्गैषिणी सा कटकान्तरेषु वैन्ध्येषु सेना बहुधा विभिन्ना ।
चकार रेवेव महाविरावा बद्धप्रतिश्रुन्ति गुहामुखानि ॥ ३१ ॥

मार्गेति ॥ वैन्ध्येषु विन्ध्यसंबन्धिषु कटकान्तरेषु नितम्बावकाशेषु । 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । मार्गैषिणी मार्गावलोकिनी । अत एव बहुधा विभिन्ना । महाविरावा दीर्घशब्दा सा सेना । रेवेव नर्मदेव । 'रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका' इत्यमरः । गुहामुखानि बद्धप्रतिश्रुन्ति प्रतिध्वानवन्ति चकाराकरोत् ॥ ३१ ॥

स धातुभेदारुणयाननेमिः प्रभुः प्रयाणध्वनिमिश्रतूर्यः ।
व्यलङ्घयद्विन्ध्यमुपायनानि पश्यन्पुलिन्दैरुपपादितानि ॥ ३२ ॥

स इति ॥ धातूनां गैरिकादीनां भेदेनारुणा यानेनेमी रथचक्रधारा यस्य । प्रयाणे ये ध्वनयः क्ष्वेडहेषादयः तन्मिश्राणि तूर्याणि यस्यैवंविधः स प्रभुः कुशः । पुलिन्दैः किरातैरुपपादितानि समर्पितान्युपायनानि पश्यन् । विन्ध्यं व्यलङ्घयत् ॥ ३२ ॥

तीर्थे तदीये गजसेतुबन्धात्प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।
अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः ॥ ३३ ॥

तीर्थ इति ॥ तदीये वैन्ध्ये तीर्थेऽवतारे गजा एव सेतुस्तस्य बन्धाद्धेतोः प्रतीपगां पश्चिमवाहिनीं गङ्गामुत्तरतोऽस्य कुशस्य नभोलङ्घनेन लोलपक्षा हंसा अयत्नेन बालव्यजनीबभूवुश्चामराण्यभवन् । अभूततद्भावे च्विः ॥ ३३ ॥

स पूर्वजानां कपिलेन रोषाद्भस्मावशेषीकृतविग्रहाणाम् ।
सुरालयप्राप्तिनिमित्तमम्भस्त्रैस्रोतसं नौलुलितं ववन्दे ॥ ३४ ॥

स इति ॥ स कुशः कपिलेन मुनिना रोषाद्भस्मावशेषीकृता विग्रहा देहा येषां तेषां पूर्वजानां वृद्धानां सागराणां सुरालयस्य स्वर्गस्य प्राप्तौ निमित्तं नौभिर्लुलितं क्षुभितम् । त्रिस्रोतस इदं त्रैस्रोतसम् । गाङ्गमम्भो ववन्दे ॥ ३४ ॥

इत्यध्वनः कैश्चिदहोभिरन्ते कूलं समासाद्य कुशः सरय्वाः ।
वेदिप्रतिष्ठान्विततताध्वराणां यूपानपश्यच्छतशो रघूणाम् ॥ ३५ ॥

पाठा०—१ 'मार्गैषिणी'. २ 'विन्ध्येषु'; 'विन्ध्यस्य'. ३ 'सोल्लसितम्'. ४ 'तीरम्'.

इतीति ॥ इति कैश्चिदहोभिरध्वनोऽन्तेऽवसाने कुशः सरय्वाः कूलं समासाद्य वितताध्वराणां विस्तृतमखानां रघूणाम्। वेदिः प्रतिष्ठास्पदं येषा तान्। यूपाञ्छतशोऽपश्यत् ॥ ३५ ॥

आधूय शाखाः कुसुमद्रुमाणां स्पृष्ट्वा च शीतान्सरयूतरंगान्।
तं क्लान्तसैन्यं कुलराजधान्याः प्रत्युज्जगामोपवनान्तवायुः ॥ ३६ ॥

आधूयेति ॥ कुलराजधान्या उपवनान्तवायु· कुसुमद्रुमाणां शाखा आधूयेषद्धूत्वा। सुरभिमिन्दथ्येत्यर्थः। शीतान्सरयूतरंगांश्च स्पृष्ट्वा। अनेन शैत्योक्तिः। क्लान्तसैन्यं तं कुशं प्रत्युज्जगाम ॥ ३६ ॥

अथोपशल्ये रिपुमग्नशल्यस्तस्याः पुरः पौरसखः स राजा।
कुलध्वजस्तानि चलध्वजानि निवेशयामास बली बलानि ॥ ३७ ॥

अथेति ॥ अथ रिपुषु मग्नं शल्यं शङ्कु शरो वा यस्य सः। 'शल्य शङ्कौ शरे वंशे' इति विश्वः। पौराणा सखा पौरसखः। कुलस्य ध्वजश्चिह्नभूतो बली स राजा चलाश्चलन्तो वा ध्वजा येषा तानि। तानि बलानि सैन्यानि तस्याः पुरः पुर्या उपशल्ये ग्रामान्ते। 'ग्रामान्त उपशल्यं स्यात्' इत्यमरः। निवेशयामास ॥ ३७ ॥

तां शिल्पिसंघाः प्रभुणा नियुक्तास्तथागतां संभृतसाधनत्वात्।
पुरं नवीचक्रुरपां विसर्गान्मेघा निदाघग्लपितामिवोर्वीम् ॥ ३८ ॥

तामिति ॥ प्रभुणा नियुक्ताः शिल्पिना तक्षादीनां संघाः संभृतसाधनत्वान्मिलितोपकरणत्वात्तां तथागताम्। शून्यामित्यर्थः। पुरमयोध्याम्। मेघा अपां विसर्गाज्जलसेकान्निदाघग्लपितां ग्रीष्मतप्तामुर्वीमिव। नवीचक्रुः परिपूर्याचक्रुः ॥ ३८ ॥

ततः सपर्यां सपशूपहारां पुरः परार्ध्यप्रतिमागृहायाः।
उपोषितैर्वास्तुविधानविद्भिर्निर्वर्तयामास रघुप्रवीरः ॥ ३९ ॥

तत इति ॥ ततो रघुप्रवीरः कुशः प्रतिमा देवताप्रतिकृतयः। अर्चा इत्यर्थः। परार्ध्यप्रतिमागृहायाः प्रशस्तदेवतायतनायाः पुर उपोषितैर्वास्तुविधानविद्भिः प्रयोज्यैः पशूपहारैः सहितां सपशूपहारां सपर्यां निर्वर्तयामास कारयामास। अत्र ण्यन्ताण्णिच्पुनरित्यनुसंधेयम्। अन्यथा वृतेरकर्मकस्य करोत्यर्थत्वे

पाठा०–१ 'उपवनान्तवातः'. २ 'प्रयुक्ताः'. ३ 'तथाविधां'. ४ 'पुनः'. ५ 'निववर्तयामास'.

कारयत्यर्थाभावप्रसङ्गात् । भवितव्यं वृत्तेरण्यन्तकर्त्रा प्रयोज्यत्वेन तन्निर्देशात्प्रयोगान्तरस्यापेक्षितत्वात् ॥ ३९ ॥

**तस्याः स राजोपपदं निशान्तं कामीव कान्ताहृदयं प्रविश्य ।**
**यथार्हमन्यैरनुजीविलोकं संभावयामास यथाप्रधानम् ॥ ४० ॥**

**तस्या इति** ॥ स कुशस्तस्याः पुरः संबन्धि **राजोपपदं** 'राजशब्द'पूर्वं **निशान्तम्** । राजभवनमित्यर्थः । 'निशान्तं भवनोषसोः' इति विश्वः । **कामी** कान्ताहृदयमिव **प्रविश्य** । **अन्यैर्निशान्तैरनुजीविलोकममात्यादिकं यथाप्रधानं** मानानुसारेण । **यथार्हं** यथोचितम् । तत्तदुचितगृहैरित्यर्थः । **संभावयामास** ॥ ४० ॥

**सा मन्दुरासंश्रयिभिस्तुरंगैः शालाविधिस्तम्भगतैश्च नागैः ।**
**पूरावभासे विपणिस्थपण्या सर्वाङ्गनद्धाभरणेव नारी ॥ ४१ ॥**

**सेति** ॥ विपणिस्थानि पण्यानि क्रयविक्रयार्हवस्तूनि यस्याः सा । 'विपणिः पण्यवीथिका' इत्यमरः । सा पूः अयोध्या । **मन्दुरासंश्रयिभिर**श्वशालासंश्रयणशीलैः । 'वाजिशाला तु मन्दुरा' इत्यमरः । 'जिदृक्षि–' (पा. ३।२।१५७) इत्यादिनेनिप्रत्ययः । **तुरंगैर**श्वैः । शालासु गृहेषु ये विधिना स्थापिताः स्तम्भास्तान्गतैः **नागैश्च** । **सर्वाङ्गेषु नद्धान्याभरणानि यस्याः सा नारीव** । **आबभासे** ॥ ४१ ॥

**वसन्स तस्यां वसतौ रघूणां पुराणशोभामधिरोपितायाम् ।**
**न मैथिलेयः स्पृहयांबभूव भर्त्रे दिवो नाप्यलकेश्वराय ॥ ४२ ॥**

**वसन्निति** ॥ स **मैथिलेयः** कुशः **पुराणशोभां** पूर्वशोभाम**धिरोपितायां तस्यां रघूणां वसतावयोध्यायां वसन्** । **दिवो भर्त्रे** देवेन्द्राय **तथाऽलकेश्वराय** कुबेरायापि **न स्पृहयांबभूव** । तावपि न गणयामासेत्यर्थः । 'स्पृहेरीप्सितः' (पा. १।४।३६) इति संप्रदानत्वाच्चतुर्थी । एतेनायोध्याया अन्यनगरातिशायित्वं गम्यते ॥ ४२ ॥

कुशस्य कुमुद्वतीसंगमं प्रस्तौति—

**अथास्य रत्नग्रथितोत्तरीयमेकान्तपाण्डुस्तनलम्बिहारम् ।**
**निःश्वासहार्यांशुकमाजगाम घर्मः प्रियावेशमिवोपदेष्टुम् ॥ ४३ ॥**

पाठा०—१ 'गृहैस्तदीयैः'. २ शालाविधिस्तम्भगतैः'; 'शालागृहैः स्तम्भगतैः'; 'शालागृहस्तम्भगतैः'. ३ 'विपणिस्थपण्यैः'. ४ 'अधिरोहितायाम्'. ५ 'प्रियो वेशम्'.

टिप्प०—1 एतेन इन्द्रकुबेरपुरस्थानं राज्यं, प्रभुरी(?)गुरुपदमयोध्याया इति भावः—इति दिनकर० ।

आपिञ्जरा बद्धरजःकणत्वान्मञ्जर्युदारा शुशुभेऽर्जुनस्य ।
दग्ध्वापि देहं गिरिशेन रोषात्खण्डीकृता ज्येव मनोभवस्य॥५१॥

**आपिञ्जरेति ॥** बद्धरजःकणतयाप्तरजःकणत्वादापिञ्जरोदारा श्लाघीयसी **अर्जुनस्य** ककुभवृक्षस्य । 'इन्द्रद्रुः ककुभोऽर्जुनः' इत्यमरः । **मञ्जरी । देहं दग्ध्वापि रोषाद्गिरिशेन** *गिरिरस्यास्ति निवासत्वेन गिरिशस्तेन । लोमादित्वाच्छ-*प्रत्ययः । गिरौ शेत इति विग्रहे तु 'गिरौ डोर्ड' (वा. १९९९) इत्यस्य छन्दसि विधानाल्लोके प्रयोगानुपपत्तिः स्यात् । तस्मात्पूर्वोक्तमेव विग्रहवाक्यं न्याय्यम् । **खण्डीकृता मनोभवस्य ज्या** मौर्वीव । **शुशुभे** ॥ ५१ ॥

मनोज्ञगन्धं सहकारभङ्गं पुराणशीधुं नवपाटलं च ।
संबध्नता कामिजनेषु दोषाः सर्वे निदाघावधिना प्रमृष्टाः ॥५२॥

**मनोज्ञेति ॥** मनोज्ञगन्धमिति सर्वत्र सबध्यते । **सहकारभङ्गं** चूतपल्लवखण्डम् । पुराणं वासितं शेरतेऽनेनेति शीधुः पक्वेक्षुरसप्रकृतिकः सुराविशेषस्तम् । 'शीङो धुक्' (उ. सू ४७८) इत्युणादिसूत्रेण 'शीङ् स्वप्ने' इत्यस्माद्धातोर्धुक्प्रत्ययः । 'पक्वैरिक्षुरसैरब्धो शीधुः पक्वरसः शिवः' इति यादवः । **नवं पाटलायाः** पुष्पं पाटलं च **संबध्नता** संघट्टयता **निदाघावधिना** ग्रीष्मकालेन । 'अवधिस्त्ववधाने स्यात्सीम्नि काले बिलेऽपि च' इति विश्वः । **कामिजनेषु** विषये **सर्वे दोषा**स्तापादयः **प्रमृष्टाः** परिहृताः ॥ ५२ ॥

जनस्य तस्मिन्समये विगाढे बभूवतुर्द्वौ सविशेषकान्तौ ।
तापापनोदक्षमपादसेवौ स चोदयस्थौ नृपतिः शशी च ॥ ५३॥

**जनस्येति ॥ तस्मिन्समये** ग्रीष्मे **विगाढे** कठिने सति **जनस्य द्वौ सविशेषे** सातिशयं यथा तथा **कान्तौ बभूवतुः**। कौ द्वौ ? **तापापनोदे क्षमा** योग्या, **पादयोर** ेः पादाना रश्मीना च **सेवा** ययोस्तौ । **उदयस्था**वभ्युदयस्थौ **स च नृपतिः शशी च** ॥ ५३ ॥

पाठा०—१ 'रुरुचे'. २ 'खण्डीकृतज्या.' ३ 'पुराणसीधुम्'. ४ '°स्तौ'. ५ 'पादसेवः'. ६ 'स चोदयस्थः'; 'नवोदयस्थौ', 'नवोदयस्थः'.

टिप्प०—1 वसन्ततौ सर्वे गुणाः कन्दर्पोत्पादका भवन्ति –इति सुमति० ।

2 तापो दारिद्र्यदु ख, उपतापश्च, तस्य तापापनोदे रपुटने क्षमा समर्था पादसेवा यस्य स तापापनोदक्षमपादसेवः सदा सर्वदोदये राजाभ्युदये तिष्ठतीति सदोदयस्थः उदयाद्रौ स्थितश्च-इति सुमति० ।

अथोर्मिलोलोन्मदराजहंसे रोधोलतापुष्पवहे सरय्वाः ।
विहर्तुमिच्छा वनितासखस्य तस्याम्भसि ग्रीष्मसुखे बभूव ॥ ५४ ॥

अथेति ॥ अथोर्मिषु लोलाः सतृष्णा उन्मदा राजहंसा यस्मिंस्तस्मिन् । 'लोलश्चलसतृष्णयोः' इत्यमरः । रोधोलतापुष्पाणां वहे प्रापके । पचाद्यच् । ग्रीष्मेषु सुखे सुखकरे सरय्वा अम्भसि पयसि तस्य कुशस्य वनितासखस्य । वनिताभिः सहेत्यर्थः । विहर्तुमिच्छा बभूव ॥ ५४ ॥

स तीरभूमौ विहितोपकार्यामानायिभिस्तामपकृष्टनक्राम् ।
विगाहितुं श्रीमहिमानुरूपं प्रचक्रमे चक्रधरप्रभावः ॥ ५५ ॥

स इति ॥ चक्रधरप्रभावो विष्णुतेजाः स कुशस्तीरभूमौ विहितोपकार्या यस्यास्ताम् । आनायो जालमेषामस्तीत्यानायिनो जालिकाः । 'जालमानायः' (पा. ३।३।१२४) इति निपातः । 'आनायः पुंसि जालं स्यात्' इत्यमरः । तैः, अपकृष्टनक्रामपनीतग्राहां तां सरयूं श्रीमहिम्नोः संपत्प्रभावयोरनुरूपं योग्यं यथा तथा विगाहितुं प्रचक्रमे । अत्र कामन्दकः—'परितापिषु वासरेषु पर्यन्तपटलेखास्थितमाप्तसैन्यचक्रम् । सुविशोधितनक्रमीनजालं व्यवगाहेत जलं सुहृत्समेतः ॥' इति ॥ ५५ ॥

सा तीरसोपानपथावतारादन्योन्यकेयूरविघट्टिनीभिः ।
सनूपुरक्षोभपदाभिरासीदुद्विग्नहंसा सरिदङ्गनाभिः ॥५६ ॥

सेति ॥ सा सरित् सरयूः । तीरसोपानपथेनावतारादवतरणादन्योन्यं केयूरविघट्टिनीभिः संनद्धाङ्गदसंघर्षिणीभिः सनूपुरक्षोभाणि सनूपुरस्खलनानि पदानि यासां ताभिरङ्गनाभिर्हेतुभिरुद्विग्नहंसा भीतहंसाऽऽसीत् ॥ ५६ ॥

परस्पराभ्युक्षणतत्पराणां तासां नृपो मज्जनरागदर्शी ।
नौसंश्रयः पार्श्वगतां किरातीमुपात्तबालव्यजनां बभाषे ॥ ५७ ॥

परस्परेति ॥ नौसंश्रयः परस्परमभ्युक्षणे सेचने तत्पराणामासक्तानां तासां स्त्रीणां मज्जने रागोऽभिलापस्तद्दर्शी नृपः पार्श्वगतामुपात्त-

पाठा०—१ 'विहितोपकार्याम्'. २ 'विलग्नहंसा'; 'विविग्नहंसा'. ३ 'परस्पराक्षेपण'.

टिप्प०—1 भयहेतुत्वस्याविवक्षितत्वात् 'अङ्गनाभिः' इति न पञ्चमी-इति दिनकर०।

**वालव्यजनां** गृहीतचामरां **किरातीं** चामरग्राहिणीं[1] **बभाषे** । 'किरातस्तु द्रुमान्तरे । स्त्रियां चामरवाहिन्यां मत्स्यजालान्तरे द्वयोः' इति केशवः ॥ ५७ ॥

**पश्यावरोधैः शतशो मदीयैर्विगाह्यमानो गलिताङ्गरागैः ।**
**संध्योदयः साभ्र इवैष वर्णं पुष्यत्यनेकं सरयूप्रवाहः ॥५८॥**

पश्येति ॥ **गलिताङ्गरागैर्मदीयैः शतशोऽवरोधैर्विगाह्यमानो** विलोड्यमान **एष सरयूप्रवाहः । साभ्रः** समेघः **संध्योदयः** संध्याविर्भाव **इव । अनेकं** नानाविधं **वर्णं** रक्तपीतादिकं **पुष्यति पश्य** । वाक्यार्थः कर्म ॥ ५८ ॥

**विलुप्तमन्तःपुरसुन्दरीणां यदञ्जनं नौलुलिताभिरद्भिः ।**
**तद्बध्नतीभिर्मदरागशोभां विलोचनेषु प्रतिमुक्तमासाम् ॥ ५९ ॥**

विलुप्तमिति ॥ **नौलुलिताभि**र्नौक्षुभिताभि**रद्भिः । अन्तःपुरसुन्दरीणां यदञ्जनं** कज्जलं **विलुप्तं** हृतं **तदञ्जनं विलोचनेषु** नयनेषु **मदेन** या **रागशोभा** तां **बध्नतीभि**र्घटयन्तीभिरद्भि**रासां प्रतिमुक्तं** प्रत्यर्पितम् । प्रतिनिधिदानमपि तत्कार्यकारित्वात्प्रत्यर्पणमेवेति भावः ॥ ५९ ॥

**एता गुरुश्रोणिपयोधरत्वादात्मानमुद्वोढुमशक्नुवत्यः ।**
**गाढाङ्गदैर्बाहुभिरप्सु बालाः क्लेशोत्तरं रागवशात्प्लवन्ते ॥ ६० ॥**

एता इति ॥ **गुरु** दुर्वहं **श्रोणिपयोधरं** यस्यात्मन इति विग्रहः । **गुरुश्रोणिपयोधरत्वादात्मानं** शरीर**मुद्वोढुमशक्नुवत्य एता बाला गाढाङ्गदैः** श्लिष्टाङ्गदै**र्बाहुभिः क्लेशोत्तरं** दुःखप्रायं यथा तथा **रागवशात्** क्रीडाभिनिवेशपारतन्त्र्यात् । **प्लवन्ते** तरन्ति ॥ ६० ॥

पाठा०—१ 'अशक्नुवन्त्यः'.

---

टिप्प०—1 'स्त्रियां चामरवाहिन्याम्' इत्युक्तत्वात् 'किराती'-पदेनैव चामरग्रहणे लब्धेऽपि सर्वदैव स्त्रियाश्चामरग्रहणं न संभवतीत्यत 'उपात्तवालव्यजनाम्' इति न पौनरुक्त्यम्—इति दिनकर० ॥ किरातीं निर्यामकस्त्रीं बभाषे—इति सुमति० ।

2 पश्येति वाक्यार्थस्य कर्मत्वात्, प्रवाह इति द्वितीयाभावः । 'पश्य मृगो धावति' इतिवत्—इति हेमाद्रिः ।

3 नौलुलितमञ्जनविलोपे हेतु –इति हेमाद्रिः ।

4 यथाऽञ्जनेन नेत्रयोः शोभा सपाद्यते तथाऽद्भिरपि संपादितेत्यर्थः । 'रागोऽनुरागे मात्सर्ये रक्तवर्णे रजस्यपि' इति केशवः—इति दिनकर० ।

अमी शिरीषप्रसवावतंसाः प्रभ्रंशिनो वारिविहारिणीनाम् ।
पारिप्लवाः स्रोतसि निम्नगायाः शैवाललोलांश्छलयन्ति मीनान् ॥ ६१ ॥

अमी इति ॥ वारिविहारिणीनामासां प्रभ्रंशिनो भ्रष्टा निम्नगायाः स्रोतसि पारिप्लवाश्चञ्चलाः । 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे' इत्यमरः । अमी शिरीषप्रसवा एवावतंसाः कर्णभूषाः शैवाललोलाञ्जलनीलिप्रियान् । 'जलनीली तु शैवालम्' इत्यमरः । मीनांश्छलयन्ति प्रादुर्भावयन्ति । शैवालप्रियत्वाच्छिरीषेषु शैवालभ्रमात्प्रादुर्भवन्तीत्यर्थः ॥ ६१ ॥

आसां जलास्फालनतत्पराणां मुक्ताफलस्पर्धिषु शीकरेषु ।
पयोधरोत्सर्पिषु शीर्यमाणः संलक्ष्यते न च्छिदुरोऽपि हारः ॥ ६२ ॥

आसामिति ॥ जलस्यास्फालने तत्पराणामासक्तानामासां स्त्रीणां मुक्ताफलस्पर्धिषु मौक्तिकानुकारिषु पयोधरेषु स्तनेषूत्सर्पन्त्युत्पतन्ति ये तेषु शीकरेषु शीकराणां मध्ये शीर्यमाणो गलन् हारोऽत एव छिदुरः स्वयं छिन्नोऽपि न संलक्ष्यते । 'विदिभिदिच्छिदेः कुरच्' (पा. ३।२।१६२) इति कुरच्प्रत्ययः । शीकरसंसर्गाच्छिन्न इति न ज्ञायत इति भावः ६२ ॥

आवर्तशोभा नतनाभिकान्तेर्भङ्गो भ्रुवां द्वन्द्वचराः स्तनानाम् ।
जातानि रूपावयवोपमानान्यदूरवर्तीनि विलासिनीनाम् ॥ ६३ ॥

आवर्तेति ॥ विलासिनीनां विलसनशीलानां स्त्रीणाम् । 'वौ कषलसकत्थस्रम्भः' (पा. ३।२।१४३) इति घिनुण्प्रत्ययः । रूपावयवानामुपमेयानां यान्युपमानानि लोकप्रसिद्धानि तान्यदूरवर्तीन्यन्तिकगतानि जातानि । कस्य किमुपमानमित्यत आह—नतनाभिकान्तेर्निम्ननाभिशोभाया आवर्तशोभा । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । भ्रुवां भङ्गस्तरंगः । स्तनानां द्वन्द्वचराश्चक्रवाकाः । 'उपमानम्' इति सर्वत्र संबध्यते ॥ ६३ ॥

पाठा०—१ 'शैवाललोलाः'. २ 'करास्फालन'. ३ 'भङ्गाः'; 'भङ्गः'.

टिप्प०—1 'पूर्वमुत्सारितजलचरत्वादिमे मत्स्यायन्ते—इति हेमाद्रिः॥ कर्णपूररूपेण तवा- [illegible]—इति नन्दभः ।

[illegible] मणोपमाने गम्भीरत्वाभेरिति भावः—इति व्याचष्टे । [illegible] कुटिलत्वात् । चक्रभ-

तीरस्थलीबर्हिभिरुत्कलापैः प्रस्निग्धकेकैरभिनन्द्यमानम् ।
श्रोत्रेषु संमूर्च्छति रक्तमासां गीतानुगं वारिमृदङ्गवाद्यम् ॥ ६४ ॥

तीरेति ॥ उत्कलापैरुन्नबर्हैः प्रस्निग्धा मधुराः केका येषां तैः । तीरस्थलीषु स्थितैर्बर्हिभिर्मयूरैरभिनन्द्यमानं रक्तं श्राव्यं गीतानुगं गीतानुसारि । आसां स्त्रीणां संबन्धि । वार्येव मृदङ्गस्तस्य वाद्यं वाद्यध्वनिः श्रोत्रेषु संमूर्च्छति व्याप्नोति ॥ ६४ ॥

संदष्टवस्त्रेष्वबलानितम्बेष्विन्दुप्रकाशान्तरितोडुतुल्याः ।
अमी जलापूरितसूत्रमार्गा मौनं भजन्ते रशनाकलापाः ॥ ६५ ॥

संदष्टेति ॥ संदष्टवस्त्रेषु जलसेकात्संश्लिष्टवस्त्रेष्वबलाना नितम्बेष्वाविकरणेषु । इन्दुप्रकाशेन ज्योत्स्नयाऽन्तरितान्यावृतानि यान्युडूनि नक्षत्राणि तत्तुल्याः । मुक्तामयत्वादिति भावः । अमी जलापूरितसूत्रमार्गाः । निश्चला इत्यर्थः । रशना एव कलापा भूषाः । 'कलापो भूषणे बर्हे' इत्यमरः । मौनम् । निःशब्दतामित्यर्थः । भजन्ते ॥ ६५ ॥

एताः करोत्पीडितवारिधारा दर्पात्सखीभिर्वदनेषु सिक्ताः ।
वक्रेतराग्रैरलकैस्तरुण्यश्चूर्णारुणान्वारिलवान्वमन्ति ॥ ६६ ॥

एता इति ॥ दर्पात्सखीजनं प्रति करैरुत्पीडिता उत्सारिता वारिधारा याभिस्ताः स्वयमपि पुनस्तथैव सखीभिर्वदनेषु सिक्ता एतास्तरुण्यो वक्रेतराग्रैर्जलसेकादृज्वग्रैरलकैः करणैश्चूर्णैः कुङ्कुमादिभिररुणान्वारिलवानुदकबिन्दून् वमन्ति वर्षन्ति ॥ ६६ ॥

पाठा०—१ 'मूर्च्छत्यनुरक्तम्'. २ 'उडुकल्पाः'. ३ 'आसाम्'. ४ 'रसना'. ५ 'गन्धधारम्'. ६ 'आरात्'. ७ 'वहन्ति'.

टिप्प०-[1]मेघशब्दानुकारिस्त्रीकरतलताडितजलशब्दश्रवणसमनन्तरं हर्षवशादुद्गतःकलापो येषां तैः । प्रस्निग्धः केकाशब्दो येषां तैः कूलस्थलीवासिभिर्मयूरैरभिनन्द्यमानं गीतमनुगच्छतीति तादृशम्, रक्तं रागयुक्तमासां स्त्रीणां नितम्बोर्विदोः कान्त्या वार्येव मृदङ्गस्तद्वाद्य कर्णेषु मूर्च्छति वर्धते—इति दिनकर० ।

[2] अत्र यद्यपि सामान्येनैव वस्त्रमभिहितं तथापि चन्द्रप्रकाशसाम्यार्थं दुकूलमवसेयम्—इति दिनकर० ॥ दुयते क्षुमाया आकृष्यते इति दुकूलम्—इति क्षीरस्वामी ।

[3] मावेऽप्युक्तम् (८।६५)-'रामाणाननवरतो रगाहभाजां नारावं व्यतनुत मेखलाकलापः ।' इत्यादिजलक्रीडाकाले दुकूलधरत्वादिन्दुप्रभासाम्यम्-इति हेमाद्रिः ।

[4] अत्र 'वहन्ति' इति पाठमाश्रित्य 'जलसेकादृजुशिखैरलकैः कुङ्कुमादिचूर्णारुणान् जललवान् वहन्ति । पुनः शिक्षयेवेति विशेषः—इति व्याचष्टे दिनकर० ।

उद्बन्धकेशश्च्युतपत्रलेखो विश्लेषिमुक्ताफलपत्रवेष्टः ।
मनोज्ञ एव प्रमदामुखानामम्भोविहाराकुलितोऽपि वेषः ॥ ६७ ॥

उद्बन्धेति ॥ उद्बन्धा उच्छ्रथाः केशा यस्मिन्सः । च्युतपत्रलेखः क्षरितपत्ररचनः । विश्लेषिणो विस्रंसिनो मुक्ताफलपत्रवेष्टा मुक्तामयताडङ्का यस्मिन्सः । एवमम्भोविहाराकुलितोऽपि प्रमदामुखानां वेषो नेपथ्यं मनोज्ञ एव । रम्याणां विकृतिरपि श्रियं तनोतीति भावः ॥ ६७ ॥

स नौविमानादवतीर्य रेमे विलोलहारः सह ताभिरप्सु ।
स्कन्धावलग्नोद्धृतपद्मिनीकः करेणुभिर्वन्य इव द्विपेन्द्रः ॥ ६८ ॥

स इति ॥ स कुशो नौर्विमानमिव नौविमानम् । उपमितसमासः । तस्मादवतीर्य विलोलहारः सन्, ताभिः स्त्रीभिः सह करेणुभिः सह स्कन्धावलग्नोद्धृतपद्मिन्युत्पाटितनलिनी यस्य स तथोक्तः सन् । 'नद्यृतश्च' (पा. ५।४।१५३ ) इति कप्प्रत्ययः । वन्यो द्विपेन्द्र इव । अप्सु रेमे ॥ ६८ ॥

ततो नृपेणानुगताः स्त्रियस्ता भ्राजिष्णुना सातिशयं विरेजुः ।
प्रागेव मुक्ता नयनाभिरामाः प्राप्येन्द्रनीलं किमुतोन्मयूखम् ॥ ६९ ॥

तत इति ॥ ततो भ्राजिष्णुना प्रकाशनशीलेन । 'भुवश्च' (पा. ४।१।४७ ) इति चकारादिष्णुच् । नृपेणानुगताः संगतास्ताः स्त्रियः सातिशयं यथा तथा विरेजुः । प्रागेव इन्द्रनीलयोगात्पूर्वमेव । केवला अपीत्यर्थः । मुक्ता मणयो नयनाभिरामाः । उन्मयूखमिन्द्रनीलं प्राप्य किमुत ? अभिरामा इति किमु वक्तव्यमित्यर्थः ॥ ६९ ॥

वर्णोदकैः काञ्चनशृङ्गमुक्तैस्तमायताक्ष्यः प्रणयादसिञ्चन् ।
तथागतः सोऽतितरां बभासे सधातुनिष्यन्द इवाद्रिराजः ॥ ७० ॥

---

पाठा०—१ 'उद्बद्धकेशः'. २ 'जालशोभः'; 'कर्णवेष्टः'. ३ 'विलोलमालः'; 'विलोलमाल्यः'. ४ 'स्कन्धावलग्नोद्धृतपद्मिनीकः'; 'स्कन्धावलग्नो धृतपद्मिनीकः'. ५ 'अधिगताः'; 'अभिगताः'. ६ 'उन्मयूखं'. 'किमुतेन्द्रनीलम्'. ७ 'शृङ्गसंस्थैः'.

---

टिप्प०—1 कामोद्दीपक एवाभूदित्यर्थः—इति दिनकर० ।

2 विलोलाः परस्परं जलसेकादिना चपला माल्या पुष्पस्रग्यस्य । 'विलोलमाल्यः' इति पाठमादृत्य मालयाः पद्मिन्युपमानम्—इति व्याचष्टे सुमति० ।

3 ततः शोभावता नृपेण संगतास्ताः स्त्रियो भृशं बभुः । कथमित्याह—मुक्तामालाः प्रागेव रम्या उद्गतप्रभमिन्द्रनीलमणिं प्राप्य किमु ?—इति दिनकर० ॥ इन्द्रनीलमणिं प्राप्याधिकशोभा भवति-इति सुमति० ।

ततः स कृत्वा धनुराततज्यं धनुर्धरः कोपविलोहिताक्षः ।
गारुत्मतं तीरगतस्तरस्वी भुजंगनाशाय समाददेऽस्त्रम् ॥ ७७ ॥

तत इति ॥ ततो धनुर्धरः कोपविलोहिताक्षस्तरस्वी बलवान् स कुशस्तीरगतः सन् धनुराततज्यमधिज्यं कृत्वा भुजंगस्य कुमुदस्य नाशाय गारुत्मतं गरुत्मद्देवताकमस्त्रं समाददे ॥ ७७ ॥

तस्मिन्ह्रदः संहितमात्र एव क्षोभात्समाविद्धतरंगहस्तः ।
रोधांसि निघ्नन्नवपातमग्नः करीव वन्यः परुषं ररास ॥ ७८ ॥

तस्मिन्निति ॥ तस्मिन्नस्त्रे संहितमात्रे सत्येव ह्रदः क्षोभाद्धेतोः समाविद्धाः संघट्टितास्तरंगा एव हस्ता यस्य स रोधांसि निघ्नन्पातयन्। अवपाते गजग्रहणगर्ते मग्नः पतितः। 'अवपातस्तु हस्त्यर्थे गर्तश्छन्नस्तृणादिना' इति यादवः। वन्यः करीव परुषं घोरं ररास दध्वान ॥ ७८ ॥

तस्मात्समुद्रादिव मथ्यमानादुद्वृत्तनक्रात्सहसोन्ममज्ज ।
लक्ष्म्येव सार्धं सुरराजवृक्षः कन्यां पुरस्कृत्य भुजंगराजः ॥७९॥

तस्मादिति ॥ मथ्यमानात्समुद्रादिव । उद्वृत्तनक्रात्क्षुभितग्राहात्तस्माद्ध्रदात्। लक्ष्म्या सार्धं सुरराजस्येन्द्रस्य वृक्षः पारिजात इव। कन्यां पुरस्कृत्य भुजंगराजः कुमुदः सहसोन्ममज्ज ॥ ७९ ॥

विभूषणप्रत्युपहारहस्तमुपस्थितं वीक्ष्य विशांपतिस्तम् ।
सौपर्णमस्त्रं प्रतिसंजहार प्रह्वेष्वनिर्बन्धरुषो हि सन्तः ॥ ८० ॥

विभूषणेति ॥ विशांपतिर्मनुजपतिः कुशः । 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः। विभूषणं प्रत्युपहरति प्रत्यर्पयतीति विभूषणप्रत्युपहारः । 'कर्मण्यण्' (पा. ३।२।१)। विभूषणप्रत्युपहारो हस्तो यस्य तम्। उपस्थितं प्राप्तं तं कुमुदं वीक्ष्य सौपर्णं गारुत्मतमस्त्रं प्रतिसंजहार। तथा हि–सन्तः प्रह्वेषु नम्रेष्वनिर्बन्धरुषोऽनियतकोपा हि ॥ ८० ॥

त्रैलोक्यनाथप्रभवं प्रभावात्कुशं द्विषामङ्कुशमस्त्रविद्वान् ।
मानोन्नतेनाप्यभिवन्द्य मूर्ध्ना मूर्धाभिषिक्तं कुमुदो बभाषे ॥८१॥

पाठा०–१ 'अभिघ्नन्'; 'भिन्दन्'. २ 'अङ्कुशमाशु विद्वान्'; 'अङ्कुशवद्विदित्वा'.

टिप्प०–1 यस्मात् सन्तः प्रह्वेषु नम्रेषु अनिर्बन्धरुषो हठरहिताः क्षीणकोपा भवन्ति–इति सुमति०।

**त्रैलोक्येति** ॥ अज्ञं विद्वानस्त्वविद्वान् । 'न लोक–' (पा. २।३।६९) इत्यादिना षष्ठीसमासनिषेधः । 'द्वितीया श्रिता–'( पा. २।१।२४ ) इत्यत्र 'गम्यादीनामुपसंख्यानाद्द्वितीया' (वा. १२४७) इति योगविभागाद्वा समासः । गारुडास्त्रमहिमाभिज्ञ इत्यर्थः । **कुमुदः** । त्रयो लोकास्**त्रैलोक्यम्** । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः । **त्रैलोक्यनाथो** रामः **प्रभवो** जनको यस्य तम् । अत एव **प्रभावाद्द्विषामङ्कुशं** निवारकं **मूर्धाभिषिक्तं** राजानं **कुशं मानोन्नतेनापि मूर्ध्नाऽभिवन्द्य** प्रणम्य **बभाषे** ॥ ८१ ॥

**अवैमि कार्यान्तरमानुषस्य विष्णोः सुताख्यामपरां तनुं त्वाम् ।**
**सोऽहं कथं नाम तवाचरेयमाराधनीयस्य धृतेर्विघातम् ? ॥ ८२ ॥**

**अवैमीति** ॥ **त्वाम्** । 'ओदनान्तरस्तण्डुल' इतिवत् **कार्यान्तरः** कार्यार्थः । 'स्थानात्मीयान्यतादर्थ्यरन्ध्रान्तर्येषु चान्तरम्' इति शाश्वतः । स चासौ **मानुषश्चेति** तस्य **विष्णो** रामस्य **सुताख्यां** पुत्रसंज्ञाम**परां तनुं** मूर्तिम**वैमि** । 'आत्मा वै पुत्रनामासि' (आश्व. गृ. १।१५) इति श्रुतेरित्यर्थः । **स** जान**न्नहमाराधनीयस्यो**पास्यस्य **तव धृतेः** प्रीतेः । 'धृ प्रीतौ' इति धातोः स्त्रियां क्तिन् । **विघातं कथं नामाचरेयम् ?** असंभावितमित्यर्थः ॥ ८२ ॥

**कराभिघातोत्थितकन्दुकेयमालोक्य बालातिकुतूहलेन ।**
**ह्रदात्पतज्ज्योतिरिवान्तरिक्षादादत्त जैत्राभरणं त्वदीयम् ॥ ८३ ॥**

**करेति** ॥ **कराभिघातेनोत्थित ऊर्ध्वं** गतः **कन्दुको** यस्याः सा । कन्दुकार्थमूर्ध्वं पश्यन्तीत्यर्थः । **इयं बाला अन्तरिक्षाज्ज्योतिर्**नक्षत्र**मिव** । 'ज्योतिर्भद्योतदृष्टिषु' इत्यमरः । **ह्रदात्पतत्त्वदीयं जैत्राभरणमालोक्य** । **अतिकुतूहलेना**त्यन्तकौतुकेन । **आदत्ता**गृह्णात् ॥ ८३ ॥

**तदेतदाजानुविलम्बिना ते ज्याघातरेखाकिणलाञ्छनेन ।**
**भुजेन रक्षापरिघेण भूमेरुपैतु योगं पुनरंसलेन ॥ ८४ ॥**

**तदिति** ॥ **तदेतदाभरणमाजानुविलम्बिना** दीर्घेण । **ज्याघातेन** या **रेखा** रेखाकारा ग्रन्थयस्तासां **किणं** चिह्नं तदेव **लाञ्छनं** यस्य तेन[2] । **भूमे रक्षायाः**

पाठ०–१ 'कराभिघातोच्छ्रितकन्दुका'. २ 'जवात्पतत्'; 'औत्पातिकम्'. ३ 'ज्याघातलेखास्थिर'.

टिप्प०—1 'औत्पातिकं ज्योतिरिवान्तरिक्षात्' इति पाठमादृत्य-उत्पाते भवमौत्पातिकम् । उत्पात उपद्रवः । 'ह्रदात्पतज्ज्योति' इत्यपि पाठः—इति व्याख्यातवान् सुमति० ।
2 धनुर्वेदाभ्यासकुशलेन,—इति सुमति० ।

**परिघेण** रक्षार्गलेन । 'परिघो योगभेदास्त्रमुद्गरेऽर्गलघातयोः' इत्यमरः । **अंसलेन** बलवता **ते भुजेन पुनर्योगं संगतिमुपैतु** । एतैर्विशेषणैर्महाभाग्यशौर्यधुरंधरत्वबलवत्त्वादि गम्यते ॥ ८४ ॥

**इमां स्वसारं च यवीयसीं मे कुमुद्वतीं नार्हसि नानुमन्तुम् ।**
**आत्मापराधं नुदतीं चिराय शुश्रूषया पार्थिव ! पादयोस्ते ॥ ८५ ॥**

**इमामिति** ॥ किंच, हे **पार्थिव** ! **ते** तव **पादयोश्चिराय शुश्रूषया** परिचर्यया । 'शुश्रूषा श्रोतुमिच्छायां परिचर्याप्रदानयोः' इति विश्वः । **आत्मापराधम्** आभरणग्रहणरूपं **नुदतीम्** । परिजिहीर्षन्तीमित्यर्थः । 'आशंसायां भूतवच्च' (पा. ३।३।१३२) इति चकाराद्वर्तमानार्थे शतृप्रत्ययः । 'आच्छीनद्योर्नुम्' (पा. ७।१।८०) इत्यस्य वैकल्पिकत्वान्नुमभावः । **इमां मे यवीयसीं** कनिष्ठां **स्वसारं** भगिनीं **कुमुद्वतीमनुमन्तुं नार्हसीति न** । अर्हस्येवेत्यर्थः ॥ ८५ ॥

**इत्यूचिवानुपहृताभरणः क्षितीशं**
**श्लाघ्यो भवान्स्वजन इत्यनुभाषितारम् ।**
**संयोजयां विधिवदास समेतबन्धुः**
**कन्यामयेन कुमुदः कुलभूषणेन ॥ ८६ ॥**

**इतीति** ॥ **इति** पूर्वश्लोकोक्तम् । **ऊचिवान्** उक्तवान् । ब्रुवः क्वसुः । **उपहृताभरणः** प्रत्यर्पिताभरणः **कुमुदः** । हे कुमुद ! **भवाञ्श्लाघ्यः स्वजनो** बन्धुः । **इत्यनुभाषितारम्** अनुवक्तारं **क्षितीशं** कुशं **समेतबन्धुः**र्युक्तबन्धुः सन् **कन्यामयेन** कन्यारूपेण **कुलयोर्भूषणेन विधिवत्संयोजयामास** । न केवलं तदीयमेव किंतु स्वकीयमपि भूषणं तस्मै दत्तवानिति ध्वनिः । आम्प्रत्ययानुप्रयोगयोर्व्यवधानं तु प्रागेव समाहितम् ॥ ८६ ॥

**तस्याः स्पृष्टे मनुजपतिना साहचर्याय हस्ते**
**माङ्गल्योर्णावलयिनि पुरः पावकस्योच्छिखस्य ।**
**दिव्यस्तूर्यध्वनिरुदचरद्व्यश्नुवानो दिगन्ता-**
**न्गन्धोदग्रं तदनु ववृषुः पुष्पमाश्चर्यमेघाः ॥ ८७ ॥**

पाठा०–१ 'निजापराधम्'. २ 'उपचिताभरण.'; 'उपहिताभरणः'. ३ 'अभिभाषितारम्'. ४ 'तमेकबन्धुम्'.

टिप्प०—1 'कृभ्वानुप्रयुज्यते लिटि' (पा. ३।१।४०) इति नियमात् 'विधिवत्' इति मध्ये प्रयोगश्चिन्त्यः। अथवा 'विधिवत्' इत्यस्य क्रियाविशेषणत्वान्निर्दोष इति कश्चित्–इति शि० सु० । १

**तस्या इति** ॥ **मनुजपतिना** कुशेन **साहचर्याय** । सहधर्माचरणायेत्यर्थः । **मौङ्गल्या** मङ्गले साधुर्या **ऊर्णा** मेषादिलोम । 'ऊर्णा मेषादिलोम्नि स्यात्' इत्यमरः । अत्र लक्षणया तन्निर्मितं सूत्रमुच्यते । तया **वलयिनि** वलयवति **तस्याः** कुमुद्वत्या **हस्ते** पाणावुच्छिखस्योदर्चिषः **पावकस्य पुरो**ऽग्रे **स्पृष्टे** गृहीते सति **दिगन्तान् व्यश्नुवानो** व्याप्नुवन् । **दिव्यस्तूर्यध्वनिरुदचरदु**त्थितः । **तदन्वाश्चर्या** अद्भुता **मेघा गन्धेनोदग्र**मुत्कटं **पुष्पं** पुष्पाणि । जात्यभिप्रायेणैकवचनम् । **चवृषुः** । 'आश्चर्य'शब्दस्य 'रौद्रं तूग्रममी त्रिषु । चतुर्दश' इत्यमरवचनात्त्रिलिङ्गत्वम् ॥ ८७ ॥

> **इत्थं नागस्त्रिभुवनगुरोरौरसं मैथिलेयं**
> **लब्ध्वा बन्धुं तमपि च कुशः पञ्चमं तक्षकस्य ।**
> **एकः शङ्कां पितृवधरिपोरत्यजद्वैनतेया-**
> **च्छान्तव्यालामवनिमपरः पौरकान्तः शशास ॥ ८८ ॥**

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृतौ
कुमुद्वतीपरिणयो नाम षोडशः सर्गः ।

**इत्थमिति** ॥ **इत्थं नागः** कुमुदः । त्रयाणां भुवनानां समाहारस्**त्रिभुवनम्** । 'तद्धितार्थ–' ( पा. २।१।५१ ) इत्यादिना तत्पुरुषः । अदन्तद्विगुत्वेऽपि पात्राद्यन्तत्वान्नपुंसकत्वम् । 'पात्राद्यन्तैरनेकार्थो द्विगुर्लक्ष्यानुसारतः' इत्यमरः । तस्य **गुरू** रामः । **तस्यौरसं** धर्मपत्नीजं पुत्रम् । 'औरसो धर्मपत्नीजः' ( २।१२८ ) इति याज्ञवल्क्यः । **मैथिलेयं** कुशं **बन्धुं लब्ध्वा कुशो**ऽपि **च तं तक्षकस्य पञ्चमं** पुत्रं तं कुमुदं **बन्धुं लब्ध्वा** । **एक**स्तयोरन्यतरः कुमुदः **पितृवधेन रिपोर्वैनतेया**द्गरुडात् । गुरुणा वैष्णवांशेन कुशेन त्याजितवैरत्वादिति भावः । **शङ्कां** भयम**त्यजत्** । **अपरः** कुशः **शान्तव्यालां** कुमुदाज्ञया वीतसर्पभया**मवनिम**त एव **पौरकान्तः** पौरप्रियः सन् । **शशास** ॥ ८८ ॥

इति महोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशव्याख्यायां
संजीविनीसमाख्यायां षोडशः सर्गः ।

---

पाठा०–'विषधररिपोः'; 'अहिकुलरिपोः'.

---

टिप्प०–1 मङ्गलनिमित्तं यदूर्णाकङ्कणं तदस्यास्तीति माङ्गल्योर्णावलयी तस्मिन् इति सुमति० ।
2 तक्षकस्य नागराजस्य पञ्चमं प्रतिपौत्र–इति सुमति० ॥ तक्षकपौत्रस्य पौत्रम्–इति दिनकर० ।
3 पितुः काद्रवेयस्य वधाद्रिपुभूताद्गरुडात्–इति दिनकर० ।

## सप्तदशः सर्गः।

नमो रामपदाम्भोजं रेणवो यत्र संततम्।
कुर्वन्ति कुमुदप्रीतिमरण्यगृहमेधिनः॥

**अतिथिं नाम काकुत्स्थात्पुत्रं प्राप कुमुद्वती।**
**पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना॥ १॥**

**अतिथिमिति॥ कुमुद्वती काकुत्स्थात्कुशात्। अतिथिं नाम पुत्रम्। चेतना** बुद्धिः **पश्चिमा**दन्तिमा**द्यामिन्या** रात्रे**र्यामात्प्रहरात्।** 'द्वौ यामप्रहरौ समौ' इत्यमरः। **प्रसादं** वैशद्यमि**व। प्राप।** ब्राह्मे मुहूर्ते सर्वेषां बुद्धिवैशद्यं भवतीति प्रसिद्धिः॥ १॥

**स पितुः पितृमान्वंशं मातुश्चानुपमद्युतिः।**
**अपुनात्सवितेवोभौ मार्गावुत्तरदक्षिणौ॥ २॥**

**स इति॥ पितृमान्।** प्रशंसार्थे मतुप्। सुशिक्षित इत्यर्थः। **अनुपमद्युतिः** सवितुश्चेदं विशेषणम्। **सोऽतिथिः पितुः** कुशस्य **मातुः** कुमुद्वत्याश्च **वंशम्। सविता। उत्तरदक्षिणावुभौ मार्गाविव। अपुनात्** पवित्रीकृतवान्॥ २॥

**तमादौ कुलविद्यानामर्थमर्थविदां वरः।**
**पश्चात्पार्थिवकन्यानां पाणिमग्राहयत्पिता॥ ३॥**

**तमिति॥** अर्थाञ्छब्दार्थान्दानसंग्रहादिक्रियाप्रयोजनानि च विदन्तीत्य**र्थविदः** तेषां **वरः** श्रेष्ठः **पिता** कुशः। **तम**तिथि**मादौ** प्रथमं **कुलविद्याना**मान्वीक्षिकी-त्रयीवार्ता-दण्डनीतीना**मर्थ**मभिधेय**मग्राहय**दबोधयत्। **पश्चात्पार्थिवकन्यानां पाणिमग्राहयत्** स्वीकारितवान्। उदवाहयदित्यर्थः। ग्रहेर्ण्यन्तस्य सर्वत्र द्विकर्मकत्वमस्तीत्युक्तं प्राक्॥ ३॥

---

पाठा०–१ 'आप'.

---

टिप्प०—1 अत्र चेतना प्रसादमाप्नोति, न पुनरापेति कालभेद इति काव्यप्रकाशे। तट्टीकाकृद्भास्करश्च सर्वेषा चेतनाऽद्यापि प्रसादमाप्नोति इत्यादिवर्तमानकाल एव न्याय्यः–इति हेमाद्रिः।

2 वल्लभस्तु-ण्यन्ता अपि द्विकर्मका भवन्ति। यथा–'वाचयति पुत्रं श्लोकं पिता–इत्यादि॥ 'ग्रुगृहद्दृशाम्–' इति केचिदिति वर्णं। भट्टिकाव्ये (२।४२)–'अजिग्रहत्तं जनको धनुस्तद्' इति विद्यासंबन्धे बुद्ध्यर्थत्वाद्द्वितीया च। एके पूर्वार्धे ग्रहेर्बुद्ध्यर्थत्वात् 'कुशम्' इति द्वितीया उत्तरार्धे 'तेन' इति विभक्तिविपरिणामं कुर्वन्ति–इति हेमाद्रिः।

जात्यस्तेनाभिजातेन शूरः शौर्यवता कुशः।
अमन्यतैकमात्मानमनेकं वशिना वशी ॥ ४ ॥

**जात्य** इति ॥ जातौ भवो जात्यः कुलीनः **शूरो** वशी **कुशोऽभिजातेन** कुलीनेन। 'अभिजातः कुलीनः स्यात्' इत्यमरः। **शौर्यवता वशिना तेनाति**थिना। करणेन **एकमात्मानम्**। एको न भवतीत्यनेकस्तम्। **अमन्यत**। सर्वगुणसामग्र्यादात्मजमात्मन एव रूपान्तरममंस्तेत्यर्थः ॥ ४ ॥

स कुलोचितमिन्द्रस्य साहायकमुपेयिवान्।
जघान समरे दैत्यं दुर्जयं तेन चावधि ॥ ५ ॥

**स** इति ॥ **स** कुशः **कुलोचितं** कुलाभ्यस्त**मिन्द्रस्य साहायकं** सहकारित्वम्। 'योपधात्–' (पा. ५।१।१३२) इत्यादिना वुञ्। **उपेयिवान्** प्राप्तः सन् **समरे** नामतोऽर्थतश्च **दुर्जयं दैत्यं जघान**ावधीत्। **तेन** दैत्येन। **अवधि** हतश्च। 'लुङि च' ( पा. २।४।४३ ) इति हनो वधादेशः ॥ ५ ॥

तं स्वसा नागराजस्य कुमुदस्य कुमुद्वती।
अन्वगात्कुमुदानन्दं शशाङ्कमिव कौमुदी ॥ ६ ॥

**तमिति** ॥ **कुमुदस्य** नाम नागराजस्य **स्वसा कुमुद्वती** कुशपत्नी **कुमुदानन्दं शशाङ्कं कौमुदी** ज्योत्स्नेव। **तं** कुश**मन्वगात्**। कुशस्तु। कुः पृथ्वी तस्या मुत्प्रीतिः सैवानन्दो यस्येति कुमुदानन्दः। परानन्देन स्वयमानन्दतीत्यर्थः ॥ ६ ॥

तयोर्दिवस्पतेरासीदेकः सिंहासनार्धभाक्।
द्वितीयापि सखी शच्याः पारिजातांशभागिनी ॥ ७ ॥

**तयोरिति** ॥ **तयोः** कुश-कुमुद्वत्योर्मध्ये **एकः** कुशो **दिवस्पतेरि**न्द्रस्य **सिंहासनार्धं** सिंहासनैकदेशः, तद्भाक्। **आसीत्**। **द्वितीया** कुमुद्वत्यपि **शच्या**

पाठा०–१ 'जन्य'. २ 'साहायिकम्'. ३ 'सः'. ४ 'च'. ५ 'अंशभाजिनी'.

टिप्प०—1 'जन्यः' इति पाठे जन्यो जनकः–इति दिनकर०।

2 'कुमुदानन्दम्' इत्युभयविशेषणम्; रवीन्दुकुलोभयोत्पत्तित्वात् इति वल्लभः।

3 यथा कौमुदी चन्द्रमनुयाति। यत उक्तं च–'तिस्रः कोट्यर्धकोटी च यावद्रोमाणि मानवे। तावद्वर्षसहस्राणि भर्तारं याऽनुगच्छति'–इति सुमति०।

4 तदर्थं समरे मृतत्वात्–इति वल्लभः।

5 कुमुद्वती पारिजातपुष्पांशभागिनी शच्याः सख्यासीत्; पत्यनुगमनात्। 'तिस्रः कोट्यर्धकोटी च यानि लोमानि मानुषे। तावत्कालं वसेत्स्वर्गे भर्तारं याऽनुगच्छति' इति शाङ्गिरसौ–इति हेमाद्रिः।

इन्द्राण्याः पारिजाततांशस्य भागिनी ग्राहिणी। 'संपृच–' इत्यादिना भजेर्घिनुण्प्रत्ययः। समपत्यासीत्। कस्कादित्वाद्विसर्गस्य सत्वं साधुः ॥ ७ ॥

> तदात्मसंभवं राज्ये मन्त्रिवृद्धाः समादधुः।
> स्मरन्तः पश्चिमामाज्ञां भर्तुः सङ्ग्रामयायिनः ॥ ८ ॥

तदिति ॥ सङ्ग्रामयायिनः सङ्ग्रामं यास्यतः। आवश्यकार्थे णिनिः। 'अकेनोर्भविष्यदाधमर्ण्ययोः' (पा. २।३।७०) इति षष्ठीनिषेधः। भर्तुः स्वामिनः कुशस्य पश्चिमामन्तिमामाज्ञां विपर्यये पुत्रोऽभिषेक्तव्य इत्येवरूपां स्मरन्तो मन्त्रिवृद्धास्तदात्मसंभवमतिथिं राज्ये समादधुर्निदधुः ॥ ८ ॥

> ते तस्य कल्पयामासुरभिषेकाय शिल्पिभिः।
> विमानं नवमुद्वेदि चतुःस्तम्भप्रतिष्ठितम् ॥ ९ ॥

त इति ॥ ते मन्त्रिणस्तस्यातिथेरभिषेकाय शिल्पिभिरुद्वेदि उन्नतवेदिकं चतुःस्तम्भप्रतिष्ठितं चतुर्षु स्तम्भेषु प्रतिष्ठितं नवं विमानं मण्डपं कल्पयामासुः कारयामासुः ॥ ९ ॥

> तत्रैनं हेमकुम्भेषु संभृतैस्तीर्थवारिभिः।
> उपतस्थुः प्रकृतयो भद्रपीठोपवेशितम् ॥ १० ॥

तत्रेति ॥ तत्र विमाने भद्रपीठे पीठविशेष उपवेशितमेनमतिथिं हेमकुम्भेषु संभृतैः सङ्गृहीतैस्तीर्थवारिभिः। करणैः प्रकृतयो मन्त्रिण उपतस्थुः ॥ १० ॥

> नदद्भिः स्निग्धगम्भीरं तूर्यैराहतपुष्करैः।
> अन्वमीयत कल्याणं तस्याविच्छिन्नसंतति ॥ ११ ॥

नदद्भिरिति ॥ आहतं पुष्करं मुखं येषां तैः। 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखेऽपि च' इत्यमरः। स्निग्धं मधुरं गम्भीरं च नदद्भिस्तूर्यैस्तस्यातिथेरविच्छिन्नसंतत्यविच्छिन्नपारंपर्यं कल्याणं भावि शुभमन्वमीयतानुमितम् ॥ ११ ॥

---

पाठा०–१ 'वितानम्'. २ 'उपशोभितम्'. ३ 'संततेः'.

---

टिप्प०—1 अत्र प्राप्तिमात्रविवक्षया परस्मैपदम्–इति दिनकर०।

2 'स्निग्धगम्भीरम्' इत्युभयमप्यत्र पठन्ति। उक्तं च शकुन्तार्णवे–'स्वरैर्दुःख भवेद्धैर्ये सुखं सर्वे शकुन्तयः। आहतानि च वाद्यानि स्निग्धवाचा च मङ्गलम्' ॥ इति हेमाद्रिः।

दूर्वायवाङ्कुरप्लक्षत्वगभिन्नपुटोत्तरान् ।
ज्ञातिवृद्धैः प्रयुक्तान्स भेजे नीराजनाविधीन् ॥ १२ ॥

**दूर्वेति** ॥ सोऽतिथिः दूर्वाश्च यवाङ्कुराश्च प्लक्षत्वचश्च अभिन्नपुटा बालपल्लवाश्चोत्तराणि प्रधानानि येषु तान् । अभिन्नपुटानि मधूकपुष्पाणीति केचित् । कमलानीत्यन्ये । ज्ञातिषु ये वृद्धास्तैः प्रयुक्तान्नीराजनाविधीन्भेजे ॥ १२ ॥

पुरोहितपुरोगास्तं जिष्णुं जैत्रैरथर्वभिः ।
उपचक्रमिरे पूर्वमभिषेक्तुं द्विजातयः ॥ १३ ॥

**पुरोहितेति** ॥ पुरोहितपुरोगाः पुरोहितप्रमुखा द्विजातयो ब्राह्मणा जिष्णुं जयशीलं तमतिथिं जैत्रैर्जयशीलैरथर्वभिर्मन्त्रविशेषैः करणैः पूर्वमभिषेक्तुमुपचक्रमिरे ॥ १३ ॥

तस्यौघमहती मूर्ध्नि निपतन्ती व्यरोचत ।
सशब्दमभिषेकश्रीर्गङ्गेव त्रिपुरद्विषः ॥ १४ ॥

**तस्येति** ॥ तस्यातिथेर्मूर्ध्नि सशब्दं निपतन्त्योघमहती महाप्रवाहा । अभिषिच्यतेऽनेनेत्यभिषेको जलम् । स एव श्रीः । यद्वा,—तस्य श्रीः समृद्धिस्त्रिपुरद्विषः शिवस्य, मूर्ध्नि निपतन्ती गङ्गेव । व्यरोचत । त्रयाणां पुराणां द्वेष्टेति विग्रहः ॥१४॥

स्तूयमानः क्षणे तस्मिन्नलक्ष्यत स वन्दिभिः ।
प्रवृद्ध इव पर्जन्यः सारङ्गैरभिनन्दितः ॥ १५ ॥

**स्तूयमान इति** ॥ तस्मिन्क्षणेऽभिषेककाले वन्दिभिः स्तूयमानः सोऽतिथिः प्रवृद्धः प्रवृद्धवान् । कर्तरि क्तः । अत एव सारङ्गैश्चातकैरभिनन्दितः पर्जन्यो मेघ इव । अलक्ष्यत ॥ १५ ॥

---

पाठा०—१ 'जातिवृद्धप्रयुक्तान्'. २ 'च'. ३ 'द्विजोत्तमाः'. ४ 'अब्देरपाद्य'. ५ 'प्रवृष्टः'; 'प्रवृष्ट इव पर्जन्यः सारङ्गैरभिनन्द्यते'. ६ 'चातकैः'.

---

टिप्प०—1 अभिन्नं सदष्टं पल्लवपुटमस्येति अभिन्नपुटं मधूकं च एतान्युत्तर यत्र तं ज्ञातिवृद्धैः प्रयुक्तं नीराजनाविधिमारात्रिकं स नृपो भेजे। अभिन्नपुटः कार्पासो वा भल्लातको वा । अभिन्नपट— इति पाठेऽहतं वासः—इति दिनकर० । दूर्वायवांकुरः प्लक्षत्वक् चाभिन्नपुटानि च तैरुत्तरं श्रेष्ठम् । अभिन्नपुटानि मधूकपुष्पाणि, संदष्टपल्लवत्वात् । यद्वा,—दूर्वादिभिरभिन्नाः युतापुटाः पल्लवास्तैरुत्तर सहितम् । 'पुट'शब्दस्य पल्लवार्थत्वे ससतात्याम्—'संदष्टोऽपुटः' इति हेमाद्रिः ।

(—न्यः कश्चन आसः
रा नाशयन्तु ) इति

तस्य सन्मन्त्रपूताभिः स्नानमद्भिः प्रतीच्छतः।
ववृधे वैद्युतस्याग्नेर्वृष्टिसेकादिव द्युतिः ॥ १६ ॥

तस्येति ॥ सन्मन्त्रैः पूताभिः शुद्धाभिरद्भिः स्नानं प्रतीच्छतः कुर्वतस्तस्य वृष्टिसेकात्। विद्युतोऽयं वैद्युतः। तस्याविन्धनस्याग्नेरिव। द्युति-र्ववृधे ॥ १६ ॥

स तावदभिषेकान्ते स्नातकेभ्यो ददौ वसु।
यावतैषां समाप्येरन्यज्ञाः पर्याप्तदक्षिणाः ॥ १७ ॥

स इति ॥ सोऽतिथिरभिषेकान्ते स्नातकेभ्यो गृहस्थेभ्यस्तावत्तावत्परिमाणं वसु धनं ददौ। यावता वसुना। एषां स्नातकानां पर्याप्तदक्षिणाः समग्रदक्षिणा यज्ञाः समाप्येरन्। तावद्ददावित्यन्वयः ॥ १७ ॥

ते प्रीतमनसस्तस्मै यामाशिषमुदैरयन्।
सा तस्य कर्मनिर्वृत्तैर्दूरं पश्चात्कृता फलैः ॥ १८ ॥

त इति ॥ प्रीतमनसस्ते स्नातकास्तस्मा अतिथये यामाशिषमुदैरयन् व्याहरन् साशीस्तस्यातिथेः कर्मनिर्वृत्तैः पूर्वपुण्यनिष्पन्नैः फलैः साम्राज्यादि-भिर्दूरं दूरतः पश्चात्कृता। स्वफलदानस्य तदानीमनवकाशात्कालान्तरोद्वीक्षणं न चकारेत्यर्थः ॥ १८ ॥

बन्धच्छेदं स बद्धानां वधार्हाणामवध्यताम्।
धुर्याणां च धुरो मोक्षमदोहं चादिशद्गवाम् ॥ १९ ॥

बन्धेति ॥ सोऽतिथिर्बद्धानां बन्धच्छेदं वधार्हाणामवध्यताम्। धुरं वहन्तीति धुर्या बलीवर्दादयः। तेषां धुरो भारस्य मोक्षं गवामदोहं वत्सानां पानार्थं दोहनिवृत्तिं चादिशदादिदेश ॥ १९ ॥

क्रीडापतत्रिणोऽप्यस्य पञ्जरस्थाः शुकादयः।
लब्धमोक्षास्तदादेशाद्यथेष्टगतयोऽभवन् ॥ २० ॥

क्रीडेति ॥ पञ्जरस्थाः शुकादयः। अस्यातिथेः क्रीडापतत्रिणोऽपि। किमु-तान्य इति 'अपि'शब्दार्थः। तदादेशात्तस्यातिथेः शासनात्। लब्धमोक्षाः सन्तो यथेष्टं गतिर्येषां ते स्वेच्छाचारिणोऽभवन् ॥ २० ॥

---

पाठा०—१ 'यावदेषाम्'; 'यावत्तेषाम्'. २ 'उदीरयन्'. ३ 'निर्वृत्तैः'.

ततः कक्ष्यान्तरन्यस्तं गजदन्तासनं शुचि ।
सोत्तरच्छदमध्यास्त नेपथ्यग्रहणाय सः ॥ २१ ॥

तत इति ॥ ततः सोऽतिथिः । **नेपथ्यग्रहणाय** प्रसाधनस्वीकाराय । **कक्ष्यान्तरं** हर्म्याङ्गणविशेषः । 'कक्ष्या प्रकोष्ठे हर्म्यादेः' इत्यमरः । तत्र **न्यस्तं** स्थापितं **शुचि** निर्मलं **सोत्तरच्छदमा**स्तरणसहितं **गजदन्तस्यासनं** पीठम**ध्यास्त** । तत्रोपविष्ट इत्यर्थः ॥ २१ ॥

तं धूपाश्यानकेशान्तं तोयनिर्णिक्तपाणयः ।
आकल्पसाधनैस्तैस्तैरुपसेदुः प्रसाधकाः ॥ २२ ॥

तमिति ॥ **तोयेन निर्णिक्तपाणयः** क्षालितहस्ताः **प्रसाधका** अलंकर्तारो **धूपेन** गन्धद्रव्यधूपेन**श्यानकेशान्तं** शोषितकेशपाशान्तं **तम**तिथिं **तैस्तैराक**ल्पस्य नेपथ्यस्य **साधनै**र्गन्धमाल्यादिभिः । **उपसेदुरु**पतस्थुः, अलंचक्रुरित्यर्थः॥२२॥

तेऽस्य मुक्तागुणोन्नद्धं मौलिमन्तर्गतस्रजम् ।
प्रत्यूपुः पद्मरागेण प्रभामण्डलशोभिना ॥ २३

त इति ॥ **ते** प्रसाधका **मुक्तागुणेन** मौक्तिकसरेणो**न्नद्धमु**द्बद्ध**मन्तर्गतस्र**जमस्यातिथेर्मौलिं धम्मिल्लं **प्रभामण्डलशोभिना पद्मरागेण** माणिक्येन **प्रत्यूपुः** प्रत्युप्तं चक्रुः ॥ २३ ॥

चन्दनेनाङ्गरागं च मृगनाभिसुगन्धिना ।
समापय्य ततश्चक्रुः पत्त्रं विन्यस्तरोचनम् ॥ २४ ॥

चन्दनेनेति ॥ किंच, **मृगनाभ्या** कस्तूरिकया **सुगन्धिना** चन्दनेन **अङ्ग**रागमङ्गविलेपनं **समापय्य** समाप्य **ततो**ऽनन्तरं **विन्यस्ता रोचना** गोरोचना यस्मिंस्तत्पत्त्रं पत्ररचनं **चक्रुः** ॥ २४ ॥

आमुक्ताभरणः स्रग्वी हंसचिह्नदुकूलवान् ।
आसीदतिशयप्रेक्ष्यः स राज्यश्रीवधूवरः ॥ २५ ॥

पाठा०—१ 'कक्षान्तर'. २ 'तस्य'. ३ 'मुक्तागुणानद्धम्'. ४ 'सम्यन्तरस्रजम्' ५ 'वर्धिना'; 'वन्धिना'. ६ 'दुकूलभाक्'; 'दुकूलभृत्'; 'हंसचिह्नदुकूलवत्'.

टिप्प०—1 प्रसाधका नापितादयस्तैस्तैरलङ्कारसाधनैर्हारकटकादिभिर्धूपेन श्याना स्निग्धाः केशानामन्तः स्वरूपं यस्य तं नृपमवस्थिताः—इति दिनकर० ॥ धूपेनाश्याना ईषच्छुष्काः केशान्ताः यस्य तम् । 'अन्त'शब्दः स्वरूपे वा—इति हेमाद्रिः ।

**आमुक्तेति** ॥ **आमुक्ताभरणः** आसञ्जिताभरणः । स्रजोऽस्य सन्तीति **स्रग्वी**। 'अस्मायामेधास्रजो विनिः' (पा.५।२।१२१) इति विनिप्रत्ययः । हंसाश्चिह्नमस्येति **हंसचिह्नं यद्दुकूलं तद्वान्**। अत्र बहुव्रीहिणैवार्थसिद्धेर्मतुबानर्थक्येऽपि सर्वधनीत्यादिवत् कर्मधारयादपि मत्वर्थीयं प्रत्ययमिच्छन्ति । एवमन्यत्रापि द्रष्टव्यम्। **राज्यश्रीरेव वधूर्नवोढा तस्या वरो** वोढा। 'वधूः स्नुषा नवोढा स्त्री वरो जामातृषिङ्गयोः' इति विश्वः । **सोऽतिथिः** । **अतिशयेन प्रेक्ष्यो** दर्शनीय **आसीत्**। वरोऽप्येवंविशेषणः ॥ २५ ॥

**नेपथ्यदर्शिनश्छाया तस्यादर्शे हिरण्मये ।**
**विरराजोदिते सूर्ये मेरौ कल्पतरोरिव ॥ २६ ॥**

**नेपथ्येति** ॥ **हिरण्मये** सौवर्णे **आदर्शे** दर्पणे **नेपथ्यदर्शिनो** वेषं पश्यतस्तस्यातिथेश्**छाया** प्रतिबिम्बम् । **उदिते सूर्ये** दर्पणकल्पे **मेरौ** यः **कल्पतरुस्तस्य छायेव**। **विरराज**। तस्य सूर्यसकान्तबिम्बस्य सम्भवात् 'मेरौ' इत्युक्तम् ॥२६॥

**स राजककुदव्यग्रपाणिभिः पार्श्ववर्तिभिः ।**
**ययावुदीरितालोकः सुधर्मानवमां सभाम् ॥ २७ ॥**

**स इति** ॥ **सो**ऽतिथी **राजककुदा**नि राजचिह्नानि छत्रचामरादीनि । 'प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्' इत्यमरः । तेषु **व्यग्राः पाणयो** येषां तैः **पार्श्ववर्तिभिर्जनैरुदीरितालोक** उच्चारितजयशब्दः। 'आलोको जयशब्दः स्यात्' इति हलायुधः । **सुधर्मा**या देवसभाया **अनवमा**मन्यूनां **सभा**मास्थानीं **ययौ**। 'स्यात्सुधर्मा देवसभा' इत्यमरः ॥ २७ ॥

**वितानसहितं तत्र भेजे पैतृकमासनम् ।**
**चूडामणिभिरुद्घृष्टपादपीठं महीक्षिताम् ॥ २८ ॥**

**वितानेति** ॥ **तत्र** सभायां **विताने**नोल्लोचेन **सहितम्**। 'अस्त्री वितानमुल्लोचः' इत्यमरः । **महीक्षितां** राज्ञां **चूडामणिभिः** शिरोरत्नैरुद्घृष्टमुल्लिखितं **पादपीठं** यस्य तत् । पितुरिदं **पैतृकम्**। 'ऋतष्ठञ्' (पा. ४।३।७८) इति ठञ्प्रत्ययः । **आसनं** सिंहासनं **भेजे** ॥ २८ ॥

---

पाठा०—१ 'नवे'. २ 'महीभुजाम्'.

---

टिप्प०—1 यथा नवोदिते रवौ कल्पवृक्षच्छाया मेरौ राजते। सोऽप्यनेकाभरणाम्बरसंयुक्त इति-इति वल्लभः ॥ कल्पतरोरपि बहुलद्रुमारिव नूतनस्यादित्यस्यारुणत्वात्, हेमादर्शसादृश्यं मेरावेव वर्तमानस्य कल्पद्रुमस्य सूर्ये प्रतिबिंबः सम्भवतीति 'मेरौ' इत्यधिकः प्रयोगश्चिन्त्य- इति शिशु०।

क्रममाणश्चरन्। 'अनुपसर्गाद्वा' (पा. १।३।४३) इति वैकल्पिकमात्मनेपदम्। द्यां चकार। स्वर्गशोभासदृशीं चकारेत्यर्थः। 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः ॥३२॥

तस्यैकस्योच्छ्रितं छत्रं मूर्ध्नि तेनामलत्विषा।
पूर्वराजवियोगौष्म्यं[1] कृत्स्नस्य जगतो हृतम्[2] ॥ ३३ ॥

तस्येति ॥ तस्यैकस्य मूर्ध्नि छत्रमुच्छ्रितमुन्नमितम्। अमलत्विषा तेन छत्रेण कृत्स्नस्य जगतः पूर्वराजस्य कुशस्य वियोगेन यदौष्म्यं संतापस्तद्धृतं नाशितम्। अत्र छत्रोन्नमन-संतापहरणलक्षणयोः कारणकार्ययोर्भिन्नदेशत्वादसंगतिरलंकारः। तदुक्तम्—'कार्यकारणयोर्भिन्नदेशत्वे सत्यसंगतिः' इति ॥ ३३ ॥

धूमादग्नेः शिखाः[3] पश्चादुदयादंशवो रवेः।
सोऽतीत्य तेजसां[4] वृत्तिं सममेवोत्थितो गुणैः ॥ ३४ ॥

धूमादिति ॥ अग्नेर्धूमात्पश्चात्। अनन्तरमित्यर्थः। शिखा ज्वालाः। रवेरुदयात्पश्चादनन्तरमंशवः। उत्तिष्ठन्त इति शेषः। सोऽतिथिस्तेजसामग्न्यादीनां वृत्तिं स्वभावमतीत्य गुणैः समं सहैव। उत्थित उदितः। अपूर्वमिदमित्यर्थः ॥ ३४ ॥

तं प्रीतिविशदैर्[5]नेत्रैरन्वयुः पौरयोषितः।
शरत्प्रसन्नैर्ज्योतिर्भिर्विभावर्य इव ध्रुवम्[6] ॥ ३५ ॥

तमिति ॥ पौरयोषितः प्रीत्या विशदैः प्रसन्नैर्नेत्रैः करणैस्तमतिथिम्। अन्वयुरनुजग्मुः। सदृष्टिप्रसारमद्राक्षुरित्यर्थः। कथमिव? शरदि प्रसन्नैर्ज्योतिर्भिर्नक्षत्रैर्विभावर्यो रात्रयो ध्रुवमिव। ध्रुवपाशबद्धत्वात्ताराचक्रस्येत्यर्थः ॥ ३५ ॥

---

पाठा०—१ 'वियोगोष्मा'; 'वियोगोष्णम्'. २ 'हतम्'; 'हृतः'. ३ 'शिखा'. ४ 'तेजसः'. ५ 'विशदम्'. ६ 'उडुपम्'.

---

टिप्प०—1 अभिषिक्तेन राज्ञा गजमारुह्य पुर्याः प्रदक्षिणा कार्येत्याचारः—इति हेमाद्रिः।

2 अन्योपरि छत्रे धृतेऽन्यस्य तापाभावः—इति हेमाद्रिः।

3 अग्न्यादेर्वृत्तिमतीत्य व्यापारमुल्लङ्घ्य गुणैः सममेवोत्थित उदयश्चास्य संपन्नः। तदैव प्रश्रयौदार्यादयो गुणा उदभवन्—इति वल्लभः।

4 'विशद'शब्दः पाण्डुरे प्रोक्तः' इति विश्वः—इति हेमाद्रिः।

5 पुरप्रदक्षिणे यत्र यत्रासौ बभ्राम तत्र व्यलोकयन्—इति हेमाद्रिः।

6 उक्तं विष्णुपुराणे नमोऽस्त्वेवं भगवतः शिशुमाराकृतिप्रभोः। दिवि रूपं हरेर्यत्तु तस्य पुच्छे स्थितो ध्रुवः॥ एष भ्रमन् भ्रामयति चन्द्रसूर्यादिकान् ग्रहान्॥' इति।

7 अत्र 'विभावर्य इवोडुपम्' इति पाठनाद्दृत्य—यथा विभावर्यः रात्र्यः ज्योतिर्भिस्तारकैरुडुपं चन्द्रमिव अनुयन्ति—इति व्याचष्टे सुमति०।

अयोध्यादेवताश्चैनं प्रशस्तायतनार्चिताः ।
अनुदध्युरनुध्येयं सांनिध्यैः प्रतिमागतैः ॥ ३६ ॥

अयोध्येति ॥ प्रशस्तेष्वायतनेष्वालयेष्वर्चिता अयोध्यादेवताश्चानुध्येयमनुग्राह्यमेनमतिथिं प्रतिमागतैरर्चासंक्रान्तैः सांनिध्यैः संनिधानैः । अनुदध्युरनुजगृहुः । 'अनुध्यानमनुग्रहः' इत्युत्पलमालायाम् । तदनुग्रहबुद्ध्या संनिदधुरित्यर्थः ॥ ३६ ॥

यावन्नाश्यायते वेदिरभिषेकजलाप्लुता ।
तावदेवास्य वेलान्तं प्रतापः प्राप दुःसहः ॥ ३७ ॥

यावदिति ॥ अभिषेकजलैराप्लुता सिक्ता वेदिरभिषेकवेदिः । यावन्नाश्यायते न शुष्यति । कर्तरि लट् । तावदेवास्य राज्ञो दुःसहः प्रतापो वेलान्तं वेलापर्यन्तं प्राप ॥ ३७ ॥

वसिष्ठस्य गुरोर्मन्त्राः सायकास्तस्य धन्विनः ।
किं तत्साध्यं यदुभये साधयेयुर्न संगताः ॥ ३८ ॥

वसिष्ठस्येति ॥ गुरोर्वसिष्ठस्य मन्त्राः । धन्विनस्तस्यातिथेः सायकाः । इत्युभये संगताः सन्तो यत्साध्यं न साधयेयुस्तादृक्साध्यं किम्? न किंचिदित्यर्थः । तेषामसाध्यं नास्तीति भावः ॥ ३८ ॥

स धर्मस्थसखः शश्वदर्थिप्रत्यर्थिनां स्वयम् ।
ददर्श संशयच्छेद्यान्व्यवहारानतन्द्रितः ॥ ३९ ॥

स इति ॥ धर्मे तिष्ठन्तीति धर्मस्थाः सभ्याः । 'राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः' (याज्ञ. २।२) इत्युक्तलक्षणाः, तेषां सखा धर्मस्थसखः । तत्सहित इत्यर्थः । अतन्द्रितोऽनलसः स नृपः शश्वत् । अन्वहमित्यर्थः । अर्थिनां साध्यार्थवतां प्रत्यर्थिनां तद्विरोधिनां च संशयच्छेद्यान् संशयादेतोरछेद्यान्परिच्छेद्यान् । संदिग्धत्वादवश्यनिर्णेयानित्यर्थः । व्यवहारानृणादानादिविवादान् । स्वयं ददर्शानुसंदधौ । न तु प्राड्विवाकमेव नियुक्तवानित्यर्थः । अत्र याज्ञवल्क्यः (व्यव. १)—'व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह' । इति ॥ ३९ ॥

ततः परमभिव्यक्तसौमनस्यनिवेदितैः ।
युयोज पाकाभिमुखैर्भृत्यान्विज्ञापनाफलैः ॥ ४० ॥

---

पाठा०—१ 'जलप्लुता'. २ 'संशयच्छेदान्'; 'संशयच्छेत्ता'; 'संशयच्छेदी'.

**तत इति ॥ ततः परं** व्यवहारदर्शनानन्तरं **भृत्या**ननुजीविनः । **अभिव्यक्तै** मुखप्रसादादिलिङ्गैः स्फुटीभूतं यत्**सौमनस्यं** स्वामिनः प्रसन्नत्वं तेन **निवेदितैः** सूचितैः **पाकाभिमुखैः** सिद्ध्युन्मुखैर्**विज्ञापन**नां विज्ञप्तीनां **फलैः** प्रेप्सितार्थै**र्यु-योज** योजयामास । अत्र बृहस्पतिः—'नियुक्तः कर्मनिष्पत्तौ विज्ञप्तौ च यदृच्छया । भृत्यान्धनैर्मानयंस्तु नवोऽप्यक्षोभ्यतां व्रजेत्' इति ॥ कविश्च वक्ष्यति—'अक्षोभ्यः-' ( १७।४४ ) इति अत्र सौमनस्यफलयोजनादिभिर्नृपस्य वृक्षसमाधिर्व्यज्यत इत्यनु-सन्धेयम् ॥ ४० ॥

प्रजास्तद्गुरुणा नद्यो नभसेव विवर्धिताः ।
तस्मिंस्तु भूयसीं वृद्धिं नभस्ये ता इवाययुः ॥ ४१ ॥

**प्रजा इति ॥ प्रजास्तस्या**तिथे**र्गुरुणा** पित्रा कुशेन । **नभसा** श्रावणमासेन **नद्य इव । विवर्धिताः तस्मि**न्नतिथौ तु **नभस्ये** भाद्रपदे मासे **ता इव** नद्य इव **भूयसीं वृद्धि**मभ्युदयम**ाययुः** । प्रजापोषणेन पितरमतिशयितवानित्यर्थः ॥ ४१॥

यदुवाच न तन्मिथ्या यद्ददौ न जहार तत् ।
सोऽभूद्भग्नव्रतः शत्रूनुद्धृत्य प्रतिरोपयन् ॥ ४२ ॥

**यदिति ॥ सो**ऽतिथिः । यद्वाक्यं दानत्राणादिविषय**मुवाच तन्न मिथ्याऽनृतं नाभूत्** । यद्वस्तु **ददौ तन्न जहार** न पुनरादद । किंतु **शत्रूनुद्धृत्यो**त्खाय **प्रतिरोपयन्** पुनः स्थापयन् । **भग्नव्रतो** भग्ननियमो**ऽभूत्** ॥ ४२ ॥

वयोरूपविभूतीनामेकैकं मदकारणम् ।
तानि तस्मिन्समस्तानि न तस्योत्सिसिचे मनः ॥ ४३ ॥

**वय इति ॥ वयोरूपविभूतीनां** यौवनसौन्दर्यैश्वर्याणां मध्ये **एकैकं मद-कारणं** मदहेतुः । **तानि** मदकारणानि **तस्मिन्**राज्ञि **समस्तानि** । मिलितानीति शेषः । तथापि **तस्यातिथेर्मनो नोत्सिसिचे** न जगर्व । सिञ्चतेः स्वरितेत्त्वादा-त्मनेपदम् । अत्र वयोरूपादीनां गर्वहेतुत्वान्मदस्य च मदिराकार्यत्वेनातत्कारकत्वात् 'मद'शब्देन गर्वो लक्ष्यत इत्याहुः । उक्तं च—'ऐश्वर्यरूपतारुण्यकुलविद्याबलैरपि । इष्ट-लाभादिना ह्येषामवज्ञा गर्व ईरितः । मदस्त्वानन्दसंमोहः संभेदो मदिराकृतः ॥' इति । अत एव कविनापि 'उत्सिसिचे' इत्युक्तम्, नतु 'उन्ममाद' इति ॥ ४३ ॥

पाठा०-१ 'च'. २ 'उत्खाय'. ३ 'समेतानि'. ४ 'चास्य'. ५ 'उत्सिषिचुः'.

इत्थं जनितरागासु प्रकृतिष्वनुवासरम् ।
अक्षोभ्यः स नवोऽप्यासीद्दृढमूल इव द्रुमः ॥ ४४ ॥

इत्थमिति ॥ इत्थमनुवासरमन्वहं प्रकृतिषु प्रजासु जनितरागासु सतीषु स राजा नवोऽपि । दृढमूलो द्रुम इव । अक्षोभ्योऽप्रधृष्य आसीत् ॥ ४४ ॥

अनित्याः शत्रवो बाह्या विप्रकृष्टाश्च ते यतः ।
अतः सोऽभ्यन्तरान्नित्यान्षट्पूर्वमजयद्रिपून् ॥ ४५ ॥

अनित्या इति ॥ यतो बाह्याः शत्रवः प्रतिनृपा अनित्याः । द्विषन्ति सिध्यन्ति चेत्यर्थः । किंच, ते बाह्या विप्रकृष्टा दूरस्थाश्च । अतः सोऽभ्यन्तरानन्तर्वर्तिनो नित्यान्षड्रिपून्कामक्रोधादीन् । पूर्वमजयत् । अन्तःशत्रुजये बाह्या अपि न दुर्जया इति भावः ॥ ४५ ॥

प्रसादाभिमुखे तस्मिंश्चपलापि स्वभावतः ।
निकषे हेमरेखेव श्रीरासीदनपायिनी ॥ ४६ ॥

प्रसादेति ॥ स्वभावतश्चपला चञ्चलापि श्रीः प्रसादाभिमुखे तस्मिन्नृपे । निकषे निकषोपले हेमरेखेव अनपायिनी स्थिराऽऽसीत् ॥ ४६ ॥

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥ ४७ ॥

कातर्यमिति ॥ केवला शौर्यवर्जिता नीतिः कातर्यं भीरुत्वम् । शौर्यं 'केवलम्' इत्यनुषञ्जनीयम् । केवलं नीतिरहितं शौर्यं श्वापदचेष्टितम् । व्याघ्रादिचेष्टाप्रायमित्यर्थः । 'व्याघ्राद्यो वनचराः पशवः श्वापदा मताः' इति हलायुधः । अतो हेतोः सोऽतिथिः समेताभ्यां संगताभ्यामुभाभ्यां नीति-शौर्याभ्यां सिद्धिं जयप्राप्तिम् । अन्वियेष गवेषितवान् ॥ ४७ ॥

न तस्य मण्डले राज्ञो न्यस्तप्रणिधिदीधितेः ।
अदृष्टमभवत्किंचिद्व्यभ्रस्येव विवस्वतः ॥ ४८ ॥

---

पाठा०—१ 'बद्धमूलः'. २ 'सदा'. ३ 'प्रसादसुमुखे'; 'प्रसादविमुखे'. ४ 'हेमलेखा'. ५ 'राज्ञाम्'. ६ 'ननस्य'.

---

टिप्प०—1 'मनो मधुकरो मेघो मानिनी मदनो मरुत्। मा मदो मर्कटो मत्स्यो मकारा दश चञ्चलाः' इति लक्ष्म्या निसर्गचञ्चलत्वमुक्तमभियुक्तैः ।

2 उक्तं च—'तीक्ष्णादुद्विजते लोको मृदुः सर्वत्र बाध्यते । एवं बुध्वा महाराज ! मा तीक्ष्णो मा मृदुर्भव ॥' इति सुमति० ।

न तस्येति ॥ न्यस्ता. सर्वत्र प्रहिता प्रणिधयश्चरा एव दीधितयो रश्मयो यस्य तस्य। 'प्रणिधिः प्रार्थने चरे' इति शाश्वतः। तस्य राज्ञः। व्यभ्रस्य निर्मेघस्य विवस्वतः सूर्यस्येव। मण्डले स्वविषये किंचिदल्पमप्यदृष्टमज्ञातं नाभवन्नासीत्। स चारचक्षुषा सर्वमपश्यदित्यर्थः ॥ ४८ ॥

रात्रिंदिवविभागेषु यदादिष्टं महीक्षिताम्।
तत्सिषेवे नियोगेन स विकल्पपराङ्मुखः ॥ ४९ ॥

रात्रिंदिवेति ॥ रात्रौ च दिवा च रात्रिंदिवम्। 'अचतुर–' (पा. ५।४।७७) इत्यादिनाधिकरणार्थे द्वन्द्वेऽच्प्रत्ययान्तो निपातः। अव्ययात्तत्त्वादव्ययत्वम्। अत्र षष्ठ्यर्थलक्षणया रात्रिंदिवमिति। अहोरात्रयोरित्यर्थः। तयोर्विभागा अंशाः। प्रहरादयस्तेषु। महीक्षितां राज्ञां यदादिष्टम् 'इदमस्मिन्काले कर्तव्यम्' इति मन्वादिभिरुपदिष्टं तत्स राजा विकल्पपराङ्मुखः संशयरहितः सन्। नियोगेन निश्चयेन सिषेवे। अनुष्ठितवानित्यर्थः। अत्र कौटिल्यः — कार्याणां नियोगविकल्पसमुच्चया भवन्ति,–अनेनैवोपायेन नान्यनेति नियोगः। अनेन वान्येन वेति विकल्पः। अनेन चेति समुच्चयः' इति ॥ ४९ ॥

मन्त्रः प्रतिदिनं तस्य बभूव सह मन्त्रिभिः।
स जातु सेव्यमानोऽपि गुप्तद्वारो न सूच्यते ॥ ५० ॥

मन्त्र इति॥ तस्य राज्ञः प्रतिदिनं मन्त्रिभिः सह मन्त्रो विचारो बभूव। स मन्त्रः सेव्यमानोऽप्यन्वहमावर्त्यमानोऽपि जातु कदाचिदपि न सूच्यते न प्रकाश्यते। तत्र हेतुः गुप्तद्वारः इति। संवृतेङ्गिताकारादिज्ञानमार्ग इत्यर्थः ॥ ५० ॥

परेषु स्वेषु च क्षिप्तैरविज्ञातपरस्परैः।
सोऽपसर्पैर्जजागार यथाकालं स्वपन्नपि ॥ ५१ ॥

परेष्विति ॥ यथाकालमुचितकालानतिक्रमेण स्वपन्नपि सोऽतिथिः परेषु शत्रुषु स्वेषु स्वकीयेषु च। मन्त्र्यादितीर्थेष्विति शेषः। क्षिप्तैः प्रहितैरविज्ञाताः परस्परे येषां तैः। अन्योन्याविज्ञातैरित्यर्थः। अपसर्पैश्चरैः। 'अपसर्पश्चरः स्पशः' इत्यमरः। जजागार बुद्धवान्। चारमुखेन सर्वदा सर्वमज्ञासीदित्यर्थः। अत्र कामन्दकः —'चारान्विचारयत्तीर्थेष्वात्मनश्च परस्य च। पाषण्ड्यादीनविज्ञातानन्योन्यमितरैरपि ॥' इति ॥ ५१ ॥

पाठा०–१ 'विभागेन' २ 'महीभृताम्' ३ 'निक्षिप्तैः' ४ 'यथाकालस्वपन्नपि'.

टिप्प०–1 पञ्चदशमुहूर्तेषु–इति हेमाद्रिः।

दुर्गाणि दुर्ग्रहाण्यासंस्तस्य रोद्धुरपि द्विषाम्।
न हि सिंहो गजास्कन्दी भयाद्गिरिगुहाशयः॥ ५२॥

**दुर्गाणीति**॥ **द्विषां रोद्धू** रोधकस्या**पि**, न तु स्वयं रोध्यस्येत्यर्थः। **तस्य** राज्ञो **दुर्ग्रहाणि** परैर्दुर्धर्षाणि **दुर्गाणि** महीदुर्गादीन्या**सन्**। न च निर्भीकस्य किं दुर्गैरिति वाच्यमित्यर्थान्तरन्यासमुखेनाह—**न हीति**। गजानास्कन्दति हिनस्तीति **गजास्कन्दि सिंहो भयाद्धेतोः**। गिरिगुहासु शेत इति **गिरिगुहाशयो न हि**, किंतु स्वभाव एवेति शेषः 'अधिकरणे शेतेः'। (पा. ३।२।१५) इत्यच्प्रत्ययः। अत्र मनुः (७।७०)—'धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा। नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम्॥' इति॥ ५२॥

भव्यमुख्याः समारम्भाः प्रत्यवेक्ष्या निरत्ययाः।
गर्भशालिसधर्माणस्तस्य गूढं विपेचिरे॥ ५३॥

**भव्येति**॥ **भव्यमुख्याः** कल्याणप्रधानाः, न तु विपरीताः। **प्रत्यवेक्ष्याः** 'एतावत्कृतमेतावत्कर्तव्यम्' इत्यनुसंधानेन विचारणीयाः। अत एव **निरत्ययाः** निर्बाधा **गर्भे**ऽभ्यन्तरे पच्यते ये **शालयस्तेषां सधर्माणः**। अतिनिगूढा इत्यर्थः। 'धर्मादनिच्केवलात्' (पा. ५।४।१२४) इत्यनिच्प्रत्ययः समासान्तः। **तस्य** राज्ञः समारभ्यन्त इति **समारम्भाः** कर्माणि **गूढ**मप्रकाशं **विपेचिरे**। फलिता इत्यर्थः। 'फलानुमेयाः प्रारम्भाः' इति भावः॥ ५३॥

अपथेन प्रववृते न जातूपचितोऽपि सः।
वृद्धौ नदीमुखेनैव प्रस्थानं लवणाम्भसः॥ ५४॥

**अपथेनेति**॥ **सो**ऽतिवि**रुपचितो**ऽ**पि** वृद्धिं गतोऽपि सन्। **जातु** कदाचिद्**प्यपथेन** कुमार्गेण **न प्रववृते** न प्रवृत्तः। मर्यादां न जहावित्यर्थः। तथा हि—**लवणाम्भसो** लवणसागरस्य **वृद्धौ** पूरोत्पीडे सत्यां **नदीमुखेनैव** नदीप्रवेशमार्गेणैव **प्रस्थानं** निःसरणम्, न त्वन्यथेत्यर्थः॥ ५४॥

कामं प्रकृतिवैराग्यं सद्यः शमयितुं क्षमः।
यस्य कार्यः प्रतीकारः स तन्नैवोदपादयत्॥ ५५॥

**काममिति**॥ **प्रकृतिवैराग्यं** प्रजाविरागम्। दैवादुत्पन्नमिति शेषः। **सद्यः कामं** सम्यक् **शमयितुं** प्रतिकर्तुं **क्षमः** शक्तः **स** राजा **यस्य प्रकृतिवैराग्यस्य**

---

पाठा०—१ 'दुर्गमाणि'. २ 'प्रवृत्तेन'. ३ 'इव'. ४ 'सरितांपतेः'.

प्रतीकारः कार्यः कर्तव्यः। अनर्थहेतुत्वादित्यर्थः। **तद्वैराग्यं नोद्पादयत्**। उत्पन्नप्रतीकारादनुत्पादनं वरमिति भावः। अत्र कौटिल्यः—'क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागताम्। विरक्ता यान्त्यमित्रं वा भर्तारं घ्नन्ति वा स्वयम्॥' तस्मात्प्रकृतीनां विरागकारणानि नोत्पादयेदित्यर्थः॥ ५५॥

**शक्येष्वेवाभवद्यात्रा तस्य शक्तिमतः सतः।**
**समीरणसहायोऽपि नाम्भःप्रार्थी दवानलः॥ ५६॥**

**शक्येष्विति**॥ **शक्तिमतः** शक्तिसंपन्नस्यापि **सतस्तस्य** राज्ञः **शक्येषु** शक्तिविषयेषु स्वस्माद्धीनबलेष्वेव विषये **यात्रा** दण्डयात्रा**ऽभवत्**। न तु समधिकेष्वित्यर्थः। तथा हि-**समीरणसहायोऽपि दवानलोऽम्भःप्रार्थी** जलान्वेषी **न**। दग्धुमिति शेषः। किंतु तृणकाष्ठादिकमेवान्विष्यतीत्यर्थः। अत्र कौटिल्यः—'समज्यायोभ्यां संदधीत, हीनेन विगृह्णीयात्' इति॥ ५६॥

**न धर्ममर्थकामाभ्यां बबाधे न च तेन तौ।**
**नार्थं कामेन कामं वा सोऽर्थेन सदृशस्त्रिषु॥ ५७॥**

**न धर्ममिति**॥ **स** राजा। **अर्थकामाभ्यां धर्मं न बबाधे** न बाधितवान्। **तेन** धर्मेण च **तौ**अर्थ-कामौ **न**। **अर्थं कामेन कामं वाऽर्थेन** न बबाधे। एकत्रैवासक्तो नाभूदित्यर्थः। किंतु **त्रिषु** धर्मार्थकामेषु **सदृशः**स्तुल्यवृत्तिः। अभूदित्यर्थः॥५७॥

**हीनान्यनुपकर्तॄणि प्रवृद्धानि विकुर्वते।**
**तेन मध्यमशक्तीनि मित्राणि स्थापितान्यतः॥ ५८॥**

**हीनानिति**॥ **मित्राणि हीनान्य**तिक्षीणानि चेत्, **अनुपकर्तॄण्य**नुपकारीणि। **प्रवृद्धान्य**तिसमृद्धानि चेद्**विकुर्वते** विरुद्धं चेष्टते। अपकुर्वत इत्यर्थः। 'अकर्मकाच्च' (पा. १।३।४५) इत्यात्मनेपदम्। **अतः** कारणा**त्तेन** राज्ञा **मित्राणि** सुहृदः। 'मित्रं सुहृदि मित्रोऽर्के' इति विश्वः। **मध्यमशक्तीनि** नातिक्षीणोच्छ्रितानि यथा-स्थात्तथा **स्थापितानि**॥ ५८॥

'शक्येष्वेवाभवद्यात्रा' (१७।१६) इत्यादिनोक्तमर्थं सोपस्कारमाह—

**परात्मनोः परिच्छिद्य शक्त्यादीनां बलाबलम्।**
**ययावेभिर्बलिष्ठश्चेत्परस्मादास्त सोऽन्यथा॥ ५९॥**

पाठा०—१ 'देवोऽनलः'. २ 'वर्तिविशिष्टः'; 'वरीन्विशिष्टः'; 'वरिं विशिष्टः'.

टिप्प०—१ यः धर्मार्थकामान्समानमेव सेवते सोऽधमः, यो द्वौ सेवते स मध्यमः, त्रीन्धर्मार्थकामान् यः सेवते स उत्तमः-इति हेमाद्रिः।

**परेति** ॥ **सोऽतिथिः परात्मनोः** शत्रोरात्मनश्च **शक्त्यादीनां** शक्तिदेशकालादीनां **बलाबलं** न्यूनाधिकभावं **परिच्छिद्य** निश्चित्य। एभिः शक्त्यादिभिः **परस्माच्छत्रोर्बलिष्ठः** स्वयमतिशयेन बलवांश्चेत्। 'बल'शब्दान्मतुबन्तादिष्ठन्प्रत्ययः। 'विन्मतोर्लुक्' (पा. ५।३।६५) इति मतुपो लुक्। **ययौ** यात्रां चक्रे। **अन्यथा** न बलिष्ठश्चेत्। **आस्त** अतिष्ठत्। न ययावित्यर्थः। अत्र मनुः (७।१७१)—'यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम्। परस्य विपरीतं च तदा यायाद्रिपून्प्रति ॥ यदा तु स्यात्परिक्षीणो वाहनेन बलेन च। तदासीत प्रयत्नेन शनकैः सान्त्वयन्नरीन्' इति ॥ ५९ ॥

**कोशेनाश्रयणीयत्वमिति तस्यार्थसंग्रहः ।**
**अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते ॥ ६० ॥**

**कोशेनेति** ॥ **कोशेन** अर्थचयेन। **आश्रयणीयत्वं** भजनीयत्वम्। भवतीति शेषः। **इति** हेतोस्तस्य राज्ञः कर्तुः **अर्थसंग्रहः**। न तु लोभादित्यर्थः। तथा हि—अम्बु गर्भे यस्य सोऽम्बुगर्भः, जीवनस्य जलस्य मूतः पुटबन्धो **जीमूतो** मेघः। 'मूङ् बन्धने'। पृषोदरादित्वात्साधुः। **चातकैरभिनन्द्यते** सेव्यते। न तु कर्तरि क्तः। अत्र कामन्दकः—'धर्महेतोस्तथाऽर्थाय भृत्यानां रक्षणाय च। आपदर्थं च संरक्ष्यः कोशो धर्मवता सदा ॥' इति ॥ ६० ॥

**परकर्मापहः सोऽभूदुद्यतः स्वेषु कर्मसु ।**
**आवृणोदात्मनो रन्ध्रं रन्ध्रेषु प्रहरन्रिपून् ॥ ६१ ॥**

**परकर्मेति** ॥ स राजा परेषां कर्माणि सेतुवार्तादीन्यपहन्तीति **परकर्मापहः** सन्। 'अन्येष्वपि दृश्यते' (पा. ३।३।१०१) इत्यपिशब्दसामर्थ्याद्धन्तेर्डप्रत्ययः। **स्वेषु कर्मसूद्यत** उद्युक्तोऽभूत्। किंच, **रिपून् रन्ध्रेषु प्रहरन्नात्मनो रन्ध्रं** व्यसनादिक**मावृणोत्** संवृतवान्। अत्र मनुः (७।१०५)—'नास्य च्छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु। गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥' इति ॥ ६१ ॥

**पित्रा संवर्धितो नित्यं कृतास्त्रः सांपरायिकः ।**
**तस्य दण्डवतो दण्डः स्वदेहान्न व्यशिष्यत ॥ ६२ ॥**

**पित्रेति** ॥ दण्डो दमः सैन्यं वा, तद्वतो **दण्डवतो** दण्डसंपन्नस्य **तस्य** राज्ञः **पित्रा** कुशेन **नित्यं संवर्धितः** पुष्टः **कृतास्त्रः** शिक्षितास्त्रः। संपरायो युद्धम्। 'युद्धायत्योः संपरायः' इत्यमरः। तमर्हतीति **सांपरायिकः**। 'तदर्हति'

---

पाठा०—१ 'कोशाद'. २ 'अभिगम्यते'; 'अनुगम्यते'. ३ 'रन्ध्रे च'. ४ 'द्विषाम्'. ५ 'पितृसंवर्धितः'. ६ 'सांपरायणः'. ७ 'नावशिष्यत'.

( पा. ५।१।६३ ) इति ठक्प्रत्ययः । दण्डं सैन्यम् । 'दण्डो यमे मानभेदे लगुडे दम सैन्ययोः' इति विश्वः । स्वदेहान्न व्यशिष्यत नाभिद्यत । स्वदेहेऽपि विशेषणानि योज्यानि । मूलबलं स्वदेहमिवारक्षदित्यर्थः ॥ ६२ ॥

सर्पस्येव शिरोरत्नं नास्य शक्तित्रयं परः ।
स चकर्ष परस्मात्तदयस्कान्त इवायसम् ॥ ६३ ॥

**सर्पस्येति** ॥ सर्पस्य शिरोरत्नमिव । अस्य राज्ञः शक्तित्रयं परः शत्रुर्न चकर्ष । स तु परस्मात् शत्रोः । तत् शक्तित्रयम् । अयस्कान्तो मणिविशेषः आयसं लोहविकारमिव चकर्ष ॥ ६३ ॥

वापीष्विव स्रवन्तीषु वनेषूपवनेष्विव ।
सार्थाः स्वैरं स्वकीयेषु चेरुर्वेश्मस्विवाद्रिषु ॥ ६४ ॥

**वापीष्विति** ॥ स्रवन्तीषु नदीषु वापीषु दीर्घिकास्विव । 'वापी तु दीर्घिका' इत्यमरः । वनेष्वरण्येषु । उपवनेष्वारामेष्विव । 'आरामः स्यादुपवनम्' इत्यमरः । अद्रिषु स्वकीयेषु वेश्मस्विव । सार्थाः वणिक्प्रभृतयः स्वैरं स्वेच्छया चेरुश्चरन्ति स्म ॥ ६४ ॥

तपो रक्षन्स विघ्नेभ्यस्तस्करेभ्यश्च संपदः ।
यथास्वमाश्रमैश्चक्रे वर्णैरपि षडंशभाक् ॥ ६५ ॥

**तप इति** ॥ विघ्नेभ्यस्तपो रक्षन् । तस्करेभ्यः संपदश्च रक्षन् । स राजा । आश्रमैर्ब्रह्मचर्यादिभिर्वर्णैरपि ब्राह्मणादिभिश्च यथास्वं स्वमनतिक्रम्य षडंशभाक् चक्रे । यथाक्रममाश्रमैस्तपसो वर्णैः संपदा च षष्ठांशभाक्कृत इत्यर्थः । षष्ठोंऽशः षडंशः । 'संख्या'शब्दस्य वृत्तिविषये पूरणार्थत्वमुक्तं प्राक् ॥ ६५ ॥

खनिभिः सुषुवे रत्नं क्षेत्रैः सस्यं वनैर्गजान् ।
दिदेश वेतनं तस्मै रक्षासदृशमेव भूः ॥ ६६ ॥

**खनिभिरिति** ॥ भूर्भूमिस्तस्मै राज्ञे रक्षासदृशं रक्षणानुरूपमेव वेतनं भृतिं दिदेश ददौ । कथम् ? खनिभिराकरैः । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । रत्नं माणिक्यादिकं सुषुवेऽजीजनत् । क्षेत्रैः सस्यम् । वनैर्गजान् हस्तिनः सुषुवे ॥ ६६ ॥

पाठा०—१ 'स्वैरं सार्थाः' २ 'त्वदीयेषु' ३ 'इव'

टिप्प०—१ आकरै रत्नं सुषुवे तथा क्षेत्रैः सस्यम्-इति वल्लभः ।

स गुणानां बलानां च षण्णां षण्मुखविक्रमः ।
बभूव विनियोगज्ञः साधनीयेषु वस्तुषु ॥ ६७ ॥

स इति ॥ **षण्मुखविक्रमः स** राजा **षण्णां गुणानां** संधिविग्रहादीनां **बलानां** मूलभृत्यादीनां **च साधनीयेषु वस्तुषु** साध्येष्वर्थेषु विनियोगं जानातीति विनियोगस्य ज्ञ इति वा **विनियोगज्ञः** । कर्मविवक्षायामुपपदसमासः । 'आतोऽनुपसर्गे कः' (पा. ३।२।३) इति कप्रत्ययः । शेषविवक्षायां षष्ठीसमासः । 'इगुपध'—(पा. ३।१।१३५) इत्यादिना कप्रत्ययः । **बभूव** । 'इदमत्र प्रयोक्तव्यम्' इत्याद्यज्ञासीदित्यर्थः ॥ ६७ ॥

इति क्रमात्प्रयुञ्जानो राजनीतिं चतुर्विधाम् ।
आ तीर्थादप्रतीघातं स तस्याः फलमानशे ॥ ६८ ॥

इतीति ॥ **इति चतुर्विधाम्** । सामाद्युपायैरिति शेषः । **राजनीतिं** दण्डनीतिं **क्रमात्** सामादिक्रमादेव **प्रयुञ्जानः स** राजा । **आ तीर्था**न्मन्त्र्याद्यष्टादशात्मकतीर्थपर्यन्तम् । 'योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्यात्' इति हलायुधः । **तस्या** नीतेः **फलमप्रतीघात**मप्रतिबन्धं यथा तथा **आनशे** प्राप्तवान् । मन्त्र्यादिषु यमुद्दिश्य य उपायः प्रयुज्यते, स तस्य फलतीत्यर्थः ॥ ६८ ॥

कूटयुद्धविधिज्ञेऽपि तस्मिन्सन्मार्गयोधिनि ।
भेजेऽभिसारिकावृत्तिं जयश्रीर्वीरगामिनी ॥ ६९ ॥

कूटेति ॥ **कूटयुद्धविधिज्ञेऽपि** कपटयुद्धप्रकाराभिज्ञेऽपि **सन्मार्गेण योधिनि** धर्मयोद्धरि **तस्मि**न्नतिथौ **वीरगामिनी जयश्रीरभिसारिकावृत्तिं भेजे** । 'कान्तार्थिनी तु या याति संकेतं साऽभिसारिका' इत्यमरः । जयश्रीस्तमन्विष्यागच्छदित्यर्थः ॥ ६९ ॥

प्रायः प्रतापभग्नत्वादरीणां तस्य दुर्लभः ।
रणो गन्धद्विपस्येव गन्धभिन्नान्यदन्तिनः ॥ ७० ॥

प्राय इति ॥ **अरीणां** सर्वेषामपि **प्रताप**ेनातितेजसैव **भग्नत्वा**त्तस्य राज्ञः । **गन्धेन** मदगन्धेनैव **भिन्ना** भग्ना **अन्ये दन्तिनो** येन तस्य **गन्धद्विपस्येव** । **प्रायः** प्रायेण **रणो दुर्लभः** । खलर्थयोगेऽपि शेषविवक्षायां षष्ठीमिच्छन्तीत्युक्तम् ॥ ७० ॥

---

पाठा०—१ 'गुणानां च'. २ 'दण्डनीतिम्'. ३ 'वीरकामिनी'. ४ 'आसीत्'. ५ 'गन्धभग्नानि'.

---

टिप्प०—1 स च 'यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः । स वै गन्धगजो नाम नृपतेर्विजयावहः ॥' इत्युक्तः ।

प्रवृद्धौ हीयते चन्द्रः समुद्रोऽपि तथाविधः।
स तु तत्समवृद्धिश्च न चाभूत्ताविव क्षयी ॥ ७१ ॥

प्रवृद्धाविति ॥ प्रवृद्धौ सत्यां चन्द्रो हीयते। समुद्रोऽपि तथाविधश्चन्द्रवदेव प्रवृद्धौ हीयते। 'प्रवृद्ध' इति वा पाठः। स राजा तु ताभ्यां चन्द्रसमुद्राभ्यां समा वृद्धिर्यस्य स तत्समवृद्धिश्चाभूत्। तौ चन्द्रसमुद्राविव क्षयी। 'जिदृक्षि–' (पा. ३।२।१५७) इत्यादिनेनिप्रत्ययः। नाभूत् ॥ ७१ ॥

सन्तस्तस्याभिगमनादत्यर्थं महतः कृशाः।
उदधेरिव जीमूताः प्रापुर्दातृत्वमर्थिनः ॥ ७२ ॥

सन्त इति ॥ अत्यर्थं कृशा दरिद्रा अत एवार्थिनो याचनशीलाः सन्तो विद्वांसो महतस्तस्य राज्ञोऽभिगमनात् उदधेरभिगमनाज्जीमूता इव। दातृत्वं प्रापुः, अर्थिषु दानभोगपर्याप्तं धनं प्रयच्छन्तीत्यर्थः ॥ ७२ ॥

स्तूयमानः स जिह्राय स्तुत्यमेव समाचरन्।
तथापि ववृधे तस्य तत्कारिद्वेषिणो यशः ॥ ७३ ॥

स्तूयमान इति ॥ स राजा स्तुत्यं स्तोत्रार्हमेव यत्तदेव समाचरन्नत एव स्तूयमानः सन् जिह्राय लज्जे। तथापि हीनत्वेऽपि तत्कारिणः स्तोत्रकारिणो द्वेष्टीति तत्कारिद्वेषिणस्तस्य राज्ञो यशो ववृधे। 'गुणाढ्यस्य सतः पुंसः स्तुतौ लज्जैव भूषणम्' इति भावः ॥ ७३ ॥

दुरितं दर्शनेन घ्नंस्तत्त्वार्थेन नुदंस्तमः।
प्रजाः स्वतन्त्रयांचक्रे शश्वत्सूर्य इवोदितः ॥ ७४ ॥

दुरितमिति ॥ स राजा। उदितः सूर्य इव। दर्शनेन दुरितं घ्नन्निवर्तयन्। तथा च स्मर्यते—'अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः। दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत नित्यशः ॥' इति। तत्त्वस्य वस्तुतत्त्वस्यार्थेन समर्थनेन च तमोऽज्ञानं ध्वान्तं च नुदन् शश्वत्प्रजाः स्वतन्त्रयांचक्रे स्वाधीनाश्चकार ॥ ७४ ॥

इन्दोरगतयः पद्मे सूर्यस्य कुमुदेंऽशवः।
गुणास्तस्य विपक्षेऽपि गुणिनो लेभिरेऽन्तरम् ॥ ७५ ॥

पाठा०–१ 'जना'. २ 'अत्यर्थमहतः'; 'अत्यन्तं महिम'. ३ 'अर्थिषु'; 'अर्थिनाम्'. ४ 'पप्रथे'. ५ 'तत्कार्यद्वेषिणो'. ६ 'दर्शनं निघ्नन्'. ७ 'स पालयांचक्रे'; 'स रञ्जयांचक्रे'; 'वितमसश्चक्रे'. ८ 'न ययौ ताविव क्षयम्'; 'न ययौ तावदक्षयम्'. ९ 'गमस्तयः'.

**इन्दोरिति** ॥ **इन्दोरंशवः पद्मेऽगतयः**। प्रवेशरहिता इत्यर्थः । **सूर्यस्यांशवः कुमुदेऽगतयः । गुणिनस्तस्य गुणास्तु विपक्षे** शत्रावप्यन्तरमवकाशं **लेभिरे** प्रापुः ॥ ७५ ॥

**पराभिसंधानपरं यद्यप्यस्य विचेष्टितम् ।**
**जिगीषोरश्वमेधाय धर्म्यमेव बभूव तत् ॥ ७६ ॥**

**परेति** ॥ **अश्वमेधाय जिगीषोरस्य विचेष्टितं** दिग्विजयरूपं **यद्यपि पराभिसंधानपरं** शत्रुवञ्चनप्रधानं तथापि **तद्धर्म्यं** धर्मादनपेतमेव । 'धर्मपथ्यर्थन्यायादनपेते' ( पा. ४।४।९२ ) इति यत्प्रत्ययः । **बभूव** । 'मन्त्रप्रभावोत्साहशक्तिभिः परान्संदध्यात्' इति कौटिल्यः ॥ ७६ ॥

**एवमुद्यन्प्रभावेण शास्त्रनिर्दिष्टवर्त्मना ।**
**वृषेव देवो देवानां राज्ञां राजा बभूव सः ॥ ७७ ॥**

**एवमिति** ॥ **एवं शास्त्रनिर्दिष्टवर्त्मना** शास्त्रोपदिष्टमार्गेण **प्रभावेण** कोशदण्डजेन तेजसा । 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्' इत्यमरः **उद्यन्**नुद्युञ्जानः **सः । वृषा** वासवो **देवानां देवो** देवदेव **इव । राज्ञां राजा** राजराजो **बभूव** ॥ ७७ ॥

**पञ्चमं लोकपालानां तमूचुः साम्ययोगतः ।**
**भूतानां महतां षष्ठमष्टमं कुलभूभृताम् ॥ ७८ ॥**

**पञ्चममिति** ॥ **तम्** । राजानमिति शेषः । **साम्ययोगतो** यथाक्रमं लोकसंरक्षणपरोपकारभूधारणरूपसमानधर्मत्वबलाल्**लोकपालाना**मिन्द्रादीनां चतुर्णां **पञ्चममूचुः** । **महतां भूतानां** पृथिव्यादीनां पञ्चानां **षष्ठमूचुः** । **कुलभूभृतां** कुलाचलानां महेन्द्रमलयादीनां सप्तानाम**ष्टममूचुः** ॥ ७८ ॥

---

पाठा०—१ 'यदापि'. २ 'अश्वमेधार्थम्'. ३ 'धर्माय'. ४ 'राजा राज्ञाम्'. ५ '॰नामूचुः साधर्म्ययोगतः'.

---

टिप्प०—1 तं लोकपालानां पञ्चमं दिशां चतुष्ट्वपक्षे लोकपालाश्चत्वार एव, 'चतस्रः कीर्तयेदष्टौ दश वा ककुभः क्वचित्' इति वाग्भट्टे। महतां भूतानां पृथ्व्यादीनां षष्ठं कुलभूभृतां अष्टममूचुः । 'महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥' इति विष्णुपुराणे । समानो धर्मो यस्य स सधर्मा, तस्य भावः साधर्म्यम्, तस्य योगतः । 'लोकपालानाम्' इति पालनात् । 'भूतानाम्' इति परोपकरणात् । 'भूभृताम्' इति भूमिधारणात् इति हेमाद्रिः ।

दूरापवर्जितच्छत्रैस्तस्याज्ञां शासनार्पिताम्।
दधुः शिरोभिर्भूपाला देवाः पौरंदरीमिव ॥ ७९ ॥

दूरेति ॥ भूपालाः शासनेषु पत्रेष्वर्पितामुपन्यस्तां तस्य राज्ञ आज्ञाम्। देवाः पौरंदरीमैन्द्रीमाज्ञामिव। दूरापवर्जितच्छत्रैर्दूरात्परिहृतातपत्रैः शिरोभिर्दधुः ॥ ७९ ॥

ऋत्विजः स तथानर्च दक्षिणाभिर्महाक्रतौ।
यथा साधारणीभूतं नामास्य धनदस्य च ॥ ८० ॥

ऋत्विज इति ॥ स राजा महाक्रतावश्वमेधे। ऋत्विजो याजकान् दक्षिणाभिस्तथानर्चार्चयामास। अर्चतेर्भौवादिकाल्लिट्। यथाऽस्य राज्ञो धनदस्य च नाम साधारणीभूतमेकीभूतम्। उभयोरपि धनदसंज्ञा यथा स्यात्तथेत्यर्थः ॥८०॥

इन्द्राद्वृष्टिर्नियमितगदोद्रेकवृत्तिर्यमोऽभू-
द्यादोनाथः शिवजलपथः कर्मणे नौचराणाम्।
पूर्वापेक्षी तदनु विदधे कोपवृद्धिं कुबेर-
स्तस्मिन्दण्डोपनतचरितं भेजिरे लोकपालाः ॥ ८१ ॥

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृतावतिथिवर्णनं नाम सप्तदशः सर्गः।

---

इन्द्रादिति ॥ इन्द्राद्वृष्टिरभूत्। यमो नियमिता निवारिता गदस्य रोगस्योद्रेक एव वृत्तिर्येन सोऽभूत्। यादोनाथो वरुणो नौचराणां नाविकानां कर्मणे संचाराय शिवजलपथः। सुचरजलमार्गोऽभूत्। तदनु पूर्वापेक्षी रघुरामादिमहिमाभिज्ञः कुबेरः कोपवृद्धिं विदधे। इत्थं लोकपालास्तस्मिन्राज्ञि विषये दण्डोपनतस्य शरणागतस्य चरितं वृत्तिं भेजिरे। 'दुर्बलो बलवत्सेवी विरुद्धाच्छङ्कितादिभिः। वर्तेत दण्डोपनतो भर्तर्येवमवस्थितः' इति कौटिल्यः ॥८१॥

इति महोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशव्याख्यायां संजीविनीसमाख्यायां सप्तदशः सर्गः।

---

पाठा०–१ 'शेषाम्'.

निषधोऽपि ससागरामेकातपत्रां भुवं बुभोज पालयामास। 'भुजोऽनवने' (पा. १।३।६६) इति नियमात् परस्मैपदम् ॥ ४ ॥

तस्यानलौजास्तनयस्तदन्ते वंशश्रियं प्राप नलाभिधानः।
यो नड्वलानीव गजः परेषां बलान्यमृद्नान्नलिनाभवक्त्रः ॥ ५ ॥

तस्येति ॥ अनलौजा नलाभिधानो नलाख्यस्तस्य निषधस्य तनयस्तस्य निषधस्यान्तेऽवसाने वंशश्रियं राज्यलक्ष्मीं प्राप। नलिनाभवक्त्रो यो नलः। गजो नड्वलानि नडप्रायस्थलानीव। 'नडशादाद् ड्वलच्' (पा. ४।२।८८) इति ड्वलच्प्रत्ययः। परेषां बलान्यमृद्नान्ममर्द ॥ ५ ॥

नभश्चरैर्गीतयशाः स लेभे नभस्तलश्याममतनुं[1] तनूजम्।
ख्यातं नभःशब्दमयेन नाम्ना कान्तं नभोमासमिव प्रजानाम् ॥ ६ ॥

नभ इति ॥ नभश्चरैर्गन्धर्वादिभिर्गीतयशाः स नलो नभस्तलश्याम-तनुं नभःशब्दमयेन नाम्ना ख्यातम्। नभःशब्दसंज्ञकमित्यर्थः। नभोमासमिव श्रावणमासमिव। प्रजानां कान्तं प्रियं तनूजं पुत्रं लेभे ॥ ६ ॥

तस्मै विसृज्योत्तरकोसलानां धर्मोत्तरस्तत्प्रभवे[2] प्रभुत्वम्।
मृगैरजर्यं[4] जरसोपदिष्टमदेहबन्धाय पुनर्बबन्ध[2] ॥ ७ ॥

तस्मा इति ॥ धर्मोत्तरो धर्मप्रधानः स नलः प्रभवे समर्थाय तस्मै नभसे तदुत्तरकोसलानां प्रभुत्वमाधिपत्यं विसृज्य दत्त्वा जरसा जरयोपदिष्टम्। वार्धके चिकीर्षितमित्यर्थः। मृगैरजर्यं तैः सह संगतम्। 'अजर्यं संगतम्' (पा. ३।१।१०५) इति निपातः। पुनरदेहबन्धाय पुनर्देहसंबन्धनिवृत्तये बबन्ध। मोक्षार्थं वनं गत इत्यर्थः। 'अदेहबन्धाय' इत्यत्र प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते ॥ ७ ॥

तेन द्विपानामिव पुण्डरीको राज्ञामजय्योऽजनि पुण्डरीकः।
शान्ते पितर्याहृतपुण्डरीका यं पुण्डरीकाक्षमिव श्रिता श्रीः ॥ ८ ॥

---

पाठा०—१ 'वस्मिन्'. २ 'तत्प्रभवः'; 'स प्रभवः'; 'तत्प्रसवः'. ३ 'पतिष्ठन्'. ४ 'मजय'. ५ 'मनः'. ६ 'आहितपुण्डरीकम्'; 'आहितपुण्डरीक्षम्'. ७ 'आश्रिता'.

---

टिप्प०—1 स नलो नभोमण्डलवत् श्यामं नभः शब्दरूपेण नाम्ना प्रसिद्धम्, लोकानां श्रावणमासमिवाभिलषितं पुत्रं प्राप—इति दिनकर०।

2 अत्र 'जरयोपतिष्ठन्' इति पाठमादृत्य निर्वेदान्मृगैरजर्यं संगतं मनो मोक्षाय बबन्ध—इति व्याचष्टे दिनकर०।

तेनेति ॥ तेन नभसा । द्विपानां पुण्डरीको दिग्गजविशेष इव । राज्ञामजय्यो जेतुमशक्यः । 'क्षय्यजय्यौ शक्यार्थे' (पा. ६।१।८१) इति निपातनात्साधुः । पुण्डरीकः पुण्डरीकाख्यः पुत्रोऽजनि जनितः । पितरि शान्ते स्वर्गं गते सति । आहृतपुण्डरीका गृहीतश्वेतपद्मा श्रीर्यं पुण्डरीकं पुण्डरीकाक्षं विष्णुमिव श्रिता ॥ ८ ॥

स क्षेमधन्वानममोघधन्वा पुत्रं प्रजाक्षेमविधानदक्षम् ।
क्ष्मां लम्भयित्वा क्षमयोपपन्नं वने तपः क्षान्ततरश्चचार ॥ ९ ॥

स इति ॥ अमोघं धनुर्यस्य सोऽमोघधन्वा । 'धनुषश्च' (पा. ५।४।१३२) इत्यनङादेशः समासान्तः । स पुण्डरीकः प्रजानां क्षेमविधाने दक्षं क्षमयोपपन्नं क्षान्तियुक्तं क्षेमं धनुर्यस्य तं क्षेमधन्वानं नाम पुत्रम् । 'वा संज्ञायाम्' (पा. ५।४।१३३) इत्यनङादेशः । क्ष्मां लम्भयित्वा प्रापय्य । लभेर्गत्यर्थत्वाद्विकर्मकत्वम् । क्षान्ततरोऽत्यन्तसहिष्णुः सन् । वने तपश्चचार ॥ ९ ॥

अनीकिनीनां समरेऽग्रयायी तस्यापि देवप्रतिमः सुतोऽभूत् ।
व्यश्रूयतानीकपदावसानं देवादि नाम त्रिदिवेऽपि यस्य ॥ १० ॥

अनीकिनीनामिति ॥ तस्य क्षेमधन्वनोऽपि समरेऽनीकिनीनां चमूनामग्रयायी देवप्रतिम इन्द्रादिकल्पः सुतोऽभूत् । अनीकपदावसानमनीकशब्दान्तं देवादि देवशब्दपूर्वं यस्य नाम 'देवानीक' इति नामधेयं त्रिदिवे स्वर्गेऽपि व्यश्रूयत विश्रुतम् ॥ १० ॥

पिता समाराधनतत्परेण पुत्रेण पुत्री स यथैव तेन ।
पुत्रस्तथैवात्मजवत्सलेन स तेन पित्रा पितृमान्बभूव ॥ ११ ॥

पितेति ॥ स पिता क्षेमधन्वा समाराधनतत्परेण शुश्रूषापरेण तेन पुत्रेण यथैव पुत्री बभूव तथैव स पुत्रो देवानीक आत्मजवत्सलेन तेन पित्रा पितृमान्बभूव । लोके पितृत्व-पुत्रत्वयोः फलमनयोरेवासीदित्यर्थः ॥ ११ ॥

पूर्वस्तयोरात्मसमे चिरोढामात्मोद्भवे वर्णचतुष्टयस्य ।
धुरं निधायैकनिधिर्गुणानां जगाम यज्वा यजमानलोकम् ॥ १२ ॥

पाठा०-१ 'दक्षम्'. २ 'क्षामधनुः'. ३ 'चकार'. ४ 'अधिकवत्सलेन'.

टिप्प०-१ यथा पुण्डरीको दिग्गजो दिग्गजानामन्यतमोऽस्ति । यथाहि दिग्गजनामधेयो भवति—इति पद्यम् ॥ दिग्गजाश्च—'ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥' इत्यादिनोक्ताः ।

**पूर्वे** इति ॥ **गुणानामेकनिधिर्यज्वा** विधिवदिष्टवांस्तयोः पितृ-पुत्रयोर्मध्ये **पूर्वः** पिता क्षेमधन्वाऽऽत्मसमे स्वतुल्य **आत्मोद्भवे** पुत्रे देवानीके **चिरोढां** चिरं धृतां **वर्णचतुष्टयस्य धुरं** रक्षाभारं **निधाय यजमानलोकं** यष्टृलोकं नाकं **जगाम** ॥ १२ ॥

**वशी सुतस्तस्य वशंवदत्वात्स्वेषामिवासीद्द्विषतामपीष्टः ।**
**सकृद्विविग्नानपि हि प्रयुक्तं माधुर्यमीष्टे हरिणान्ग्रहीतुम् ॥ १३॥**

**वशीति** ॥ **तस्य** देवानीकस्य **वशी** समर्थः **सुतो**ऽहीनगुर्नामेति वक्ष्यमाणनामकः । वशं वशकरं मधुरं वदतीति **वशंवदः** । 'प्रियवशे वदः खच्' (पा ३।२।३८) इति खच्प्रत्ययः । तस्य भावस्तत्त्वम् । तस्मादिष्टवादित्वात्स्वेषामिव **द्विषतामपीष्टः** प्रिय **आसीत्** । अर्थादेवानीकनिर्धारणं लभ्यते । तथा हि—**प्रयुक्तं** मुच्चारितं **माधुर्यं सकृदे**कवारं **विविग्नान्** भीतानपि **हरिणान्ग्रहीतुं** वशीकर्तुं **मीष्टे** शक्नोति ॥ १३ ॥

**अहीनगुर्नाम स गां समग्रामहीनबाहुद्रविणः शशास ।**
**यो हीनसंसर्गपराङ्मुखत्वाद्युवाप्यनर्थैर्व्यसनैर्विहीनः ॥ १४ ॥**

**अहीनगुरिति** ॥ **अहीनबाहुद्रविणः** सम्प्रभुतपराक्रमः । 'द्रविणं काञ्चनं वित्तं द्रविणं च पराक्रमः' इति विश्वः । **हीनसंसर्गपराङ्मुखत्वा**न्नीचसंसर्गविमुखत्वाद्धेतोर्**युवाऽप्यनर्थै**रनर्थकरैर्**व्यसनैः** पानद्यूतादिभि**र्विहीनो** रहितो **योऽहीनगुर्नाम स** पूर्वोक्तो देवानीकसुतः **समग्रां** सर्वां **गां** भुवं **शशास** ॥ १४ ॥

पाठा०—१ 'महीम्' २ 'अनर्थव्यसनैः', 'अनार्यव्यसनैः'

टिप्प०—1 जितेन्द्रियस्तस्य देवानीकस्य पुत्रः प्रियवादित्वात् स्वबन्धूनामिवारीणामप्यभिमतोऽभूत् । हि यतः सकृत्प्रयुक्तं गीतमाधुर्यं विविग्नान् त्रस्तानपि हरिणान्ग्रहीतुं शिष्टं समर्थं भवति-इति दिनकर० ॥ तस्य देवानीकस्य वशंवदत्वात् प्रियवादित्वाच्च स्वेषामिव स्वीयानामिव द्विषतामपीष्टो बभूव । अरीणामपि प्रियोऽभवत् । हि निश्चितम्, सकृदपि प्रयुक्तं माधुर्यं गेयं विविग्नानपि त्रस्तानपि हरिणान्मृगान्ग्रहीतुमीष्टे वशीकर्तुं प्रभवति । वशी जितेन्द्रियः इति वल्लभः ।

2 तरुणोऽपि स्त्रियोऽक्ष-मृगया-पान-वाक्पारुष्यादिव्यसनवर्जितः । उक्तं च-'असन्मैत्री हि दोषाय'-इति वल्लभः ॥ युवापि यो हीनानां दुराचाराणां संसर्गात्पराङ्मुखत्वादनर्थमूले व्यसने स्त्रियोऽक्षादिनी रहित -इति दिनकर० ॥ अत्र हि 'अहीन' 'अहीनर' इत्यादिनामभिरपि पुराणेषु प्रथितो वरीवर्ति ।

गुरोः स चानन्तरमन्तरज्ञः पुंसां पुमानाद्य इवावतीर्णः ।
उपक्रमैरस्खलितैश्चतुर्भिश्चतुर्दिगीशश्चतुरो बभूव ॥ १५ ॥

गुरोरिति ॥ पुंसामन्तरज्ञो विशेषज्ञश्चतुरो निपुणः सोऽहीनगुश्च गुरोः पितुरनन्तरम् । अवतीर्णो भुवं प्राप्त आद्यः पुमान् विष्णुरिव । अस्खलितैरप्रतिहतैश्चतुर्भिरुपक्रमैः सामाद्युपायैः । 'सामादिभिरुपक्रमैः' (७।१०७) इति मनुः । चतुर्दिगीशश्चतसृणां दिशामीशो बभूव ॥ १५ ॥

तस्मिन्प्रयाते परलोकयात्रां जेतर्यरीणां तनयं तदीयम् ।
उच्चैःशिरस्त्वाज्जितपारियात्रं लक्ष्मीः सिषेवे किल पारियात्रम् ॥ १६ ॥

तस्मिन्निति ॥ अरीणां जेतरि तस्मिन्नहीनगौ परलोकयात्रां प्रयाते प्राप्ते सति । उच्चैःशिरस्त्वादुन्नतशिरस्त्वाज्जितः पारियात्रः कुलशैलविशेषो येन तं पारियात्रं पारियात्राख्यं तदीयं तनयं लक्ष्मीः राज्यलक्ष्मीः सिषेवे किल ॥ १६ ॥

तस्याभवत्सूनुरुदारशीलः शिलः शिलापट्टविशालवक्षाः ॥
जितारिपक्षोऽपि शिलीमुखैर्यः शालीनतामव्रजदीड्यमानः ॥ १७ ॥

तस्येति ॥ तस्य पारियात्रस्य । उदारशीलो महावृत्तः । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । शिलापट्टविशालवक्षाः शिलः शिलाख्यः सूनुरभवत् । यः सूनुः शिलीमुखैर्बाणैः । 'अलिबाणौ शिलीमुखौ' इत्यमरः । जितारिपक्षोऽपीड्यमानः स्तूयमानः सन् । शालीनतामधृष्टतां लज्जामव्रजदगच्छत् । 'स्यादधृष्टे तु शालीनः' इत्यमरः । 'शालीनकौपीने अधृष्टाकार्ययोः' (पा. ५।२।२०) इति निपातः ॥ १७ ॥

**तमिति ॥** अनिन्दितात्माऽगर्हितस्वभाव स पारियात्र । **आत्मसंपन्न** बुद्धिसंपन्नम् । 'आत्मा यत्नो धृतिर्बुद्धि स्वभावो ब्रह्म वर्ष्म च' इत्युभयत्राप्यमर । **युवानं तं** शिलं **युवराजं कृत्वैव सुखान्यभुङ्क्त** । न त्वकृत्वेत्येवकारार्थ । किमर्थं 'युवराज'शब्दकरणमित्याशङ्क्यान्यथा सुखोपभोगो दुर्लभ इत्याह—**सुखोपरोधीति** । हि यस्माद्राज्ञां **वृत्तं** प्रजापालनादिरूपं **सुखोपरोधि** बहुलत्वात्सुखप्रतिबन्धकम् । अत एव **उपरुद्धवृत्तम्** । उपरुद्धसदृशमित्यर्थ । उपरुद्ध कारादिबद्ध । उपरुद्धस्य स्वयमूढभारस्य च सुखं नास्तीति भाव ॥ १८ ॥

**तं रागबन्धिष्ववितृप्तमेव भोगेषु सौभाग्यविशेषभोग्यम् ।**
**विलासिनीनामरतिक्षमापि जरा वृथा मत्सरिणी जहार ॥ १९ ॥**[1]

**तमिति ॥** रागं बध्नन्तीति **रागबन्धिन** । रागप्रवर्तका इत्यर्थ । तेषु **भोगेषु** विषयेष्ववितृप्तमेव सन्तं किंच **विलासिनीनां** भोक्त्रीणां **सौभाग्यविशेषेण** सौन्दर्यातिशयेन हेतुना **भोग्यं** भोगार्हम् । 'चजो कु घिण्यतो' (पा ७।३।५२) इति कुत्वम् । तं पारियात्रं रतिक्षमा न भवतीत्य**रतिक्षमापि** । अत एव **वृथा मत्सरिणी** रतिक्षमासु । विलासिनीष्वित्यर्थ । **जरा जहार** वशीचकार ॥ १९ ॥

**उन्नाभ इत्युद्गतनामधेयस्तस्यायथार्थोन्नतनाभिरन्ध्र ।**
**सुतोऽभवत्पङ्कजनाभकल्प कृत्स्नस्य नाभिर्नृपमण्डलस्य ॥ २० ॥**

**उन्नाभ इति ॥** तस्य शिलाख्यस्य । **उन्नाभ इत्युद्गतनामधेय** प्रसिद्धनामा **ऽयथार्थं** यथा तथोन्नत **नाभिरन्ध्रं** यस्य स । गम्भीरनाभिरित्यर्थ । तदुक्तम्—

---

पाठा०—१ हित्वाथ भोगांस्तपसोत्तमेन त्रिविष्टपं प्राप्तवति क्षितीशे । तदात्मज सागरधीरचेता शशास पृथ्वीं सकलां नृसोम ॥'—(नृसोम —मनुष्यचन्द्र जनाह्लादकत्वात्-इति वल्लभ ।) २ 'आसीत्सुत ' ३ 'तुल्य '

---

टिप्प०—1 अत्र 'अयुवान' इति पाठमादृत्य—आत्मज शिलमयुवानमेव षोडशवर्षधरमेव युवराज कृत्वा—इति व्याचष्ट दिनकर० ।

2 यतो हेतोरपरुद्धस्य वृत्तमिव वर्तनं यत्तु तद्राज्ञां वृत्तमाचरणं सुखविप्रकरम्, राज्यकार्यव्यग्रत्वादनवकाशत्वात् । उक्तं च—'परेष्वक्षितकार्यो य कार्याण्यारभते स्वयम् । सोऽपरुद्ध इति ख्यातो राजा न सुखभाग्भवेत्'—इति दिनकर० ॥ वल्लभस्तु—'अरण्याहितभारो य कार्याण्यारभते स्वयम् । उपरुद्ध स विज्ञेयो न राजा सुखभाग् भवेत्' इत्याह ।

3 स्त्रीणां रतावक्षमा वृथामात्सर्ययुक्ता जरा अनुरागे वृत्तिर्येषां तेषु भोगेषु वितृप्तमेव सौभाग्यविशेषेण भोग्यं कमनीयं तमलङ्कृतवती—इति दिनकर० ॥ मत्सरिणी मात्सर्ययुक्ता, मदवरे कथं विलासिनीनां भोग इति मत्सरयुक्ता —इति वल्लभ ।

'स्वरः सत्त्वं च नाभिश्च गाम्भीर्यं त्रिषु शस्यते' । **पङ्कजनाभकल्पो** विष्णुसदृशः **कृत्स्नस्य नृपमण्डलस्य नाभिः** प्रधानम् । 'नाभिः प्रधाने कस्तूरीमदेऽपि क्वचिदीरितः' इति विश्वः । **सुतोऽभवत्** । 'अच्प्रत्यन्ववपूर्वात्सामलोम्नः' (पा. ५।४।७५) इत्यत्राजिति योगविभागादुन्नाभ-वज्रनाभादयः सिद्धाः ॥ २० ॥

**ततः परं वज्रधरप्रभावस्तदात्मजः संयति वज्रघोषः ।**
**बभूव वज्राकरभूषणायाः पतिः पृथिव्याः किल वज्रणाभः ॥ २१ ॥**

**तत** इति ॥ **ततः परं वज्रधरप्रभाव** इन्द्रतेजाः **संयति** सङ्ग्रामे **वज्रघोषो**ऽशनितुल्यध्वनिर्वज्रणाभो नाम **तदात्मजो**ऽस्योन्नाभस्यात्मजो **वज्राणां** हीरकाणामाकराः खनय एव **भूषणानि** यस्यास्तस्याः **पृथिव्याः पतिर्बभूव किल** खलु । 'वज्रं त्वस्त्री कुलिशशस्त्रयोः । मणिवेधे रत्नभेदेऽप्यशनावासनान्तरे ॥' इति केशवः ॥ २१ ॥

**तस्मिन्गते द्यां सुकृतोपलब्धां तत्संभवं शङ्खणमर्णवान्ता ।**
**उत्खातशत्रुं वसुधोपतस्थे रत्नोपहारैरुदितैः खनिभ्यः ॥ २२ ॥**

**तस्मि**न्निति ॥ **तस्मिन्**वज्रणाभे **सुकृतोपलब्धां** सुधर्मार्जितां **द्यां** स्वर्गं **गते** सति । **उत्खातशत्रु**मुद्धृतशत्रुं **शङ्खणं** नाम **तत्संभवं** तदात्मजम**र्णवान्ता वसुधा खनिभ्य** आकरेभ्य **उदितै**रुत्पन्नै **रत्नोपहारै**रुत्कृष्टवस्तुसमर्पणैः । **उपतस्थे** सिषेवे । 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इति भरत-विश्वौ ॥ २२ ॥

**तस्यावसाने हरिदश्वधामा पित्र्यं प्रपेदे पदमश्विरूपः ।**
**वेलातटेषूषितसैनिकाश्वं पुराविदो यं व्युषिताश्वमाहुः ॥ २३ ॥**

**तस्ये**ति ॥ **तस्य** शङ्खणस्य**अवसाने**ऽन्ते **हरिदश्वधामा** सूर्यतेजाः । अश्विनोरिव रूपमस्येत्य**श्विरूपो**ऽतिसुन्दरः । तत्सुत इति शेषः । 'पित्र्यम्' इति संबन्धिपदसामर्थ्यात् । **पित्र्यं पदं प्रपेदे** । **वेलातटेषूषिता** निविष्टाः **सैनिका**

---

पाठा०—१ 'तस्यात्मजः'. २ 'मेखलायाः'. ३ 'वज्रनाभः'; 'वज्रनामा'. ४ 'स्वः'. ५ 'सुकृतोपलब्धम्'. ६ 'शङ्खनम्'; 'पण्डगम्'. ७ 'खनिवैः'. ८ 'हरिदश्वनामा'. ९ 'अश्वरूपः'. १० 'व्युषिताश्वम्'.

---

टिप्प०—1 उन्नाभ समुद्गतं नाभिरिदं नाम यस्य स विष्णुरूपः सर्वस्य द्वारशराभमण्डलस्य नाभिः प्रधानभूतस्तस्य पङ्कस्य सुतोऽभूत्-इति दिनकर० ।
2 'वसोरेव-' (वा. ९९८) इत्यादिना संमतो विष्वेतानमेरदन्-इति दिनकर० ।
3 इतेन दिग्विजयकथनम्-इति वल्लभः ।

अश्वाश्च यस्य तम् । अन्वर्थनामानमित्यर्थः । यं पुनः पुराविदो वृद्धा व्युषिताश्वमाहुः ॥ २३ ॥

आराध्य विश्वेश्वरमीश्वरेण तेन क्षितेर्विश्वसहो विजज्ञे ।
पातुं सहो विश्वसखः समग्रां विश्वंभरामात्मजमूर्तिरात्मा ॥ २४ ॥

आराध्येति ॥ तेन क्षितेरीश्वरेण व्युषिताश्वेन विश्वेश्वरं काशीपतिमाराध्योपास्य विश्वसहो नाम विश्वसखः समग्रां सर्वां विश्वंभरां भुवं पातुं रक्षितुं सहते इति सहः क्षमः । पचाद्यच् । आत्मजमूर्तिः पुत्ररूप्यात्मा स्वयमेव । 'आत्मा वै पुत्रनामासि' ( आश्व सू १।१५ ) इति श्रुतेः । विजज्ञे सुषुवे । विपूर्वो जनिर्गर्भविमोचने वर्तते । यथाह भगवान्पाणिनिः —'समां समां विजायते' इति ॥ २४ ॥

अंशे हिरण्याक्षरिपोः स जाते हिरण्यनाभे तनये नयज्ञः ।
द्विषामसह्यः सुतरां तरूणां हिरण्यरेता इव सानिलोऽभूत् ॥ २५ ॥

अंश इति ॥ नयज्ञो नीतिज्ञः स विश्वसहः । हिरण्याक्षरिपोर्विष्णोरंशे । हिरण्यनाभे तन्नाम्नि तनये जाते सति । तरूणां सानिलो हिरण्यरेता हुतभुगिव । द्विषां सुतरामसह्योऽभूत् ॥ २५ ॥

पिता पितॄणामनृणस्तमन्ते वयस्यनन्तानि सुखानि लिप्सुः ।
राजानमाजानुविलम्बिबाहुं कृत्वा कृती वल्कलवान्बभूव ॥ २६ ॥

पितेति ॥ पितॄणामनृणः[3] । निर्वृत्तपितृऋण इत्यर्थः । 'प्रजया पितृभ्यः' इति श्रुतेः । अत एव कृती । कृतकृत्य इत्यर्थः । पिता विश्वसहोऽन्ते वयसि बाधकेऽनन्तान्यविनाशीनि सुखानि लिप्सुः । मुमुक्षुरित्यर्थः । आजानुविलम्बिबाहुं दीर्घबाहुम् । भाग्यसंपन्नमिति भावः । तं हिरण्यनाभं राजानं कृत्वा वल्कलवान्बभूव । वनं गत इत्यर्थः ॥ २६ ॥

कौसल्य इत्युत्तरकोसलानां पत्युः पतङ्गान्वयभूषणस्य ।
तस्यौरसः सोमसुतः सुतोऽभून्नेत्रोत्सवः सोम इव द्वितीयः ॥ २७ ॥

कौसल्य इति ॥ उत्तरकोसलानां पत्युः पतङ्गान्वयभूषणस्य सूर्य

पाठा०—१ 'विश्वसख', 'विश्वसम', 'विष्णुसम' २ 'ऽधिजज्ञे' ३ 'विश्वसह', विश्वसृज' ४ 'सुजाते'

टिप्प०—1 पुराविदो अध्युषिताश्वनामानं कथयन्ति-इति दिनकर० ॥
2 द्विषां इति कर्तरि षष्ठी-इति दिनकर० ।
3 पितॄणां सुतोत्पादनादनृणः-इति दिनकर० ।

शाभरणस्य **सोमसुतः** सोमं सुतवतः । यज्वन इत्यर्थः । 'सोमे सुञः' (पा. ३।२।९०) इति क्विप् । **तस्य** हिरण्यनाभस्य **द्वितीयः सोमश्चन्द्र इव । नेत्रोत्सवो** नयनानन्दकरः **कौसल्य इति** प्रसिद्ध **औरसो** धर्मपत्नीजः **सुतोऽभूत्** ॥ २७ ॥

**यशोभिराब्रह्मसभं प्रकाशः स ब्रह्मभूयं गतिमाजगाम ।**
**ब्रह्मिष्ठमाधाय निजेऽधिकारे ब्रह्मिष्ठमेव स्वतनुप्रसूतम् ॥ २८ ॥**

**यशोभिरिति** ॥ आ ब्रह्मसभाया **आब्रह्मसभं** ब्रह्मसदनपर्यन्तम् । अभिविधावव्ययीभावः । **यशोभिः । प्रकाशः** प्रसिद्धः, **स** कौसल्योऽतिशयेन ब्रह्मवन्तं **ब्रह्मिष्ठम्** । ब्रह्मविदमित्यर्थः । 'ब्रह्म'शब्दान्मतुबन्तादिष्ठन्प्रत्यये 'विन्मतोर्लुक्' (पा. ५।३।६५) इति मतुपो लुक् । 'नस्तद्धिते' (पा. ६।४।१४४) इति टिलोपः । **ब्रह्मिष्ठं** ब्रह्मिष्ठाख्यं **स्वतनुप्रसूतं** स्वात्मजमेव **निजे** स्वकीयेऽ**धिकारे** प्रजापालनकृत्ये । **आधाय** निधाय । ब्रह्मणो भावो **ब्रह्मभूयं** ब्रह्मत्वं तदेव **गतिं** स्वामा**जगाम** । मुक्तोऽभूदित्यर्थः । 'स्याद्ब्रह्मभूयं ब्रह्मत्वम्' इत्यमरः । भुवो भावे क्यप् ॥ २८ ॥

**तस्मिन्कुलापीडनिभे विपीडं सम्यङ्महीं शासति शासनाङ्काम् ।**
**प्रजाश्चिरं सुप्रजसि प्रजेशे ननन्दुरानन्दजलाविलाक्ष्यः ॥ २९ ॥**

**तस्मिन्निति** ॥ **कुलापीडनिभे** कुलशेखरतुल्ये । 'वैकक्षकं तु तत् । यत्तिर्यक्क्षिप्तमुरसि शिखास्वापीडशेखरौ' इत्यमरः । **सुप्रजसि** सत्संतानवति । 'नित्यमसिच्प्रजामेधयोः' (५।४।१२२) इत्यसिच्प्रत्ययः । **तस्मिन् प्रजेशे** प्रजेश्वरे ब्रह्मिष्ठे **शासनाङ्कां** शासनचिह्नां **महीं विपीडं** निर्बाधं यथा तथा **सम्यक्शासति** सति । **आनन्दजलाविलाक्ष्य** आनन्दबाष्पाकुलनेत्राः **प्रजाश्चिरं ननन्दुः** ॥ २९ ॥

**पात्रीकृतात्मा गुरुसेवनेन स्पष्टाकृतिः पत्त्ररथेन्द्रकेतोः ।**
**तं पुत्रिणां पुष्करपत्त्रनेत्रः पुत्रः समारोपयदग्रसंख्याम् ॥ ३० ॥**

**पात्रीकृतेति** ॥ **गुरुसेवनेन** पित्रादिशुश्रूषया **पात्रीकृतात्मा** योग्यीकृतात्मा । 'योग्यभाजनयोः पात्रम्' इत्यमरः । **पत्त्ररथेन्द्रकेतोर्**गरुडध्वजस्य **स्पष्टा**-

---

पाठा०—१ 'ब्रह्मभूयाम्'. २ 'विपीडाम्'. ३ 'शोभनाङ्काम्'; 'शासनाङ्कम्'. ४ 'आनन्दजलाकुलाक्ष्यः'; 'आनन्दजलोक्षिताक्ष्यः'. ५ 'स्पृष्टाकृतिः'.

---

टिप्प०—1 या वा मन्त्रादिविधानसंस्कृता धर्मपत्नी, तस्यां स्वयमुत्पादितः पुत्र औरस इति मिताक्षरा ।

2 विपीडं निराबाधम्; शोभनाङ्कां निजशासनचिह्नाम्—इति वल्लभः ।

कृतिः स्पष्टवपु । तत्सरूप इत्यर्थ । 'आकृति' कथिता रूपे सामान्यवपुषोरपि' इति विश्व । **पुष्करपत्रनेत्रः** पद्मदलाक्ष **पुत्रः** पुत्राख्यो राजा । यद्वा,-'पुत्र'शब्द आवर्तनीय । पुत्र पुत्राख्य पुत्र सुत । **तं** प्रसिद्ध **पुत्रिणामग्रसंख्या समारोपयत्** । अग्रगण्य चकारेत्यर्थः ॥ ३० ॥

**वंशस्थितिं वंशकरेण तेन संभाव्य भावी स सखा मघोनः ।**
**उपस्पृशन्स्पर्शनिवृत्तलौल्यस्त्रिपुष्करेषु त्रिदशत्वमाप ॥ ३१ ॥**

**वंशेति** ॥ स्पृश्यन्त इति **स्पर्शा** विषया । तेभ्यो **निवृत्तलौल्यो** निवृत्ततृष्ण । अत एव **मघोन** इन्द्रस्य **सखा** मित्र **भावी** भविष्यन् । स्वर्ग जिगमिषुरित्यर्थ । **स** प्रसिद्धो **वंशकरेण** वंशप्रवर्तकेन **तेन** पुत्रेण **वंशस्थितिं** कुलप्रतिष्ठा **संभाव्य** सपाद्य । **त्रिषु पुष्करेषु** तीर्थविशेषेषु । 'दिक्सख्ये सज्ञायाम्' (पा. २।१।५७) इति समास । **उपस्पृशन्** स्नान कुर्वन् । **त्रिदशत्वं** देवभूय**माप** ॥ ३१ ॥

**तस्य प्रभानिर्जितपुष्परागं पौष्यां तिथौ पुष्यमसूत पत्नी ।**
**तस्मिन्नपुष्यन्नुदिते समग्रां पुष्टिं जनाः पुष्य इव द्वितीये ॥ ३२ ॥**

**तस्येति** ॥ **तस्य** पुत्राख्यस्य **पत्नी पौष्यां** पुष्यनक्षत्रयुक्ताया पौर्णमास्या **तिथौ** । 'पुष्ययुक्ता पौर्णमासी पौषी' इत्यमर । 'नक्षत्रेण युक्त काल' (पा ४।२।३) इत्यण्प्रत्यय । 'टिड्ढाणञ्-' (पा. ४।१।१५) इत्यादिना ङीप् । **प्रभया निर्जितः पुष्परागो** मणिविशेषो येन त **पुष्यं** पुष्याख्य**मसूत** । **द्वितीये पुष्ये** पुष्यनक्षत्र **इव तस्मिन्नुदिते** सति **जनः समग्रा पुष्टिं** वृद्धि**मपुष्यन्** ॥ ३२ ॥

**महीं महेच्छः परिकीर्य सूनौ मनीषिणे जैमिनयेऽर्पितात्मा ।**
**तस्मात्सयोगादधिगम्य योगमजन्मनेऽकल्पत जन्मभीरुः ॥३३॥**

**महीमिति** ॥ **महेच्छो** महाशय । 'महेच्छस्तु महाशय' इत्यमर । **जन्मभीरुः** ससारभीरु स पुत्र **सूनौ महीं परिकीर्य** विसृज्य **मनीषिणे** ब्रह्म-

**पाठा०**—१ 'वंशधरेण'. २ 'आप स्पृशन्', 'अप. स्पृशन्'. ३ 'त्रिपु शान्तिम्'. ४ 'पद्मरागम्'. ५ 'पुष्याम्'. ६ 'पुष्पम्'. ७ 'यस्मिन्'. ८ 'पुष्प '.

**टिप्प०**—1 त्रिपुष्करेषूपस्पृशन् तीर्थेषु स्नानसन्ध्यादिकर्म कुर्वन् शान्तिमाप-इति वल्लभ'।
2 प्रभानिर्जितपद्मराग प्रभया निर्जित पद्मरागो येन स तम् । यस्मिन्नुदिते सति जना' समग्रां पूर्णां पुष्टिं प्रापु'-इति वल्लभ' ।

3 यस्मिन्पुष्ये जाते सति लोका द्वितीयपुष्यनक्षत्रे इव पूर्णां पुष्टिं पुष्यन्ति स । उक्त च-'चन्द्र विरुद्धेऽप्यथ गोचरे वा सिद्ध्यन्ति कार्याणि कृतानि पुष्ये ॥' इति दिनकर०॥ 'पुष्य परकृत हन्ति न तु पुष्यकृत पर । अपि द्वादशगे चन्द्रे पुष्य' सर्वार्थसाधक ' इति शिशु० । अनेन कवेर्ज्योतिःशास्त्रेऽतिशयंगतत्व सम्यग्विभाव्यते ।

विद्याविदुषे जैमिनये मुनयेऽर्पितात्मा । शिष्यभूतः सन्नित्यर्थः । सयोगायोगिनस्तस्माज्जैमिनेर्योगं योगविद्यामधिगम्याजन्मने जन्मनिवृत्तये मोक्षायाकल्पत समपद्यत । क्लृपेः संपद्यमाने चतुर्थी वक्तव्या । मुक्तोऽभूदित्यर्थः ॥ ३३ ॥

**ततः परं तत्प्रभवः प्रपेदे ध्रुवोपमेयो ध्रुवसंधिरुर्वीम् ।**
**यस्मिन्नभूज्ज्यायसि सत्यसंधे संधिर्ध्रुवः संनमतामरीणाम् ॥ ३४ ॥**

तत इति ॥ ततः परं स पुण्यः प्रभवः कारणं यस्य स तत्प्रभवः । तदात्मज इत्यर्थः । ध्रुवेणौत्तानपादिनोपमेयः । 'ध्रुव औत्तानपादिः स्यात्' इत्यमरः । ध्रुवसंधिरुर्वीं प्रपेदे । ज्यायसि श्रेष्ठे सत्यसंधे सत्यप्रतिज्ञे यस्मिन् ध्रुवसंधौ संनमताम्, अनुद्धतानामित्यर्थः । अरीणां संधिर्ध्रुवः स्थिरोऽभूत् ।' ततः सार्थकनामेत्यर्थः ॥ ३४ ॥

**सुते शिशावेव सुदर्शनाख्ये दर्शात्ययेन्दुप्रियदर्शने सः ।**
**मृगायताक्षो मृगयाविहारी सिंहादवापद्विपदं नृसिंहः ॥ ३५ ॥**

सुत इति ॥ मृगायताक्षो नृसिंहः पुरुषश्रेष्ठः स ध्रुवसंधिर्दर्शात्ययेन्दुप्रियदर्शने प्रतिपच्चन्द्रनिभे सुदर्शनाख्ये सुते शिशौ सत्येव मृगयाविहारी सन्, सिंहाद्विपदं मरणमवापत् । व्यसनासक्तिरनर्थावहेति भावः ॥ ३५ ॥

**स्वर्गामिनस्तस्य तमैकमत्यादमात्यवर्गः कुलतन्तुमेकम् ।**
**अनाथदीनाः प्रकृतीरवेक्ष्य साकेतनाथं विधिवच्चकार ॥ ३६ ॥**

स्वरिति ॥ स्वर्गामिनः स्वर्यातस्य तस्य ध्रुवसंधेरमात्यवर्गः। अनाथा नाथहीना अत एव दीनाः शोच्याः प्रकृतीः प्रजा अवेक्ष्य । कुलतन्तुं कुलावलम्बनमेकमद्वितीयं तं सुदर्शनम् । ऐकमत्याद्विधिवत् साकेतनाथमयोध्याधीश्वरं चकार ॥ ३६ ॥

**नवेन्दुना तन्नभसोपमेयं शावैकसिंहेन च काननेन ।**
**रघोः कुलं कुड्मलपुष्करेण तोयेन चाप्रौढनरेन्द्रमासीत् ॥ ३७ ॥**

पाठा०—१ 'सत्यभवम्'. २ 'ध्रुवोपमेयम्'. ३ 'ध्रुवसंधिम्'. ४ 'उर्वी'. ५ 'सत्यसंधिः'. ६ 'नृपाणाम्'. ७ 'नृसोमः'. ८ 'एकपुत्रम्'. ९ 'पुष्करकुड्मलेन'; 'कुड्मलपङ्कजेन'.

टिप्प०—1 दर्शात्यये इन्दुः प्रतिपच्चन्द्रस्तद्वत् प्रियं दर्शनं यस्य तस्मिन्बालाङ्के सुदर्शननाम्नि पुत्रे स मृगवद्दिशालनेत्रो मृगयां गतो नृणां मध्ये श्रेष्ठः स ध्रुवसंधिः सिंहाद्विपदं मृतिं प्राप-इति दिनकर० ।

**नवेति** ॥ **अप्रौढनरेन्द्रं तद्रघोः कुलं नवेन्दुना** बालचन्द्रेण **नभसा** व्योम्ना। **शावः** शिशुरेकः **सिंहो** यस्मिन्। 'पृथुकः शावकः शिशुः' इत्यमरः। तेन **काननेन च**। **कुड्मलं** कुड्मलावस्थं **पुष्करं** पङ्कजं यस्मिंस्तेन **तोयेन चोपमेयमु**पमातुमर्हम्। **आसीत्**। नवेन्द्वाद्युपमानेन तस्य वर्धिष्णुताशौर्यश्रीमत्त्वानि सूचितानि ॥ ३७ ॥

**लोकेन भावी पितुरेव तुल्यः संभावितो मौलिपरिग्रहात्सः।**
**दृष्टो हि वृण्वन्कलभप्रमाणोऽप्याशाः पुरोवातमवाप्य मेघः ॥३८॥**

**लोकेनेति** ॥ **स** बालो **मौलिपरिग्रहा**त्किरीटस्वीकाराद्धेतोः **पितुस्तुल्यः** पितृसदृश एव **भावी** भविष्यति इति **लोकेन** जनेन **संभावित**स्तर्कितः। तथा **हि**-**कलभप्रमाणः** कलभमात्रोऽपि **मेघः पुरोवातमवाप्य**। **आशा** दिशो **वृण्व**न्गच्छन् **दृष्टो हि** ॥ ३८ ॥

**तं राजवीथ्यामधिहस्ति यान्तमाधोरणालम्बितमग्र्यवेशम्।**
**षड्वर्षदेशीयमपि प्रभुत्वात्प्रैक्षन्त पौराः पितृगौरवेण ॥ ३९ ॥**

**तमिति** ॥ **राजवीथ्यां** राजमार्गे**ऽधिहस्ति** हस्तिनि। विभक्त्यर्थेऽव्ययीभावः। **यान्तं** गच्छन्तम्, हस्तिनमारुह्य गच्छन्तमित्यर्थः। **आधोरणालम्बितं** शिशुत्वात्सादिना गृहीत**मग्र्यवेश**मुदारनेपथ्यं षड्वर्षाणि भूतः षड्वर्षः। 'तद्धितार्थ-'( पा. २।१।५१ ) इत्यादिना समासः। 'तमधीष्टो भृतो भूतो भावी' इत्यधिकारे 'चित्तवति नित्यम्' इति तद्धितस्य लुक्। ईषदसमाप्तः षड्वर्षः **षड्वर्षदेशीयः**। 'ईषदसमाप्तौ-' (पा. ५।३।६७ ) इत्यादिना देशीयप्रत्ययः। तं **षड्वर्षदेशीयमपि** बालमपि

---

**पाठा०**—१ 'मौलपरि'. २ 'अतिहस्तयन्त'; 'यन्तम्'. ३ 'पूर्वकायम्'; 'मध्यदेशम्'.

---

**टिप्प०**—1 नवेन्दुयुक्तेनाकाशेन शावः शिशुरेकः सिंहो यत्र तेन वनेन च कुड्मलमात्र पद्मं येन तेन जलेनेवोपमेयमासीत्-इति **दिनकर०**।

2 करिशिशुप्रमाणोऽपि मेघः पूर्ववातं प्राप्य दिशो व्यापनशीलो दृष्टः-इति **दिनकर०**। स सुदर्शनो मौलपरिग्रहात् कुलामात्यस्वीकरणात् लोकेन पितुरेव भावी सभावितो मेने-इति **वल्लभः**।

3 'अतिहस्तयन्तम्' इति पाठमादृत्य-राजमार्गे हस्तिनाऽतिक्रामन्तमतिहस्तयन्तं शिशुत्वान्महामात्रेणावलम्बितो मध्यो देशो यस्य तं षड्वर्गप्रमाणमपि तं नृपं प्रभुशक्तियुक्तत्वात् पितृगौरवेण पश्यन्ति स्म-इति **दिनकर०**॥ पौरास्तु षड्वर्षदेशीयमपि प्रभुत्वाद्गौरवेण प्रैक्षन्त [illegible] नावमन्तव्यो मनुष्य इति भूमिपः।
[illegible] हि राजा गजारूढः पुर प्रदक्षिणी-

तं सुदर्शनं पौराः प्रभुत्वात्पितृगौरवेण प्रैक्षन्त। पितरि यादृग्गौरवं तादृशे-नैव ददृशुरित्यर्थः ॥ ३९ ॥

कामं न सोऽकल्पत पैतृकस्य सिंहासनस्य प्रतिपूरणाय।
तेजोमहिम्ना पुनरावृतात्मा तद्व्याप चामीकरपिञ्जरेण ॥ ४० ॥

काममिति ॥ स सुदर्शनः पैतृकस्य सिंहासनस्य कामं सम्यक्प्रतिपूरणाय नाकल्पत। बालत्वाद्व्याप्तुं न पर्याप्त इत्यर्थः। चामीकरपिञ्जरेण कनकगौरेण तेजोमहिम्ना पुनस्तेजःसंपदा त्वावृतात्मा विस्तारितदेहः सन्, तत् सिंहासनं व्याप व्याप्तवान् ॥ ४० ॥

तस्मादधः किंचिदिवावतीर्णावसंस्पृशन्तौ तपनीयपीठम्।
सालक्तकौ भूपतयः प्रसिद्धैर्ववन्दिरे मौलिभिरस्य पादौ ॥ ४१ ॥

तस्मादिति ॥ तस्मात्सिंहासनादपादानात् अधोऽधोदेशं प्रति किंचिदिवावतीर्णावीषल्लम्बौ तपनीयपीठं काञ्चनपीठमसंस्पृशन्तौ अल्पकत्वादव्याप्तौ सालक्तकौ लाक्षारसारुणिकावस्य सुदर्शनस्य पादौ भूपतयः प्रसिद्धैरुन्नतैर्मौलिभिर्मुकुटैर्ववन्दिरे प्रणेमुः ॥ ४१ ॥

मणौ महानील इति प्रभावादल्पप्रमाणेऽपि यथा न मिथ्या।
शब्दो महाराज इति प्रतीतस्तथैव तस्मिन्युयुजेऽर्भकेऽपि ॥ ४२ ॥

मणाविति ॥ अल्पप्रमाणेऽपि मणाविन्द्रनीले प्रभावात्तेजिष्ठत्वादितोर्महानील इति शब्दो यथा मिथ्या निरर्थको न तथैवार्भकेऽपि शिशावपि तस्मिन् सुदर्शने प्रतीतः प्रसिद्धो महाराज इति शब्दो न मिथ्या युयुजे ॥

पर्यन्तसंचारितचामरस्य कपोललोलोभयकाकपक्षात्।
तस्याननादुच्चरितो विवादश्चस्खाल वेलास्वपि नार्णवानाम् ॥ ४३ ॥

पर्यन्तेति ॥ पर्यन्तयोः पार्श्वयोः संचारिते यस्य तस्य बालस्य संबन्धिनः कपोलयोर्लोलावुभौ काकपक्षौ यस्य तस्मादाननादुच्चरितो विवादो वचनमर्णवानां वेलास्वपि न चस्खाल। शिशोरपि तस्याज्ञाभङ्गो नासीदित्यर्थः। चपलसंसर्गेऽपि महान्तो न चलन्तीति ध्वनिः। उभयकाकपक्षादित्यत्र 'वृत्तिविषये उभयपुत्र इतिवद् 'उभ'शब्दस्थाने 'उभय'शब्दप्रयोगः' इत्युक्तं प्राक् ॥ ४३ ॥

पाठा०—१ 'भाविवनम्'; 'आ वितानाद्'. २ 'सकुङ्कुमौ'. ३ 'प्रयुक्तः'; 'प्रसिद्धः'. ४ 'अपि वादः'.

निर्वृत्तजाम्बूनदपट्टशोभे न्यस्तं ललाटे तिलकं दधानः ।
तेनैव शून्यान्यरिसुन्दरीणां मुखानि स स्मेरमुखश्चकार ॥ ४४ ॥

निर्वृत्तेति ॥ निर्वृत्ता जाम्बूनदपट्टशोभा यस्य तस्मिन्कृतकनकपट्टशोभे ललाटे न्यस्तं तिलकं दधानः स्मेरमुखः सितमुखः स राजा । अरिसुन्दरीणां मुखानि तेनैव तिलकेनैव शून्यानि चकार । अखिलमपि शत्रुवर्गमवधीदिति भावः ॥४४ ॥

शिरीषपुष्पाधिकसौकुमार्यः खेदं स यायादपि भूषणेन ।
नितान्तगुर्वीमपि सोऽनुभावाद्धुरं धरित्र्या बिभरांबभूव ॥ ४५ ॥

शिरीषेति ॥ शिरीषपुष्पाधिकसौकुमार्यः । कोमलाङ्ग इत्यर्थः । अत एव स राजा भूषणेनापि खेदं श्रमं यायाद्गच्छेत् । एवंभूतः स नितान्तगुर्वीमपि धरित्र्या धुरं भुवो भारमनुभावात् सामर्थ्यात् । बिभरांबभूव बभार । 'भीह्रीभृहुवां श्लुवच्च' ( पा. ३।१।३९ ) इति विकल्पादाम्प्रत्ययः ॥ ४५ ॥

न्यस्ताक्षरामक्षरभूमिकायां कार्त्स्न्येन गृह्णाति लिपिं न यावत् ।
सर्वाणि तावच्छ्रुतवृद्धयोगात्फलान्युपायुङ्क्त स दण्डनीतेः ॥ ४६ ॥

न्यस्तेति ॥ अक्षरभूमिकायामक्षरलेखनस्थले न्यस्ताक्षरां रचिताक्षरपङ्क्तिरेखान्यासां लिपिं पञ्चाशद्वर्णात्मिकां कार्त्स्न्येन यावन्न गृह्णाति स सुदर्शनस्तावच्छ्रुतवृद्धयोगाद्विद्यावृद्धसंसर्गात्सर्वाणि दण्डनीतेर्दण्डशास्त्रस्य फलान्युपायुङ्क्तान्वभूत् ॥ प्रागेव बद्धफलस्य तस्य पश्चादभ्यसमानं शास्त्रं सवादार्थमिवाभवदित्यर्थः ॥ ४६ ॥

उरस्यपर्याप्तनिवेशभागा प्रौढीभविष्यन्तमुदीक्षमाणा ।
संजातलज्जेव तमातपत्रच्छायाच्छलेनोपजुगूह लक्ष्मीः ॥ ४७ ॥

---

पाठा०—१ 'निर्वृत्तजाम्बूनदपट्टबन्धे'; 'निर्वृत्तजाम्बूनदपट्टबन्धे'. २ 'शिरीषपुष्पोपम'. ३ 'अथ'. ४ 'च'. ५ 'बिभरांचकार'. ६ 'तावदिक्षतीशः'; 'तावत्फलानि'. ७ 'वृद्धानि'; 'पक्वानि'. ८ 'भागम्'; 'भागात्'. ९ 'उदीक्षमाणम्'; 'उपेक्षमाणा'.

---

टिप्प०—1 अभिषेककाले योग्यः काञ्चनपट्टबन्धो यस्य स सुदर्शनो रिपुस्त्रीणामाननानि तेनैव तिलकेनैव रहितानि कृतवान्; तासां भर्तृहननात्–इति दिनकर० ॥ अरिसुन्दरीणां मुखानि शून्यानि चकार पत्रविशेषरहितान्यकार्षीत्; निर्वासितपतित्वात्–इति वल्लभः ।

2 अक्षराणां भूमिका शिक्षाशाला तस्यां न्यस्तानि खटिकया लिखितान्यक्षराणि यस्यास्तां लिपिं मातृकां यावन्न गृह्णाति–इति दिनकर० ।

उरसीति ॥ उरस्यप यांसो निवेशभागो निवासावकाशो यस्याः सा । अत एव प्रौढीभविष्यन्तं वर्धिष्यमाणमुदीक्षमाणा प्रौढवपुष्मान्भविष्यतीति प्रतीक्षमाणा लक्ष्मीः संजातलज्जेव साक्षादालिङ्गितुं लज्जितेव तं सुदर्शनम्। आतपत्रच्छायाछलेनोपजुगूहालिलिङ्ग । छत्रच्छाया लक्ष्मीरूपेति प्रसिद्धिः । प्रौढाङ्गनायाः प्रौढपुरुषालाभे लज्जा भवतीति ध्वनिः ॥ ४७ ॥

अनश्नुवानेन युगोपमानमबद्धमौर्वीकिणलाञ्छनेन ।

अस्पृष्टखड्गत्सरुणापि चासीद्रक्षावती तस्य भुजेन भूमिः ॥४८॥

अनश्नुवानेनेति ॥ युगोपमानं युगसादृश्यमनश्नुवानेनाप्राप्नुवता । अबद्धं मौर्वीकिणो ज्याघातग्रन्थिरेव लाञ्छनं यस्य तेन । अस्पृष्टः खड्गत्सरुः खड्गमुष्टिर्येन तेन । 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यमरः । एवंविधेनापि च तस्य सुदर्शनस्य भुजेन भूमी रक्षावत्यासीत । शिशोरपि तस्य तेजस्तादृगित्यर्थः ॥ ४८ ॥

न केवलं गच्छति तस्य काले ययुः शरीरावयवा विवृद्धिम् ।

वंश्या गुणाः खल्वपि लोककान्ताः प्रारम्भसूक्ष्माः प्रथिमानमापुः॥४९

नेति ॥ काले गच्छति सति तस्य केवलं शरीरावयवा एव विवृद्धिं प्रसारं न ययुः । किंतु वंशे भवा वंश्या लोककान्ता जनप्रियाः प्रारम्भ आदौ सूक्ष्मास्तस्य गुणाः शौर्यौदार्यादयोऽपि प्रथिमानं पृथुत्वमापुः खलु ॥ ४९ ॥

स पूर्वजन्मान्तरदृष्टपाराः स्मरन्निवाक्लेशकरो गुरूणाम् ।

तिस्रस्त्रिवर्गाधिगमस्य मूलं जग्राह विद्याः प्रकृतीश्च पित्र्याः ॥५०॥

स इति ॥ स सुदर्शनः पूर्वस्मिञ्जन्मान्तरे जन्मविशेषे दृष्टपाराः स्मरन्निव गुरूणामक्लेशकरः सन् । त्रयाणां धर्मार्थकामानां वर्गस्त्रिवर्गः । तस्याधिगमस्य प्राप्तेर्मूलं तिस्रो विद्यास्त्रयी-वार्ता-दण्डनीतीः पित्र्याः पितृसंबन्धिनीः प्रकृतीः प्रजाश्च जग्राह स्वायत्तीचकार । अत्र कौटिल्यः—'धर्माधर्मौ त्रय्यामर्थानर्थौ वार्तायां नयानयौ दण्डनीत्याम्' इति । अत्र दण्डनीतिर्नयद्वारा काममूलमिति द्रष्टव्यम् । आन्वीक्षिक्या अनुपादानं त्रय्यन्तर्भावपक्षमाश्रित्य । यथाह कामन्दकः—

पाठ०—१ 'ईयुः'.

टिप्प०—1 पित्र्याः प्रकृतीश्च जग्राह, [अमात्य-सुहृद्-बलाख्यास्तिस्रः प्रकृतीरावर्जयामास-इति वल्लभ• ।

'त्रयी वार्ता दण्डनीतिस्तिस्रो विद्या मनोर्मताः । त्रय्या एव विभागोऽयं येन सान्वीक्षिकी मता ॥' इति ॥ ५० ॥

व्यूह्य स्थितः किंचिदिवोत्तरार्धमुन्नद्धचूडोऽञ्चितसव्यजानुः ।
आकर्णमाकृष्टसबाणधन्वा व्यरोचतास्त्रे स विनीयमानः ॥ ५१ ॥

व्यूह्येति ॥ सः । अस्त्रे धनुर्विद्यायां विनीयमानः शिक्ष्यमाणोऽत एव, उत्तरार्धं पूर्वकायं किंचिदिव व्यूह्य विस्तार्य स्थितः । उन्नद्धचूड ऊर्ध्वमुत्कृष्य बद्धकेशः । अञ्चितमाकुञ्चितं सव्यं जानु यस्य स । आकर्णमाकृष्टं सबाणं धनुर्धन्व वा येन स तथोक्तः सन् । व्यरोचताशोभत ॥ ५१ ॥

अथ मधु वनितानां नेत्रनिर्वेशनीय-
मनसिजतरुपुष्पं रागबन्धप्रवालम् ।
अकृतकविधि सर्वाङ्गीणमाकल्पजातं
विलसितपदमाद्यं यौवनं स प्रपेदे ॥ ५२ ॥

अथेति ॥ अथ स सुदर्शनो वनितानां नेत्रैर्निर्वेशनीयं भोग्यम् । नेत्रपेयमित्यर्थः । 'निर्वेशो भृतिभोगयोः' इत्यमरः । मधु क्षौद्रम् । रागबन्धोऽनुरागसंतान एव प्रवालः पल्लवो यस्य तत् । मनसिज एव तरुस्तस्य पुष्पं पुष्पभूतम् । अकृतकविधि अकृत्रिमसंपादनम् । सर्वाङ्गं व्याप्नोतीति सर्वाङ्गीणम् । 'तत्सर्वादेः-'(पा. ५।२।७) इत्यादिना खप्रत्ययः । आकल्पजातमाभरणसमूहभूतम् । आद्यं विलसितपदं विलासस्थानं यौवनं प्रपेदे । विशिष्टमधुपुष्पाकल्पजातविलासपदत्वेन यौवनस्य चतुर्धाकरणात्सविशेषणमालारूपकमेतत् ॥ ५२ ॥

प्रतिकृतिरचनाभ्यो [६]दूतिसंदर्शिताभ्यः
समधिकतररूपाः शुद्धसंतानकामैः ।

पाठा०—१ 'व्यूह्यस्थित.'. २ 'उत्तराङ्गम्'; 'उन्नतस.'. ३ 'अस्त्रेषु'. ४ 'नेत्रनिर्वेशपेयम्'. ५ 'रागबन्धि'. ६ 'दूत'.

टिप्प०—1 उन्नद्धचूडोऽर्धबद्धचूड.-इति वल्लभ. ।

2 'नेत्रनिर्वेशपेयम्' इति पाठमाश्रित्य नेत्रयोर्निर्वेशेन विस्तारेण पेयं पातुं योग्यं स्मरवृक्षस्य पुष्पं रागलतायाः पल्लवमकृतकः स्वाभाविको विधिर्निर्माणं यस्य तत्तादृशं सर्वाङ्गव्यापकमाकल्पानां भूषणानां समूहं प्रथमविलसितस्य पदं यौवनं लेभे ।-इति व्याचष्टे दिनकर० ॥ मधु एव पात्रेण पीयते, ततो युवतीनां नेत्रनिर्वेशपेयम्, निर्विश्यतेऽनेनेति निर्वेशं भाजनं, स्त्रीणां चक्षुःपात्रेण पातुं शक्यम्-इति वल्लभः ।

अधिविविदुरमात्यैराहृतास्तस्य यूनः
प्रथमपरिगृहीते श्रीभुवौ राजकन्याः ॥ ५३ ॥

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृतौ
वंशानुक्रमो नामाष्टादशः सर्गः ।

---

**प्रतिकृतीति** ॥ दूतिभिः कन्यापरीक्षणार्थं प्रेषिताभिः **संदर्शिताभ्यो** दूतिसंदर्शिताभ्यः **प्रतिकृतीनां** तूलिकादिलिखितकन्याप्रतिमानां **रचनाभ्यो** विन्यासेभ्यः । 'पञ्चमी विभक्ते' (पा. २।३।४२) इति पञ्चमी । **समधिकतररूपाः ।** चित्रनिर्माणादपि रमणीयनिर्माणा इत्यर्थः । **शुद्धसंतानकामैरमात्यैराहृता** आनीता **राजकन्या यूनस्तस्य** सुदर्शनस्य संबन्धिन्यौ **प्रथमपरिगृहीते श्रीभुवौ** श्रीश्च भूश्च ते **अधिविविदुः**अधिविन्ने चक्रुः । आत्मना सपत्नीभावं चक्रुरित्यर्थः । 'कृतसापत्निकाध्यूढाधिविन्ना' इत्यमरः ॥ ५३ ॥

इति महोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशव्याख्यायां
संजीविनीसमाख्यायामष्टादशः सर्गः ।

---

# एकोनविंशः सर्गः ।

मनसो मम संसारबन्धमुच्छेत्तुमिच्छतः ।
रामचन्द्रपदाम्भोजयुगलं निविडायताम् ॥

अग्निवर्णमभिषिच्य राघवः स्वे पदे तनयमग्नितेजसम् ।
शिश्रिये श्रुतवतामपश्चिमः पश्चिमे वयसि नैमिषं वशी ॥ १ ॥

**अग्निवर्णमिति** ॥ श्रुतवतां श्रुतसंपन्नानामपश्चिमः प्रथमो **वशी** जितेन्द्रियो **राघवः** सुदर्शनः **पश्चिमे वयसि** वार्द्धके **स्वे पदे** स्थानेऽ**ग्नितेजसं तनयमग्निवर्णमभिषिच्य नैमिषं**[1] नैमिषारण्यं **शिश्रिये** श्रितवान् ॥ १ ॥

---

पाठा०—१ 'सुतवताम्'.

टिप्प०—1 'नैमिशम्' इति शान्तपाठान्तरम्; श्रीभागवतप्रथमस्कन्धे श्रीधरीटीकायां–ब्रह्मणा विसृष्टस्य चक्रस्य नेमिः शीर्यते कुण्ठी भवति यत्र तन्नैमिशम्, नेमिशमेव नैमिशम्–इति हेमाद्रिः ।

**तत्र तीर्थसलिलेन दीर्घिकास्तल्पमन्तरितभूमिभिः कुशैः ।**
**सौधवासमुटजेन विस्मृतः संचिकाय फलनिःस्पृहस्तपः ॥ २ ॥**

**तत्रेति** ॥ तत्र नैमिषे **तीर्थसलिलेन दीर्घिका** विहारवापीरन्तरित- **भूमिभिः कुशैस्तल्पं** शय्या**मुटजेन** पर्णशालया **सौधवासं विस्मृतो** विस्मृत- वानसः । कर्तरि क्तः । **फले** स्वर्गादिफले **निःस्पृहस्तपः संचिकाय** सञ्चितवान् ॥ २ ॥

**लब्धपालनविधौ न तत्सुतः खेदमाप गुरुणा हि मेदिनी ।**
**भोक्तुमेव भुजनिर्जितद्विषा न प्रसाधयितुमस्य कल्पिता ॥ ३ ॥**

**लब्धेति** ॥ **तत्सुतः** सुदर्शनपुत्रोऽग्निवर्णो **लब्धपालनविधौ** लब्धस्य राज्यस्य पालनकर्मणि **खेदं नाप** । अक्लेशेनापालयदित्यर्थः । कुतः ? **हि** यस्मात् । **भुजनिर्जितद्विषा गुरुणा** पित्रा **मेदिन्यस्या**ग्निवर्णस्य **भोक्तुमेव कल्पिता, प्रसाधयितुं न** । प्रसाधनं कण्टकशोधनम् । अलङ्कृतिर्ध्वन्यते । तथा च यथालंकृत्य नीता युवतिः केवलमुपभुज्यते तद्वदिति भावः ॥ ३ ॥

**सोऽधिकारमभिकः कुलोचितं काश्चन स्वयमवर्तयत्समाः ।**
**संनिवेश्य सचिवेष्वतःपरं स्त्रीविधेयनवयौवनोऽभवत् ॥ ४ ॥**

**स इति** ॥ **अभिकः** कामुकः । 'अनुकाभिकाभीकः कमिता' (पा. ५।२।७४) इति निपातः । 'कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः' इत्यमरः । **सोऽग्नि- वर्णः कुलोचितमधिकारं** प्रजापालनं **काश्चन समाः** कतिचिद्वत्सरान् **स्वयम- वर्तयद**करोत् । **अतःपरं सचिवेषु संनिवेश्य** निधाय **स्त्रीविधेयं** स्त्र्यधीनं **नवं यौवनं** यस्य **सोऽभवत्** । स्त्र्यासक्तोऽभूदित्यर्थः ॥ ४ ॥

**कामिनीसहचरस्य कामिनस्तस्य वेश्मसु मृदङ्गनादिषु ।**
**ऋद्धिमन्तमधिकर्द्धिरुत्तरः पूर्वमुत्सवमपोहदुत्सवः ॥ ५ ॥**

**कामिनीति** ॥ **कामिनीसहचरस्य** कामिनस्तस्य **मृदङ्गनादिषु** मृदङ्गना- दवत्सु **वेश्मस्वधिकर्द्धिः** पूर्वस्मादधिकसम्भारः **उत्तर** उत्सवः । **ऋद्धिमन्तं** साधनसम्पन्नं **पूर्वमुत्सवमपोहद**पानुदत् । उत्तरोत्तराधिका तस्योत्सवपरम्परा वृत्तेत्यर्थः ॥ ५ ॥

---

**पाठा०–१ 'विस्मरन्'. २ 'अधिपः'. ३ 'तं निवेश्य'.**

---

टिप्प०—1 विस्मृत इति कर्मणि क्त० । यथा प्रभाकरटीकायां–नत्वेवं तुरगारूढः तुरङ्ग विस्मृतो भवान् । 'विस्मरन्' इति वा पाठ – इति दिनकर० ।

2 भोक्तुमेव भूः कल्पिता, न तु साधयितुम । व्यतिरेकेति । लब्धः पालनविधिर्येन तस्मिं- स्तादृशे तत्सुते सति भूः खेदं नाप–इति दिनकर० ।

इन्द्रियार्थपरिशून्यमक्षमः सोढुमेकमपि स क्षणान्तरम् ।
अन्तरेव विहरन्दिवानिशं न व्यपैक्षत समुत्सुकाः प्रजाः ॥ ६ ॥

इन्द्रियेति ॥ इन्द्रियार्थपरिशून्यं शब्दादिविषयरहितमेकमपि क्षणान्तरं क्षणभेदं सोढुमक्षमोऽशक्तः सोऽग्निवर्णो दिवानिशमन्तरेव विहरन् समुत्सुका दर्शनाकाङ्क्षिणीः प्रजा न व्यपैक्षत नापेक्षितवान् ॥ ६ ॥

गौरवाद्यदपि जातु मन्त्रिणां दर्शनं प्रकृतिकाङ्क्षितं ददौ ।
तद्गवाक्षविवरावलम्बिना केवलेन चरणेन कल्पितम् ॥ ७ ॥

गौरवादिति ॥ जातु कदाचिन्मन्त्रिणां गौरवाद्गुरुत्वाद्धेतोः । मन्त्रिवचनानुरोधादित्यर्थः । प्रकृतिभिः प्रजाभिः काङ्क्षितं यदपि दर्शनं ददौ तदपि गवाक्षविवरावलम्बिना केवलेन चरणेन चरणमात्रेण कल्पितं संपादितम्, न तु मुखावलोकनप्रदानेनेत्यर्थः ॥ ७ ॥

तं कृतप्रणतयोऽनुजीविनः कोमलात्मनखरागरूषितम् ।
भेजिरे नवदिवाकरातपस्पृष्टपङ्कजतुलाधिरोहणम् ॥ ८ ॥

तमिति ॥ कोमलेन मृदुलेनात्मनखानां रागेणारुण्येन रूषितं छुरितम् । अत एव नवदिवाकरातपेन स्पृष्टं व्याप्तं यत्पङ्कजं तस्य तुलां साम्यतामधिरोहति प्राप्नोतीति तुलाधिरोहणम् । तं चरणमनुजीविनः कृतप्रणतयः कृतनमस्काराः सन्तो भेजिरे सिषेविरे ॥ ८ ॥

यौवनोन्नतविलासिनीस्तनक्षोभलोलकमलाश्च दीर्घिकाः ।
गूढमोहनगृहास्तदम्बुभिः स व्यगाहत विगाढमन्मथः ॥ ९ ॥

यौवनेति ॥ विगाढमन्मथः प्रौढमदनः सोऽग्निवर्णो यौवनेन हेतुनोन्न-

पाठा०—१ 'अन्तरे च'; 'अन्तरेषु'. २ 'समुत्सवा'. ३ 'केवलांशुनखरागरूषितम्'; 'कोमलांशुनखरागभूषितम्'.

टिप्प०—1 इन्द्रियार्थाः स्रक्-चन्दन-वनितादयः, तद्रहितमेकमपि क्षणान्तरं सोढुमसमर्थः, अत एव दिवानिशमन्तःपुरे विहरन्-इति दिनकर० ।

2 'अन्तर'शब्दो बहिर्योगे उपसंख्याने सर्ववत्, अन्यत्र वृक्षवत् । एतस्मिन्नन्तरे भूप इतिवत्-इति वल्लभः ।

3 बहुवचनात् कर्तरि ल्युट् । यद्वा,—पंकजेन यत्तुलाधिरोहणं तदस्यास्तीति अर्शआदित्वादच्, तादृशस्तम्-इति दिनकर० ।

4 प्रौढो मन्मथो यस्य स नृपो यौवनेनोद्धतमदानां वनितानां स्तनक्षोभेण लोलानि कमलानि यासां ता वापीरगाहत । तासां वापीनामम्बुभिर्गूढं गुप्तं मोहनगृहं कटिभागो यासां ताः कामिनीश्चागाहत-इति दिनकर० ।

तानां विलासिनीस्तनानां क्षोभेणाघातेन लोलानि चञ्चलानि कमलानि यासां ता । तदम्बुभिस्तासां दीर्घिकाणामम्बुभिर्गूढान्यन्तर्हितानि मोहनगृहाणि सुरतभवनानि यासु ताश्च दीर्घिका व्यगाहत । स्त्रीभिः सह दीर्घिकासु विजहारेत्यर्थः ॥ ९ ॥

तत्र सेकहृतलोचनाञ्जनैर्धौतरागपरिपाटलाधरैः ।
अङ्गनास्तमधिकं व्यलोभयन्नर्पितप्रकृतकान्तिभिर्मुखैः ॥ १० ॥

तत्रेति ॥ तत्र दीर्घिकास्वङ्गनाः सेकेन हृतं लोचनाञ्जनं नेत्रकज्जलं येषां ते । रज्यतेऽनेनेति रागो रागद्रव्यं लाक्षादि । रागस्य परिपाटलोऽङ्गगुणः । 'गुणे शुक्लादयः पुंसि' इत्यमरः । धौतो रागपरिपाटलो येषां ते तथोक्ता अधरा येषां ते । निवृत्तसाकमिकरागैरित्यर्थः । अत एवार्पितप्रकृतकान्तिभिः । अभिव्यञ्जितस्वाभाविकरागैरित्यर्थः । एवंभूतैर्मुखैस्तमग्निवर्णमधिकं व्यलोभयन् प्रलोभितवत्यः ॥ १० ॥

घ्राणकान्तमधुगन्धकर्षिणीः पानभूमिरचनाः प्रियासखः ।
अभ्यपद्यत स वासितासखः पुष्पिताः कमलिनीरिव द्विपः ॥ ११ ॥

घ्राणेति ॥ प्रियासखः सोऽग्निवर्णो घ्राणकान्तेन घ्राणतर्पणेन मधुगन्धेन कर्षिणीर्मनोहारिणीः । रच्यन्त इति रचनाः, पानभूमय एव रचनाः, रचिताः पानभूमय इत्यर्थः । वासितासखः करिणीसहचरः । 'वासिता स्त्रीकरिण्योश्च' इत्यमरः । द्विपः पुष्पिताः कमलिनीरिव । अभ्यपद्यताभिगतः ॥ ११ ॥

सातिरेकमदकारणं रहस्तेन दत्तमभिलेषुरङ्गनाः ।
ताभिरप्युपहृतं मुखासवं सोऽपिबद्बकुलतुल्यदोहदः ॥ १२ ॥

---

पाठा०–'लोचनाञ्जनम्'. २ 'व्यलम्भयन्'. ३ 'प्रकृति'. ४ 'वर्षिणी', 'वाहिनी'. ५ 'प्रियावृत'. ६ 'हस्तिनीसख'. ७ 'दोहदम्'.

---

टिप्प०—1 तत्र वापिक्रीडायां जलसेकेन हृतं लोचनाञ्जनं येषां तैस्तथा धौतः क्षालितो योऽसौ रागो रक्तकादित्वेन पाटलवर्णोऽधरो येषां तैस्तथाऽर्पिता दत्ता प्रकृतिकान्तिः स्वाभाविकी शोभा येषां तैर्मुखैस्तं नृपमधिकमन्वरञ्जयन्–इति दिनकर० ।

2 घ्राणेन्द्रियस्य कान्तमभिमतं मधु मद्यं मकरन्दश्च तद्गन्धेन मनोज्ञाः पानभूमेः रचनाः पल्लवास्तरणादीन् स नृपः प्राप । यथा वासिताभिर्हस्तिनीभिर्वलितः करी कुसुमिताः कमलिनीः लभते–इति दिनकर० ।

सातिरेकेति ॥ अङ्गना रहो रहसि सातिरेकस्य सातिशयस्य मदस्य कारणं तेनाग्निवर्णेन दत्तं मुखासवमभिलेपुः । बकुलेन तुल्यदोहदस्तुल्याभिलाषः । 'अथ दोहदम् । इच्छाकाङ्क्षा स्पृहेहा तृड्' इत्यमरः । बकुलद्रुमसाम्नामयार्थित्वात्तुल्याभिलाषत्वम् । सोऽपि ताभिरङ्गनाभिरुपहृतं दत्तं मुखासवमपिबत् ॥ १२ ॥

अङ्कमङ्कपरिवर्तनोचिते तस्य निन्यतुरशून्यतामुभे ।
वल्लकी च हृदयंगमस्वना वल्गुवागपि च वामलोचना ॥ १३ ॥

अङ्कमिति ॥ अङ्कपरिवर्तनोचिते उत्सङ्गविहारार्हे उभे तस्याग्निवर्णस्याङ्कमशून्यतां पूर्णतां निन्यतुः । के उभे ? हृदयंगमस्वना मनोहरध्वनिर्वल्लकी वीणा च । वल्गुवाङ्मधुरभाषिणी वामलोचना कामिन्यपि च हृदयं गच्छतीति हृदयंगमः । खच्प्रकरणे गमेः सुप्युपसंख्यानात्खच्प्रत्ययः । अङ्काधिरोपितयोर्वीणा-वामाक्ष्योर्वाद्य-गीताभ्यामरंस्तेत्यर्थः ॥ १३ ॥

स स्वयं प्रहतपुष्करः कृती लोलमाल्यवलयो हरन्मनः ।
नर्तकीरभिनयातिलङ्घिनीः पार्श्ववर्तिषु गुरुष्वलज्जयत् ॥ १४ ॥

स इति ॥ कृती कुशलः स्वयं प्रहतपुष्करो वादितवाद्यमुखो लोलानि माल्यानि वलयानि च यस्य स तथोक्तः मनो हरन् । नर्तकीनामिति शेषः । सोऽग्निवर्णोऽभिनयातिलङ्घिनीः । अभिनयेषु स्खलन्तीरित्यर्थः । नर्तकीर्विलासिनीः । 'शिल्पिनि ष्वुन्' (पा. ३।१।१४५) इति ष्वुन्प्रत्ययः । 'षिद्गौरादिभ्यश्च' (पा. ४।१।४१) ङीष् । 'नर्तकीलासिके समे' इत्यमरः । गुरुषु नाट्याचार्येषु पार्श्ववर्तिषु समीपस्थेषु सत्स्वेव । अलज्जयत् लज्जामगमयत् ॥ १४ ॥

पाठा०—१ 'स्वनाम्'. २ 'मञ्जुवाक्'. ३ 'अहरत्'. ४ 'अमजयत्'.

टिप्प०—1 रहसि तेन राज्ञा दत्तमत एव सातिरेकोऽधिको मधुगन्धोऽस्यास्तीति तादृशं मुखासवं स्त्रियोऽभिलिलेषुः बकुलेन तुल्यं दोहदं पानेच्छा यस्य स नृपः स्त्रीभिर्दत्तं मुखासवमपिबत् । बकुलस्तु स्त्रीमुखमद्यरूपेण दोहदेन संस्कारेण पुष्पितो भवति–इति दिनकर०।

2 अङ्के यत् परिवर्तनं लुठनं तत्रोचिते तस्य नृपस्याङ्कमशून्यतां नीतवत्यौ । के द्वे इत्याह–मनोज्ञस्वना वीणा, रम्यवाक् कामिनीवक्ष्य–इति दिनकर० ।

3 अभिनयातिलङ्घनेन गुरवोऽस्मान्नृपासक्तचेतसो जानन्तीति पार्श्वा लज्जाऽभूदित्यर्थः–इति दिनकर० ।

चारु नृत्यविगमे[1] च तन्मुखं स्वेदभिन्नतिलकं परिश्रमात् ।
प्रेमदत्तवदनानिलः[2] पिबन्नत्यजीवदमरालकेश्वरौ[3] ॥ १५ ॥

चार्विति ॥ किंच, चारु सुन्दरं नृत्यविगमे लास्यावसाने परिश्रमात्सर्वाङ्गप्रयासात्स्वेदेन भिन्नतिलकं विशीर्णतिलकं तन्मुखं नर्तकीमुखं प्रेम्णा दत्तवदनानिलः प्रवर्तितमुखमारुतः पिबन् । अमराणामलकायाश्चेश्वराविन्द्रकुबेरौ अत्यजीवदतिक्रम्याजीवत् । ततोऽप्युत्कृष्टजीवित आसीदित्यर्थः । इन्द्रादेरपि दुर्लभमीदृशं सौभाग्यमिति भावः ॥ १५ ॥

तस्य सावरणदृष्टसंधयः काम्यवस्तुषु नवेषु सङ्गिनः ।
वल्लभाभिरुपसृत्य चक्रिरे सामिभुक्तविषयाः[4] समागमाः ॥ १६ ॥

तस्येति ॥ उपसृत्यान्यत्र गत्वा नवेषु नूतनेषु काम्यवस्तुषु शब्दादिष्विन्द्रियार्थेषु सङ्गिन आसक्तिमतः तस्य सावरणाः प्रच्छन्ना दृष्टाः प्रकाशाश्च संधयः साधनानि येषु ते समागमाः संगमा वल्लभाभिः प्रेयसीभिः सामिभुक्तविषया अर्धोपभुक्तेन्द्रियार्थाश्चक्रिरे । यथेष्टं भुक्त्वोत्सृज्य निःस्पृहः सन्नस्मत्समीपं नायास्यतीति भावः । अत्र गोनर्दीयः—'संधिर्द्विविधः—सावरणः, प्रकाशश्च । सावरणो भिक्षुक्यादिना प्रकाशः स्वयमुपेत्य केनापि' इति । 'इतः स्वयमुपसृत्य विशेषार्थी तत्र स्थितोऽनुपजापं स्वयं संधेयः' इति वात्स्यायनः । अन्यत्र गतं कथंचित्संधाय पुनरुपगमायार्धोपभोगेनानिवृत्ततृष्णं चक्रुरित्यर्थः ॥ १६ ॥

अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलं च वीक्षितम् ।
मेखलाभिरसकृच्च बन्धनं वञ्चयन्प्रणयिनीरवाप सः ॥ १७ ॥

---

पाठा०—१ 'नृत्तविगमे'. २ 'वदनानिलम्'. ३ 'अन्वजीवत्'; 'सोऽन्वजीवत्'. ४ 'सामिमुक्तविषयाः'.

---

टिप्प०—1 'नृत्तविगमे' इति पाठमाश्रित्य 'भावाश्रयं तु नृत्यं स्यान्नृत्तं तालसमन्वितम्' इति मतापेक्षया चेत्तन्नृत्त चञ्चत्पुटादितालयुक्तत्वात्स्वेदभिन्नतिलकत्वं श्रमाधिक्यं च । अत एव नृत्त सुखातिशयहेतुः—इति हेमाद्रिः । 'वदनानिलम्' इति पाठे मुखविशेषणम्—इति दिनकर० ।

2 अतः राजा सावरणो वेषान्तरेण गुप्तो दृष्टः प्रसिद्धः संधिः सन्धानं संकेतो येषु ते समागमाः स्त्रीभिरुपसृत्य सार्धं भुक्ताः सामिभुक्तास्तादृशा विषया येषां ते तादृशाः कृताः । यद्यमुष्मै सर्वेऽप्यस्माभिः संभोगप्रकाराः प्रदश्यन्ते तर्हि नवीनकाम्यवस्तुषासक्तिमत्त्वात् अस्मान् विहायान्यामयमभिगन्तेति स्त्रीभिरशेषविशेषोपपन्नाः संभोगप्रकारा न दर्शिता इति भाव—इति दिनकर० ।

अङ्गुलीति ॥ सोऽग्निवर्णः प्रणयिनीः प्रेयसीर्वेश्मयन्नन्यत्र गच्छन् । अङ्गुल्यः किसलयानि तेषामग्राणि तैस्तर्जनं भर्त्सनं भ्रूविभङ्गेन भ्रूभेदेन कुटिलं वक्रं वीक्षितं वीक्षणं चासहन्मेखलाभिर्बन्धनं चावाप । अपराधिनो दण्ड्या इति भावः ॥ १७ ॥

तेन दूतिविदितं निषेदुषा पृष्ठतः सुरतवाररात्रिषु ।
शुश्रुवे प्रियजनस्य कातरं विप्रलम्भपरिशङ्किनो वचः ॥ १८ ॥

तेनेति ॥ सुरतस्य वारो वासरः, तस्य रात्रिषु दूतीनां विदितं यथा तथा पृष्ठतः प्रियजनस्य पश्चाद्भागे निषेदुषा तेनाग्निवर्णेन विप्रलम्भपरिशङ्किनो विरहशङ्किनः। प्रियश्चासौ जनश्च प्रियजनः। तस्य कातरं वचः 'प्रियानयनेन मां पाहि' इत्येवमादि दीनवचनं शुश्रुवे ॥ १८ ॥

लौल्यमेत्य गृहिणीपरिग्रहान्नर्तकीष्वसुलभासु तद्वपुः ।
वर्तते स स कथंचिदालिखन्नङ्गुलीक्षरणसन्नवर्तिकः ॥ १९ ॥

लौल्यमिति ॥ गृहिणीपरिग्रहाद्राज्ञीभिः समागमाद्धेतोर्नर्तकीषु वेश्यासु असुलभासु दुर्लभासु सतीषु लौल्यमौत्सुक्यमेत्य प्राप्य । अङ्गुल्योः क्षरणेन स्वेदनेन सन्नवर्तिको विगलितशलाकः सोऽग्निवर्णस्तासां नर्तकीनां वपुस्तद्वपुरालिखन् कथंचिद्वर्तते स्मावर्तत ॥ १९ ॥

प्रेमगर्वितविपक्षमत्सरादायताच्च मदनान्महीक्षितम् ।
निन्युरुत्सवविधिच्छलेन तं देव्य उज्झितरुषः कृतार्थताम् ॥ २० ॥

प्रेमेति ॥ प्रेम्णा स्नेहरसेन प्रियस्यानुरागेण हेतुना गर्विते विपक्षे सपत्नजने मत्सराद्वैरादायतात्प्रवृद्धान्मदनाच्च हेतोर्द्वयो देव्य उज्झितरुषस्त्यक्तरोषाः

पाठा०—१ 'कम्पितम्'. २ 'परिशङ्कितम्'. ३ 'उज्झितत्रपा'.

प्रसक्तं महीक्षितम्। उत्सवविधिच्छलेन महोत्सवकर्मव्याजेन। कृतोऽर्थः प्रयोजनं येन स कृतार्थः, तस्य भावं कृतार्थतां निन्युः। मदनमहोत्सवव्याजानीतेन तेन स्वमनोरथं कारयामासुरित्यर्थः ॥ २० ॥

**प्रातरेत्य परिभोगशोभिना दर्शनेन कृतखण्डनव्यथाः।**
**प्राञ्जलिः प्रणयिनीः प्रसादयन्सोऽदुनोत्प्रणयमन्थरः पुनः ॥२१॥**

प्रातरिति ॥ सोऽग्निवर्णः प्रातरेत्यागत्य परिभोगशोभिना दर्शनेन हेतुना। दशेर्ल्यन्ताल्ल्युट्। कृता खण्डनव्यथा यासां तास्तथोक्ताः खण्डिता इत्यर्थः। तदुक्तम्—'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति। प्रणयिनीः प्राञ्जलिः प्रसादयंस्तथापि प्रणयमन्थरः प्रणयेन नर्तकीगतेन मन्थरोऽलसः। तत्र शिथिलप्रयत्नः सन्नित्यर्थः। पुनरदुनोत् पर्यतापयत् ॥ २१ ॥

**स्वप्नकीर्तितविपक्षमङ्गनाः प्रत्यभैत्सुरवदन्त्य एव तम्।**
**प्रच्छदान्तगलिताश्रुबिन्दुभिः क्रोधभिन्नवलयैर्विवर्तनैः ॥ २२ ॥**

स्वप्नेति ॥ स्वप्ने कीर्तितो विपक्षः सपत्नजनो येन तं। तमग्निवर्णम्। अवदन्त्य एव। त्वया गोत्रस्खलनं कृतमित्यनुपालम्भमाना एव। प्रच्छदस्यास्तरणपटस्यान्ते मध्ये गलिता अश्रुबिन्दवो येषु तैः क्रोधेन भिन्नानि भग्नानि वलयानि येषु तैर्विवर्तनैः पराग्विवर्तनैः प्रत्यभैत्सुः प्रतिचक्रुः। विरेधकुरित्यर्थः ॥ २२ ॥

**क्लृप्तपुष्पशयनाँल्लतागृहानेत्य दूतिकृतमार्गदर्शनः।**
**अन्वभूत्परिजनाङ्गनारतं सोऽवरोधभयवेपथूत्तरम् ॥ २३ ॥**

क्लृप्तेति ॥ सोऽग्निवर्णो दूतिभिः कृतमार्गदर्शनः सन्। क्लृप्तपुष्पशयनाँल्लतागृहानेत्य। अवरोधादन्तःपुरजनाद्भयेन यो वेपथुः कम्पस्तदुत्तरं तत्प्रधानं यथा तथा परिजनाङ्गनारतं दासीरतमन्वभूत्। परिजनश्चासावङ्गना चेति विग्रहः। अत्र ङीबन्तस्यापि 'दूती'शब्दस्य छन्दोभङ्गभयाद्ध्रस्वत्वं कृतम्। 'अपि माषं मषं कुर्याच्छन्दोभङ्गं त्यजेद्गिराम्' इत्युपदेशात् ॥ २३ ॥

**नाम वल्लभजनस्य ते मया प्राप्य भाग्यमपि तस्य काङ्क्ष्यते।**
**लोलुपं ननु मनो ममेति तं गोत्रविस्खलितमूचुरङ्गनाः ॥ २४ ॥**

नामेति ॥ मया ते वल्लभजनस्य प्रियजनस्य नाम प्राप्य तन्नामाह्वानं लब्ध्वा तस्य त्वद्वल्लभजनस्य यद्भाग्यम्। तत्परिहासकारणमिति शेषः। तदपि

पाठा०—१ 'मद्गणमन्थरः'; 'द्विगुणमन्थरः'. २ 'वत'.

काङ्क्षते । ननु बत मम मनो लोलुपं गृध्नु । इत्यनेन प्रकारेण गोत्रे नाम्नि विस्खलितं स्खलितवन्तं तमभिवर्णमूचुः । 'गोत्रं नाम्नि कुलेऽचले' इति यादवः । तद्यामलाभे सति तद्भाग्यमपि काङ्क्षते मनः । अहो तृष्णेति सोल्लुण्ठमुपालम्भन्वेत्यर्थः ॥ २४ ॥

चूर्णबभ्रु लुलितस्रगाकुलं छिन्नमेखलमलक्तकाङ्कितम् ।
उत्थितस्य शयनं विलासिनस्तस्य विभ्रमरतान्यपावृणोत् ॥ २५ ॥

चूर्णेति ॥ चूर्णैर्बभ्रु चूर्णैर्व्यानतकरणैरधोमुखावस्थितायाः स्त्रियाश्चिकुरगलितैः कुङ्कुमादिभिर्बभ्रु पिङ्गलम् । 'बभ्रुः स्यात्पिङ्गले त्रिषु' इत्यमरः । लुलितस्रगाकुलं परिपदाख्यबन्धे स्त्रिया भूमिगतमस्तकतया पतिताभिर्लुलितस्रग्भिराकुलम् । छिन्नमेखलं हरिविक्रमकरणैः स्त्रिया उत्क्षिप्तैकचरणत्वाच्छिन्नमेखलम्, गलितमेखलमित्यर्थः । अलक्तकाङ्कितं धेनुकबन्धे भूतलनिहितकान्ताचरणत्वाल्लाक्षारागरूषितं शयनं कर्तृ । उत्थितस्य । शयनादिति भावः । विलासिनस्तस्याग्निवर्णस्य विभ्रमरतानि लीलारतानि । सुरतबन्धविशेषानित्यर्थः । अपावृणोत् स्फुटीचकार । व्यानतादीनां लक्षणं रतिरहस्ये—'व्यानतं रतमिदं प्रिया यदि स्यादधोमुखचतुष्पदाकृतिः । तत्कटिं समधिरुह्य वल्लभः स्याद्वृषादिपशुसंस्थितस्थितिः । भूगतस्तनभुजास्यमस्तकामुन्नतस्फिचमधोमुखीं प्रियम् । यत्र ति स्वकरकृष्टमेहने वल्लभे परिपदं तदुच्यते । योषिदेकचरणे समुत्थिते जायते हि हरिविक्रमाह्वयः । न्यस्तहस्तयुगला निजे पदे योषिदेति कटिरुद्धवल्लभा । अग्रतो यदि शनैरधोमुखी धेनुकं वृषवदुच्यते प्रिये ॥' इति ॥ २५ ॥

स स्वयं चरणरागमादधे योषितां न च तथा समाहितः ।
लोभ्यमाननयनः श्लथांशुकैर्मेखलागुणपदैर्नितम्बिभिः ॥ २६ ॥

---

पाठा०—१ 'लुलितं स्रगाकुलम्'; 'ललितं स्रगाकुलम्'. २ 'न'; 'तु न'; 'ननु'. ३ 'समाहितम्'.

---

टिप्प०—1 गोत्रविस्खलितं सपत्नीनामग्रहणपरम्-इति वल्लभः । संभोगसमये गोत्रं सपत्नीनाम तत्र स्खलितं तं नृपं स्त्रिय ऊचुः । किमूचुरित्याह—तव प्रियजनस्य नाम प्राप्य मया तस्य भाग्यमप्यभिलष्यते; यथा दैववशात् तन्नाम प्राप्तं तथा भोग्यमपि भवेदिति मम मनोऽभ्युपालिप्सुः । 'बत' इति खेदे; मत्तास्तु धीरा नायिकाः-इति दिनकर-शिशु० ॥ हेमादिरत्र-तथा हि शृङ्गारतिलके-'मध्या वदत्युपालम्भैरधीरा परुषं यथा' इत्याह ।

2 अनेन व्यानतास्यरतमुक्तम्, तथा केशपाशभ्रष्टाभिः-मालाभिराकीर्णमिति मर्कटरतमुक्तम्, छिन्ना मेखला यस्मिन्निति गजरतमुक्तम्, अलक्तकेनाङ्कितं चिह्नमिति धेनुकरतमुक्तम्-इति दिनकर०।

स इति ॥ सोऽग्निवर्णः स्वयमेव योषितां चरणयो रागं लाक्षारसमादधे-ऽर्पयामास। किं च, श्लथांशुकैः। प्रियाङ्गस्पर्शादिति भावः। नितम्बिभिर्नितम्ब-वद्भिर्मेखलागुणपदैर्जघनैः। 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः। लोभ्यमाननयन आकृष्यमाणदृष्टिः सन्। तथा समाहितोऽवहितो नादधे यथासम्यग्रागरचना स्यादिति भावः ॥ २६ ॥

चुम्बने विपरिवर्तिताधरं हस्तरोधि रशनाविघट्टने।
विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतम् ॥ २७ ॥

चुम्बन इति ॥ चुम्बने प्रवृत्ते सति विपरिवर्तिताधरं परिहृतोष्ठम्। रश-नाया विघट्टने ग्रन्थिविस्रंसने प्रसक्ते सति हस्तं रुणद्धि वारयतीति हस्तरोधि। इत्थं सर्वतः सर्वत्र विघ्नितेच्छं प्रतिहतमनोरथमपि वधूनां रतं सुरतं तस्याग्निवर्णस्य मन्मथेन्धनं कामोद्दीपनमभूत् ॥ २७ ॥

दर्पणेषु परिभोगदर्शिनीर्नर्मपूर्वमनुपृष्ठसंस्थितः।
छायया स्मितमनोज्ञया वधूर्ह्रीनिमीलितमुखीश्चकार सः ॥ २८ ॥

दर्पणेष्विति ॥ सोऽग्निवर्णो दर्पणेषु परिभोगदर्शिनीः संभोगचिह्नानि पश्य-न्तीर्वधूर्नर्मपूर्वं परिहासपूर्वम्। अनुपृष्ठं तासां पृष्ठभागे संस्थितः सन्। स्मितेन मनोज्ञया छायया दर्पणगतेन स्वप्रतिबिम्बेन ह्रीनिमीलितमुखीर्लज्जावनतमुखी-श्चकार। तमागतं दृष्ट्वा लज्जिता इत्यर्थः ॥ २८ ॥

कण्ठसक्तमृदुबाहुबन्धनं न्यस्तपादतलमग्रपादयोः।
प्रार्थयन्त शयनोत्थितं प्रियास्तं निशात्ययविसर्गचुम्बनम् ॥ २९ ॥

कण्ठेति ॥ प्रियाः शयनादुत्थितं तमग्निवर्णं कण्ठसक्तं कण्ठार्पितं मृदुबाहु-बन्धनं यस्मिंस्तत्। अग्रपादयोः स्वकीययोर्न्यस्ते पादतले यस्मिंस्तत्। नि-शात्यये विसर्गो विसृज्य गमनं तत्र यच्चुम्बनं तत्प्रार्थयन्त। 'दुह्याच्—'

पाठा०—१ 'चुम्बने च परिवर्तिताधरम्'; 'चुम्बनेषु परिवर्तिताधरम्'; 'चुम्ब-नेषु परिवर्तिताननम्'. २ 'मन्मथोत्तरम्'. ३ 'संश्रयः'. ४ 'दृशः'. ५ 'विरोध'; 'वियोग'.

टिप्प०—1 स नृपः स्त्रीणां चरणयो रागं लाक्षारसं न्यधात्। श्लथान्यंशुकानि यत्र तैर्नि-तम्बिभिर्मेखलासूत्राणां पदैः स्थानैर्लोभ्यमाने आकृष्यमाणे नेत्रे यस्य सोऽत एव लाक्षारसक्षेपे तथा सावधानो बभूव-इति दिनकर०।

2 सर्वतो विघ्नितोदयि तस्येच्छा यत्र तत्तादृशमपि मुग्धारतं तस्य राज्ञो मन्मथस्येन्धनमु-द्दीपनमभूत्-इति दिनकर०।

इत्यादिना द्विकर्मकत्वम् । अत्र गोनर्दीयः—'रतावसाने यदि चुम्बनादि प्रयुज्य यायान्मदनोऽस्य वासः' इति ॥ २९ ॥

प्रेक्ष्य दर्पणतलस्थमात्मनो राजवेषमतिशक्रशोभिनम् ।
पिप्रिये न स तथा यथा युवा व्यक्तलक्ष्म परिभोगमण्डनम् ॥३०॥

प्रेक्ष्येति ॥ युवा सोऽग्निवर्णोऽतिशक्रं यथा तथा शोभमानमतिशक्रशोभिनं दर्पणतलस्थं दर्पणसंक्रान्तम् । आत्मनो राजवेषं प्रेक्ष्य तथा न पिप्रिये न तुतोष यथा व्यक्तलक्ष्म प्रस्फुटचिह्नं परिभोगमण्डनं प्रेक्ष्य पिप्रिये ॥ ३० ॥

मित्रकृत्यमपदिश्य पार्श्वतः प्रस्थितं तमनवस्थितं प्रियाः ।
विद्म हे शठ ! पलायनच्छलान्यञ्जसेति रुरुधुः कचग्रहैः ॥ ३१॥

मित्रेति ॥ मित्रकृत्यं सुहृत्कार्यमपदिश्य व्याजीकृत्य पार्श्वतः प्रस्थितमन्यतो गन्तुमुद्युक्तमनवस्थितमवस्थातुमक्षमं तमग्निवर्णं प्रियाः, हे शठ हे गूढविप्रियकारिन् । 'गूढविप्रियकृच्छठः' (२।७) इति दशरूपके । तव पलायनस्य छलान्यञ्जसा तत्त्वतः । 'तत्त्वे त्वद्धाञ्जसा द्वयम्' इत्यमरः । विद्म जानीमः । 'विदो लटो वा' (पा. ३।४।८३) इति वैकल्पिको मादेशः । इति उक्त्वेति शेषः । कचग्रहैः केशाकर्षणै रुरुधुः । अत्र गोनर्दीयः—'ऋतुस्नाताभिगमने मित्रकार्ये तथापदि । शिष्येतेषु प्रियतमः क्षन्तव्यो वारगम्यया ।' इति । विरक्तलक्षणप्रस्तावे वात्स्यायनः—'मित्रकृत्यं चापदिश्यान्यत्र शेते' इति ॥ ३१ ॥

तस्य निर्दयरतिश्रमालसाः कण्ठसूत्रमपदिश्य योषितः ।
अध्यशेरत बृहद्भुजान्तरं पीवरस्तनविलुप्तचन्दनम् ॥ ३२ ॥

तस्येति ॥ निर्दयरतिश्रमेणालसा निश्चेष्टा योषितः कण्ठसूत्रमालिङ्गनविशेषमपदिश्य व्याजीकृत्य पीवरस्तनाभ्यां विलुप्तचन्दनं प्रमृष्टाङ्गरागं तस्याग्निवर्णस्य बृहद्भुजान्तरमध्यशेरत वक्षःस्थले शेरते स्म । कण्ठसूत्रलक्षणं तु —'यत्कुर्वते वक्षसि वल्लभस्य स्तनाभिघातं निबिडोपगूहम् । परिश्रमार्तं शनकैर्विदग्धा-

पाठा०—१ 'उपदिश्य.' २ 'पार्श्वगम्'. ३ 'विद्मते'. ४ 'निर्दयरतश्रमालसाः'. ५ 'अपविध्य'. ६ 'कुङ्कुमम्'.

टिप्प०—१ अथ ते मित्रकार्यमुद्दिश्य व्याजीकृत्य समीपात्प्रस्थितमनवस्थितं चञ्चलं तं भूपं प्रियो भो शठ गूढविप्रियकारिन् ! ते पलायनच्छलान्यञ्जसा परमार्थतो विद्म जानीम इति केशग्रहै रुरुधुः । उक्तं च—'ऋतुस्नाताभिगमने मित्रकार्ये तथापदि । शिष्येतेषु नियतमः क्षन्तव्यो वारगम्यया—' इति दिनकर० ।

स्तत्कण्ठसूत्रं प्रवदन्ति सन्तः'। इदमेव रतिरहस्ये स्तनालिङ्गनमित्युक्तम्। तथा हि—
'उरसि कमितुरुच्चैरादिशन्ती वराङ्गी स्तनयुगमुपधत्ते यत्स्तनालिङ्गनं तत्' इति ॥३२॥

संगमाय निशि गूढचारिणं चारदूतिकथितं पुरोगताः।
वञ्चयिष्यसि कुतस्तमोवृतः कामुकेति चकृषुस्तमङ्गनाः ॥ ३३ ॥

संगमायेति ॥ संगमाय सुरतार्थं निशि गूढमज्ञातं चरतीष्टगृहं प्रति गच्छतीति गूढचारी। तं चारदूतिकथितम्। चरन्तीति चारा गूढचारिण्यः। 'ज्वलितिकसन्तेभ्यो णः' (पा. ३।१।१४०) इति णप्रत्ययः। चाराश्च ता दूत्यश्च चारदूतयः। ताभिः कथितं निवेदितं तमग्निवर्णम्। अङ्गनाः पुरोऽग्रे गताः। अवरुद्धमार्गाः सत्य इत्यर्थः। हे कामुक! तमसा वृतो गूढः सन् कुतो वञ्चयिष्यसीति। उपालभ्येति शेषः। चकृषुः। स्ववासं निन्युरित्यर्थः ॥ ३३ ॥

योषितामुडुपतेरिवार्चिषां स्पर्शनिर्वृतिमसाववाप्नुवन्।
आरुरोह कुमुदाकरोपमां रात्रिजागरपरो दिवाशयः ॥ ३४ ॥

योषितामिति ॥ उडुपतेरिन्दोरर्चिषां भासामिव। 'ज्वाला भासो न पुंस्यर्चिः' इत्यमरः। योषितां स्पर्शनिर्वृतिं स्पर्शसुखमवाप्नुवन्। किंच, रात्रिषु जागरपरः। दिवा दिवसेषु शेते स्वपितीति दिवाशयः। 'अधिकरणे शेतेः' (पा. ३।२।१५) इत्यच्प्रत्ययः। असावग्निवर्णः कुमुदाकरस्योपमां साम्यम्। आरुरोह प्राप ॥ ३४ ॥

वेणुना दशनपीडिताधरा वीणया नखपदाङ्कितोरवः।
शिल्पकार्य उभयेन वेजितास्तं विजिह्मनयना व्यलोभयन् ॥ ३५ ॥

वेणुनेति ॥ दशनैः पीडिताधरा दष्टोष्ठाः। नखपदैर्नखक्षतैरङ्कितोरवश्चिह्नितोरुसक्थाः। व्रणिताधरोरुत्वादक्षमा इत्यर्थः। तथापि वेणुना वीणया चेत्युभ-

पाठा०—१ 'पुरोगमाः'. २ 'न नः'. ३ 'स्पर्शनिर्वृतसुखानि'. ४ 'अनाप्नुवन्'. ५ 'नखपदाङ्कितोरसः'. ६ 'शिल्पिकार्यैः'; 'शिल्पिकार्यम्'.

टिप्प०—1 यद्वा,-कण्ठसूत्रं हारादि दूरीकृत्य-इति दिनकर०।

2 सोऽपीन्दुकरस्पर्शाद्रात्रौ जागर्ति, दिने शेते-इति दिनकर०।

3 दशनैस्ताडिताः खण्डिता अधरा यासां तादृश्यो वेणुना वेजिता नखक्षतैरङ्कितावूरू यासां ता नखपदाङ्कितोरवस्तु वीणया चेत्युभयेन कृतोद्वेगाः शिल्पं वेणुवादनरूपं कुर्वन्तीः।...... अधरोरुसंसर्गमन्तरेण वेणुवीणावादनं न घटते, ते चानेन दन्तनखक्षता अतस्तद्वादने प्राप्तदुःखाः स्त्रियो वक्रनेत्रैरेनमालोकितवत्येति भावः-इति दिनकर०।

**येन**। अधरोष्ठपीडाकरेणेत्यर्थः। **वेजिताः** पीडिताः शिल्पं वेणुवीणावाद्यादिकं कुर्वन्तीति **शिल्पकार्यो** गायिकाः। 'कर्मण्यण्' (पा. ३।२।१) इत्यण्। 'टिड्ढाणञ्–' (पा. ४।१।१५) इत्यादिना ङीप्। **तं विजिह्मनयनाः** कुटिलदृष्टयः सत्यः। स्वं चेष्टितं जानन्नपि वृथा नः पीडयतीति साभिप्रायं पश्यन्त्य इत्यर्थः। **व्यलोभयन्**। तथाविधालोकनमपि तस्याकर्षकमेवाभूदिति भावः॥ ३५॥

**अङ्गसत्त्ववचनाश्रयं मिथः स्त्रीषु नृत्यमुपधाय दर्शयन्।**
**स प्रयोगनिपुणैः प्रयोक्तृभिः संजघर्ष सह मित्रसंनिधौ॥ ३६॥**

**अङ्गेति**॥ अङ्गं हस्तादि। सत्त्वमन्तःकरणम्। वचनं गेयं चाश्रयः कारणं यस्य **तदङ्गसत्त्ववचनाश्रयम्**। आङ्गिकसात्त्विकवाचिकरूपेण त्रिविधमित्यर्थः। यथाह भरतः—'सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः' इति। **नृत्यम**भिनयं **मिथो** रहसि **स्त्रीषु** नर्तकीषु**पधाय** निधाय **दर्शयन्**। **स मित्रसंनिधौ** सहचरसमक्षं **प्रयोगे**ऽभिनये **निपुणैः** कृतिभिः **प्रयोक्तृ**भिरभिनयार्थप्रकाशकैर्नाट्याचार्यैः **सह संजघर्ष** संघर्षं कृतवान्। संघर्षः पराभिभवेच्छा॥ ३६॥

इतः प्रभृति तस्य कृत्रिमाद्रिषु तत्तदृतूचितविहारप्रकारमाह—

**अंसलम्बिकुटजार्जुनस्रजस्तस्य नीपरजसाङ्गरागिणः।**
**प्रावृषि प्रमदबर्हिणेष्वभूत्कृत्रिमाद्रिषु विहारविभ्रमः॥ ३७॥**

**अंसेति**॥ प्रावृष्यंसलम्बिन्यः **कुटजानामर्जुनानां** ककुभानां च **स्रजो** यस्य तस्य। **नीपानां** कदम्बकुसुमानां **रजसाङ्गरागिणो**ऽङ्गरागवतस्तस्यामि-

पाठा०—१ 'रचनाश्रयम्'. २ 'उपधार्य दर्शयन्'; 'उपदर्शयन्नृपः'. ३ 'निपुणः'. ४ 'प्रियोक्तिभिः'. ५ 'संजहर्ष'. ६ 'अंसलग्न'. ७ 'संभ्रमः'.

टिप्प०—1 मिथो रहस्संगाश्रयं हस्तविन्यासादिसत्त्वं मनस्तदाश्रयं स्वेदरोमाञ्चादिवचनाश्रयं गीतादीन्येवंरूपं स्त्रीषूपधार्याभिनीय...प्रयोगकुशलैर्भरताचार्यैः सह संजघर्ष स्पर्धां चक्रे–इति दिनकर०।

2 नृत्यस्य गात्रविक्षेपात्मकत्वादङ्गाश्रयतापि घटते। 'अव्यक्तरूपं तु सत्त्वं हि ज्ञेयं भावरसात्मकम्। आलोकितसमसाचिप्रलोकितविलोकिते। उल्लोकिते वाग्वृत्ते तथा चैवावलोकिते॥ अष्टौ दर्शनया भेदा नृत्यवाद्यसमाश्रयाः'॥ इत्युक्तत्वात्सात्त्विकान्यवलोकितानीत्यन्ये–इति शिशु०।

3 अथ कविः षड्ऋतुविहारवर्णनं वर्णयत्यग्रिमश्लोकैः।

वर्णस्य प्रमदद्बर्हिणेषून्मत्तमयूरेषु कृत्रिमाद्रिषु विहार एव विश्रमो विलासोऽभूदभवत् ॥ ३७ ॥

विग्रहाच्च शयने पराङ्मुखीर्नानुनेतुमबलाः स तत्वरे ।
आचकाङ्क्ष घनशब्दविक्लवास्ता विवृत्य विशतीर्भुजान्तरम् ॥ ३८ ॥

विग्रहादिति ॥ 'प्रावृषि' इत्यनुषज्यते । सोऽग्निवर्णो विग्रहात्प्रणयकलहाच्छयने पराङ्मुखीरबला अनुनेतुं न तत्वरे न त्वरितवान् । किंतु घनशब्देन घनगर्जितेन विक्लवाश्चकिताः, अत एव विवृत्य स्वयमेवाभिमुखीभूय भुजान्तरं विशतीः प्रविशन्तीः । 'आच्छीनद्योर्नुम्' (पा. ७।१।८०) इति नुम्विकल्पः । ता अबला आचकाङ्क्ष । स्वयंग्रहादेव सांमुख्यमैच्छदित्यर्थः ॥ ३८ ॥

कार्तिकीषु सवितानहर्म्यभाग्यामिनीषु ललिताङ्गनासखः ।
अन्वभुङ्क्त सुरतश्रमापहां मेघमुक्तविशदां स चन्द्रिकाम् ॥ ३९ ॥

कार्तिकीष्विति ॥ कार्तिकस्येमाः कार्तिक्यः । 'तस्येदम्' (पा. ४।३।१२०) इत्यण् । तासु यामिनीषु निशासु । शरद्रात्रिष्वित्यर्थः । सवितानान्युपरिवस्त्रावृतानि हर्म्याणि भजतीति सवितानहर्म्यभाक् । भजेर्ण्विप्रत्ययः । हिमवारणार्थं सवितानमुक्तम् । ललिताङ्गनासखः सोऽग्निवर्णः सुरतश्रमापहां मेघमुक्ता च सा विशदा च ताम् । बहुलग्रहणात्सविशेषणसमासः । चन्द्रिकामन्वभुङ्क्त ॥ ३९ ॥

सैकतं च सरयूं विवृण्वतीं श्रोणिबिम्बमिव हंसमेखलम् ।
स्वप्रियाविलसितानुकारिणीं सौधजालविवरैर्व्यलोकयत् ॥ ४० ॥

सैकतमिति ॥ किंच, हंसा एव मेखला यस्य तत्सैकतं पुलिनं श्रोणिबिम्बमिव विवृण्वतीम् । अत एव स्वप्रियाविलसितान्यनुकरोतीति तद्विधां सरयूम् । सौधस्य जालानि गवाक्षाः । त एव विवराणि । तैर्व्यलोकयत् ॥ ४० ॥

---

पाठ०—१ 'क्लमापहाम्'; 'क्लमापहाः'. २ 'विशदाः'. ३ 'चन्द्रिकाः'.

---

टिप्प०—1 'देशकालबलात्कोपः प्रायः सर्वोऽपि योषिताम् । जायते सुखसाध्योऽपि कृच्छ्रसाध्यो हि रागिणः'—इत्याह शिशु० ।

2 'क्लमापहान्' इति पाठमादृत्य 'क्लमापहान्' इत्यस्य साधुत्वं 'सगिरं यदि जीवितापहा' (रघु. ८।४६) इत्यत्र प्रत्यपादि—इति व्याचख्युर्दिनकरमिश्राः ॥ शरत्कालीनं वर्णनमेतत् ।

3 श्रोणिबिम्बमेव सैकतं प्रकटयति हंसा एव मेखला मेखला यस्यास्तां स्वस्य प्रियाणां विलसितमनुकरोतीति तादृशीं सरयूं स नृपो गवाक्षरन्ध्रैरद्राक्षीत्, स्त्रियो श्रोणिबिम्बादिकं भर्त्रे प्रकटयन्तीति—दिनकर० ।

मर्मरैरगुरुधूपगन्धिभिर्व्यक्तहेमरशनैस्तमेकतः ।
जह्रुराग्रथनमोक्षलोलुपं हैमनैर्निवसनैः सुमध्यमाः ॥ ४१ ॥

मर्मरैरिति ॥ मर्मरैः संस्कारविशेषान्मर्मरशब्दायमानैः । 'अथ मर्मरः । स्वनिते वस्त्रपर्णानाम्' इत्यमरः । अगुरुधूपगन्धिभिर्व्यक्तहेमरशनैर्लौल्याल्लक्ष्यमाणकनकमेखलागुणैर्हैमनैर्हेमन्ते भवैः । 'सर्वत्राण्च तलोपश्च' (पा. ४।३।२२) इति 'हेमन्त'शब्दादण्प्रत्ययस्तलोपश्च । निवसनैरंशुकैः सुमध्यमाः स्त्रियः एकतो नितम्बैकदेश आग्रथनमोक्षयोर्नीवीबन्ध-विस्रंसनयोर्लोलुपमासक्तं तं जह्रुराचकृषुः ॥ ४१ ॥

अर्पितस्तिमितदीपदृष्टयो गर्भवेश्मसु निवातकुक्षिषु ।
तस्य सर्वसुरतान्तरक्षमाः साक्षितां शिशिररात्रयो ययुः ॥४२॥

अर्पितेति ॥ निवाता वातरहिताः कुक्षयोऽभ्यन्तराणि येषां तेषु गर्भवेश्मसु गृहान्तर्गृहेष्वर्पिता दत्ताः स्तिमिता निवातत्वान्निश्चला दीपा एव दृष्टयो यासां ताः । अत्रानिमिषदृष्टित्वं च गम्यते । सर्वसुरतान्तरक्षमास्तापस्वेदापनोदनत्वाद्दीर्घकालत्वाच्च सर्वेषां सुरतान्तराणां सुरतभेदानां क्षमाः क्रियार्हाः शिशिररात्रयस्तस्याग्निवर्णस्य साक्षितां ययुः । विविक्तकालदेशत्वाद्यथेच्छं विजहारेत्यर्थः ॥ ४२ ॥

दक्षिणेन पवनेन संभृतं प्रेक्ष्य चूतकुसुमं सपल्लवम् ।
अन्वनैपुरवधूतविग्रहास्तं दुरुत्सहवियोगमङ्गनाः ॥ ४३ ॥

दक्षिणेनेति ॥ अङ्गना दक्षिणेन पवनेन मलयानिलेन संभृतं जनितं सप-

---

पाठा०—१ 'त्यक्त'. २ 'साक्षताम्'; 'प्रेक्ष्यताम्'. ३ 'अवकीर्ण'.

---

टिप्प०—1 विरम्भत्वाच्च मर्मरैः सशब्दैरगुरुधूपधूपितैरेकतो नितम्बबिम्बैकदेशेऽंशुकशैथिल्याद् व्यक्ता प्रकटी भूता स्वर्णकाञ्ची येभ्यस्तैर्हैमनैः हिमर्तुयोग्यैर्मोञ्चिवंवेरुद्ग्रथनेंऽशुकमोक्षे चपलं तं नृपं जह्रुः । ईदृशैर्वसनैस्तस्य चेतो जह्रुरित्यर्थः—इति दिनकर० ॥ इदं हेमन्तकालीनं वर्णनम् ।

2 'ग्रन्थ-ग्रन्थ संदर्भे', अत्र 'आग्रथनम्' इति क्षीरस्वामिना; अमरकोषे च 'ग्रन्थनं गुम्फ-सन्दर्भे मथनं च' इति हेमाद्रिः ।

3 सुरतान्तराणि पुरुषायितादीनि—इति दिनकर० । इदं तु शिशिरर्तुवर्णनम् ।

4 शिशिरे रात्रयो दीर्घाः, अतः सर्वरतेषु—इति हेमाद्रिः ।

5 वसन्तर्तुवर्णनमिदम् ।

ल्लवं चूतकुसुमं प्रेक्ष्य । अवधूतविग्रहास्त्यक्तविरोधाः सत्यो दुरुत्सहवियोगं दुःसहविरहं तमन्वनैषुः । तद्विरहमसहमानाः स्वयमेवानुनीतवत्य इत्यर्थः ॥ ४३ ॥

ताः स्वमङ्कमधिरोप्य दोलया प्रेङ्खयन्परिजनापविद्धया ।
मुक्तरज्जु निबिडं भयच्छलात्कण्ठबन्धनमवाप बाहुभिः ॥४४॥

ता इति ॥ ता अङ्गनाः स्वमङ्कं स्वमिथमुत्सङ्गमधिरोप्य परिजनेनापविद्धया सम्प्रेषितया दोलया मुक्तरज्जु त्यक्तदोलासूत्रं यथा तथा प्रेङ्खयंश्चालयन् भयाच्छलात्पतनभयमिषाद्बाहुभिरङ्गनाभुजैर्निबिडं कण्ठबन्धनमवाप प्राप। स्वयंग्रहाश्लेषसुखमन्वभूदित्यर्थः ॥ ४४ ॥

तं पयोधरनिषिक्तचन्दनैर्मौक्तिकग्रथितचारुभूषणैः ।
ग्रीष्मवेषविधिभिः सिषेविरे श्रोणिलम्बिमणिमेखलैः प्रियाः ॥४५॥

तमिति ॥ प्रियाः पयोधरेषु स्तनेषु निषिक्तमुक्षितं चन्दनं येषु तैः। मौक्तिकैर्ग्रथितानि प्रोतानि चारुभूषणानि येषु तैः। मुक्ताप्रायाभरणैरित्यर्थः। श्रोणिलम्बिन्यो मणिमेखला मरकतादिमणियुक्तकटिसूत्राणि येषु तादृशैर्ग्रीष्मवेषविधिभिरुष्णकालोचितनेपथ्यविधानैः। शीतलोपायैरित्यर्थः। तमग्निवर्णं सिषेविरे ॥ ४५ ॥

यत्स लग्नसहकारमासवं रक्तपाटलसमागमं पपौ ।
तेन तस्य मधुनिर्गमात्कृशश्चित्तयोनिरभवत्पुनर्नवः ॥ ४६ ॥

यदिति ॥ सोऽग्निवर्णो लग्नः सहकारश्चूतपल्लवो यस्मिंस्तं रक्तपाटलस्य पाटलकुसुमस्य समागमो यस्य तमासवं मद्यं पपौ । इति यत्तेनासवपानेन मधुनिर्गमाद्वसन्तापगमात् कृशो मन्दवीर्यस्तस्य चित्तयोनिः कामः पुनर्नवः प्रबलोऽभवत् ॥ ४६ ॥

एवमिन्द्रियसुखानि निर्विशन्नन्यकार्यविमुखः स पार्थिवः ।
आत्मलक्षणनिवेदितानृतूनत्यवाहयदनङ्गवाहितः ॥ ४७ ॥

पाठा०—१ 'काश्चिदङ्क'. २ 'प्रेषयन्'. ३ 'प्रवृत्तया'; 'प्रबद्धया'. ४ 'मणिमेखलाः'. ५ 'भग्न'. ६ 'मोहितः'.

टिप्प०—1 ताः पतिष्यामीति छलेन दोलारज्जुं त्यक्त्वा नृपमाश्लिक्षन्नित्यर्थः—इति दिनकर०
2 रक्तपाटलेन सहितमासवं यतो हेतोः स नृपः पपौ तेन हेतुना मधोर्वसन्तस्य निर्गमादपगमात्क्षीणः सरस्वस्य राज्ञः पुनर्नवोऽभूत्—इति दिनकर० ।

एवमिति ॥ एवमनङ्गवाहितः कामप्रेरितोऽन्यकार्यविमुखः स पार्थिव इन्द्रियाणां सुखानि सुखकराणि शब्दादीनि निर्विशन्ननुभवन्नात्मनो लक्षणैः कुटजस्रग्धारणादिचिह्नैर्निवेदितान् । अयमृतुरिदानीं वर्तत इति ज्ञापितान् । ऋतून्वर्षादीन् । अत्यवाहयदगमयत् ॥ ४७ ॥

तं प्रमत्तमपि न प्रभावतः शेकुराक्रमितुमन्यपार्थिवाः ।
आमयस्तु रतिरागसंभवो दक्षशाप इव चन्द्रमक्षिणोत् ॥ ४८ ॥

तमिति ॥ प्रमत्तं व्यसनासक्तमपि तं नृपं प्रभावतोऽन्यपार्थिवा आक्रमितुमभिभवितुं न शेकुर्न शक्ताः । रतिरागसंभव आमयो व्याधिस्तु । क्षयरोग इत्यर्थः । दक्षस्य दक्षप्रजापतेः शापश्चन्द्रमिव । अक्षिणोदकर्शयत् । शापोऽपि रतिरागसंभव इति । अत्र दक्षः किलान्याः स्वकन्या उपेक्ष्य रोहिण्यामेव रममाणं राजानं सोमं शशाप । स शापश्चाद्यापि क्षयरूपेण तं क्षिणोतीत्युपाख्यायते ॥ ४८ ॥

दृष्टदोषमपि तन्न सोऽत्यजत्सङ्गवस्तु भिषजामनाश्रवः ।
स्वादुभिस्तु विषयैर्हृतस्ततो दुःखमिन्द्रियगणो निवार्यते ॥ ४९ ॥

दृष्टेति ॥ भिषजां वैद्यानामनाश्रवो वचसि न स्थितः । 'वचने स्थित आश्रवः' इत्यमरः । अविधेय इत्यर्थः । स दृष्टदोषमपि । रोगजननादिति शेषः । तत्सङ्गस्य वस्तु सङ्गवस्तु स्त्रीमद्यादिकं सङ्गजनकं वस्तु नात्यजत् । तथा हि—

पाठा०—१ 'च'. 'अनाश्रयाः'; 'अनाश्रयम्'; 'अनास्पदम्'. ३ 'सः'; 'हि'. ४ 'हि वार्यते'.

टिप्प०—1 अनेन प्रकारेणेन्द्रियसुखानि निवेदितानृतूनतिवाहितवान्-इति दिनकर० ।

2 आत्मनः स्वस्य लक्षणेन कुसुमादिना निवेदितान् ज्ञातानृतूनलङ्घयदतिक्रामन्-इति हेमाद्रिः ।

3 प्रमादयुक्तमपि तं नृपं प्रभावादाक्रमितुं न समर्थाः, सुरते योऽसौ रागोऽभिलाषस्तदुत्पन्न आमयो रोगस्तु तं क्षीणं चकार । यथा सुतापरित्यागादुत्थस्य दक्षस्य शापश्चन्द्रं क्षिणोति स-इति दिनकर० ।

4 अत्र तुल्ययोगितालंकारः । 'नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ।' (१०।१०४) इति काव्यप्रकाशे-इति हेमाद्रिः ।

5 वैद्यानामनास्पदमस्वाधीनः स नृपो दृष्टे रोगः क्षयरोगरूपो यत्र तं मद्यादिसङ्गं न तत्याज । हि यतः स्वादुभिर्विषयै रूपादिभिः परिहृत इन्द्रियगणस्ततो विषयेभ्यः क्लेशेन निवर्त्यते-इति दिनकर० ।

**इन्द्रियगणः** स्वादुभिर्विषयैर्हृतस्तु हृतश्चेत्ततस्तेभ्यो विषयेभ्यो **दुःखं कृच्छ्रेण निवार्यते**। यदि वार्येतेति शेषः। दुस्त्यजाः खलु विषया इत्यर्थः ॥ ४९ ॥

**तस्य पाण्डुवदनाल्पभूषणा सावलम्बगमना मृदुस्वना।**
**राजयक्ष्मपरिहानिराययौ कामयानसमवस्थया तुलाम् ॥ ५० ॥**

**तस्येति** ॥ **तस्य** राज्ञः **पाण्डुवदना** । **अल्पभूषणा** परिमिताभरणा। सावलम्बं दासादिहस्तावलम्बसहितं गमनं यस्याः सा **सावलम्बगमना** । **मृदुस्वना** हीनस्वरा। राज्ञः सोमस्य यक्ष्मा **राजयक्ष्मा** क्षयरोगः। तेन या **परिहानिः** क्षीणावस्था सा। कामयते विषयानिच्छति **कामयानः** कामयमानः। कमेर्णिङन्ताच्छानच्। 'अनित्यमागमशासनम्' इति मुमागमाभावः। एतदेवाभिप्रेत्योक्तं वामनेनापि (का. सू. ५।२।८३) 'कामयानशब्दः सिद्धोऽनादिश्च' इति। तस्य **समवस्थया** कामुकावस्थया **तुलां** साम्य**माययौ** प्राप । कालकृतो विशेषोऽवस्था। 'विशेषः कालिकोऽवस्था' इत्यमरः ॥ ५० ॥

**व्योम पश्चिमकलास्थितेन्दु वा पङ्कशेषमिव घर्मपल्वलम्।**
**राज्ञि तत्कुलमभूत्क्षयातुरे वामनार्चिरिव दीपभाजनम् ॥ ५१ ॥**

**व्योमेति** ॥ **राज्ञि क्षयातुरे** सति **तत्कुलं** रघुकुलं **पश्चिमकलायां स्थित इन्दु**र्यस्मिंस्तत्कलावशिष्टेन्दु **व्योम वा** व्योमेव। 'वा'शब्द इवार्थे। यथाह दण्डी—'इववद्वायथाशब्दौ' इति। **पङ्कशेषं घर्मपल्वलमिव वामनार्चि**रल्पशिखं **दीपभाजनं** दीपपात्रमिवा**भूत्** ॥ ५१ ॥

**बाढमेष दिवसेषु पार्थिवः कर्म साधयति पुत्रजन्मने।**
**इत्यदर्शितरुजोऽस्य मन्त्रिणः शश्वदूचुरघशङ्किनीः प्रजाः ॥५२॥**

**बाढमिति** ॥ **बाढं** सत्यमेव **पार्थिवो दिवसेषु पुत्रजन्मने** पुत्रोदयार्थं

पाठा०—१ 'मृदुस्वनी'. २ 'यक्ष्मणाल्पपरिहानिः'; 'यक्ष्मणापि परिहानिः'. ३ 'स्थितेन्दुवत्'; 'स्थितेन्दुमत्'. ४ 'गूढम्'. ५ 'एषु'. ६ 'पुत्रसाधने'.

टिप्प०—1 पाण्डु वक्त्रं यत्र, अल्पं भूषणमसामर्थ्याद्यत्र सा तथा सावलम्बं यष्ट्यादियुक्तं गमनं यत्र सा तथा मृदुः स्वनो यत्र सा तादृशी यक्ष्मणा क्षयरोगेण कृता तस्य राज्ञो हानिः क्षीणता कामयानस्य समवस्थया तुलां साम्यं भेजे—इति दिनकर० ।

2 'गूढम्' इति पाठमादृत्य एतेषु नृपः सन्तानार्थं कर्म पुत्रेष्टिं कुरुत इत्युक्त्वाऽदर्शिता रुग् व्याधिर्यैस्तस्य मन्त्रिणो मृत इत्यघ पापं शसंतीति तादृशीः प्रजा लोकानूचुः—इति दिनकर० ।

कर्म जपादिकं साधयति । इत्येवमदर्शितरुजो निगूहितरोगाः सन्तोऽस्य राज्ञो मन्त्रिणोऽघशङ्किनीर्व्यसनशङ्किनीः प्रजाः शश्वदूचुः ॥ ५२ ॥

स त्वनेकवनितासखोऽपि सन्पावनीमनवलोक्य संततिम् ।
वैद्ययत्नपरिभाविनं गदं न प्रदीप इव वायुमत्यगात् ॥ ५३ ॥

स इति ॥ स त्वग्निवर्णोऽनेकवनितासखः सन्नपि । पावनीं पितॄणमोचनीं संततिमनवलोक्य । पुत्रमनवाप्येत्यर्थः । वैद्ययत्नपरिभाविनं गदं रोगम् । प्रदीपो वायुमिव । नात्यगान्नातिचक्राम । ममारेत्यर्थः ॥ ५३ ॥

तं गृहोपवन एव संगताः पश्चिमक्रतुविदा पुरोधसा ।
रोगशान्तिमपदिश्य मन्त्रिणः संभृते शिखिनि गूढमादधुः ॥५४॥

तमिति ॥ पश्चिमक्रतुविदाऽन्त्येष्टिविधिज्ञेन पुरोधसा संगताः समेता मन्त्रिणो गृहोपवन एव गृहाराम एव । 'आरामः स्यादुपवनम्'· इत्यमरः । रोगशान्तिमपदिश्य शान्तिकर्म व्यपदिश्य तमग्निवर्णं संभृते समिद्धे शिखिन्यग्नौ गूढमप्रकाशमादधुर्निदधुः ॥ ५४ ॥

तैः कृतप्रकृतिमुख्यसंग्रहैराशु तस्य सहधर्मचारिणी ।
साधु दृष्टशुभगर्भलक्षणा प्रत्यपद्यत नराधिपश्रियम् ॥ ५५ ॥

तैरिति ॥ आशु शीघ्रं कृतः प्रकृतिमुख्यानां पौरजनप्रधानानां संग्रहः संनिपातनं यैस्तादृशैस्तैर्मन्त्रिभिः साधु निपुणं दृष्टशुभगर्भलक्षणा परीक्षितशुभगर्भचिह्ना तस्याग्निवर्णस्य सहचारिणी नराधिपश्रियं प्रत्यपद्यत राज्यलक्ष्मीं प्राप ॥ ५५ ॥

तस्यास्तथाविधनरेन्द्रविपत्तिशोका-
दुष्णैर्विलोचनजलैः प्रथमाभितप्तः ।

पाठा०—१ 'प्राप्य दीपः'. २ 'दृष्ट'.

टिप्प० 1 पावनीं सन्ततिमवीक्ष्य भिषक्प्रयत्नतिरस्कारिक्षयरोगं नातिचक्राम । यथा प्रदीपो वायुं नातिक्रामति । सन्ततिमप्राप्यैव परासुरासीदित्यर्थः—इति दिनकर० ।

2 पश्चिमक्रतुरन्त्येष्टिः, तद्विदा पुरोहितेन सहिता मन्त्रिणः पुरोधान एव व्याधिचिकित्सां व्याजीकृत्य प्रदीप्तेऽग्नौ गुप्तं निदधिरे—इति दिनकर० ।

3 कृतः प्रकृतिमुख्यानां प्रधानपौराणां संग्रहो मेलनं यस्तैर्मन्त्रिभिः सम्यग्दृष्टं शुभं सत्पुत्रसूचकं गर्भलक्षणं यस्याः सा, तस्याग्निवर्णस्य पत्नी शीघ्रं नृपलक्ष्मीं प्राप्रिता राज्याभिषिक्तेत्यर्थः' —इति दिनकर० ।

निर्वापितः कनककुम्भमुखोज्झितेन
वंशाभिषेकविधिना शिशिरेण गर्भः ॥ ५६ ॥

तस्या इति ॥ तथाविधया नरेन्द्रविपत्त्या यः शोकस्तस्मादुष्णैर्विलोचनजलैः प्रथमाभितप्तस्तस्या गर्भः कनककुम्भानां मुखैर्द्वारैरुज्झितेन शिशिरेण शीतलेन वंशाभिषेकविधिना लक्षणयाऽभिषेकजलेन निर्वापित आप्यायितः ॥ ५६ ॥

तं भावार्थं प्रसवसमयाकाङ्क्षिणीनां प्रजाना-
मन्तर्गूढं क्षितिरिव नभोबीजमुष्टिं दधाना ।
मौलैः सार्धं स्थविरसचिवैर्हेमसिंहासनस्था
राज्ञी राज्यं विधिवदशिषद्भर्तुरव्याहताज्ञा ॥ ५७ ॥

इति श्रीरघुवंशे महाकाव्ये कविश्रीकालिदासकृता-
वग्निवर्णशृङ्गारो नामैकोनविंशः सर्गः ।

---

तमिति ॥ प्रसवो गर्भमोचनम् । फलं च विवक्षितम् । 'स्यादुत्पादे फले पुष्पे-

---

पाठा०—१ 'वंशाभिषेकपयसा'; 'राज्याभिषेकपयसा'. २ 'भावाय प्रसवसमयाकाङ्क्षिणीनाम्'; 'भूत्यर्थं प्रसवसमयाकाङ्क्षिणीनाम्'; 'सन्तानप्रसवसमयाकाङ्क्षिणीनाम्'. ३ 'अन्तर्गर्भां'. ४ 'बभौ बीजमुष्टिम्'. ५ 'स्वचिरसचिवैः'. ६ 'अवदात्'.

---

टिप्प०—1 तस्यास्तादृशस्य दयितस्य मरणशोकादुष्णैस्तस्या अश्रुभिः प्रथम संतप्तो गर्भः पश्चात्स्वर्णघटमुखाद्विर्गतेन राज्याभिषेकजलेन निर्वापितः शैत्यं प्रापितः । राज्ञी राज्याभिषेकाद्राजवियोगक्लेशमत्याक्षीदिति भावः —इति दिनकर० ।

[illegible] श्रावण उप्तं बीजमुष्टिं नभोवी-
स्थिताऽव्याहताऽचालनीयाऽऽज्ञा
[illegible]वत् पालयामास । ...'अद्वीवे

वल्लभदेवटीकायाः प्राचीनतम प्रकाशितादर्शे—'अत्र सत्यपि वंशे कालिदासेन विंशः सर्गः किमिति न विहित इत्यभिप्रायं सम्यङ् न विद्मः । तथा ह्यग्निवर्णस्य पुत्रः शीघ्रगः, तदनन्तरं मरु ( मरु प्रश्रुत-संधि-अमर्षण-महस्वत् विश्वस-प्रसेनजित्-तक्षक-बृहद्बलाद्या ? ) संधिमक्षसहस्वद्विश्रुतबृहद्बलाद्या बभूवुः' इति लभ्यते, पर भाण्डारकरप्राच्यग्रन्थसंग्रहीय (Ms. No. 449 of 1887–91) प्रतिकृतौ तु स न लब्धः । नायं लेखो लेखकेन स्वकपोलकल्पितो बलाद्वा ग्रन्थान्तर्निविष्टो भवितुमर्हति; वल्लभदेवस्य व्याख्यानसमाप्तेर[illegible]

प्रसवो गर्भमोचने' इत्यमरः । तस्य यः **समयस्तदाकाङ्क्षिणीनां प्रजानां भावार्थं** भावाय । भूतय इत्यर्थः । 'भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु' इति यादवः । **क्षितिरन्तर्गूढं नभोबीजमुष्टिमिव** । श्रवणमास्युप्तं बीजमुष्टिं यथा- धत्ते तद्वदित्यर्थः । 'मुष्टि'शब्दो द्विलिङ्गः । 'अङ्कोचौ मुष्टिमुस्तकौ' इति यादवः । अन्तर्गूढ- मन्तर्गतं **गर्भं दधाना हेमसिंहासनस्थाऽव्याहताज्ञा राज्ञी मौलैर्मूले** भवैर्मूलादागतैर्वा । आप्तैरित्यर्थः । **स्थविरसचिवैर्वृद्धामात्यैः सार्धं भर्तू राज्यं विधिवद्धिप्यर्हम्** । यथाशास्त्रमित्यर्थः । अर्हार्थे वतिप्रत्ययः । **अशिषच्छास्ति स्म** । 'स- र्तिशास्त्यर्तिभ्यश्च (पा. ३।१।५६) इति च्लेरङ् । 'शास इदङ्हलोः' (पा. ६।४।३४) इतीकारः ॥ ५७ ॥

इति महोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशव्याख्यायां संजीविनीसमाख्यायामेकोनविंशः सर्गः ।

---

## ॥ समाप्तोऽयं ग्रन्थः ॥

# रघुवंशश्लोकानुक्रमणिका ।

# परिशिष्टम् १

## मल्लिनाथोद्धृत-ग्रन्थ-ग्रन्थकर्तॄणां नामसूचिः

# रघुवंशस्थपद्यानां छन्दःसङ्कलनात्मकं परिशिष्टम् २

सर्गाः　　　　छन्दांसि

१ अनुष्टुप् १-९४, प्रहर्षिणी ९५.

२ उपजातिः १-४, ६, ८-२५, २७-४५, ४७-५७, ५९-६९, ७१-७४, इन्द्रवज्रा ५, ७, २६, ४६, ५८, ७०, मालिनी ७५.

३ वंशस्थम् १-६९, हरिणी ७०.

४ अनुष्टुप् १-८६, प्रहर्षिणी ८७, ८८.

५ उपजातिः १, २, ४, ६-८, १०-१२, १४-२१, २३-२६, २८-३४, ३६, ३७, ३९, ४१-५२, ५४-५९, ६१, ६२, इन्द्रवज्रा ५, ९, १३, २२, ३५, ३८, ४०, ६०, उपेन्द्रवज्रा ३, २७, ५३, वसन्ततिलका ६३-७३, मालिनी ७४, ७५, पुष्पिताग्रा ७६.

६ उपजातिः १-१४, १६-२१, २३-४२, ४४, ४६, ४८-६०, ६३, ६४, ६६-७४, ७६-८२, इन्द्रवज्रा १५, २२, ४३, ४५, ४७, ६१, ६२, ६५, ७५, ८३, उपेन्द्रवज्रा ८४, मालिनी ८५, पुष्पिताग्रा ८६.

७ उपजातिः १, ३-१५, १७-३५, ३७-३८, ४०-४२, ४४-४८, ५०, ५३, ५५-५८ ६०-६९, इन्द्रवज्रा २, १६, ३६, ३९, ४३, ५१, ५२, ५४, ५९, उपेन्द्रवज्रा ४९, मालिनी ७०, ७१.

८ वैतालीयम् १-९०, तोटकम् ९१, प्रहर्षिणी ९२, वसन्ततिलका ९३, ९४, मन्दाक्रान्ता ९५.

९ द्रुतविलम्बितम् १-५४, वसन्ततिलका ५५-६३, ७६-८२, शालिनी ६४, प्रहर्षिणी ६५, औपच्छन्दसिकम् ६६, मालिनी ६७, रथोद्धता ६८, मञ्जुभाषिणी ६९, पुष्पिताग्रा ७०, ७१, (विषमवृत्तम् ७२,) स्वागता ७३, वैतालीयम् ७४, मत्तमयूरम् ७५.

१० अनुष्टुप् १-८५, मालिनी ८६.

११ रथोद्धता १-९१, वसन्ततिलका ९२, मालिनी ९३.

१२ अनुष्टुप् १-१०१, मालिनी १०२, वसन्ततिलका १०३, नाराचम् (सिंहविक्रीडितम्) १०४,

सर्गा छन्दांसि

१३ उपजाति॰ १, ३–८, १०–१५, १८, २०–२६, २८–३५ ३७, ३९–४६, ४८, ५०–६१, ६३, ६४, ६६, ६७, इन्द्रवज्रा २, १६, १७, २७, ३६, ३८, ४७, ६२, ६५, उपेन्द्रवज्रा ९, १९, ४९, वसन्ततिलका ६८–७८, प्रहर्षणी ७९

१४ उपजातिः १–५, ७–१२, १४, १६–२२, २४–४९ ५१–५५, ५७, ५९–६८, ७०–७२, ७४, ७६–८२, ८४–८६, इन्द्रवज्रा ६, १३, १५, २३, ५०, ५६, ५८, ६९, ७३, उपेन्द्रवज्रा ७५, ८३, मन्दाक्रान्ता ८७

१५ अनुष्टुप् १–१०२, मन्दाक्रान्ता १०३

१६ उपजाति॰ १, ३, ४, ६–१४, १६–१८, २०–३५, ३७–४०, ४२–४९, ५२–५९, ६१–६३, ६५, ६७–६९, ७१–७८, ८०–८५, इन्द्रवज्रा २, ५, १५, १९, ३६, ४१, ५०, ५१, ६०, ६४, ६६, ७९, उपेन्द्रवज्रा ७०, वसन्ततिलका ८६, मन्दाक्रान्ता ८७, ८८

१७ अनुष्टुप् १–८०, मन्दाक्रान्ता ८१.

१८ उपजाति १, २, ४–१५, १७–२०, २३, २५, २६, २८, २९, ३१, ३३–३७, ४१–४४, ४६–५१, इन्द्रवज्रा ३, १६, २२, २४, २७, ३०, ३२, ३८–४०, उपेन्द्रवज्रा २१, ४५.

१९ रथोद्धता १–५५, वसन्ततिलका ५६, मन्दाक्रान्ता ५७

— ० —

## कालिदासीयकृतिषु विमृष्टशास्त्राणां परिचायकं परिशिष्टम् २

— धर्मशास्त्रम् —

दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् (रघु. १२।१९)

समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः । अनपत्यश्च किल तपस्वी । राजगामी तस्यार्थसंचय इत्येतदमात्येन लिखितम् ।

देव! दाणि एव्व साकेदअस्स सेट्ठिणो दुहिआ णिव्वुत्तपुंसवणा जाआ से सुणीअदि ।

राजा–ननु गर्भः पित्र्यं रिक्थमर्हति । (शाकु. ६ अंकः)

अस्मात्परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि नियच्छतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति (शाकु. ६।२५)

नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।
न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥
मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।
पयःपूर्वैः स्वनिश्वासैः कवोष्णमुपभुज्यते ॥ (रघु. १।६६–६७)

— ज्यौतिषम् —

उपरागान्ते शशिनः समुपगता रोहिणी योगम् (शाकु. ७।२२)

निर्विष्टसारां पितृभिर्हिमांशोरन्त्यां कलां दर्श इवौषधीषु (रघु. १४।८०)

ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसंपदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् (रघु. ३।१३)

पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः (रघु. ३।२२)

जाव अंगारओ रासिं विअ अणुवंकं परिगमणं ण करेदि । (मालवि. ३ अंकः)

तिस्रस्त्रिलोकप्रथितेन सार्धमजेन मार्गे वसतीरुषित्वा ।
तस्मादपावर्तत कुण्डिनेशः पर्वात्यये सोम इवोष्णरश्मेः (रघु. ७।३३)

ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम् ।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव (रघु. ४।६६)

---

1 अमावास्याविषये हि पाश्चात्यविदुषाममिमतम्—

The sun to me is dark and silent as the moon,
When she deserts the night, hid in her vacant cave.
— Milton

संध्याभ्रकपिशस्तस्य विराधो नाम राक्षसः ।
अतिष्ठन्मार्गमावृत्य रामस्येन्दोरिव ग्रहः (रघु. १२।२८)
स जहार तयोर्मध्ये मैथिलीं लोकशोषणः ।
नभोनभस्ययोर्वृष्टिमवग्रह इवान्तरे (रघु. १२।२९)
अगस्त्यचिह्नादयनात्समीपं दिगुत्तरा भास्वति संनिवृत्ते ।
आनन्दशीतामिव बाष्पवृष्टिं हिमस्रुतिं हैमवतीं ससर्ज (रघु. १६।४४)
तौ विदेहनगरीनिवासिनां गां गताविव दिवः पुनर्वसू ।
मन्यते स्म पिबता विलोचनैः पक्ष्मपातमपि वञ्चनां मनः (रघु. ११।३६)
जिगमिषुर्धनदाध्युषितां दिशं रथयुजा परिवर्तितवाहनः ।
दिनमुखानि रविर्हिमनिग्रहैर्विमलयन्मलयं नगमत्यजत् (रघु. २५)
तस्य प्रभानिर्जितपुष्परागं पौष्यां तिथौ पुष्यमसूत पत्नी ।
तस्मिन्नपुष्यन्नुदिते समग्रां पुष्टिं जनाः पुष्य इव द्वितीये (रघु. १८।३२)
दोषातनं बुधबृहस्पतियोगदृश्य-
स्तारापतिस्तरलविद्युदिवाभ्रवृन्दम् (रघु. १३।७६)
ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम् ।
अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकार (रघु. ५।३६)
तारागणप्रवरभूषणमुद्वहन्ती
मेघावरोधपरिमुक्तशशाङ्कवक्त्रा ।
ज्योत्स्नादुकूलममलं रजनी दधाना
वृद्धिं प्रयात्यनुदिनं प्रमदेव बाला (ऋतु. ३।७)
दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः (रघु. १२।२५)
तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव (रघु. २।३९)
काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेषयोः ।
हिमनिर्मुक्तयोर्योगे चित्रा-चन्द्रमसोरिव (रघु. १।४६)
दृष्टिप्रपातं परिहृत्य तस्य कामः पुरः शुक्रमिव प्रयाणे ।
प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश (कुमार. ३।४३)

—नीतिशास्त्रम्—

उपगतोऽपि च मण्डलनाभितामनुदितान्यसितातपवारणः ।
श्रियमवेक्ष्य स रन्ध्रचलामभूदनलसोऽनलसोमसमद्युतिः (रघु. ९।१५)

— सांख्यशास्त्रम् —

पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता ।
बभूव कृतसंस्कारा चरितार्थैव भारती ( रघु. १०।३६ )
तौ संधिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम् ।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम् (कुमार. ७।९१)

— व्याकरणशास्त्रम् —

ता नराधिपसुता नृपात्मजैस्ते च ताभिरगमन्कृतार्थताम् ।
सोऽभवद्वरवधूसमागमः प्रत्ययप्रकृतियोगसंनिभः ( रघु. ११।५६ )
रामादेशादनुगता सेना तस्यार्थसिद्धये ।
पश्चादध्ययनार्थस्य धातोरधिरिवाभवत् ( रघु. १५।९ )
स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ( रघु. १२।५८ )
य कश्चन रघूणां हि परमेकः परंतपः ।
अपवाद इवोत्सर्गं व्यावर्तयितुमीश्वरः ( रघु. १५।७ )

— मीमांसाशास्त्रम् —

तस्मै जयाशीः ससृजे पुरस्तात्सप्तर्षिभिस्तान्स्मितपूर्वमाह ।
विवाहयज्ञे विततेऽत्र यूयमध्वर्यवः पूर्ववृता मयेति (कुमार. ७।४७)

— योगशास्त्रम् —

ततो भुजंगाधिपतेः फणाग्रैरधः कथंचिद्धृतभूमिभागः ।
शनैः कृतप्राणविमुक्तिरीशः पर्यङ्कबन्धं निबिडं बिभेद (कुमार. ३।५९)
पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं संनमितोभयांसम् ।
उत्तानपाणिद्वयसंनिवेशात्प्रफुल्लराजीवमिवाङ्कमध्ये ( कुमार. ३।४५ )

— आयुर्वेदः —

तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-
जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ।
अन्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ( मेघ. पू. २० )
जानकी विषवल्लीभिः परीतेव महौषधिः ( रघु. १२।६१ )
शरीरसादादसमग्रभूषणा मुखेन साऽलक्ष्यत लोध्रपाण्डुना ।
( रघु. ३।२ )

— कोकशास्त्रम् —

पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान (कुमार. ७।१९)
तस्य सावरणदृष्टसंधयः काम्यवस्तुषु नवेषु सङ्गिनः ।
वल्लभाभिरुपसृत्य चक्रिरे सामिभुक्तविषयाः समागमाः (रघु. १९।१६)
नाम वल्लभजनस्य ते मया प्राप्य भाग्यमपि तस्य काङ्क्ष्यते ।
लोलुपं ननु मनो ममेति त गोत्रविस्खलितमूचुरङ्गनाः (रघु. १९।२४)
चूर्णबभ्रु लुलितस्रगाकुलं छिन्नमेखलमलक्तकाङ्कितम् ।
उत्थितस्य शयनं विलासिनस्तस्य विभ्रमरतान्यपावृणोत् (रघु. १९।२५)
मित्रकृत्यमपदिश्य पार्श्वतः प्रस्थितं तमनवस्थितं प्रियाः ।
विद्म हे शठ ! पलायनच्छलान्यञ्जसेति रुरुधुः कचग्रहैः (रघु. १९।३१)

— सांख्यशास्त्रम् —

ब्राह्मं सरः कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरन्ति (रघु. १३।६०)

—वेदान्तशास्त्रम्—

सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् (रघु. १०।२०)
सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् ।
सप्तार्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम् (रघु. १०।२१)
चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः ।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् (रघु. १०।२२)
अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ।
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये (रघु. १०।२३)
अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ? (रघु. १०।२४)
त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।
गतिस्त्वं वीतरागाणामभूयःसंनिवृत्तये (रघु. १०।२७)
प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ? (रघु. १०।२८)
अनवाप्तमवाप्तव्यं न ते किंचन विद्यते ।
लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोः (रघु. १०।३१)

—:०:—

# परिशिष्टम् ४

## कालिदासोपवर्णित-रघुवंश्यनृपाणां वंशः ।

- दिलीपः
  - रघुः
    - अजः
      - दशरथः
        - रामः
          - कुशः
            - अतिथिः
              - निषधः
                - नलः
                  - नभः
                    - पुण्डरीकः
                      - क्षेमधन्वा
                        - देवानीकः* (अग्रिमपृष्ठेनानुसंधेयमिदम्)
          - लवः
        - लक्ष्मणः
        - भरतः
        - शत्रुघ्नः



---

1 पाद्मपुराणानुगुणोऽयं वंशक्रमो ग्रन्थान्तरैर्विसंवदति ।

2 अस्मात्परमयं 'सूर्यवंशः' 'रघुवंश' इति नाम्ना प्रथितः ।

(देवानीकः*) [अनुसन्धानमत्र पूर्वपृष्ठतः]

(पुत्री)

अहीनगुः*

पारियात्रः

शीलः

उन्नाभः

शङ्खणः

व्युषिताश्वः

विश्वसहः

हिरण्यनाभः

कौशल्यः (सोमसुतः)

पुत्रः

पौष्यः

ध्रुवसन्धिः

सुदर्शनः

अग्निवर्णः